श्रीः

अध्वरमीमांसा-

# कुतूहलवृत्तिः

( दशमाध्यायपञ्चमपादतो द्वादशाध्यायान्तश्चतुर्थो भागः )

सम्पादकः

आचार्यः-श्रीपट्टाभिरामशास्त्री

श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठम्

दिल्ली

१९७३-७४

श्रीः

संस्कृतविद्यापीठग्रन्थमालाया नवमं पुष्पम्

## अध्वरमीमांसा-

# कुतूहलवृत्तिः

प्रस्तावनालेखकः

**महामहिम डॉ० श्रीचेन्ना रेड्डी**

राज्यपालः–उत्तरप्रदेशस्य

प्रधानसम्पादकः

**डॉ० मण्डनमिश्रः प्राचार्यः**

श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्य ।

सम्पादकः

**पं० श्रीपट्टाभिरामशास्त्री**

मीमांसायोगतन्त्रप्राध्यापकः

वा० सं० वि० विद्यालयः, वाराणसी

**श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठम्**

**दिल्ली**

**१९७४**

GOVERNOR

UTTAR PRADESH

RAJ BHAVAN
LUCKNOW
December 12, 1974.

# PREFACE

I consider it a privilege that I have been given the opportunity to write the Preface to this learned work compiled by an eminent scholar, Pandit Pattabhirama Sastri. Pandit Sastri is a profound scholar of Sanskrit Language, Literature and Philosophy. After a brilliant academic career in Banaras Hindu University, from where he had triple Acharya degrees in Mimamsa, Nyaya and Sahitya-Pandit Sastri taught Sanskrit and Mimamsa in Banaras Hindu University, Calcutta University and Banaras Sanskrit University. During his long and brilliant career, he published several learned books and papers. In recognition of this, the President of India awarded him Certificate of Honour in 1973. Sri Sastri, with this background, is, therefore, fully competent and equipped to handle with scholarship and lucidity an abstruse subject of Mimamsa.

2. Mimamsa (Rules of Interpretation) has a very important place in the Indian Philosophy. Jaimini ( the founder of the Mimamsa Sastra ) after composing four thousand sutras, divided them into twelve chapters, known as "Dvadasa lakshani." Moreover in these twelve chapters Jaimini illustrated about One thousand Nyayas ( Rules ). In ancient India, the Royal courts used to decide the disputed claims on the basis of these Nyayas ( Rules ). Justice V. Krishnaswamy Ayyar of the Madras High Court was one of the renowned Judges who

took help of the Mimamsa rules in deciding the claims before him. Even the disputed claims in the Dharma-Sastras were decided on the basis of the above mentioned rules. Therefore, this Sastra was also known as 'Vakya". The ancient scholars were well versed in the four main sastras viz. "Pada-Vyakarana Sastra", "Vakya-Mimamsa Sastra", "Pramana-Nyaya Sastra" and "Vedanta Sastra."

3. Jaimini's Sutras were commented upon by Sabaraswamin, the Bhashyakara, by Kumarilabhatta, the Vartikakara, and by Prabhakara Misra, the commentator, and by various other learned scholars. It is a monumental work. *Kumarila Bhatta said: "None before this have been able to collect so many "Yuktis" successfully."

Among the few scholars, who have written a commentary on the Sutras of Jaimini, Sri Vasudeva Dikshita's Kutuhala Vritti is an important one. Sri Vasudeva Dikshita being well-acquainted with "Srauta and Karmakanda" was able to give a better exposition of the Sutras. His work established the fact that such learned scholars alone can prepare the "Vritti" of the Sutras of Jaimini. That work was written by the end of 17th century or in the beginning of 18th century. But unfortunately, it has not seen the light of the day so far. However, some 40 years ago, Mahamahopadhyaya Dr. Kuppuswamy Shastry took up the work and was able to publish a part of it. Now, Pandit Pattabhirama Sastri, inspired by his revered Guru, Mahamahopadhyaya Pt. Cinna Swami Sastri, has undertaken the task of editing this monumental work which runs into about 2,000 pages and has himself written the 'Vritti" on the 12th Chapter

* 'न हि कश्चिदपि प्रथममेतावन्तं युक्तिकलापमुपसंहर्तुं क्षमः' (Tantra Vartika Page 167. Anandasrama edn.)

which was not available to complete the work. It is a matter of great pleasure that this publication has been undertaken by Sri Lal Bahadur Sastri Rashtriya Sanskrit Vidhyapeeth of Delhi. This work is in four parts—of which this is the fourth and the last part. The preface of the first part was written by the then Governor of Uttar Pradesh, Dr. B. Gopl Reddi; of the second part by Sri Bhakta Darshan, and of the third part by Sri Balram Upadhyaya, the former Vice-Chancellor of Varanaseya Sanskrit Vishwavidyalaya.

I take this opportunity of congratulating Pt. Pattabhirama Sastri, one of the renowned scholars of India, who has, by his untiring efforts, completed the present work. Principal Dr. Mandana Misra and the authorities of the Rashtriya Sanskrit Vidyapeeth also deserve congratulation for their invaluable support in the completion of this work.

( M. Channa Reddy )
Governor, Uttar Pradesh.

श्रीः

# प्रधानसम्पादकीयम्

परमं हर्षमनुभवन्निवेदयामि—यच्छ्रीवासुदेवदीक्षितैर्विरचिताया अध्वर-मीमांसाकुतूहलवृत्तेश्चतुर्थोऽपि भागोऽध्येतॄणामध्ययनाय प्रकाशपथमागत इति। अस्य ग्रन्थरत्नस्य प्रकाशनं श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृत-विद्यापीठेन १९६८ ईसवीये वत्सरे समारब्धम्। द्विसहस्राधिकपृष्ठैर्युतोऽयं ग्रन्थश्चतुर्भिर्भागैः प्रकाशितः। समग्रस्यास्य ग्रन्थस्य मुद्रणकार्यमस्मदभ्यर्थ-नया स्वीये मुद्रणालये वाराणसेयसंस्कृतविश्वविद्यालयस्साधु निरवर्तयदिति तदानीन्तनोपकुलपतिभ्यः डा० श्रीगौरीनाथशास्त्रिभ्यः, तदनु तादृशेभ्यः श्रीबलरामोपाध्यायेभ्यः, तदानीन्तनाय प्रस्तोत्रे डा० वाचस्पत्युपाध्यायाय, इदानीन्तनेभ्यः कुलपतिभ्यः श्रीकरुणापतित्रिपाठिभ्यः, इदानीन्तनाय कुल-सचिवाय श्रीलक्ष्मीनारायणतिवारीमहोदयायान्येभ्यो मुद्रणालयव्यवस्था-पकादिभ्यश्च मदीयां हार्दिकीं कृतज्ञतामाविष्करोमि।

ग्रन्थरत्नमिदमनुत्तमं श्रीवासुदेवदीक्षितैर्व्यरचि। अस्यैकस्य ग्रन्थमणे-रध्ययनेनैव मीमांसाशास्त्रसम्बन्धिनस्सर्वे एव न्याया अधिगता भवेयुरिति नाहं सन्दिहे। मीमांसान्यायेषु प्रवेशसिद्धये वेदेषु श्रौतसूत्रेषु कर्मकाण्ड-प्रयोगेषु च परिपक्वा ज्ञानसम्पदावश्यिकी, विनानया सम्पदा प्रवेश एव दुष्करः, तथापि ग्रन्थकारस्तत्र तत्र विद्यमानान् अतिदुरूहान् कर्मकाण्ड-सन्दर्भान् तत्तदधिकरणे विषयप्रवेशसिद्धये प्रथममवबोध्याधिकरणशरीर-मारचयतीति तदवगत्य सुखेन न्यायगहनेषु प्रवेशं लभामहे। सत्स्वपि शाबरभाष्यादिषु ग्रन्थेषु गभीरेषु यथावत्सूत्राक्षरार्थग्रहणायायमेवात्युत्तमो ग्रन्थः। अधीत्यैनं भाष्यग्रन्थेऽधीयमाने तत्रत्यं गाम्भीर्यं स्पष्टमवगतं भवेत्। सूत्रवृत्तिग्रन्थेष्वधीयमानेषु न्यायशरीरमधिकरणतत्त्वञ्च न यथायथं हस्तगतं भवेदिति श्रीपार्थसारथिमिश्र-श्रीखण्डदेवाचार्यप्रभृतयः सूत्राक्षरानवलम्बनेन

तथैव तत्साररूपेण शास्त्रदीपिका-भाट्टदीपिकादिग्रन्थान् विरचयाम्बभूवुः, किन्तु श्रीवासुदेवदीक्षितः सूत्राक्षराणि पदानि च विविच्य विवृण्वन् विषय-संशयपूर्वोत्तरपक्षान् साधु न केवलं ग्राहयति, सत्यवसरे खण्डनमण्डनाय तत्तद्ग्रन्थगतान् विषयानपि विवेचयति। किञ्चायं भाष्यवार्तिकयोस्तत्र तत्र विद्यमानं मतभेदमुपस्थाप्य तद्ग्राह्यत्वाग्राह्यत्वादौ युक्तीस्सङ्कलय्य स्वीयं मतं स्पष्टमुद्घोषयति। स्वस्य वेदेषु श्रौतसूत्रेषु कर्मकाण्डप्रयोगेषु च विद्य-मानमनितरसाधारणं वैदुष्यञ्च तत्र तत्रावबोधयति। व्याकरणशास्त्रस्य प्रक्रियाभागेऽस्यासाधारणं पाण्डित्यम्, तस्यैव फलीभूतो ग्रन्थः सिद्धान्तकौ-मुद्या व्याख्यारूपो बालमनोरमाख्यः। यया शैल्या बालमनोरमा व्याकरण-प्रक्रियाभागे प्रविविक्षूणामुपकाराय विरचिता, तयैव प्रसादगुणगुम्फितया शैल्या अध्वरमीमांसाशास्त्रमिदं भयावहं काननमिव सदपि, ग्रन्थकारेण प्रसन्नभाषया चोपवनमिव सुखप्रवेशं व्यधायीति कथनं नातिशयोक्त्यै स्यात्। लोकोपयोगिनोऽतिगभीरस्यास्य शास्त्रस्योत्तरप्रदेशेषु वाराणस्यां विदेहेषु चाध्ययनाध्यापनरीतिर्विपुलासीदिति तैस्तैर्मीमांसाग्रन्थैरवगम्यते, किन्तु केनापि दैवप्रकोपेन लुप्तप्रायैव जाता सा रीतिः, तथापि मत्परमाचार्यैः महामहोपाध्यायैः जैमिनिशबरावताररूपैः श्रीचिन्नस्वामिशास्त्रिश्रीचरणैरु-ज्जीविता, तदनु मत्पूज्यपादैश्चानुप्राणिता सती राजस्थानेषु वङ्गदेशेषु च प्रचारपथमानीतेति सानन्दं निवेदये।

जयपुरस्थितिसमय एव मत्पूज्यपादा ग्रन्थमणिमिमं प्रकाशयितुं कृतोद्यमा अभवन्, तदनु कालीक्षेत्रे ( कलिकातानगरे ) वर्तमानाः प्रायतन्त, किन्तु गुरोः स्थानं वाराणसीमागत्यैव यत्नस्सफलो भविष्यतीति विधेर्मनसि स्थितमिव, पूज्यपादाः संस्कृतविश्वविद्यालयाधिकारिभिस्सादरं समाहूताः काशीमागत्य मां श्रीलालबहादुरशास्त्रिराष्ट्रियविद्यापीठे वर्तमानं समादिशन् अस्य प्रकाशनाय। अहमपि मदधिकारिभ्यो ग्रन्थस्य गरिमाण-मवबोध्य तेषां स्वीकृतिमवाप्य विद्यापीठद्वारा पवित्रं कार्यमिदं निर्वर्तयितुं सौभाग्यमवापमिति नितरां प्रसीदामि। इदमपि दैवविलसितं विषयमुज्झि-

खन्नमन्दमानन्दमनुभवामि—यदयं ग्रन्थः पञ्चाशद्वर्षेभ्यः पूर्वमेव मत्परमेष्ठ्या-चार्यैः जगति विश्रुतसत्कीर्तिभिः प्राच्यपाश्चात्यविद्यास्वकुण्ठितज्ञानवैभवैः महामहोपाध्यायैः श्रीकुप्पुस्वामिशास्त्रिपादैः प्रकाशयितुमारब्धः वाणी-विलासमुद्रणालये श्रीरङ्गक्षेत्रगते निवीतान्तो भागो ग्रन्थस्य प्रकाशितश्च। तदनन्तरं मत्परमाचार्याः प्रकाशनायैच्छन्त, किन्तु केनापि कारणेन प्रकाशनं न जातम्। मत्परमाचार्यैः पूज्यपादाः प्रेरिताः, ते च मां न्ययू-युजन् प्रकाशनाय। अहमपि लब्धावसर इदं कार्यमगृह्णाम्। ग्रन्थविषये नाहं किमप्यकरवम्, प्रतिलिपिकरणे मातृका अवलम्ब्य पाठशोधने ग्रन्थ-संशोधने वा पूज्यपादेभ्यः किमपि साहाय्यं नाचरम्, केवलं मदधिकारिणां दृष्टिमाकृष्य प्रकाशनसामग्रीं पूज्यचरणानां पुरः संन्यदधि। तेनापि मदा-त्मनि किञ्चिदपूर्वं समवेतं स्यादिति सम्भावयामि। तैरेव मुद्रणोपयोगीनि सम्पादनकार्याण्यशेषाणि निर्वर्त्य द्वादशाध्यायस्य दीक्षितवृत्तिं क्वाप्यनवाप्य स्वयमेव सुविशदां वृत्तिश्च विरचितवन्तः। एवं विद्यापीठगौरवसंवर्द्धकमिदं कार्यं सुसम्पन्नमिति गुरुचरणेभ्योऽहं विद्यापीठाधिकारिणश्च सर्वेऽधमर्णास्स्मः।

अस्य ग्रन्थस्य चतुर्णामपि भागानां प्रस्तावनां विलिख्यानुगृहीतवद्भ्यः क्रमेणोत्तरप्रदेशराज्यपालेभ्यः तदानीन्तनेभ्यः श्रीगोपालरेड्डीमहाभागेभ्यः तदानीन्तनेभ्यः केन्द्रियशिक्षाराज्यमन्त्रिपदं भूषितवद्भ्यः श्रद्धेयेभ्यः श्रीभक्त-दर्शनमहेच्छेभ्यः, वाराणसेयसंस्कृतविश्वविद्यालयोपकुलपतिभ्यः श्रीबलरामो-पाध्यायेभ्यः, उत्तरप्रदेशस्येदानीन्तनराज्यपालेभ्यः श्रीचेन्नारेड्डीमहोदयेभ्यश्च सभक्तिश्रद्धं शतशो धन्यवादान् समर्पयामि। एतेषां महानुभावानां प्रस्तावना-लेखनेन न केवलं ग्रन्थस्य गौरवं संवर्द्धितम् विद्यापीठस्य सुमहद्गौरवं परिरक्षितमिति सम्भावयामि। विरलप्रचारस्य दर्शनेषु च मुख्यं स्थान-मावहतो मीमांसाशास्त्रस्य सम्बन्धिनां ग्रन्थानां प्रकाशनकार्याणि भूयोभूयः कर्तुमस्मान् प्रेरयितुं पूज्यपादान् सम्प्रार्थ्यं विरमामीति।

मार्गशिर. शु. २
संवत् २०३१
१५. १२. १९७४

प्रधानसम्पादकः
**मण्डनमिश्रः**

: श्री :

# भूमिका

श्रीवासुदेवदीक्षितविरचितायाः कुतूहलवृत्तेः चतुर्थभागोऽपि प्रकाशपथमागत इति नितरां प्रसीदामि। समग्रस्यास्य ग्रन्थरत्नस्य प्रकाशनेऽनेके प्रत्यूहा उपस्थिताः, तथापि दैवस्य कृपया मत्पूज्यपादानां गुरुचरणानामाशिषा च ते विलयं गता इति मदिष्टदेवतां श्रीगुरुचरणांश्च स्तौमि। विशेषतोऽन्वेषणे कृतेऽपि द्वादशस्याध्यायस्य श्रीवासुदेवविरचितां वृत्तिं क्वापि नालभे। विना द्वादशाध्यायेन ग्रन्थस्य न्यूनता स्यादिति मत्वाहमेव तस्याध्यायस्य वृत्तिं यथामति विरच्य ग्रन्थान्ते समावेशयम्। तत्साधुत्वासाधुत्वे विद्वदवतंसा एव प्रमाणम्। ग्रन्थकर्त्रा पूर्वपक्षे सिद्धान्ते वा ये न्याया अधिकरणान्तरसिद्धा अभिहितास्तेषु कतिपयानां विवरणमप्यध्येतॄणां लाभाय ग्रन्थान्ते समयुञ्जि। द्वादशस्वध्यायेषु निर्दिष्टानां वेदवाक्यानां सूत्राणामन्येषाञ्च यथोपलम्भमस्मिन् भागे आकरसूचीमपि सन्न्यवेशयम्। ग्रन्थकाराभिमतसूत्रपाठमप्यन्ते प्राकाशयम्। एवं कथञ्चिदयं ग्रन्थमणिरध्ययनाय समग्रो दृष्टिपथमागत इति विद्वत्तल्लजास्सन्तुष्टा भवेयुरिति सम्भावयामि।

## मीमांसासम्प्रदायः

मीमांसाशब्दोऽयं श्रौतस्सम्प्रदायतश्चिरात्सम्प्रवृत्तः। सम्प्रदायश्चाविच्छिन्नगुरुशिष्यपारम्पर्यम्। आ च भगवतः प्रथमायास्सृष्टेरा चैतन्निमेषात्सर्वैरेव दार्शनिकैस्समादृतेयम्। आसीत्परमशोभनः कश्चन कालः, यत्र लोका गुरूपदेशपरम्परयैव सर्वान् वेदान् दर्शनानि चाध्यगच्छन्। अधुनेव तदा तेषामध्ययनाय पुस्तकादिसाधनानि नाभवन्। श्रोत्रेन्द्रियव्यापार एवैकं साधनम्। श्रुतिरिति यथा वेदानां संज्ञा, तथैव श्रुतम् इति शास्त्राणां नाम यथार्थं सम्प्रवृत्तम्। सहजमिदं यत्साधनान्तराभावे समुप-

लब्धमेव साधनमादाय कार्याणि क्रियन्त इति। अल्पेन साधनेन यथा कार्याणि द्रढीयांसि समपद्यन्त, न तथा बहुभिस्साधनैरिति सम्प्रति वयमनुभवामः। शिक्षायाः प्रथमं साधनं श्रवणम्। श्रवणस्य बोधः फलम्। स च बोधः श्रवणेन पूर्वजैर्यथावाप्यते स्म, न तथा वयमिदानीं तेनावाप्नुमः। महर्षेर्जैमिनेरतिविस्तृतमिदं सह सङ्कर्षकाण्डेन षोडशाध्यायात्मकं शास्त्रं स्वकृतश्रवणव्यापारस्यैव फलीभूतम्। आश्रमेषु महर्षयः श्रौतस्मार्तकर्मानुष्ठानपराः सम्भूय तदा तदा सन्दिग्धान् विषयान् सुविमृश्य परिषत्सु निर्णीतवन्तस्स्युः। तेषामेव परम्परातः प्राप्तानां सूत्रात्मको ग्रन्थो जैमिनिग्रथितो मीमांसापदाभिधः। त्रिकालदर्शिनो महर्षय आयतौ दृष्टिं निक्षिपन्तः क्रमशोऽध्येतृवर्गेषु विद्यमानं तात्कालिकं शास्त्राध्ययनवैमुख्यं किञ्चिदनुभवन्तः सम्प्रदायविच्छेदतो बिभ्यतः तेषु तेषु शास्त्रेषु सूत्रग्रन्थान्विरचयाम्बभूवुः। लक्ष्यैकचक्षुषः खलु महर्षयः। यथालक्ष्यं लक्षणानि सम्प्रवर्तन्त इति न्याय्यः पन्थाः। लक्षणप्रवृत्त्यनन्तरं लक्ष्याणि सिध्यन्तीति कल्पनं न केवलं दुश्शकम्, किन्त्वनुचितमपि। विना लक्ष्येण न लोकानां क्वापि प्रवृत्तिस्सम्भवति। तच्च लक्ष्यं लोकेषु कामं विप्रतिपन्नं सन्दिग्धं वा भवेत्। तदेवाश्रमपदेषु सम्भूय पुरा महर्षिभिश्चर्चितमासीत् परिषत्सु। चर्चितानामेव सूत्रात्मना ग्रथनं जैमिनेरिति प्रतीमः।

युक्तश्चैतत्—जैमिनेरेकैकमपि सूत्रं प्रायोऽन्तर्हितवेदवाक्यमिति तावदसन्दिग्धम्। क्वचिद्वेदवाक्यं सूत्रात्स्पष्टमवगम्यते, क्वचित्सूत्रसमभिव्याहृतपदैरुन्नेयं भवति, क्वचिच्चातिक्लेशेन पूर्वापरसङ्गतिपरिशीलनेन निर्णेयं भवति, क्वचिच्च जैमिनेर्मनसि विद्यमानेऽपि वेदवाक्ये तन्निगूढमेवास्ति। आचार्यः श्रीशबरस्वामी भाष्यकारः सर्वेष्वधिकरणेषु जैमिन्यनुमतानि वेदवाक्यानि प्रदर्श्याधिकरणशरीरं रचयन् 'विशये प्रायदर्शनात्' ( २. ३. १६ ) इत्यत्र सूत्रकारानुमतमुदाहरणं संशयश्चाजानानः 'किमिहोदाहरणम्? न तावत्सूत्रेणैव परिगृहीतम्। यथा—'अवेष्टौ यज्ञसंयोगात् क्रतुप्रधानमुच्यते' इति। नापि च साध्यं प्रतिज्ञातम्, यथा— 'अयनेषु चोद-

नान्तरम्' इति। केवलं विशये-संशये प्रायदर्शनं हेतुरिति निर्दिश्यते। कस्यायं हेतुरिति न विजानीमः—प्रकृतं यजिमदेतत्कर्मेति। तदपि न सम्बध्यमानमिव पश्यामः। तदेतदवगमकं सूत्रमेव तावदनर्थकम्। अथ कात्र प्रतिज्ञा ? कश्च सन्देहः ? इति वक्तव्यम्। वृत्तिकार-वचनात्प्रतिज्ञां संशयञ्चावगच्छामः। अत्र भगवानाचार्यं इदमुदाहृत्य "वत्समालभेत वत्सनिकान्ता हि पशवः" इतीमं संशयमुपन्यस्यति स्म—किं यजिमदभिधान एष आलभतिरुतालम्भमात्रवचन इति। उपपद्यते चैतदुदाहरणम्, संशयश्च' इति। अनेन सन्दर्भेणेदमवगन्तव्यं भवति-यत् सूत्राणामाविर्भावतः पूर्वं मीमांसाध्ययनसम्प्रदायः तैस्तैर्महर्षिभिः श्रौत-स्मार्तकर्मानुष्ठाननिरतैर्वाचोविधेयतया संरक्षितान् मन्त्रब्राह्मणात्मकवेद-सन्दर्भानवलम्ब्य प्रवृत्त आसीदिति। जैमिनिगृहीतनामान्यपि 'बादरायणः' 'कामुकायनः' 'बादरिः' इत्यादीनि विषयमिमं पोषयन्ति। जैमिनिनिर्दिष्टा इमे न सूत्रप्रणेतारस्स्युः। न ह्येकस्मिन् दर्शने द्वौ त्रयो वा सूत्रकाराः क्वचन दृश्यन्ते। विचारगोष्ठीष्विमे समवेता अभवन्नित्येव युक्तं प्रति-भाति। तदानीन्तनाः साङ्गां स्वशाखां यथानियममधीत्य समुचिते वयसि गार्हस्थ्यं प्रविश्य गृह्योक्तानि कर्माण्यनुतिष्ठन्तः प्रवयोभिस्समाजपरिष्कर्तृभिः श्रौतकर्मानुष्ठाने सम्प्रेरिताः तदनुष्ठाने प्रावर्तन्त। तत्र समुत्पद्यमानानां सन्देहानामपाकरणं प्रवर्तकैश्शिष्टैरक्रियत। एवं कर्मानुष्ठानसम्प्रदायः पुरा प्राचलत्। एवमेव विचारा अपि समपद्यन्त। तादृशः खलु कालस्सः, यस्मिन् वारं वारं श्रुत्वैव सर्वमधिगन्तव्यमासीत्। अत्र किञ्चिद्वैमुख्यमौ-दासीन्यं वा स्मृतिशक्तौ दौर्बल्यं वा यदा तदानीन्तना अन्वभवन् मनी-षिणः, तदोपलब्धानि साधनान्यवलम्ब्याश्वलायनलाट्यायनादयः कल्पान् सूत्राणि च जग्रन्थुः। जैमिनिश्च महर्षिः मीमांसां सूत्रात्मनाविरकरोत्।

किञ्च 'अथातो धर्मजिज्ञासा' इति प्रतिज्ञाताया धर्मजिज्ञासाया विचारात्मिकायाः "स्वाध्यायोऽध्येतव्यः" इति विधिप्रयुक्तत्वसाधनं ग्रन्थ-काराणामिदमवद्योतयति-यन्मीमांसाध्ययनसम्प्रदायोऽनिदम्प्रथमताकात्का-

लात्प्रवर्तत इति । प्रतिज्ञाविषयो धर्मः, स च वेदार्थः, तस्य विचारः कर्तव्य इत्युक्ते विचारात्मकस्य मीमांसाशास्त्रस्य वैधत्वं सुतरामवाप्यते । धर्मं विहाय नान्यो वेदार्थः, वेदार्थमपहाय नान्यो विचारविषयः । धर्मः प्रमेयः, प्रमाणञ्च वेदः । तत्र धर्मस्तु न यागदानहोमरूप एव, द्रव्यं गुणो जातिरपि धर्मा अभीप्सिता मीमांसकानाम् । इमे यदि वेदार्थाः न तर्हि तेषां धर्मत्वे विप्रतिपत्तिः । अमीषां प्रमेयाणां बोधको वेदश्शब्दराशिः । शब्दस्य यदि द्रव्यत्वम्, यदि वा गुणत्वम् तर्हि तस्यापि विहितत्वाद् धर्मत्वं बलादापतति । एवञ्च वेदो धर्मः, वेदार्थो धर्मः, वेदार्थविचारोऽपि धर्मः । विचारस्य धर्मत्वे तदात्मिकाया मीमांसाया अपि धर्मत्वमायाति । अत एव मीमांसासूत्राणां 'धर्ममीमांसा, अध्वरमीमांसा' इत्येवं व्यवहारो दृश्यते शास्त्रकारेषु । युक्तञ्चेदम्—'धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्' इति वदन्तो भट्टपादाः धर्मप्रयोजनोद्देन मीमांसाया विधानं स्वीकुर्वन्ति । प्रयोजनोद्देशेन वेदविहितत्वमेव धर्मलक्षणमभिप्रैति भगवान् जैमिनिः । अतो विचारात्मकमीमांसाया वैधत्वे सिद्धे मीमांसाया अपि धर्मत्वमेष्टव्यम् ।

## मीमांसाशब्दार्थः

किञ्च मीमांसाशब्दः पूजितविचारार्थे प्रसिद्धः । 'मानपूजायाम्' 'माङ्माने' इति पूजार्थे मानार्थे च धातुद्वयम् । तत्र 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' इति सूत्रे 'माङ्' इत्यस्य ङानुबन्धस्य धातोर्नान्तत्वं निपात्य अनिच्छार्थे सन्प्रत्ययेऽभ्यासस्य च दीर्घे मीमांसाशब्दो निष्पद्यते । 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इत्युत्तरसूत्रे इच्छार्थे सन्विधानादयमनिच्छार्थे सन् इत्यभ्युपगन्तव्यं भवति । 'मानविचारे' इत्यपि चुरादिगणपठितो धातुः । तस्मादपि मीमांसाशब्दो निष्पद्यते । तत्र पूजार्थे कश्चन धातुः, विचारार्थे चापरः । पूजितविचारार्थे च न कोऽपि धातुः । अतः पूजितविचारार्थे मीमांसाशब्दः कथमिति प्रश्ने, 'प्रसिद्धिबलात् पूजितविचारार्थत्वम्' इति कल्पतरुकारा वदन्ति । प्रसिद्धिश्च व्यवहारः, तस्यापि शक्तिग्राहत्वमिष्यते । पूजितविचारवचनत्वं व्याकरण-

स्मृत्यसिद्धमपि प्रसिद्धेस्तत्साधकत्वं नानुपपन्नम्। अथवा तयोर्धात्वोरेकस्य ग्रहणे सति धात्वर्थतयान्यस्यापि धात्वर्थस्य लाभे विशेषणविशेष्यभावेन तादृशार्थवचनत्वं व्याकरणस्मृत्यविरुद्धम्। सर्वथा पूजितविचारवचनो मीमांसाशब्दः। जैमिनिकर्तृकविचारस्य पूजितत्वञ्च सूत्राविर्भावतः पूर्वं विदुषां विचारगोष्ठीषु निर्णीतत्वमेव। अतो यथा वेदोऽनादिः तथा मीमांसा-पूजितविचारोऽप्यनादिरिति कथनं नासङ्गतम्।

## जैमिनेः स्वरूपम्

विषयमिमं स्मृत्यधिकरणे 'अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात्' इति सूत्रे 'कर्तृसामान्यात्' इति हेतुं प्रयुञ्जानो जैमिनिरुपष्टम्भयति। याः स्मृतयः प्रत्यक्षश्रुतिमूलास्तासां प्रामाण्ये न काचिद्विप्रतिपत्तिः। याश्च प्रत्यक्ष-श्रुतिरहितास्तासां का गतिरिति प्रश्ने हेतुमिमं 'कर्तृसामान्यात्' इत्युपन्न्य-स्यति। य एव वेदोदितकर्मणां कर्तारस्त एव स्मृतीनामपीति कर्तृसामा-न्येन हेतुना श्रुतिमनुमाय तासां प्रामाण्यमभ्युपगन्तव्यम्। अत्र 'कर्तृ' पदेन जैमिन्यभिमताः परिचिताः कतिपय एव स्मर्तारः कर्मानुष्ठातारश्च नोच्यन्ते, व्याप्तिसिद्धये तत्समकालिकाः कतिपय एव भवेयुः। तेनानुमितिः जैमिनेः पूर्वतरवर्तिभिः स्मर्तृभिर्विरचितानां स्मृतीनां मूलश्रुतिविषयिणी सिध्यती-त्यङ्गीकर्तव्यम्। ते च चिरतराः स्मृतिनिबन्धारः प्रत्यक्षश्रुतिमनुभूयैव सर्वाः स्मृतीर्न्यबबन्धत इति न निर्बन्धः, शिष्टाचारेषु परिप्राप्तान् विषयान् स्मृत्वा प्रेक्ष्य वायतौ लोकानां तत्तत्संस्कृतिपरिरक्षणोपयोगाय ग्रन्थरूपेण न्यभान्त्सुः। इमेऽपि ग्रन्थास्तदानीं लिपिनिबद्धा आसन्निति न स्वीकर्तुं शक्यते। वेदवदध्ययनपरम्परायामेवेम आसन्निति वक्तव्यम्। अध्ययनमत्र लिपिनिबद्धपुस्तकाक्षरवाचनरूपं न पठनमभिप्रेयते, किन्तु गुरुमुखोच्चार-णानूच्चारणव्यापारेण वाचोविधेयतासम्पादनम्। वेदानामिव गृह्यश्रौत-सूत्रस्मृतीतिहासादीनामप्यध्ययनमासीदिति प्रतीयते। अतएव कल्पसूत्रा-धिकरणे कल्पसूत्रादीनां स्मृत्यधिकरणन्यायेन प्रामाण्ये सिद्धेऽपि तेषाम-पौरुषेयत्वेन प्रामाण्यमाशङ्क्य 'प्रयोगशास्त्रमिति चेन्नासन्नियमात्' इति

परिहृतम् । एतेषामपौरुषेयत्वमाशङ्कितुः पूर्वपक्षिणोऽनेकासु युक्तिष्वियमप्येका युक्तिरभिधातुं योग्या-यदमीषामपि वेदवदध्ययनम् ब्रह्मयज्ञगतविधितो वा सम्प्रदायतो वा स्वीकृतमिति । बौधायनापस्तम्बादीनां कर्तृस्मरणं दृढतरमस्तीति पौरुषेयत्वेनैव प्रामाण्यं नापौरुषेयत्वेनेति तत्रत्यस्सिद्धान्तः । एवञ्च 'कर्तृसामान्यात्' इति हेतुं निर्दिशता महर्षिणेदमवबोध्यते–यत् चिरतरः कश्चन सम्प्रदायो गुरुशिष्यभावरूप आसीद् यस्मिन् वेदाध्ययनम्, तदर्थविचारः, तदर्थं गोष्ठ्यः, ऐहिकामुष्मिकफलदानां श्रौतस्मार्तकर्मणामाचरणञ्चाविच्छिन्नरूपेण प्रचलितमासीदिति, अत्रैव कर्तृणाञ्च सामान्यमिति ।

किञ्च-क्वचित्कर्तृसामान्ये सत्यप्यापस्तम्बकात्यायनादौ तद्विरचितसूत्रविशेषाणामप्रामाण्यसाधने जैमिनिर्न सङ्कोचमश्नुते । न खल्विमानि सूत्राण्यपौरुषेयाणि, दृढतरकर्तृस्मरणस्य सत्त्वात् । अतो विरुद्धायां प्रत्यक्षश्रुतौ लभ्यमानायां तेषामप्रामाण्यस्य निवारयितुमशक्यत्वात् । तदिदं कल्पसूत्राधिकरणप्रयोजनकथनव्याजेन जैमिनिः 'सर्वत्र च प्रयुक्तत्वात्सन्निधानशास्त्राच्च' इति सूत्रेण व्यक्तीकरोति । आपस्तम्बकात्यायनादिसूत्रेषु किञ्चिदेकं 'कर्तृसामान्यात्' इति हेतुना प्रमाणम्, अपरञ्च किञ्चित् 'सन्निधानशास्त्राच्च' इति हेतुना अप्रमाणम् इतीदं न सङ्गतमिव प्रतिभाति, तथापि जैमिनिदृष्ट्येदं सुसङ्गतम् । तथाहि–जैमिनिर्हि 'तस्य निमित्तपरीष्टिः' इति प्रतिज्ञातस्य धर्मस्य स्वरूपं परीक्ष्य निर्णेतुं न्यायनिबन्धनात्मकमिदं शासनं प्रवर्तयामास । परीक्षा च निष्पक्षपातिनी दृष्टिः । तया दृष्ट्या पर्यालोच्यमाने कात्यायनापस्तम्बादीनां वचस्सु यदेव प्रत्यक्षश्रुतिविरुद्धमपि च न्यायविरुद्धं तस्याप्रामाण्याङ्गीकारे न कोऽपि दोषः । कर्तृसामान्यहेतुना समग्रस्य प्रामाण्येऽवधृतेऽपि कस्याप्येकस्य सूत्रस्य श्रुतिविरोधदर्शनेऽप्रामाण्यस्वीकारो न दोषाय, न्यायानां समक्षमात्मीयपरकीयविभागाभावात् । न्याया अपरिवर्तनीया भवन्ति, परीक्ष्य निर्णीतत्वात्तेषाम् । महर्षित्वेन जैमिनिकात्यायनापस्तम्बादीनां समानत्वे

सत्यपि परीक्षकत्वं जैमिनेरधिकं वर्तते, तदर्थमेव जैमिनिः प्रवृत्तः न्याय-निबन्धनात्मकं शासनं प्रवर्तयामास। कात्यायनादयस्तु—तत्र तत्र विप्रकीर्णाश्शाखाः पर्यालोच्य तद्गतांश्च विषयानवबुध्य, इतस्ततश्शिष्टाचारपरिप्राप्तांश्च विषयान् विज्ञाय तान् सिद्धवत्कृत्य स्मृतिसूत्रात्मना सन्निवेशितवन्तः। यथा श्रुतं यथा च दृष्टं तन्निबबन्धुः। नात्र तेषां परीक्षायामवसरः। उदाहरणानि पर्यालोचयामः—दर्शपूर्णमासयोः पौर्णमास्यां द्वौ पुरोडाशौ—आग्नेयोऽग्नीषोमीयश्चेति, दर्शे चाग्नेय ऐन्द्राग्नश्चेति विद्येते। तत्र द्व्यवदानादिना प्रधानहोमे निष्पादिते, अवशिष्टपुरोडाशेन स्विष्टकृदादिप्रतिपत्तिकर्माणि भवन्ति। तेषु चतुर्धाकरणमिति किञ्चित्कर्म। पुरोडाशस्य कञ्चन भागं चतुर्धा विभज्य होत्रादिभ्यश्चतुर्भ्य ऋत्विग्भ्यः प्रदीयते। तत्र द्वयोः पुरोडाशयोर्मध्ये कस्य चतुर्धाकरणमिति विचिकित्सायां कात्यायनो वदति—'अविशेषादुभौ वा' इति। द्वयोरपि पुरोडाशयोश्चतुर्धाकरणं कर्तव्यमिति तदर्थः। जैमिनिस्तु मन्यते-आग्नेयपुरोडाशस्यैव चतुर्धाकरणं नान्यस्येति। अत्र जैमिनेः 'आग्नेयं चतुर्धा करोति' इति वेदवाक्यमवलम्बः। किमिदं वेदवाक्यं कात्यायनादिना न दृष्टम्? दृष्ट्वा वा किं कात्यायनः शाखान्तरगतवाक्यदर्शनेन उभयोः पुरोडाशयोश्चतुर्धाकरणमिति ब्रवीति? एवं जैमिनिविषयेऽपि विकल्पो भवति-किं द्वयोः पुरोडाशयोश्चतुर्धाकरणावबोधकं शाखान्तरीयं वाक्यं जैमिनिना न दृष्टम्? दृष्ट्वा वा 'आग्नेयं चतुर्धा करोति' इति वाक्यावलम्बनेनाग्नेयस्यैव पुरोडाशस्य चतुर्धाकरणमिति जैमिनिः ब्रवीतीति। भवतु यथा तथा वा। अतिचिरन्तनोऽयं विषयः, न वयमिदानीं सहसा निश्चेतुं शक्नुमः। किन्तु कल्पसूत्राधिकरणन्यायमनुसर्तुं प्रभवामः। न्यायस्त्वस्मान् विषयमिमं ग्राहयति-यत्, 'अविशेषादुभौ वा' इति कात्यायनवचनं शाखान्तरवचनमूलकमपि, मूलस्य यावदुपलम्भम् उभयोः पुरोडाशयोश्चतुर्धाकरणं नानुष्ठेयमिति।

अनेन सन्दर्भेण जैमिनेस्स्वरूपमनितरसाधारणमिति निश्चेतुं शक्यते—कर्तृसामान्यहेतुना ये जैमिनिना सङ्गृहीताः, त एवापस्तम्बादयः क्वचिद्

असन्नियमहेतुना बहिष्क्रियन्ते। कात्यायनापस्तम्बादिविरचितेषु ग्रन्थेषु 'प्रयोगशास्त्रमिति चेत्' इति ब्रुवाणस्य जैमिनेश्शास्त्रत्वबुद्धिरस्ति, किन्तु तत्र क्वचित् सन्निबन्धनत्वं जैमिनिना नानुभूयते। यत्रैव शास्त्रे सन्निबन्धनता नास्ति तस्य बहिष्कारो नानुचितः। सन्निबन्धनत्वाभावे च विरुद्धश्रुत्युपलम्भः कारणम्। एवञ्च कात्यायनादिनिबद्धे शास्त्र एव जैमिनिर्दोषं पश्यति न तु कात्यायनादौ, तत्र कर्तृसामान्यहेतोर्व्यवस्थितत्वादिति सिध्यति। तेन स्वयूथ्येष्वनुग्रहबुद्धिं परयूथ्येषु च निग्रहबुद्धिं पक्षपातयुतां जैमिनिर्निर्वहतीति सिद्धं भवति। अतएव 'चोदितन्तु प्रतीयेताविरोधात्प्रमाणेन' इति सूत्रयन् जैमिनिस्स्वीयां निष्पक्षपातविचारदृष्टिमवद्योतयति। कथमन्यथा पिकनेमादिपदानामनार्यसमाजव्यवहारप्रसिद्धानेवार्थान् ग्रहीतुं जैमिनिरनुमन्येत। शब्दव्युत्पादनाय सन्ति स्वयूथ्यानि निगमनिरुक्तव्याकरणादीनि शास्त्राणि। तैः पिकादयश्शब्दा व्युत्पादयितुं शक्यन्ते, निगमनिरुक्तव्याकरणादिप्रवर्तकाः सन्ति शिष्टाः धर्मलिप्सवोऽधर्मभीरवः श्रुत्यर्थतत्त्वं विविच्य पालयन्तस्तत्राभिनिविष्टाः, अनार्या म्लेच्छास्तु यथाकथञ्चिद्व्यवहाराय शब्दप्रयोक्तारः, तथापि म्लेच्छप्रसिद्धिविषयमर्थमेव ग्रहीतुं जैमिनिरनुशास्ति—'चोदितन्तु प्रतीयेत' इति। अत्र च कारणं निर्दिशति—'प्रमाणेनाविरोधात्' इति। पिकादिशब्दानां म्लेच्छप्रसिद्धिविषयार्थपरिग्रहणेन 'पिकमालभेत' इत्यादिवेदवाक्यार्थनिर्णये न कोऽपि विरोधः। निरुक्तव्याकरणादिप्रवर्तकाः स्वयूथ्याः, तद्द्वारा निर्णीतार्थग्रहणे प्रकृतिप्रत्ययभेदेनार्था अनेके भवेयुः, तेषु को ग्राह्यः कश्च परित्याज्य इति सन्देहस्स्यात्। तदपेक्षया प्रमाणेनाविरोधात् म्लेच्छप्रसिद्धार्थग्रहणमुचितम्। यद्यप्यार्यम्लेच्छाधिकरणे आर्यप्रसिद्धेर्बलीयस्त्वं म्लेच्छप्रसिद्धेश्च दुर्बलत्वं व्यवस्थापितम्, तथापि तत्र यववराहादिशब्दानामुभयत्र प्रसिद्धौ सत्यामार्यप्रसिद्धेरर्थवादानुगुण्यमितरत्र च तदभाव इत्यत्र कारणविशेषसत्त्वान्न दोषः। प्रकृते तु पिकादिशब्दा म्लेच्छेष्वेव क्वचिदर्थे प्रसिद्धाः, नार्येषु। तत्र म्लेच्छप्रसिद्धार्थग्रहणमुचितमिति जैमिनिः पश्यति।

किञ्च 'मानाधीना मेयसिद्धिः' इति न्यायेन प्रमेयाणां प्रमाणाधीनसिद्धिकत्वात्सत्यपि दौर्बल्ये क्वचित्तेषां प्राबल्यमनुशास्ति जैमिनिः शिष्टाकोपाधिकरणे। न हि प्रमाणत्वेन प्रमाणानां प्राबल्यम्, नापि प्रमेयत्वेन प्रमेयाणां दौर्बल्यं निश्चेतव्यम्, किन्तु प्रमाणयोः तत्प्रमेययोश्च स्वरूपं संवीक्ष्यैव तयोर्निश्चयः कर्तव्य इत्यनुशास्ति 'प्रमाणबलाबलात्प्रमेयबलाबलं ज्यायः' इति। एवमनुशासतो जैमिनेरयमाशयः—स्मर्तॄणां मन्वादीनां सङ्ग्रहाय स्मृत्यधिकरणे 'कर्तृसामान्यात्' इत्युपन्यस्तं हेतुं परीक्षते जैमिनिश्शिष्टाकोपाधिकरणे। श्रुतिबोधितक्रमकालपरिमाणैः स्मार्तानामाचमनयज्ञोपवीतादीनां विरोधे समापतिते विरोधाधिकरणन्यायेन कर्तृसामान्यहेतोर्व्यभिचारः प्रसक्तः, स च शिष्टाकोपाधिकरणे निरस्तः। स्मर्तृभिरुक्तान् पदार्थान् सङ्गृह्यैव श्रुतिबोधितक्रमकालादीनां प्रसरे स्वीकृते न विरोधस्य प्रसक्तिः, विरोधाभावे च कर्तृसामान्यहेतुरव्यभिचरितस्तिष्ठति। तदिदं सर्वं पर्यालोच्य शिष्टाकोपाधिकरणे 'शास्त्रपरिमाणात्' इति हेतुं निर्दिश्य पुनर्यववराहाधिकरणे 'शास्त्रस्य वा तन्निमित्तत्वात्' इति सूत्रयति। शास्त्रपदमत्र न केवलं ग्रन्थारूढमनुशासनमनुवदति, किन्तु शिष्टानामाचारो व्यवहारश्च शास्त्रपदाभिधित्सितः। एवं महर्षिर्जैमिनिः प्रमाणमूर्धन्यं वेदं स्वीकृत्य तन्मूलकत्वं स्मृत्याचारदर्शनादीनां व्यवस्थापयन्नपि स्मर्तृषु शिष्टेषु दर्शनप्रवर्तकेषु च महत्त्वबुद्धिमावहन्नपि सति क्वचन वेदविरोधेऽसन्नियमहेतुना तदप्रामाण्यस्वीकारादविचलितः स्वीयं पक्षपातरहितं पन्थानमवद्योतयन् विचारकेषु विमर्शकेषु च कनिष्ठिकामूलपातमनुभवति।

किञ्च 'अपि वा सर्वधर्मंस्स्यात्तन्न्यायत्वाद्विधानस्य' इति होलाकाधिकरणे सूत्रयन्महर्षिः तत्तद्देशप्रान्तसम्प्रदायभेदेन भिन्नानामप्याचाराणां होलिकोत्सवादीनां सर्वधर्मत्वं सर्वदेशीयप्रमाणविषयत्वमुपपादयन् तत्र 'विधानस्य तन्न्यायत्वात्' इति हेतुमुपादत्ते। आचारेभ्यः कल्प्यमानानां स्मृतीनाम् ताभ्यश्चानुमीयमानानां श्रुतीनाञ्च सर्वधर्मप्रापकत्वादिति हेतोरर्थः। प्राच्योदीच्यत्वादयः कर्तृपरिच्छेदका न भवितुमर्हन्ति।

कर्तृपरिच्छेदकतया जातिगुणक्रियाव्यक्त्यवयवसंस्थानान्येव सम्बद्धुमर्हाणि। न हि प्राच्यादयश्शब्दाः पूर्वोक्तेष्वन्यतमप्रवृत्तिनिमित्तकाः। 'अष्टवर्षं ब्राह्मणमुपनयीत' 'शुक्लो होता' 'सोमयाजी संनयेत्' 'भार्गवो होता भवति' 'अन्यूनानतिरिक्ताङ्गा ऋत्विजः' इत्यादौ ब्राह्मणशुक्लादयश्शब्दाः कर्तृपरिच्छेदकतया सम्बध्नन्ति। प्राच्यैर्होलाकाः कर्तव्याः, उदीच्यैरुद्वृषभादयः, दाक्षिणात्यैराह्नीनैबुकादय इत्युक्ते के ते प्राच्योदीच्यादय इति प्रश्ने कीदृशमत्र निर्वचनं भवेत्? न हि प्राचीं गतः प्राच्यो भवति, नापि प्राच्या आगतस्तथा, न चापि प्राच्यां समुत्पन्नः प्राच्यः, सर्वत्र व्यभिचारात्। अतो होलाकादीनां सर्वधर्मत्वम्। एवमाचाराणाममीषां सर्वधर्मत्वं व्यवस्थापयता जैमिनिना देशस्य समाजस्य चाखण्डत्वं संरक्ष्यते।

## न्यायानां लोकोपयोगिता

जैमिनिरयं प्रधानतया निष्कृष्टं वेदवाक्यार्थं विविधैर्न्यायैः प्रदर्शयितुं शास्त्रमिदमारभमाणो वेदस्य वैदिकसंस्कृतेश्च लोकेन सह विद्यमानं सम्बन्धनैकट्यं क्वचिद्वैदिकैः क्वचिच्च लौकिकैरुदाहरणैरवद्योत्य लोकान् सर्वान् शिक्षयति। मीमांसाख्याया अस्या विद्यायाश्शिक्षको महर्षिर्जैमिनिः। सर्वस्यापि शिक्षकस्यायं स्वभावः—यदतिगभीराणां विषयाणामवबोधनाय लौकिकोदाहरणावलम्बनं नाम। अत एव सूत्रकारः 'लोकवत्' 'यथा लोके' 'लोकभूतेषु' 'लोके कर्माणि वेदवत्' इत्येवं बहुशः प्रयुञ्जानः वेदस्य लोकसाधारण्यं प्रदर्शयति। तत्र कतिपयान्युदाहरणानि ससमन्वयं निरूपयामः।

अर्थवादाधिकरणे ( १.२.१ ) 'अन्यानर्थक्यात्' इति सूत्रेण 'पूर्णाहुत्या सर्वान् कामानवाप्नोति' 'तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेद' इत्यादि वाक्यानामप्रामाण्यमाशङ्कितम्। अग्निसिध्यर्थं क्रियमाण आधाने विहिता पूर्णाहुतिः। अनयैव पूर्णाहुत्या सर्वकामावाप्तौ सत्यां बह्वायाससाध्यानि दर्शपूर्णमासचातुर्मास्यज्योतिष्टोमादीन्याचरितुं कथं लोकानां प्रवृत्तिस्स्यात्? इमानि कर्माण्यनर्थकानि भवेयुः, तदपेक्षया एकस्यास्याप्रामाण्यमुचितम्। एवमश्वमेधयागस्यानुष्ठानेन

यत्फलं मृत्युतरणब्रह्महत्यातरणरूपं तच्चेदश्वमेधप्रकरणवेदनेनैव सम्पद्येत तर्हि तदनुष्ठाने पुरुषः कथं प्रवर्तेत ? अत एतादृशं वाक्यमनर्थकम् इति पूर्वपक्षिण आशयः। अस्याश्शङ्कायाः निराकरणसूत्रम्—'फलस्य कर्म-निष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषस्स्यात्' इति। अग्निहोत्र-दर्शपूर्णमासज्योतिष्टोमादीनां स्वर्ग एव फलमुपदिष्टम्। स्वर्गस्त्वामुष्मिकं फलम्, तद्गततरतमभावोऽग्निहोत्रदर्शपूर्णमासादितरतमभावापन्नकर्म-भिस्सम्पद्यमानोऽपि न दृष्टिगोचरस्सः। तमिमं दृष्टिगोचरेण लौकिक-दृष्टान्तेन घटयति—'लोकवत्परिमाणतः फलविशेषस्स्यात्' इति। सेवाता-रतम्येन लोके भृत्याः फलतारतम्यमवाप्नुवन्तीत्यनुभवामः। गृहनिर्माणाय परिक्रीतेषु भृत्येषु स्नुहीसंयोजनेष्टकावहनकर्तारः इष्टकासंयोजनकर्तारः इष्टकासु भित्तिषु च चित्रकलाविधातारश्च तरतमभावेन भृतिमवाप्नुवन्त एकैकोऽपि ब्रवीति यदहमवाप्तव्यं सर्वमवाप्नुयामिति। अत्र यथा सर्वशब्द-स्स्वस्वावाप्तव्यपरिमाणवाची तथैव 'सर्वान् कामानवाप्नोति' इत्यत्रापि सर्वशब्दोऽवगन्तव्यः। एवं ब्रुवतो जैमिनेर्न किमपि वैशिष्ट्यं प्रतीयत इव प्रतिभायात्, किन्तु जैमिनेर्हृदयं प्रविश्य पर्यालोच्यमानेऽत्रत्यं तत्त्वं निगूढं किञ्चित्प्रतीयेत। स्वीकृतप्रजातन्त्रविधाने स्वतन्त्रभारतेऽधुना सर्वोऽपि स्वातन्त्र्यमात्मनो मन्यमानस्सहसैवान्यसमतामवाप्तुं चेष्टते, तदर्थं कलहं करोति, सङ्घं सङ्घट्टयति, धर्मघटञ्च विदधाति, शासनसूत्रं विच्छेदयितुं प्रयतत इति प्रत्यक्षमनुभवामः। तदत्र जैमिनिरनुशास्ति–'फलस्य कर्म-निष्पत्तेः' इति। सनियममनुष्ठीयमानैरेव कर्मभिः फलस्य निष्पत्तिरिति नेदमप्रत्यक्षम्। फलकामनां जैमिनिर्न निरुणद्धि। सर्वस्सर्वाणि फलानि कामयितुं प्रभुः, किन्तु तत्राधिकारी सन् फलं कामयेत। अधिकारि-विशेषणेषु विद्यायास्सामर्थ्यस्य चोपदेशः। सतोरपि विद्यासामर्थ्ययोः नियामकैः प्रवर्तितः क्रमोऽपि नियतः कश्चनापेक्ष्यते। एवमधिकारिविशे-षणसम्पन्नस्सनियमं कर्माणि कुर्वीत। तादृशेषु कर्मस्वनुष्ठीयमानेषु कर्मानुसारि फलमवाप्तुं सोऽधिकारी। सोमयाजिनो यादृशं फलम् तादृ-

शमग्निहोत्रमात्रानुष्ठात्रा मया लब्धव्यमितीच्छामात्रेण न तेन तल्लब्धुं शक्यम्, न चेयमिच्छापि साधीयसी। स्वतन्त्रभारते मानवमात्रस्य राष्ट्रपतिपदं राज्यपालपदं वा प्रधानमन्त्रिणः पदं वा लब्धुमस्त्यधिकार इत्येतावता न सर्वैस्तल्लब्धुं शक्यम्। तत्तदौपयिकसामग्रीसम्पादनं खलु प्रथममावश्यकम्। फलकामनातः पूर्वं तत्साधनेषु कर्मसु स्वस्याधिकारोऽस्ति न वेति विचिन्तनीयम्। विचिन्तनमिदं ज्ञानम्, तत इच्छा, ततो यत्नः, ततः कर्मसम्पादनम्। फलन्तु स्वत एव निष्पद्यत इति।

विषयमिमं विशदयन् महर्षिस्तृतीयाध्यायस्याष्टमपादे सूत्रयति—'तपश्च फलसिद्धित्वाल्लोकवत्' ( ३.८.९ ) इति। ज्योतिष्टोमे दीक्षितस्य व्रतं श्रुतम्—'पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति। दीक्षावसरे ब्राह्मणेन यजमानेन पयोव्रतं कर्तव्यम्, राजन्येन यवागूव्रतम्, वैश्येन चामिक्षाव्रतम्। तेन तेन तस्य तस्य भक्षणं कर्तव्यमित्यर्थः। पय आदिव्रतेन यजमानो यद्यात्मनश्शोषणं निश्चिनुयात्तर्ह्यनुव्रतमाम्नातम्—'यदि मन्येतोपदस्यामिति ओदनं धानाः सक्तून् घृतमित्यनुवर्तयेदात्मनोऽनुपदासाय' इति। ओदनधानादिव्रतमनुव्रतम्। उपदासश्शोषणम्, अनुपदासोऽशोषणम्। तदिदमनुव्रतं प्रकृत्याम्नातम्—'द्व्यहं नाश्नाति, अथाश्नाति त्र्यहं नाश्नाति' इत्यादि। अनुव्रतेऽयं नियमः—यत्र क्रतौ दीक्षादिनानि वर्धन्ते तत्र यद्यात्मनोऽनुपदासायानुव्रतं कर्तुमभिलषेत्तर्हि द्विनद्वयं किमप्यशनं न कुर्यात्, तदनन्तरदिनेऽश्नीयात्, ततो दिनत्रयं नाश्नोयात् इति। तदिदमनशनं किमाध्वर्यवम्? उत याजमानम्? इति सन्दिह्य याजमानमिति सिद्धान्तयन् सूत्रयामास—'तपश्च फलसिद्धित्वाल्लोकवत्' इति। सूत्रगतं तपःपदं कायशोषणानशनपरम्। तपःकायशोषणमनशनमिदं याजमानम्, कुतः? फलसिद्धित्वात्-फलस्य सिद्धिरुत्पत्तिर्यस्मात्तत् तपः फलसिद्धिः, तद्भावस्तस्मात्। यथा लोके स्वल्पक्लेशेनापि महतः फलस्यावाप्तिस्तद्वदिति सूत्रार्थः। यथा दीक्षितस्यान्ये वपनादयस्संस्कारास्तथेदमनशनमपि तत्संस्काररूपम्। फलिसंस्कारपदे-

नेमे व्यवह्रियन्ते। फली यजमानः, तस्य संस्कारा इत्यर्थः। एवं यजमानेनानुष्ठीयमानस्संस्कारः यजमानसमारब्धकार्ययोग्यताधायकत्वेन परिगण्यते। योग्यताधानञ्च दृष्टादृष्टविधया द्विविधम्। प्रकृते चादृष्टविधया प्रतिबन्धकनिरासपूर्वकं योग्यताधानम्। प्रतिबन्धकमदृश्यम्, तदस्तीति निश्चित्य तन्निरासाय यत्नः क्रियते। यत्र प्रतिबन्धकं दृश्यं तन्निराकरणं दृष्टविधयैव सम्पाद्यते। यथा लोके दर्पणे विद्यमानं मालिन्यं बिम्बग्राहकप्रतिबन्धकमनुभूय तन्निरासाय भस्मघर्षणवस्त्रप्रोञ्छनादिकं क्रियते, तेन च दर्पणे बिम्बग्राहकयोग्यताधानञ्च सम्पाद्यते। अनेन लोकदृष्टान्तेन जैमिनिरस्मानध्यापयति-यत्सम्प्रति भारतीयैः कृत्रिमेण स्वाभाविकेन वा अशनवसनाद्यभावजनितक्लेशेन यद्दुःखं सुखोपभोगप्रतिबन्धकमनुभूयते तन्निराकरणं तपसाऽनशनेन साधनेन कर्तव्यमिति। ज्योतिष्टोमेऽनशनमिदं याजमानम्, यजमान एव स्वगतस्वर्गादिसुखोपभोगप्रतिबन्धकदुःखनिरासायानशनं करोति, तद्वल्लोकेऽपि अशनवसनादिसुखोपभोगप्रतिबन्धकतदभावजनितदुःखनिरासं यजमानस्थानापन्ना राष्ट्रपति-राज्यपाल-प्रधानमुख्यमन्त्रिणो मन्त्रिणश्च कुर्वन्तु इति प्रश्नस्योत्तरं जैमिनिस्स्वयं ददाति- –'वचनादितरेषां स्यात्' ( ३.८.११ ) इति सूत्रेण। न हीदमनशनं याजमानमेव, किन्त्वन्येषामपि। शासका अनशनं कुर्वन्तु, वयं सकोलाहलं 'धर्मघटं' कुर्मोऽस्माकमशनं वसनञ्चावश्यकमिति नायं न्याय्यः पन्थाः। उत्तुङ्गशिखरस्याभ्रंलिहस्य धराधरस्य समीकरणं न खलु क्षुद्रकायेन मूषिकेण भवितुमर्हति, तदर्थमसुरयन्त्रस्याणविकसाधनस्यापेक्षा भवति। अशनवसनन्यूनतापिशाचिकायास्समुत्सारणं सर्वैस्सम्भूय कर्तव्यम्। षट्पञ्चाशत्कोटिसङ्ख्याका भारतीयाः प्रतिमासमेकमहर्यद्यनशनं तपः कुर्युः न तर्हि अशनवसनन्यूनताया अवसरस्स्यादिति जैमिनिश्शिक्षयति।

किञ्चास्माकं भारतस्य यत्प्रजातन्त्रविधानं तत्सत्रात्मकम्। सत्रे च सर्वे भवन्ति यजमानाः। त एव सम्भूयाध्वर्यवहौत्रौद्गात्रब्रह्मादिकार्याणि कर्तुं योग्यानामृत्विजां चयनं कुर्वन्ति। गृहपतिश्च कश्चन

नियुञ्जते । अध्वर्योः कार्यमाध्वर्यवम्, होतुः कार्यं हौत्रम्, उद्गातुः कार्यमौद्गात्रम्, ब्रह्मणः कार्यं ब्राह्मम्। अध्वर्युहोत्रादीनां प्रत्येकं सहायकास्त्रयस्त्रयो भवन्ति । तस्य तस्य योग्यतां निर्धार्य तत्तत्कार्ये योग्यान् सन्निवन्ति । एतेषां कर्मसु न्यूनाधिकभावेन तरतमभावोऽस्त्येव, तथापि कर्मजन्यफलोपभोगे न न्यूनाधिकभावः । यावदेव फलं गृहपतिपदे नियुक्तः प्राप्नोति तावदेवाध्वर्य्वादयः तत्सहायकाश्च प्राप्नुवन्ति । किन्तु चयनावसरे सर्वेऽपि जागरूका भवन्ति, यथायथं तत्तत्कार्यसम्पादनक्षमतां सुपरीक्ष्य सच्छीलं तत्तत्कर्मणि नियुञ्जते । अत्र नियोक्तारोऽपि त एव, त एव च नियोज्याः । नियोक्तृत्वेन महत्त्वबुद्धिः, नियोज्यत्वेन लघीयस्त्वबुद्धिर्न भवति । सर्वे समाः, सर्वे च तुल्यफलभाजः, सर्वे च यजमानसंस्कारसंस्कृता भवन्ति । व्यवहारे च मुख्यत्वामुख्यत्वकृतस्तु भेदो भवत्येव । गृहपतिपदे नियुक्तो मुख्यस्स्वीयं कर्म साधयति, अच्छावाकपदे च नियुक्तोऽमुख्यस्स्वीयानि कर्माण्याचरति । अमुख्यस्य कर्मबाहुल्यम् मुख्यस्य च तदल्पत्वं सिद्धमेव, तथापि कर्मजन्यं स्वर्गादिकं फलं तुल्यमेव । विषयोऽयं पूर्वोत्तरपक्षैर्जैमिनिना द्वादशाध्यायस्य चतुर्थपादे चतुर्दशाधिकरणे ( १२.४.१४ ) सुनिरूपितः । स्वतन्त्रभारते वयमेव नियोक्तारो नियोज्याश्च । तदैव खलु प्रजातन्त्रस्य प्रजातन्त्रत्वं सिध्यति । गृहपतिपदे नियुक्तो राष्ट्रपतिः, प्रधानमन्त्री वा । अन्ये च मन्त्रिण उपमन्त्रिणस्सहायमन्त्रिणश्च नियुक्ताः । यथा केन्द्रे तथा प्रतिप्रान्तं राज्यपालः, मुख्यमन्त्री एवमन्ये च नियुज्यन्ते । 'सर्वे च तदर्थत्वात्' ( १२.४.३५ ) इति सूत्रयन् सर्वे यजमाना याजमानफलिसंस्कारकर्माणि कुर्युरित्यनुशास्ति । सत्यवसरे न केवलमनशनं तपोमात्रं कुर्युः, किन्तु केदारेषु कर्षणमपि कुर्युः । तथाविधानामेव चयनावसरे योग्यानां चयनं कर्तव्यम् । अयोग्यान् नियुज्य पश्चात्तापकरणं जैमिनिर्न मन्यते । प्रथमत एव जागरूकैर्भवितव्यम् । यदि तथाविधा योग्या न लभ्यन्ते, तर्हि सोढ्वापि क्लेशं तथाविधाः समुत्पादनीयाः । भारतीय एकैकोऽप्यधिकरणमिदमधीत्य विषयमनुसन्दध्यात् ।

'नष्टाश्वदग्धरथ' न्यायं तार्तीयप्रकरणाधिकरणेन ( ३.३.४ ) 'फलवत्सन्निधावफलं तदङ्गम्' इति न्यायं चातुर्थिकप्रजापतिव्रताधिकरणेन ( ४.१.५ ) च साधयन् महर्षिर्जैमिनिः प्रजातन्त्रविधेस्स्वरूपं यथायथमवबोधयति । तथाहि—दर्शपूर्णमासौ स्वर्गार्थेन विहितौ 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । स्वर्गे फले जननीये दर्शपूर्णमासयोः प्राधान्यम् ; तत्र तादृशफलजननशक्तिरनादितस्सिद्धा, वन्हाविव दाहकत्वशक्तिः । तत्रत्या शक्तिर्नास्माभिस्समुत्पादनीया, सा हि वेदवाक्यप्रामाण्येन तत्र स्वतो नियता । किन्तु सा फलं जनयितुमनुग्राहकानपेक्षते । एवञ्च मुख्यौ दर्शपूर्णमासौ स्वर्गजननशक्तिमन्तावपि न फलं जनयतः, अनुग्राहकसामग्रीसापेक्षत्वाच्छक्तेरिति प्रधानयोर्दर्शपूर्णमासयोः स्थितिस्सिद्धा । एवं तत्प्रकरणे बहून्युपकारकाण्यङ्गानि विहितानि, येषां फलं किमपि न श्रुतम् । इमानि किञ्चित्सम्पादयितुमभिलषन्ति । स्वातन्त्र्येण स्वर्गादिफलजनने नेमानि प्रभवन्ति, फलस्याश्रवणात् । किन्तु फलोत्पादकस्य साहाय्यं विदधन्ति तदनुग्राहकाणि भवितुमर्हन्ति तन्त्रीष्वनुगताया विद्युत इवानुग्राहकसामग्र्यः 'स्विच्' प्रभृतयः । एवञ्चाङ्गानां कार्यापेक्षा, प्रधानस्य चानुग्रहापेक्षेत्युभयोस्सम्बन्धः । अयमेव नष्टाश्वदग्धरथन्यायः । कुतश्चित्प्रस्थितयोर्द्वयो रथिनोः मध्येमार्गमेकस्याश्वो नष्टः, अपरस्य च रथो दग्धः । उभावपि प्रत्येकमाकाङ्क्षतः—रथमश्वञ्च । उभयोस्सम्बन्धेन स्वस्वेष्टदेशप्राप्तिरूपं फलमुभावप्यनुभवतः । अयमेव न्यायश्चतुर्थे प्रजापतिव्रताधिकरणे 'तथा च लोकभूतेषु' इति सूत्रयता महर्षिणा 'फलवत्सन्निधावफलं तदङ्गम्' इत्येवं विशदीकृतः । प्रकृतेऽनयोर्न्याययोरुपयोगस्तु–राष्ट्रपतित्वेन वृतः प्रधानन्यायाधीशस्य सन्निधौ शपथं गृह्णाति–राष्ट्रमिदं न्याय्येन पथा जनताकल्याणाय सञ्चालयामीति, राष्ट्रपतेस्सन्निधौ च प्रधानमन्त्री तत्सहायका अन्ये मन्त्रिणश्च तथैव शपथं गृह्णन्ति, एवं राज्येषु राज्यपालः, मुख्यमन्त्री तदनुयायिनो मन्त्रिणश्च स्वस्वकार्याणि जनतासुखसमृद्धये शपथं गृह्णन्ति । नियतं स्वस्वपदमधिरुह्य कार्याणि चालयन्ति । तत्तत्कार्यसञ्चालने इमे मुख्याः, तादृशीं शक्तिञ्चाबिभ्रति । शक्तिमन्तोऽपि जनता-

साहाय्यं विना फलं जनयितुं न प्रभवो भवन्ति। न ह्यधिकारमात्रेण कृषि-मन्त्री केदारेषु सस्यान्युत्पादयितुं शक्नोति। रावणराज्ये सर्वमिदं स्वत एव जायमानमासीदिति भोजराजो वर्णयति। रामराज्यकल्पना खल्व-स्माकम्। तत्र जनतायाः शक्त्यनुग्राहकत्वमस्ति। शक्त्यनुग्रहापेक्षा चाधि-कारवतां मन्त्रिणाम्, कार्यापेक्षा च जनतायाः। अनुग्राहकत्वमङ्गानाम्, अनुग्राह्यत्वञ्च मुख्यस्य। एवमुभयोस्सापेक्षत्वान्मिथस्सम्बन्धः, तेनैव च सुखसम्पत्समृद्धिरिति नष्टाश्वदग्धरथन्यायस्य फलवत्सन्निधावफलं तदङ्ग-मिति न्यायस्य चोपयोगं विज्ञाय प्रजातन्त्रविधिं परिरक्षेयुरिति जैमिने-श्शासनम्। दर्शपूर्णमाससन्निधौ श्रुतानि प्रयाजादीन्यङ्गानि फलजननौ-पयिकान्येव, किन्तु फलजननाय आग्नेयादयः प्रधानयागास्तैरनुमताः, अतस्तत्रत्यशक्तिसमेधकत्वेनैव फलजनने तैर्वर्तितव्यम्, न तु स्वा-तन्त्र्येण। तथैव प्रजातन्त्रविधाने देशसमाजोत्थानानुकूलकार्यसम्पादनाय प्रधानमन्त्रिप्रभृतयो जनतया नियुक्ताः। अधिकारवन्तोऽपि ते स्वातन्त्र्येण तानि तानि कार्याणि सम्पादयितुं विना जनतासाहाय्यं न शक्नुवन्ति। जनतापि अधिकारविहीना स्वातन्त्र्येण न किमपि सम्पादयितुं शक्नोति। नियुक्तमन्त्रिणां साहाय्यप्रदानेन फलसम्पादनकार्ये तया प्रवर्तितव्यमिति द्वयोरपि न्याययोस्तात्पर्यम्।

किञ्च स्वतन्त्रभारते लिखितुं भाषितुञ्च जनतायास्स्वातन्त्र्यमस्ति, न तु स्वाच्छन्द्यम्। प्रायः पृच्छन्ति लोकाः लिखन्ति च—यत् प्रधान-मन्त्रिणा मन्त्रिभिश्च प्रवर्तितासु बह्वीषु पञ्चवर्षीययोजनासु काश्चन विफला अजायन्त, प्रभूतस्य द्रव्यस्यापव्ययो जातः, तैरेव द्रव्यमिदमपहृतम्, विषय-मिमं निर्धारयितुं न्यायाधीशानां समितिः काचन नियोक्तव्या, मन्त्रिणश्च दण्डनीयाः, पदाच्च ते च्यावयितव्या इति। सत्यमत्रास्त्यधिकारो जन-तायाः। अस्मिन् विषये जैमिनिः किमभिप्रैति किं वानुशास्तीति पश्यामः। षष्ठाध्यायस्य चतुर्थपादे पञ्चमाधिकरणसिद्धः कश्चन न्यायः। तत्र 'यस्य पुरोडाशः क्षायति तं यज्ञं निर्ऋतिर्गृह्णाति, यदा तद्धविस्सन्तिष्ठते अथ

तदेव हविर्निर्वपेत्' इति श्रुतम्। क्षायति–अतिदग्धो भवतीत्यर्थः। अतिदाहेन कृष्णीभावोऽत्र विवक्षितः। हविषोऽतिदाहे निमित्ते हविरन्तरनिर्वापरूपं प्रायश्चित्तं विदधातीदं वाक्यम्। अत्र सन्देहो जायते-किमिदं प्रायश्चित्तमेकदेशदाहेऽपि कर्तव्यम्? उत कृत्स्नदाह एव? इति। तत्रेदं सिद्धान्तसूत्रम्—'क्षामे तु कृत्स्नदाहे स्यादेकदेशस्यावर्जनीयत्वात्' इति। कृत्स्नदाहे क्षामे निमित्ते प्रायश्चित्तं हविरन्तरोत्पादनम्। प्रायः नष्टस्य चित्तं सन्धानं प्रायश्चित्तमित्यस्यार्थः। एकदेशदाहस्तु सर्वत्रावर्जनीयः। तस्माद्धविषः सर्वदाहे निमित्ते प्रायश्चित्तमनुष्ठेयम्। तप्तेषु कपालेषु पच्यमाने पुरोडाशे तदुपरि चाङ्गारा अध्यूह्यन्ते, तदा सूक्ष्मास्तदवयवा अवश्यं क्षायन्तीत्यवर्जनीयमेकदेशस्य क्षाणं नित्यमेवेति तन्निमित्तं न भवितुमर्हति, किन्तु सर्वक्षाणमेव निमित्तम्। तस्मिन् सति प्रायश्चित्तमिति सिद्धान्तः।

प्रकृते पञ्चवर्षीययोजनानामारम्भावसरेऽनया योजनया एतावन्ति आयसानि वैद्युतानि ताम्रमयानि इतरधातुमयानि वा वस्तूनि समुत्पादनीयानीति सङ्कल्प्य योजनाः प्रारभ्यन्ते। तत्रोद्दिष्टपरिमाणानि वस्तूनि यदि नोत्पादितानि ततोऽल्पान्येव तानि समुत्पादितानि तावता न योजनानां वैफल्यमारोपयितुं शक्यम्। तत्र धनस्यापव्यय इति न परिकल्पयितुं युक्तम्। धनस्य व्ययस्त्ववर्जनीय एव। अपव्यये निमित्तं कीदृशमिति पर्यवेक्षणीयम्—किं सङ्कल्पितस्य वस्तूत्पादनस्य सर्वथा वैफल्यं जातम्? उत ईषत्? इति। सर्वदाह इव सर्वथा वैफल्यमेवापव्यये निमित्तमङ्गीकर्तव्यम्, नेषद्वैफल्यम्, ईषद्वैफल्यस्यावर्जनीयत्वात्। अतो नात्र दोषारोपस्यावसरो मन्त्रिषु। यदि सर्वथा वैफल्यं जातं तर्हि निश्चयेन प्रायश्चित्तस्य प्रसक्तिः। अत एव क्रतुषु ब्रह्मा पर्यवेक्ष्य प्रायश्चित्तं विदधाति। तद्वदत्रापि ब्रह्मस्थानीया पर्यवेक्षणसमितिः प्रायश्चित्तं विदध्यात्। कीदृशं तत्प्रायश्चित्तमत्र भवितुमर्हतीति जैमिनिन्यायेन विमृशामः। स्वीकृतयोजनायाः प्रकल्पको न केवलमेकस्तत्सम्बन्धी मन्त्री भवति। तस्यापि

परामर्शदातृमण्डलमस्ति । सर्वैर्निपुणैस्सम्भूय योजना प्रकल्प्यते । योजनायाः कार्यरूपेण परिणमनाय कश्चन कार्यालयः, तत्र च कार्यकर्तार उच्चनीच-भावेनाधिकृता नैकविधा लोका भवन्ति । कार्यकर्तृषु तत्रानियमितकार्याणि वा चौर्यं वा योजनावैफल्यं वा यद्यनुभूयन्ते तत्र दोषभाक्कः ? झटिति ब्रवीति जनता—तत्सम्बन्धी मन्त्रालयो मन्त्री चेति, स दण्डनीयो निष्कास-नीयश्चेति च । जैमिनिरत्रानुशास्ति—'गुणे त्वन्याय्यकल्पना' इति । गुणे-उपसर्जने, अन्याय्यकल्पना-दोषकल्पनेति सूत्रार्थः । अयं न्यायः नावमिक पाशाधिकरणसिद्धः । अग्नीषोमीयपशौ 'अदितिः पाशं प्रमुमोक्तु' 'अदितिः पाशान् प्रमुमोक्तु' इति यूपे प्रबद्धस्य पशोः पाशविमोचनाय मन्त्रद्वय-माम्नातम् । अग्नीषोमीयपशुयागे पशोरेकत्वादेकवचनान्तस्य मन्त्रस्य तत्र समावेशे न काचिदस्ति विप्रतिपत्तिः । बहुवचनान्तो मन्त्रः किं क्रियताम् ? इति प्रश्नो जायते—किमयं मन्त्रो बहुपशुकयागेषूत्कृष्यताम् ? उतास्मि-न्नेव यागे बहुवचनस्यैकत्वे लक्षणामन्याय्यकल्पनारूपां स्वीकृत्य निवेशः क्रियताम् ? उत्कर्षपक्षे गुणभूतवचनानुरोधेन प्रधानस्य पाशप्रातिपदिकस्य निष्कासनं भवति । प्रकरण एव निवेशपक्षे गुणस्य वचनस्यैकत्वे लक्षणां स्वीकृत्य प्रधानस्य प्रकृतयाग एव निवेशो भवति । अत्र न्यायः—'गुणे त्वन्याय्यकल्पना' इति । प्रकृते कार्यालये उच्चनोचभावेनाधिकृताः पुरुषा-स्सन्तीत्यवोचाम । किमपि कार्यं कार्यालयेषूपरितनाधिकारिण आदेशेनाध-स्तादागत्य पुनः स्वस्वप्रधानद्वारोपरितनाधिकारिपर्यन्तं पत्रारूढं तत्कार्यं सविवरणमागच्छति । तदनन्तरं तत्सम्बन्धिमन्त्रिणोऽन्तिकमागच्छति, स च स्वीकरोति । तत्पश्चात्पूर्ववदागत्य कार्याणि प्रचलन्ति इति क्रमो विलोक्यते । अयमेव प्रयोगविधिरित्युच्यते । प्रयोगावसरे क्वचिद्व्युत्क्रमो जातः । प्रयोगस्तु कार्यालये नियुक्तैः क्रियते न मन्त्रिणा प्रधानमन्त्रिणा वा । मन्त्रालयो मन्त्रिनाम्ना व्यवह्रियेत कामम्, किन्तु कार्याणां प्रयोग-स्तत्र नियुक्तैरेव सम्पाद्यते । ते च गुणभूताः, तैस्सावधानैर्भवितव्यं प्रथमम् । तत एव च व्युत्क्रमस्सम्भूतः । अतस्तत्रैवान्याय्यकल्पना समु-चिता, न तु सर्वप्रधाने । न खलु क्वापि मत्कुणानां कृते गृहा दह्यन्ते ।

औषधादिना मत्कुणा एवापसार्यन्ते। तत्र मन्त्रिमण्डलेन किमपराध्यते? नात्र कोलाहलस्यावसरः। गुणप्रधानभाव आपेक्षिकः। एक एव निरूपक-भेदेन गुणोऽपि भवति प्रधानोऽपि। अत एव 'सोमेन यजेत' इत्यत्र सोम-प्रातिपदिकस्य सोमवति लक्षणा किं स्वीकर्तव्या? उत तृतीयाया इति-कर्तव्यतायां लक्षणा? इति विचारे प्रसक्ते 'गुणे त्वन्याय्यकल्पना' इति न्यायमतिदिशन्ति मीमांसकाः। पाशाधिकरणे वचनप्रातिपदिकयोर्मध्ये प्रातिपदिकस्य प्राधान्ये निर्णीतेऽपि प्रातिपदिकस्य कारकापेक्षया गुणत्व-मस्तीति तत्रैव तद्वति लक्षणाऽन्याय्यकल्पना स्वीक्रियते—'सोमवता' इति, न तु कारकस्येतिकर्तव्यतायाम्। प्रातिपादिकं वचनापेक्षया मुख्यमपि कारकापेक्षयोपसर्जनमेव 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोस्तु प्रत्ययः प्राधान्येन' व्याकरणस्मृतेः। यद्यपि 'सत्त्वप्रधानानि नामानि' इति प्रातिपदिकनिष्ठप्राधान्यबोधिका यास्कस्मृतिः पूर्वोक्तव्याकरणस्मृति विरुन्ध इव, किन्तूभयोर्यास्कपतञ्जल्योस्सद्वादित्वादुभयोः प्रामाण्यं व्यवस्थापनीयमेव। तत्र प्रातिपदिकं लिङ्गवचनापेक्षया प्रधानम्, प्रातिपदिकापेक्षया च कारकं प्राधानमित्यङ्गीकारे उभयोस्स्मृत्योस्सा-मञ्जस्यं प्रसिध्यति। एवञ्च प्रकृते प्रजातन्त्रविधानेऽपि दण्डनीतेरावश्यक-त्वात् स च दण्डः कस्मै प्रदीयताम्? इति प्रश्ने जैमिनिरुपदिशति— 'गुणे त्वन्याय्यकल्पना' इति। पञ्चवार्षिकयोजनानां परिचालनाय निर्मितेषु कार्यालयेषु गुणप्रधानभावेन विद्यमानानां कार्यकर्तॄणां मध्ये को वा दोष-भाक्? इति पर्यालोच्य तस्मै दण्डो विधेयः, न तु मन्त्रिणे, नापि प्रधान-मन्त्रिणे। प्रजातन्त्रविधौ सत्यमस्ति जनताया अधिकारो बलीयान् निग्रहे-ऽनुग्रहे च, किन्तु निग्रहे कालः प्रतीक्षणीयो भवति। पञ्चानां वर्षाणां कृते जनतयानुग्रहः कृतः, कश्चन गृहपतिपदे च नियुक्तः। तस्य प्रच्यु-तिर्निग्रहो वा सङ्कल्पितपञ्चवर्षाभ्यन्तरे न जनतया कर्तुं शक्यते।

किञ्च प्रजातन्त्रमिदं सत्रात्मकमिति प्रागवोचाम। सत्रञ्च ऋद्धिकामै-स्सम्भूय क्रियते। ऋद्धिश्च समृद्धिरैहिकं फलमामुष्मिकमपि। तच्च फलं

षष्ठाध्यायस्य द्वितीयपादाद्याधिकरणन्यायेन सत्रानुष्ठातृभिस्सर्वैस्सममवाप्यते । कर्मजन्यफलस्वाम्यं सर्वेषामस्तीति सर्वे कर्तारः । सत्यप्युच्चनीचभावेन कार्यकलापे कर्तृत्वन्तु तुल्यमेव । ज्योतिष्टोमादिसोमयागेषु कर्तृत्वमेकस्यैव, तस्यैव परिक्रीतार ऋत्विजो भवेयुः, तेषां कर्मजन्यफलभोक्तृत्वरूपं कर्तृत्वं न स्वीक्रियते । तद्वत्सत्रे नास्ति । सत्रं कर्मेव प्रजातन्त्रम् । इयांस्तु भेदः—सत्रे सर्वे यजमाना भवन्ति, प्रजातन्त्रसत्रे च जनतायाः प्रतिनिधयो यजमाना भवन्ति । मुख्याभावे कार्यनिर्वाहाय यदुपादीयते तत्प्रतिनिधिशब्देनोच्यते । प्रतिनिधिश्च न विधिविधेयो भवति, किन्तु सादृश्यमुन्नीय सुसदृशः पदार्थः कार्यनिर्वाहाय गृह्यते । किन्तु क्वचिद्वाक्येनैव प्रतिनिधिर्निर्दिश्यते । यथा 'सोमाभावे पूतीकानभिषुणुयात्' इति । नात्र सोमस्थाने पूतीका विधीयन्ते, अपि तु सादृश्येन यस्मिन् कस्मिश्चन द्रव्ये प्राप्तेऽनेन वाक्येन नियम्यते । सोऽयं विषयः षष्ठाध्यायस्य तृतीयपादे चतुर्थाधिकरणे 'नियमार्थः क्वचिद्विधिः' 'तन्नित्यं तच्चिकीर्षा हि' इति सूत्राभ्यां विशदीकृतः । अनेन न्यायेन प्रजातन्त्रसत्रेऽपि जनतया प्रतिनिधिनियमः क्रियते-- अयमस्माकं नेता, इमे संसत्सदस्याः, इमे लोकसभायाः, इमे च राज्यसभाया इति । प्रतिनिहिताः पूतीका मुख्यसोमाभिन्ना एव भवन्ति । यावन्तस्सोमे संस्कारास्तावन्तोऽन्यूनानतिरिक्ता अत्रापि सम्पाद्यन्ते । प्रतिनिधिरित्येतावता तत्र मुख्याद्दवीयसी बुद्धिर्न भवति । तथैव प्रजायाः प्रतिनिधिः प्रजैव भवति । अत एव प्रजाभिः कल्पितं तन्त्रं प्रजातन्त्रम् न तु प्रजाप्रतिनिधितन्त्रम् । तदिदं 'तन्नित्यं तच्चिकीर्षा हि' इति सूत्रेण जैमिनिरवबोधयति ।

प्रजासु कामं भिन्नरुचयो भवेयुः । स्वस्वरुच्यनुसारेण प्रतिनिधिचयनं कुर्युः । केचन 'कामनिष्ठाः' अपरे 'सोषलिष्टाः' अन्ये 'जनतन्त्र' नाम्ना प्रसिद्धाः, केचिच्च 'काङ्ग्रसेया' इत्येवमादयो बहवस्सङ्घास्स्युः । तत्र भूयोऽनुग्रहन्यायेनैक एव सङ्घः प्रजातन्त्रविधाने प्रतिनिधिरिष्यते । सर्वदलीयसङ्घस्तु न जनतोपकाराय कल्पते । अत्राप्यस्ति जैमिनेरनुशासनम् । सत्रेषु

समानकल्पानामेवाधिकारो न भिन्नकल्पनामिति सिद्धान्तितम्-षष्ठाध्यायस्य षष्ठपादे प्रथमाधिकरणे—'सन्निपाते वैगुण्यात्प्रकृतिवत्तुल्यकल्पा यजेरन्' इति सूत्रेण। वासिष्ठादीनां नाराशंसो द्वितीयः प्रयाजः, तदन्येषाञ्च तनूनपात्सः। वासिष्ठाः तदन्ये च सम्भूय सत्रमाचरेयुस्तर्हि द्वितीयप्रयाजस्य द्वित्वमापतेत्, तथा च कर्मवैगुण्यं स्यात्। अतस्समानकल्पा एव यजेरन्। तथैव प्रकृते नानादलीयास्सम्भूय प्रजातन्त्रं चालयेयुस्तर्हि तत्तद्दलविरोधिकार्यकरणे वैमनस्यरूपं वैगुण्यम् तेन चासन्तोषः शासनसूत्रभङ्गे परिणतस्स्यात्। अतस्समानकल्पानामेव भूयसां प्रजातन्त्रसत्रे कर्तृत्वं न्यायसिद्धम्।

एवं प्रजातन्त्रसत्रे भूयस्सु सत्रन्यायेषु प्रवृत्तेषु दीक्षितनियमपरिपालनन्यायोऽपि प्रवर्तते। सोऽप्यनुसरणीयः प्रजातन्त्रसत्रे दीक्षितैः। दीक्षितस्य नियमेषु 'दीक्षितो न ददाति न जुहोति न पचति' इत्यादयस्सन्ति नियमाः। दानहोमपाकाः पुरुषार्थतया विहिताः केचन, अपरे च क्रत्वर्थतया विहितास्ते, अन्ये चातिदेशेन विकृतौ समायान्ति। किमत्र सर्वेषां निषेधः? उतातिदिष्टानां पुरुषार्थानाञ्च निषेधः? अथवा पुरुषार्थानामेव? इति त्रेधा सन्दिह्याविशेषेण सर्वेषां प्रतिषेध इति, अतिदिष्टानां पुरुषार्थानामेव प्रतिषेधः, न प्रत्यक्षोपदिष्टक्रत्वर्थानामिति च पूर्वपक्षयित्वा सिद्धान्तितम्—पुरुषार्थानामेव दानहोमपाकादीनां प्रतिषेध इति दशमाष्टमेऽष्टमाधिकरणे। अत्र मतभेदेन पर्युदासप्रतिषेधविचारोऽप्यस्ति। पर्युदासपक्षे पुरुषार्थभिन्नाः क्रत्वर्थदानहोमपाकादयः कर्तव्या इति बुद्धिः, प्रतिषेधपक्षे च पुरुषार्थदानहोमपाकादयो न कर्तव्या इति बुद्धिः। प्रतिषेधपक्षे विकल्प प्रसक्तिरिति भिया पर्युदास इति केचन, यत्र प्रतिषेध्यप्रतिषेधयोरुभयोः क्रत्वर्थतया श्रवणं नास्ति तत्रैव विकल्पः। अयञ्च कर्त्रधिकरणसिद्धो न्यायः। यत्र च विधिबलात् क्रतुकाले पुरुषार्थतया प्रतिषेध्यस्य प्राप्तिः, तत्रैककालतया प्राप्तिमादाय तत्प्रतिषेध उपपद्यते तत्र विकल्पो न भवतीति प्रतिषेधमेव स्वीकुर्वन्ति, भिन्नार्थत्वाच्च न विकल्प इति च वदन्ति। अस्तु

यथा तथा वा–पुरुषार्थतया प्राप्तानां दानहोमपाकानामननुष्ठानन्तु मत-द्वयेऽपि सिध्यति। अनेन न्यायेन प्रजातन्त्रसत्रे दीक्षितैरपि पुरुषार्थदान-होमपाकादयो नाश्रयणीयाः। आत्मकल्याणार्थं क्रियमाणा दानहोम-पाकादयः पुरुषार्थाः। देशकल्याणार्थं क्रियमाणा इमे क्रत्वर्थतुल्याः। प्रजातन्त्रे प्रधानमन्त्रिपदे वा मन्त्रिपदे वा राज्यपालपदे वा राष्ट्रपतिपदे वा दीक्षितः आत्मार्थं स्वकुटुम्बार्थं वा दानहोमपाकादीन् न कुर्यात्। दानहोमपाकपदान्युपलक्षकाणि गृहारामादिनिर्माण-व्यापारकरण-सामूहिक भोजप्रदान - विलासाटन-वित्तसञ्चय - परिवारान्तर्गतपुरुषोन्नयनादीनाम्। क्रत्वर्थदानहोमपाकादीनि दीक्षितस्य यथानुमतानि, तथैव देशकल्याणाय विहितान्येव गृहारामादिनिर्माणादीन्यनुमतानि प्रजातन्त्रदीक्षितस्य। विधिप्रतिषेधयोरनुवर्तनं नाम मुख्यः प्रणवः। अधिकारिभेदेन विधिप्रति-षेधा भवन्ति भिन्नाः। पुरुषार्थतया गृहारामपशुपुत्रधनधान्यादीनां सम्पा-दनं न दोषाय, किन्तु यान्येव विहितानि तानि क्रतुमध्ये प्रतिषिध्यन्त इति तत्र सुमहत्तात्पर्यं कल्पनीयं भवति। सत्रेषु सर्व एव यजमानाः स्वस्वा-ग्निषु गार्हपत्यादिषु मिथस्संसृष्टेषु संसृष्टैर्व्रीहियवधनादिद्रव्यैर्यजेरन्निति न्यायः षष्ठद्वितीयप्रथमाधिकरणे सिद्धः। देशं समाजञ्च समृध्या समेधयितु-मयमुद्यमः प्रजातन्त्रसत्रं नाम। तत्र दीक्षितैरप्येवमनुष्ठेयम्—यत्स्वीयं स्वीयं द्रव्यमेकीकृत्य देशार्थं समर्पणीयम्। तादृशस्त्यागो दीक्षितानामा-वश्यकः। तदेव 'सोषलिसम्' इति यदद्यतनेषु दिवसेषु पदं शृणुमः तद्य-थार्थं सिध्येत्। स्वस्वपुरुषार्थं सम्पादयितुं पुरुषस्य यथाधिकारं स्वातन्त्र्यं यद्विद्यते तन्नापहरणीयम् न वा तत्र विघ्नबाधादिकमुपस्थापनीयम् किन्तु दीक्षितैः क्रत्वर्थकर्माणि विहाय स्वस्वपुरुषार्थसम्पादनाय न यति-तव्यम्। 'हिरण्यदा अमृतत्वं भजन्ते' 'पुत्रकामो ब्राह्मौदनं पचेत्' 'अग्नि-होत्रं जुहुयात् स्वर्गकामः' इत्यादीनि वाक्यानि पुरुषार्थतया कर्माणि विदधति। तत्र सत्रेषु ये दीक्षिताः स्वस्वाग्नीनेकीकृत्य यजन्ते, तेषु कोऽप्यात्मनोऽमृतत्वप्राप्तये हिरण्यदानं न कुर्यात्। एवं न जुहुयात् न पचे-

त्पुरुषार्थतया। अन्यथा दीक्षितेषु ये फलानीमानि न वाञ्छन्ति तैस्सह पुरुषार्थकर्मानुष्ठातॄणां विसंवादस्स्यात्। सम्भूय समष्ट्या क्रियमाणे कर्मणि न व्यष्टेः कर्तृत्वमुपपद्यते। अतः पुरुषार्थानि निषिध्यन्ते कर्माणि।

किञ्चात्र लिप्साधिकरणन्यायोऽपि ध्यानमर्हति। द्रव्यार्जने सन्ति नैकविधा उपायाः—साधवोऽसाधवश्च। व्यक्तिभेदेनेम उपाया नियम्यन्ते-प्रतिग्रहादिनैवार्जयेत्, जयादिनैवार्जयेत् पशुपालनादिनैवार्जयेदिति। यः प्रतिग्रहादिनैवार्जयति तस्यान्य उपाया अर्थान्निवर्तन्ते। तत्र हि पुरुषो नियमपुरस्सरं यद्द्रव्यमर्जयति तत्किं क्रत्वर्थम्? उत पुरुषार्थमिति विचारः प्रवर्तितः। पूर्वोक्ता नियमाः क्रत्वर्थत्व एव द्रव्यार्जनस्योपपद्यन्ते। प्रापञ्चिकसुखोपभोगाय यथाकथञ्चिदर्जितस्यापि द्रव्यस्य विनियोगो भवितुमर्हतीति तत्र नियमो नावश्यकः। नियमस्तु श्रूयते। स च क्रतुसम्बन्ध एवोपपन्नः। अतो नियमेनार्जितं द्रव्यं क्रत्वर्थमिति पक्षः। क्रत्वर्थस्य तस्य क्षुन्निवृत्त्यादिलौकिककर्मोपयोगित्वं कथमिति प्रश्ने जीवनाभावे क्रतुनिर्वर्तनमेवासम्भवीति जीवनार्थत्वमप्याक्षिप्यत इति न दोषः। अतः क्रत्वर्थं द्रव्यम्। सिद्धान्तस्तु पुरुषार्थमिति। पुरुषस्स्वोपभोगाय द्रव्यमर्जयति, तत्रापि प्रतिग्रहादयो नियमास्सार्थका एव। अर्जितं द्रव्यं पुरुषं प्रीणयत् पुरुषार्थमेव प्रत्यक्षमनुभूयते, नात्र क्रत्वर्थताकल्पकानुमानस्योदयः। यदि पुरुषप्रीणनमेवोद्देश्यं द्रव्यार्जनस्य तर्हि नियमेन किम्? यथाकथञ्चिदर्जितेन द्रव्येण पुरुषः प्रीणात्विति प्रश्नस्स्यादिति चेदत्र वदामः—प्रत्यवायपरिहारकत्वेन नियमस्य सार्थकत्वादिति। 'अन्याय्येनार्जयन् द्रव्यं प्रत्यवायेन युज्यते' इत्यादिशास्त्रबलेन यथाकथञ्चिदर्जितस्य द्रव्यस्य प्रत्यवायजनकत्वमवगत्य तत्परिहारार्थं नियमेन द्रव्यमर्जयितुं पुरुषः प्रवर्तते। अर्जितस्य द्रव्यस्य पुरुषार्थत्वे क्रतवः पुरुषेण कथं क्रियेरन् इति प्रश्ने सांसारिकपुरुषकार्येषु क्रतवोऽप्यन्तर्भवन्ति। पशुपुत्रधनधान्याद्यवाप्तये पुरुषाः क्रतूननुतिष्ठन्ति। अतः क्रतवोऽपि पुरुषार्था इति न दोषः। एवं कृतस्य विचारस्येदं प्रयोजनम्—यत्, प्रतिग्रहादिनियतोपार्जितस्यैव द्रव्यस्य

क्रतौ जीवने चोपयोगः, तदितरस्मिन् पुरुषभोगे तु यथाकथञ्चिदर्जितस्येति पूर्वपक्षे। सिद्धान्ते तु क्रतौ तदितरस्मिश्च पुरुषकार्ये सर्वत्र यथाकथञ्चिद-निषद्धोपायार्जितद्रव्यस्य विनियोगः। नियमलोपे पुरुषः प्रत्यवैति, न क्रतोः किञ्चिद्वैगुण्यमिति।

एवं स्थिते प्रजातन्त्रस्य कियानुपयोगोऽस्य न्यायस्येति पश्यामः— पवित्रस्य क्रतोः स्थानापन्नं प्रजातन्त्रविधानमिति पूर्वमवोचाम। लोके नानाविधेषु पुरुषकार्येषु प्रजातन्त्रविधानमप्येकं कार्यम्, सर्वाः प्रजा मिलित्वा देशस्य कल्याणाय सङ्कल्पितमिदं विधानम्। विधानस्यास्य परिचालनाय जनतया नियुक्ताः विधायका यत्कार्यमाचरन्ति तत्क्रतुरूपं परमं पवित्रम्। न्याय्येन पथा धनमर्जयितुमुपायान् निर्द्धारयन्ति विधायकाः। अर्जितस्य द्रव्यस्य पुरुषार्थस्य कियान् भागः क्रतौ प्रजातन्त्रेऽपि विनियुक्तो भवत्विति निश्चित्य तदनुसारेण तं भागं गृह्णन्ति विधायकाः। पुरुषार्थकार्ये क्रतौ वानिषिद्धोपायार्जितद्रव्यस्य विनियोगस्तावल्लिप्साधिकरणन्यायः। चौर्येणोत्कोचग्रहणादिना वार्जितस्य द्रव्यस्य का गतिरिति प्रश्ने, द्रव्यार्जनोपायनियमलोपे न क्रतोः किञ्चिद्वैगुण्यं पुरुषः परं प्रत्यवैति इति लिप्साधिकरणसिद्धान्तप्रयोजनेन प्रत्यवायरूपदण्डभाक् पुरुषः।

निषिद्धोपायार्जितश्च द्रव्यं न तावत्क्रतौ विनियोक्तुं शक्यते। पुरुषस्य तत्र विद्यमानं स्वाम्यं निराकृत्य यस्माच्चौर्यं कृतम् येभ्यश्चोत्कोचो गृहीतस्तेभ्यस्तत्प्रदातव्यं यदीदं स्पष्टमवगम्यते। यदि नावगम्यते तर्हि तत्तत्साहाय्यकर्मणि तस्य विनियोगः कर्तव्यः। एवं कृतेऽन्येषामेतादृशेषु निषिद्धेषूपायेषु प्रवृत्तिर्वारिता भवेत्। अनिषिद्धोपायैर्द्रव्यमर्जयितुं तस्य तस्य पुरुषस्य स्वातन्त्र्यं नापहरणीयम्। किञ्चायं न्यायः जीवनायाहारः, न त्वाहाराय जीवनमिति शिक्षयति। यावता द्रव्येण जीवनं निर्वहेत्तावन्निक्षिप्यावशिष्टं क्रतुषु विनियोक्तव्यम्। पुरुषार्थकार्येषु क्रतवोऽपि सन्तीति न्यायोऽयं ब्रवीति। प्रजातन्त्रविधाने चेदृशं सच्चारित्रं शिक्षयत्ययं न्यायः। जनता वा तया नियुक्ता विधायका वा प्रधानतया देशभक्तिं दैवचिन्तनञ्च कुर्वन्तः प्रजातन्त्रविधानं परिपालयेयुरिति जैमिनिरनुशास्ति।

प्रजातन्त्रसत्रे दीक्षामापन्नाः प्रधानमन्त्रिप्रभृतयः पशुपुत्रधनधान्यादिकं व्यष्टिरूपेणार्जयितुं तदौपयिकानि कर्माणि यदि कुर्युस्तर्हि नियोजिकाया जनताया महान् विसंवादस्स्यात्—पूर्वेद्युरयं कीदृश आसीत् अद्य मन्त्रिपदमारूढः कथमस्ति ? इति। अद्य राज्यसभायां लोकसभायाञ्च यावान् विप्लवः प्रचलति, तस्य सर्वस्यापीदमेव मूलम्— यत् पुरुषार्थकर्माचरणं दीक्षितानाम्। विधिनिषेधौ सर्वैरप्यनुसरणीयौ विशेषेण दीक्षितैः। यथा पुरुषार्थविधयः तथा पुरुषार्थनिषेधा अपि। पुरुषार्थतया विहितं किञ्चित्क्रत्वर्थतया न प्राप्नोति, तथापि तन्निषेधः क्रत्वर्थतया श्रूयत एव 'न स्त्रियमुपेयात्' इति। क्रत्वर्थत्वेन स्त्र्युपगमनं न प्राप्तम्, अथापि निषेधो वर्तते। अतो नात्र विकल्पस्यावसरः। एवञ्च य एव विधि निषेधयोः पालकास्त एव सत्रेऽस्मिन्नधिकुर्युरिति जैमिनेर्न्यायः।

एतावता न्यायसन्दर्भेणेदमत्र निर्गलितं भवति यत्—तादृशं प्रजातन्त्रविधानमवलम्बनीयम् यत्र चार्थकामयोः पुरुषार्थयोरेवोन्नयनं न स्यात् किन्तु संस्कृतेरपि भूयांस्तत्र सम्बन्धस्स्यात्। यावदर्थकामौ संस्कृत्या न संयुज्येते तावदर्थकामौ सुदृढौ न स्याताम्। संस्कृतिपदेन नात्र वेषभूषादिकमभिप्रेयते, किन्तु चरित्रसंरक्षणम्, चिरन्तनैः प्रवर्तितानामनुशासनानां यथायथं परिपालनम्, विधिप्रतिषेधयोरनुसरणम्, यथाधिकारं स्वस्वकर्माचरणेऽभिरतिः, पक्षपातपरित्यागः, सत्युपादेयत्वे प्रतिपक्षिणामपि पक्षग्रहणम्, देशभक्त्या कर्माचरणम्, दैवचिन्तनम्, सच्छीलता, पापभीरुता, शरीराभिमानराहित्यम् इत्यादयोऽभिप्रेयन्ते। एतेषामवलम्बनेनैवार्थकामयोस्समुन्नयने यतितव्यम्। सर्वेष्वेषु विषयेषु जैमिनिन्याया वर्तन्ते। न्यायानां पुरस्सर्वैर्नतमस्तकैर्भवितव्यम्। यथेच्छं तत्परिवर्तने समुदायबलमस्तीति न प्रवर्तितव्यम्। इदमस्माकं प्रजातन्त्रविधानं जैमिन्यनुमतम्।

किञ्च महर्षिजैमिनिः स्वसूत्रेषु 'अर्थो धर्मः' 'शब्दस्यार्थेन सह' 'अविशिष्टस्तु वाक्यार्थः' 'अर्थैकत्वात्' 'अर्थेन त्वपकृष्येत' 'क्रत्वर्थपुरुषार्थयोः' 'अर्थलक्षणा' 'तेनार्थेन' 'स्वेन त्वर्थेन' 'अर्थस्य गुणभूतत्वात्' 'भावोऽर्थः' 'अर्था-

भिधानम्' 'अर्थपृथक्त्वात्' इत्येवं शतशोऽर्थशब्दं प्रयुञ्जानोऽमुमर्थमवद्योतयति—यत्स्वीयं शास्त्रमास्तिकबुद्धि परिवर्धयत् नास्तिकाभिमतं निरालम्बनवादं शून्यवादश्चापोह्य बाह्यार्थस्य प्राधान्येन व्यवस्थापनायापि प्रवृत्तमिति । तत्र विशेषतस्तर्कपादः तत्रापि पञ्चसूत्री बाह्यार्थव्यवस्थापनपरा । अतएव भाष्यवार्तिककारौ पञ्चमसूत्रव्याख्याप्रसङ्गे नास्तिकमतमिदं परिशीलितवन्तौ । किञ्चिदिव सङ्गृह्य तन्मतं निरूपयामः ।

दार्शनिकानां मल्लयुद्धक्षेत्रमिदम्, यत्ख्यातिस्वरूपपरिशीलनं नाम । एकस्य पन्थानमपरो नानुसरति । स्वस्वसिद्धान्तव्यवस्थायै सर्वोऽपि दार्शनिकः प्रथमत एव कञ्चन पन्थानं निश्चित्य गच्छति । गच्छंश्च मध्येमार्गमन्यैः प्रक्षिप्यमाणं मार्गावरोधकं प्रस्तरखण्डादिकं दूरीकुर्वन्नग्रे यातीति दार्शनिकानां स्वभावः । तत्रैक एव यदि सर्वेषां मार्गान् अवरुरुत्सुः शिलाखण्डान्प्रक्षिपति तर्हि सर्वे तमपाकुर्वन्तोऽपि निराकरणप्रक्रियायां न सर्वे एकीभावमवाप्नुवन्ति । न हीमे यौधिष्ठिरं न्यायम्—'अन्यैस्सह विरोधे तु वयं पञ्चोत्तरं शतम्' इत्यवलम्बन्ते । एतेषामीदृशमनैक्यं प्रेक्ष्यैव मार्गावरोधकोऽपि पृथक्पृथगेव मार्गमवरुन्ध इव । नेयं रीतिर्दोषाय भवेद्दार्शनिकानाम् । ओदनस्य सूपस्य च भक्षणे समानेऽपि चुल्लिभेदेनौदनिका विप्राः पृथगेव भवन्ति । सत्यपि प्रकारभेदे तृप्तिस्तु सर्वत्र समाना । सूपयुतमोदनमुपभुज्य सर्वस्योद्गारस्तुल्य एव । तत्र मीमांसक आत्मानं भिन्नं मन्यमानोऽपि वैदिकत्वेन सर्वानेकीकर्तुं चेष्टते । भिन्नमार्गावलम्बिनोऽपि दार्शनिकाः त्रिषु वादेषु समावेशयितुं शक्यन्ते—सर्वं शून्यमिति वाद एकेषाम्, एक एवास्ति नान्य इत्यपरेषाम्, भेदेन नानैव वर्तन्त इत्यन्येषाम् । यदि किमप्येकमस्ति अथवा नाना सन्ति तर्हि भीतेरवसरः स्यादिति सर्वं शून्यमित्यङ्गीकारे न भीतेरवसर इति प्रथमे वक्तारः । एकस्यैव वस्तुनोऽस्तित्वे द्वितीयस्याभावान्न साध्वसस्यावसरः 'द्वितीयाद्धि भयं भवति' इति द्वितीये वक्तारः । नानात्वे विद्यमानेऽपि न भयस्यावसरः— करचरणाद्यवयवेषु विभिन्नेषु सत्स्वपि न तेभ्यो भीतिरुत्पद्यते । अतो

भेदेन नाना वर्तन्तामिति तृतीये वक्तारो भवन्ति। दार्शनिकेषु न चतुर्थः कश्चन प्रकारो मौलिकः परिदृश्यते। तत्रास्तिनास्त्योः कलहः भेदेन नानैव वर्तत इति पक्षप्रसाधनेन स्वयमुपशमितो भवतीति तमेव मीमांसकसम्मतं पक्षं गृह्णीमः।

तत्र सर्वं निरालम्बनं शून्यं वेति वादः प्रत्यक्षमनुमानञ्चेति प्रमाणद्वयमूलकः। प्रमेयसिद्धिं प्रति प्रमाणस्यावश्यकत्वेन द्वे प्रमाणे स्वीकृत्य स्वीयं वादं स्थापयतीति तस्य प्रकारः। तत्र द्वाभ्यां प्रमाणाभ्यामतिरिक्तेन प्रमाणेन यद्यस्तित्वं इतरस्साधयति तर्हि प्रथमो न स्वीकुर्यात् प्रमाणान्तरम्। कहलस्तु स्वस्थान एव तिष्ठेत्। अतः कलहोपशमनाय किञ्चिद्दूरं प्रत्यक्षमनुमानञ्चेति प्रमाणद्वयमेव स्वीकृत्य गन्तव्यं भवति। तमिमध्वानं जैमिनिः—'तस्य निमित्तपरीष्टिः' 'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्', 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्' इति त्रीणि सूत्राणि रचयन्नुद्घाटयति। भाष्यकारश्च श्रीशबरस्वामी स्वमतेन त्रीणि सूत्राणि प्रथमं व्याख्याय तत्रापरितुष्टो वृत्तिकारोपवर्षमतेन सूत्रत्रयव्याख्यानं प्रदर्शयामास। अपरितोषस्येदमस्ति कारणम्—यन्निमित्तसूत्रेण सूत्रकारः प्रतिज्ञातधर्मस्य निमित्तपरीक्षां प्रतिज्ञाय धर्मे प्रत्यक्षं प्रमाणं भवितुमर्हति न वेति परीक्षायै प्रत्यक्षस्वरूपं चतुर्थसूत्रेण प्रदर्शयति। तच्च प्रत्यक्षं लौकिकं विद्यमानोपलम्भकम्, धर्मस्त्वलौकिकः, तत्र प्रत्यक्षस्य नावसर इति धर्मे प्रत्यक्षं न प्रमाणमिति बोधयन्ननन्तरं प्रत्यक्षपूर्वकत्वादनुमानादीनामपि धर्मे नावसर इति व्यञ्जयन् अनुपलब्धिप्रमाणगम्यत्वे धर्मस्य प्राप्ते तन्निरासाय 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इत्यादि सूत्रं प्रवर्तयामासेति भाष्यकारो व्याख्याय मनस्तृप्तिं नावापत्। शब्दगम्यत्वे धर्मस्य साध्यमाने यो नाम शब्दं प्रमाणं न स्वीकुरुते तन्मते धर्मस्वरूपावगमकं प्रमाणं किं स्यादिति प्रश्नस्तथैव स्यात्। अतो वृत्तिकाराभिमतां सूत्रत्रयीव्याख्यां प्रदर्श्य पूर्वोत्थं प्रश्नं समाधत्ते—'वृत्तिकारस्तु' इत्यादिना।

एतन्मते निमित्तसूत्रं नञ् पदमध्याहृत्य व्याख्येयं भवति—प्रतिज्ञातस्य धर्मस्य निमित्तपरीक्षा न कर्तव्या प्रसिद्धत्वात्प्रत्यक्षादीनाम् इति । प्रत्यक्षादीनि हि प्रसिद्धप्रामाण्यविशिष्टानि, अतस्तेषां परीक्षणं कुतः ? एवञ्च निमित्तसूत्रेण पूर्वं प्रतिज्ञातस्य चोदनाप्रामाण्यस्य हेतुभूतं प्रामाण्यस्य स्वतस्त्वं स्फोरितं भवति । यदि प्रसिद्धप्रामाण्यविशिष्टान्यपि परीक्ष्यन्ते—प्रत्यक्षं प्रमाणं न वा ? अनुमानं प्रमाणं न वा ? शब्दः प्रमाणं न वेति, तर्हि कारणान्तरेण तत्परीक्षितव्यम् । एवं सति प्रमाणान्तरं प्रमाणं न वेति परीक्षणमावश्यकं स्यात्, तेन अनवस्थापातः । अतः प्रामाण्यस्य स्वतस्त्वमभ्युपेत्य प्रत्यक्षादिवत् शब्दस्यापि प्रामाण्यं प्रसिद्धमिति तदपि न परीक्षितव्यमिति सिद्धे शङ्का समुदेति—कथं न प्रत्यक्षं परीक्षितव्यम् ? शुक्तिरजतादौ प्रत्यक्षस्य व्यभिचारो दृश्यत इति । अस्याः शङ्काया निराकरणपरं प्रत्यक्षसूत्रं 'सत्' 'तत्' पदव्यत्यासेन वृत्तिकारो व्याख्याति—यद्विषयकं ज्ञानं तेन विषयेण पुरुषस्येन्द्रियाणां सम्प्रयोगे जाते यद्विज्ञान तत् सत्प्रत्यक्षमिति । शुक्तिकारजतस्थले विज्ञानं रजतविषयकम्, तेनेन्द्रियाणां न सम्प्रयोगः, किन्त्वन्येन, अतो नात्र प्रत्यक्षस्य व्यभिचारः । अत्रैव ख्यातिवादस्योदयः—इन्द्रियन्त्वन्यसंयुक्तम्, ख्यानन्तु रजतस्येति कथं सङ्गच्छताम् ? इति प्रश्ने समुत्पन्ने, इन्द्रियदौर्बल्येन वा बाधकप्रत्ययेन वा अन्यथा विद्यमानमन्यथा ख्यायत इति पुरो विद्यमानं विपरीतेन वा ख्यायत इति वक्तव्यं भवति । एवञ्च 'यस्य च दुष्टं करणम् यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययः' इति सिध्यति ।

एवं ख्यातेर्भ्रमस्य स्वरूपे स्थिते निरालम्बनवादो भाष्यकारेणोत्थापितः—यत्र कारणदोषज्ञानम् उत्तरकाले वा बाधकज्ञानं तत्रैव मिथ्यात्वं कुतः ? सर्वेषामेव ज्ञानानां मिथ्यात्वे का हानिः ? ज्ञानसामान्यमेव निरालम्बनं भवतु । बाह्यमर्थं कञ्चन स्वीकृत्य करणदोषेण वा बाधकज्ञानेन वा सोऽन्यथा वा विपरीतेन वा ख्यायत इति सरणिः कुतः ? इति । यदा क्वचित्स्वप्नादौ ज्ञानानां निरालम्बनत्वमनुभवामस्तदा सर्वजाग्रज्ज्ञानानां तथात्वे का हानिः ? नात्र दृष्टान्तासिद्धिः नाप्यंशतस्सिद्धसाधनं वा ।

एवञ्च सर्वोऽपि प्रत्ययः निरालम्बनः प्रत्ययत्वात् स्वप्नप्रत्ययवदित्यनुमानं प्रमाणमुपन्यस्तं भवति। ज्ञानानां निरालम्बनत्वञ्च बाह्यार्थाभावप्रयुक्तम्। स्वप्ने ज्ञानानां निरालम्बनत्वस्वभावोऽनुभूयते, तत्र बाह्यार्थासद्भावेऽपि प्रत्ययो दृश्यते, तथैव जाग्रत्प्रत्ययेऽपि भवितव्यम्। एवं पक्षसाध्यहेतूदाहरणानि निर्दिश्य भाष्यकारः 'स्तम्भ इति जाग्रतो बुद्धिस्सुपरिनिश्चिता कथं विपर्यसिष्यतीति' इत्यादिना सिद्धान्तपक्षम् उपक्षिप्तवान्।

अयमत्र पूर्वोत्तरपक्षयोस्सङ्ग्रहः—स्वप्नप्रत्ययेषु यथावगम्यमानबाह्यार्थाभावेन कालान्तरदेशान्तरवर्तिनां संनिहितकालदेशतया प्रतिभासासम्भवात् कदाचिदप्यसम्भवतां स्वशिरश्छेदादीनां स्वप्ने प्रतिभासाच्च स्वात्मांशा एव बहिर्वद् गृह्यन्त इत्यवश्यं वक्तव्यम्। अतश्च तत्सामान्याज्जाग्रज्ज्ञानानामपि स्वांशमात्रपर्यवसायित्वान्मिथ्यात्वमेव स्वीकर्तव्यमिति पूर्वपक्षिण आशयः। सिद्धान्तिनस्तु—प्रत्यक्षोपजीव्यं तावदनुमानमिति पक्षद्वयेऽपि सिद्धम्। जाग्रदवस्थायां अयं घटः इदं नीलम् इति जायमानानां प्रत्ययानां कालान्तरे बाधकज्ञानं नोदेति, स्वाप्नप्रत्ययेषु तु प्रबुद्धस्य तदुपजायते। तेन जाग्रज्ज्ञानानां सुपरिनिश्चितत्वम् स्वाप्नज्ञानानाञ्च तदभाव इति कथमनुमानेन प्रत्यक्षबाध इति।

अत्र वार्तिककाराः पक्षसाध्यहेतूदाहरणानि प्रत्येकं परिशोध्य विवेचितवन्तः। वार्तिककारविवेचनसरणेः प्रदर्शनात्पूर्वं किञ्चिदहं विवक्षामि-नास्तिको वा भवत्वास्तिको वा दार्शनिकः सर्वोऽपि स्वस्वदर्शनानुगुण्याय कांश्चन पदार्थान् निश्चित्य तदुपपादनाय कञ्चन मार्गं परिकल्प्य गच्छति। गमनावसरे यदि किञ्चिदवरोधकं पश्येत् तदपसार्याग्रे गच्छतीति पूर्वमवोचम्। तत्र तत्तद्दर्शनस्य मूलप्रवर्तकस्सूत्रकारः स्वीयेषु सूत्रेषु यान् विषयान् यथोपन्यभान्त्सीत् तथा तान् तदुत्तरवर्तिन उपबृहयितुं यतन्त इति दार्शनिकानां स्वभावः। सूत्रकारात्परवर्तिनां समये खण्डनाय मण्डनाय वा विषयबाहुल्यं कालक्रमेण समापतेदेव, सूत्रासंस्पृष्टा अपि कदाचिद्विषया आपतेयुः, येषां पर्यालोचनं परवर्तिभिः स्वस्वदर्शनसिद्धान्तानुगुण-

मक्रियत। एवमपि सम्भाव्यते—यन्मूलसूत्रकाराभिमतमाविज्ञायान्यथैव स्वदर्शनतत्त्वं विस्तारयितुं परवर्तिनां प्रवृत्तिरजायत। ईदृशं तद्दर्शन-साहित्यं पश्यन्तोऽन्ये दर्शनिकाः तत्खण्डनाय लेखनीं व्यापारयामासुरिति। अस्तु यथा तथा वा। मीमांसासूत्राणि वयं पश्यामः। किं जैमिनिमहर्षे-स्समये प्रत्ययानां निरालम्बनवाद उत्थितो वा न वा? उत्थितश्चेत्तदु-त्थापकः कः? नोत्थितश्चेत्तत्परवर्तिभिस्तत्खण्डनाय कथं प्रवृत्तम्? तैः क्रियमाणं खण्डनं सौत्रं वा स्वबुद्धिप्रभवं वा? यदि सौत्रम्, तर्हि सूत्रेणा-भिधीयमानं वा तत्, उताभिव्यज्यमानं वा? यदि वा स्वबुद्धिप्रभवं तर्हि मूलसूत्रकारानभिमतखण्डनप्रकारः कथं प्रामाण्यमर्हतिः? इतीदं सर्वं परि-शीलनीयम्। मम तु प्रतिभाति—यत्, सर्वञ्चेदं मीमांसाशास्त्रं बाह्यार्थ-सद्भावप्रतिपादनाय प्रवृत्तमिति। यद्यपि धर्मतत्त्वप्रतिपिपादयिषया धर्मतत्त्वावबोधकवेदवाक्यार्थनिर्णयाय केवलं प्रवृत्तमिदं शास्त्रम्, न प्रत्यक्षादि प्रमाणनां द्रव्यादिप्रमेयाणाञ्च तत्त्वनिरूपणाय, तथापि प्रमाणप्रमेयनिरूपणस्य शास्त्रान्तरविषयत्वेऽपि निरूप्यमाणस्वविषयस्य धर्मस्य प्रतिपादनाय लौकिक प्रमाणानां प्रमेयाणाञ्चावश्यकतायां सत्यां तत्रापि प्रवृत्तिरेष्टव्या सूत्रका-रस्य। वैदिकोऽपि जैमिनिर्नालौकिकः। लौकिकं पन्थानमनुसरन्नेव गच्छ-तीति तदीयसूत्राध्ययनेन विस्पष्टं भवेत्। प्रथमसूत्रेण जिज्ञासितस्य धर्मस्य 'चोदनालक्षणोऽर्थो धर्मः' इति द्वितीयसूत्रेण लक्षणमभिधाय न तावता शास्त्ररचनात उपरमं जैमिनेः पश्यामः। प्रतिज्ञातस्य लक्षितस्य च धर्मस्या-लौकिकत्वेन लौकिकप्रमाणाविषयत्वात्परीक्षणस्य नावसरः, तथापि परीक्षते अपरीक्ष्यैव निर्णीयमाने धर्मे श्रद्धामात्रविजृम्भितत्वं स्यादिति। अथवा वृत्तिकारमतेन प्रसिद्धत्वाल्लौकिकप्रमाणानां परीक्षापि न कर्तव्येति स्वीकारे औत्पत्तिकसूत्रप्रणयने जैमिनेरन्तर्निहितः कश्चनाशय उन्नेतव्यो भवति—यज्जैमिनेः काले केनापि रूपेण निरालम्बनवादः प्रचलन्नासीत् यस्य निराकरणमनेन सूत्रेण क्रियते। कथमन्यथा शब्दतदर्थयोस्सम्बन्धं नित्यं प्रतिपादयेत्? पुनश्च कथं वा शब्दनित्यत्वाधिकरणे 'कर्मैके तत्र दर्शनात्' इत्यादिना पूर्वोक्तसम्बन्धसम्बन्धिनश्शब्दस्य नित्यत्वप्रतिपादने जैमिनेः प्रवृत्तिः? अतो वृत्तिकारभाष्यकारप्रतिपादितदिशा निरालम्बनवाद-

स्सूत्रारूढ इति। जैमिनिसूत्रेष्विदमेकं वैचित्र्यम्—यत्क्वचित्क्वचित् पूर्वपक्षमनुल्लिख्यैव सिद्धान्तमात्रं निर्दिशतीति। तत्रोत्सूत्रं पूर्वपक्ष इति भाष्यकारः कथयति। तथा चौत्पत्तिकसूत्रे यावन्तो विषयाश्चर्चिता भाष्यकारेण ते सर्वेऽपि सूत्रारूढा एवेति स्वीकारे न काचिद्धानिः। प्रागहं प्रत्यापादयम्—यज्जैमिनिः तदा तदा वादगोष्ठीषु दार्शनिकैर्वैदिकैश्च सम्भूय कृतानां शङ्कानां तत्समाधानानाञ्च सङ्ग्रहं सूत्रैः कृतवान् स्यादिति। जैमिनिः प्रायस्स्वसूत्रेषु 'अपि वा' 'तु' 'वा' इति प्रयुङ्क्ते। तत्रेमे प्रायः पक्षव्यावर्तकत्वेन नीयन्ते भाष्यकारेण।

औत्पत्तिकसूत्रगतोऽपि तुशब्दश्शङ्कानिवर्तकत्वेन नेतुं शक्यते। भाष्यकारमतानुसारेण प्रत्यक्षादीनां धर्मेऽकारणत्वे निश्चिते पारिशेष्यन्यायेनानुपलब्धिगम्यत्वमेव धर्मस्येत्यायाति, तन्निरासाय तुशब्दः। वृत्तिकारमतानुसारेण प्रसिद्धत्वात्प्रत्यक्षादीनामपरीक्ष्यत्वे सिद्धे व्यभिचारात्परीक्षितव्यानि प्रत्यक्षादीनीति शङ्कायां तन्निराकरणाय प्रत्यक्षसूत्रे तत्सत्पदयोर्व्यत्यासस्स्वीकृतः। तत्रैव निरालम्बनवादशून्यवादादीनां समुत्थितिः। तत्समाधानायानुमानाद्यनुपलब्ध्यन्तानां प्रमाणानां प्रसिद्धत्वादपरीक्ष्यत्वं प्रतिपाद्य चित्राक्षेपपूर्वकं चोदनालक्षणत्वं धर्मस्याक्षिप्तम्। तस्यास्याक्षेपस्य निवर्तकस्तुशब्दः। धर्मस्य चोदनालक्षणत्वमाक्षेप्तुं त एव प्रभवन्ति ये वेदबाह्याः। निरालम्बनवादप्रभृति शब्दस्याप्रामाण्यसाधनान्तो यो भागो भाष्यस्य स सर्वोऽपि वेदबाह्यैः कृतानां शङ्कानामवद्योतकः। देवासुरसङ्ग्राम इव अस्तिनास्त्योर्विवादः पुरातनः। जैमिनिर्वादकथासु श्रुत्वैवेमानाक्षेपान् निराकर्तुं महदिदं शास्त्रं प्रणिनाय। तत्र समग्रस्य शास्त्रस्य बाह्यार्थसद्भावप्रतिपादनतात्पर्ये परिकल्प्यमाने न कश्चन दोषस्स्यात्। सर्वेऽप्यमी वादा बाह्यार्थसद्भावमाश्रित्यैव प्रवृत्ताः। निरालम्बनवादः शून्यवादः, सम्बन्धाक्षेपवादः, चित्राक्षेपवाद इत्यादयः तदा समुत्पन्नाः प्रतिभान्ति यदा विश्वस्मिन् जगति वैदिकानामेकच्छत्राधिपत्यम् आसीत्। तदसहमाना वेदवादविरुद्धान् पक्षानुपस्थापयाम्बभूवुः। तन्निरसनाय महान्

प्रयासो महर्षिभिरवलम्बितः। तत्र जैमिनिः विरुद्धानिमान् पक्षानपाकर्तुं बाह्यार्थसद्भावव्यवस्थापनं मुख्यं मन्वानः शब्दतदर्थसम्बन्धानां नित्यत्वं प्रथमं पञ्चमसूत्रेण निर्दिदेश। इदमवलम्ब्यैव साक्षात्परम्परया सर्वोऽपि प्रपञ्चश्शबरस्वामिना कुमारिलभट्टेन च व्यधायि।

तत्र भाष्यकारेण प्रत्ययानां निरालम्बत्वे प्रतिज्ञाहेतूदाहरणोपनयनिगमाः प्रतिपादिताः 'सर्व एव निरालम्बनः प्रत्ययः' इत्यादिना। अनुमानमिदं परीक्षितुमारभमाणो वार्तिककारः प्रथमं बौद्धैः प्रयुज्यमानं संवृतिशब्दं परिगृहीतवान्। ते हि संवृतिसत्यम् पारमार्थिकं सत्यम् इति सत्यद्वयं समाश्रित्य प्रमाणप्रमेयादिव्यवहारः संवृतिसत्येन सिध्यति, परमार्थसत्येन च प्रत्ययानां निरालम्बनत्वसिद्धिरिति वदन्ति। तैरपि सर्वोऽपि लौकिकव्यवहार उपपादनीयः। स च व्यवहारस्संवृतिसत्यत्वप्रयुक्तः, परमार्थतस्तु निरालम्बन एव प्रत्यय इति। इयञ्च सरणिरद्वैतिनामप्यस्ति। ते हि त्रिविधं सत्यं मन्यन्ते—व्यावहारिकसत्यम्, प्रातिभासिकसत्यम्, पारमार्थिकं सत्यञ्चेति। इमामेव सरणिमनुकर्तुं बौद्धैश्चेष्टितमिति भाति। किन्तु शब्दमात्रस्यानुकरणं न त्वर्थतः। व्यावहारिकावस्थायां वा प्रातिभासिकावस्थायां वा ज्ञानानां पदार्थालम्बनत्वमद्वैतिभिर्न निषिध्यते, बाह्यपदार्था ब्रह्मविवर्तरूपेण तिष्ठन्त्येव। बौद्धप्रक्रियायान्तु संवृतिसत्यस्थलेऽर्था न सन्त्येव। दर्शनान्तरे सत्यपदविशेषणतया व्यावहारिकपदं प्रयुज्यते, इदञ्च विशेषणं युक्तम्। संवृतिसत्यस्थले तु सत्यस्य विशेषणं संवृतिर्भवति। संवृतिर्नाम मिथ्या। सत्यस्य मिथ्यात्वं कीदृशं भवेत्? विरुद्धाविमौ सत्यं मिथ्येति, कथं विशेष्यविशेषणभावं प्राप्तुं शक्नुतः। संवृतिसत्यमित्यस्य किं संवृतिरूपं सत्यमित्यर्थो वा? उत संवृतेस्सत्यमित्यर्थो वा? नाद्यः सत्यस्य मिथ्यारूपत्वं न सङ्गतम्। न द्वितीयः, द्वैतसिध्यापत्तेः। अतः प्रतारणपरोऽयं संवृतिशब्दः।

इदानीं अनुमानं पश्यामः—सर्व एव प्रत्ययो निरालम्बनः प्रत्ययत्वात्, स्वाप्नप्रत्ययवदिति। अत्र पक्षः—सर्वः प्रत्ययः। अनेनानुमानेन यज्ज्ञानं जायते तदपि पक्षान्तर्गतं भवति। सर्वे प्रत्यया निरालम्बनत्वेन

विशिष्टास्साध्यन्ते । अत्र यो विशेष्यविशेषणभावग्रहः सोऽपि निरालम्बनः। अर्थात्- –विशेष्यविशेषणभावग्रहस्य मिथ्यात्वे सिद्धेऽनुमानेन जायमान-ग्रहस्यापि मिथ्यात्वं सिद्धं भवेत्। तदा विशेष्यविशेषणयोर्विवेको न सिध्येदित्यप्रसिद्धविशेषणविशेष्यः पक्षो भवेत्। प्रत्ययस्य निरालम्ब-नत्वं वदतः श्रोतुश्च यज्ज्ञानं तदपि प्रत्ययत्वान्निरालम्बनमिति पक्षस्य सिद्धिः कथम्, यदीदं सालम्बनं तर्ह्यनुमानमनैकान्तिकं भवेत्। इदं विशेषणम्, इदं विशेष्यमिति विकल्पो वस्तुनि भवति नावस्तुनि। निरालम्बो नाम न किञ्चिद्वस्त्वस्माकम् अतः कथममी विकल्पा इति कथ-नेनापि न निस्तारः, यतो ह्यवस्तुनः क्वापि बुद्धिविषयत्वादर्शनेन न त्वया बोधयितुं शक्यते, नाप्यस्माभिश्शक्यते बोद्धुम्। असतः कल्पनापि न प्रसिध्यति, यदि कल्पयित्वा सत्त्वमनुमानव्यवहारः क्रियत इत्युच्यते। सत्त्वस्य कल्पना ज्ञानोत्पत्तये भवता स्वीकर्तव्या, तथा सति तस्या वस्तु-त्वमेव स्यात् नावस्तुत्वम्। कामं मीमांसकैर्मेघाभावेन वृष्ट्यभावस्साध्येत, किन्तु तेषां भावातिरेकिणा रूपेणाभावः प्रख्यायते, न ह्यभावोऽवस्तुरूपः। भवन्मते तु तस्यावस्तुत्वमेव। अतः कल्पनाप्यनुपपन्ना। किञ्च योऽयं प्रत्ययशब्दो धर्मिणं पक्षं निर्देष्टुं प्रयुज्यते स किं भावे कर्तरि करणे वा कर्मणि वा प्रयुज्यते? प्रतीयत इति प्रत्ययो वा? प्रत्याय्यत इति प्रत्ययो वा? न हि प्रतीतिरस्ति प्रत्येतव्यं नास्तीति भवितुमर्हति, अकर्मक-प्रत्ययासम्भवात्। यदि ज्ञानमेवार्थप्रकाशे तज्जन्मनि वा कर्तृत्वेनोपचर्यते करणत्वेन वेति वः पक्षः, तथापि विना कर्मकारकेण तदनुपपत्तिस्तद-वस्थैव। प्रत्यय इत्युक्तमात्रेणैव प्रत्येतव्याभावः प्रतिषिद्ध इति लौकिकी सरणिः। मम मातेत्युक्ते तस्या वन्ध्यात्वं प्रतिषिध्यत इति यथा। अतः प्रत्ययं पक्षीकृत्य न निरालम्बनत्वं साधयितुं शक्यते। ज्ञानमात्रं निरा-लम्बनमिति प्रतीत्य भवता 'प्रत्यया निरालम्बनाः' इति वक्तव्यम्। तथा सति धर्मधर्मिवचनाविमौ शब्दावित्यायाति। यद्यत्र किमप्यभिधेयं नास्ति तर्हि पक्षः कथं प्रसिध्येत्? न खलु प्रत्ययशब्दोऽविभक्तावयवे रूढ इति

साम्प्रतम्, एवमपि तस्य ग्राहकत्वं तावत्प्रसिद्धमेव। रूढमिति वदतो भवतो वर्णानुपूर्व्येव खलु विवक्षिता। तस्या ग्राहकत्वञ्चेत् स्वयं स्वस्य ग्राहकमित्यायातम्। तथाप्यप्रसिद्धविशेष्यः पक्षो भवेत्। अतः कथमपि पक्षाप्रसिद्धिः।

एवं निरालम्बनत्वं साध्यमप्यनुपपन्नम्। 'प्रत्यया निरालम्बनाः' इत्यत्र निरालम्बनत्वं धर्मः प्रत्ययानाम्, प्रत्ययाश्च तद्विशिष्टा धर्मिण इति सम्पद्यते। धर्मधर्मिभावेऽवगते कथं प्रत्ययानां निरालम्बनत्वं सिध्येत्? निरालम्बना इत्यत्र बहुव्रीहिः—निर्गतमालम्बनं येभ्यो येषां वेति। पूर्वमासीदालम्बनं यच्चेदानीं तेभ्यो निर्गतम् इति वा, यच्चालम्बनं भवद्भिरुच्यते तदिदानीं तेषां निर्गतमिति वार्थस्सम्पन्नः। पूर्वमासीत् कथम्? इदानीं निर्गतमिति च कथमित्युपपादनीयम्? न वयमागतं निर्गतमिति ब्रूमः, किन्तु प्रत्ययान् सर्वथालम्बनशून्यान् वदाम इति चेत् तर्ह्यालम्बन—शून्यत्वं प्रत्ययानां धर्म इत्युक्तं भवति। एवं सति निरालम्बनत्वं प्रत्ययानां कथं साधितं स्यात्, आलम्बनशून्यत्वस्यैव तेषामालम्बनत्वात्। आलम्बनशून्यत्वं प्रत्ययानां स्वभावो न तु धर्म इत्युच्यमानेऽप्रसिद्धविशेषणः पक्षस्स्यात्। न हि सर्वथा निरालम्बनत्वं नाम जगति किञ्चिदस्ति।

यदाकारा बुद्धिस्सा निरालम्बनेति ब्रूमः। सर्वत्र विज्ञानाकारैव बुद्धिरुदेति, न बाह्यार्थालम्बना, न हि बाह्योऽर्थः कश्चन विज्ञानादतिरिक्तः प्रसिध्यति। इदमेवास्माकं निरालम्बनत्वमिति चेदत्र वदामः—विज्ञानाकारा बुद्धिरिति वदद्भिर्भवद्भिः विज्ञानस्याकारः कश्चन स्वीकृतः। कथं बुद्धेर्निरालम्बनता? स्ववाग्विरोधः खलु भवेत्। बाह्यार्थानालम्बना बुद्धिरिति वदन्तो भवन्तः किं बाह्यमित्यनेन रूपेण बुद्धिर्नालम्बत इति साधयन्ति? उत वस्तुतो वा बाह्यं नालम्बत इति? नाद्यः पक्षस्समुचितः, सिद्धसाधनत्वात्। घटोऽयम् नीलमिदम् इत्यादयो बुद्धयो बाह्यतया घटादिकं नालम्बन्ते, किन्तु घटाद्याकारतयैव, आसु बुद्धिषु तत्तद्रूपसंवेदनस्य दृश्यमानत्वात् घटाद्यनालम्बनत्वं कथं साधयितुमुचितम्। द्विचन्द्रादिज्ञाने

इदमनालम्बनत्वं तुल्यमिव प्रतिभाति, किन्तु यदेव विज्ञानमिन्द्रियाप्राप्तमर्थं प्रकाशयति तदनालम्बनमिति स्वीक्रियते, न पुनर्द्विचन्द्रादिप्रतिभासोऽपह्नूयते। यद्ययं प्रतिभासो नापह्नूयते तर्हि सदसद्विवेकः कीदृशो मीमांसकानामिति प्रश्नस्येदमुत्तरम्—इदं सत् इदमसदिति विभाग इन्द्रियार्थसंयोगसदसद्भावप्रयुक्तः, यदिन्द्रियसम्प्रयुक्तमर्थं प्रकाशयति तत्सत्, विपरीतश्चान्यत्। यथावभासमर्थस्य सत्त्वं न ब्रूमः, बाधकदर्शनात्। अतो देशान्तरस्थमिन्द्रियाप्राप्तमर्थं यद् गृह्णाति तदसद् ग्राह्यम्। तादृशविज्ञानस्यार्थो नास्तीति व्यवहारः। तथा च नेदं रजतमित्यस्य नायमर्थः—यद्रजतं नास्तीति, किन्तु—इह नास्तीति यत्रेन्द्रियेण न प्राप्यते। यदेव यत्रेन्द्रियेण प्राप्यते, तदुच्यते—इदमस्तीति। विभागोऽयं निरालम्बनवादिनो न भवति, तेषामिन्द्रियादीनामभावात्।

निरालम्बनमित्यस्य ग्राहकाद् ग्राह्यमभिन्नमित्यर्थः। स एव साध्यत इति कथं साध्याप्रसिद्धिरिति चेत्—तर्हि विज्ञानस्य यच्छक्तिद्वयं स्वीकृतं भवद्भिः—ग्राह्यशक्तिः ग्राहकशक्तिश्चेति तदपलपितं स्याद् यदि ग्राहकाद् ग्राह्यमभिन्नमित्युच्येत। बौद्धैराश्रयातिरेकिणी न शक्तिरिष्यते तथापि शक्तिभेदद्वारेण द्व्यात्मकत्वस्य तैः स्वीकृतत्वान्न दोषः। 'प्रत्ययो निरालम्बनः' इत्युक्ते या बुद्धिर्निरालम्बनत्वविषयिण्युत्पद्यते, तस्या बाह्यग्राह्यविवर्जितत्वं सिद्धमेव, न तत्साध्यकोटिप्रवेशार्हम्, अनर्थकत्वात्। किञ्च—अयं चैत्रः, अयं स्तम्भ इत्यादयः प्रत्ययाः बाह्यं स्वस्वविषयमवस्थापयन्ति, स निराकर्तव्यो निरालम्बनप्रत्ययेन। निरालम्बनप्रत्ययश्चार्थशून्य आत्मांशपर्यवसायी। प्रत्ययोरनयोर्विचिन्त्यमाने विरोध एव नास्ति। समाने विषये समुपनिपातिनोर्विरुद्धप्रत्यययोरेव बाध्यबाधकभाव इष्यते। यथा—इदं रजतं नेदं रजतमिति। चैत्रादिप्रत्ययानां बाह्यो विषयः, निरालम्बनप्रत्ययानाञ्च स्वात्मांशो विषयः। समानविषयत्वञ्चोभयोर्न दृश्यते। अतोऽत्र किं केन बाध्यत इति वक्तुं न शक्यम्। अतो निरालम्बनत्वं साध्यं न आत्मनस्स्वरूपं लभते।

किञ्च बुद्धेन स्वशिष्या उपदिष्टाः-- अयं धर्मः अयमधर्म इति। अत्रोपदेशकः कश्चन, उपदेश्याश्च बहवः, उपदेशाश्च चैत्यवन्दनादयो धर्माः तद्भिन्नाश्चाधर्माः। इमे भेदाः परमार्थतो यावन्न सिध्यन्ति, तावदुपदेश एव न घटते। सर्वमिदं बुद्धानां बुद्धानुष्ठानचेष्टादर्शनेनानुमतम्। चैत्रादि-प्रत्यया निरालम्बनाः प्रत्ययत्वादिति सम्प्रति तद्विपरीतवचने सति किं बुद्धाभिप्रायविरोधो न भवति ? उपदेश्योपदेशकयोर्भेदः धर्माधर्मत्वेनो-पदेशयोर्भेदः, सर्वमिदं बुद्धैरनुमन्यते, अपि च निरालम्बनाः प्रत्यया इति साध्यत इति चित्रमेतत्। स्वयूथ्यैस्सौत्रान्तिकैश्च बाह्यार्थसद्भाव उल्लिखितः, तदागमबाधनञ्च स्यात् यदि प्रत्ययानां निरालम्बनत्वं साध्यते।

एवं सहस्रं दोषा उद्भाव्यन्ताम्। अत्र बौद्धा एवं कथयन्तः प्रत्यव-तिष्ठन्ते—यत्, सर्वोऽपि धर्मधर्मिभेदव्यवहारः—अयं पक्षः, इदं साध्यम्, अयं हेतुरित्यादिः बुद्धिभेदप्रयुक्त इति तावत्सर्वैरभ्युपगन्तव्यम्। अनादि-वासनोपप्लाविता हि पक्षसाध्यहेत्वादिविकल्पा भवन्ति। अतो वासना-भेदाद् बुद्धिभेदः, तद्भेदाच्च पक्षादिभेदः। बुध्यारूढेनैवानुमानानुमेयव्यव-हारस्सेत्स्यति। 'नित्यश्शब्दः' 'अनित्यश्शब्द' इति भिन्नयोर्धर्मिणोः हेतु-साध्ययोर्वावगतिः बुद्धिभेदेन विना न हि भवितुमर्हति। अतो ज्ञानभेद-निबन्धन एवात्र भिन्नत्वव्यवहारः। ज्ञानमेव सर्वत्र भेदनिबन्धनम्। सुदूर-मपि गत्वा युक्तिभिरनुसंहितो भेदो ज्ञान एव पर्यवस्यति। देशतः कालतश्च भेदं ब्रवाणा ज्ञानभेदमेवावलम्बन्ते। जात्यादिभेदेन वह्निधूमादिभेदसाध-नमपि शब्दप्रयुक्तमेव। शब्दभेदेऽर्थविकल्पविलसिता एवाग्नित्वधूमत्वादयः। शब्दभेदोऽपि विज्ञानभेदाद्विना न सम्भवति। एवञ्च सर्वोऽप्यनुमानानुमेय-व्यवहारो बुध्यारूढेन धर्मधर्मिन्यायेन बहिः सदसत्त्वमपेक्षत इति यावन्ति दूषणानि तावन्ति विकल्पविलसितान्येवेति।

तदत्र विचारणीयम्—बुद्धिभेदनिबन्धनत्वं शब्दभेदनिबन्धनत्वं वास्तु हेत्वादिभेदानाम्, बुद्धिभेदं प्रति शब्दभेदं वा प्रति किञ्चिन्निबन्धनं वक्तव्यम्। न ह्यकस्माद्बुद्धिभेदो वा शब्दभेदो वा जायेत। अकारणिका कार्योत्पत्तिर्न

सम्भवति। शून्ये च जगति न तयोः कारणमप्युत्प्रेक्षितुं शक्यते। शब्दाभावेन भवतां शब्दभेदः कथं सिध्येत्? भवदुक्ते प्रयोगे परोक्तानि दूषणान्यवगत्यैव तेषां दूषणानां विकल्पविलसितत्वं भवतोच्यते। अविद्यमान एव बुद्धिमात्रकल्पितस्साध्यादिभेदोऽनुमानव्यवहार इति यदि कल्प्यते, तर्हि दूषणव्यवहारोऽपि तादृश एव स्यात्। किन्तु दूषणबुद्धिः हेत्वादिन्यूनतोक्त्यैव खलु भवतां जायते। तथैव भवदुक्तप्रयोगस्त्वस्माकं न सिद्ध इत्यावयोर्नाविशेषता। बाह्यार्थव्यवहारिणो वयम् भवन्तश्च ज्ञानैकशरणाः। असति बाह्येऽर्थे वयं कथं बुध्यामहे? अर्थावबोधाय निमित्तमुक्तमस्माभिः, वासनाभेद इति चेत् न, वासनाभेदः किं निमित्तः? ज्ञानभेदनिमित्त इति वक्तव्यम्। तथा सत्यन्योन्याश्रयः। बीजाङ्कुरन्यायेन नान्योन्याश्रयः परिहर्तुं शक्यते—बीजाङ्कुरयोः प्रसिद्धिरस्ति, तत्र दोषपरिहारस्सुगमः, किन्तु वासनास्ति सा च भिन्ना इत्यत्र न किञ्चिदस्ति प्रमाणं भवताम्। वासना हि नाम सा भवति—पूर्वानुभवप्रभावितस्मरणहेतुः संस्कारः। सा च विद्यमाना विविधं ग्राहकं ज्ञानमेवोपकल्पयेत्, ग्राह्यभेदस्तु किंकृतः? नायं वासनानिबन्धनो भवितुमर्हति। स्मृतिहेतुः खलु वासना। बहिश्च पदार्था अत्यन्तमसन्तः। न ते कदापि गृहीतपूर्वाः। तान् वासना कथं स्मारयेत्? किञ्च भवतां ज्ञानानि क्षणिकानि परस्परमन्वयेन विना नश्वराणि। अतो वास्यवासकभावस्तेषामनुपपन्नः। व्यापारनिबन्धः खलु वास्यवासकभावः। क्षणिकानाञ्च स न भवति। जन्मनैव व्यापारेण वासनायाः कारकत्वं न वक्तुं शक्यम्, बुद्धिस्तु जायमाना ज्ञानान्तरं वासयन्ती न दृश्यत इति जन्मना वासनायां कारणत्वं कथं भवेत्? जन्मापि च बौद्धैर्नाङ्गीक्रियते। यद्धि स्वलक्षण एव निरुद्धं न केनचिद्रूपेणान्वेति न तत् तदायं वास्यतोति सम्भवति। तथा वासकमपि यत् निरन्वयविनष्टं तत् केनात्मना परं वासयेत्।

इयमत्र बौद्धानां प्रक्रिया—भङ्गुरमुत्तरञ्च ज्ञानम्, नावस्थितः कश्चिन्नित्यो ज्ञाता, पूर्वसादृश्यात् सारूप्याद्वा ततो भिन्नस्योत्तरस्य वासना युज्यते। वासना नाम पूर्वसारूप्यमुत्तरस्य। पूर्वभावादेव ज्ञानस्य कार-

कत्वम्, नात्र व्यापारस्यावश्यकता। पूर्वभावातिरेकिणो व्यापारस्यानुपपत्तिः। पूर्वस्योत्तरकारणत्वमिदमेव, वासकत्वं यत्पूर्वेणोत्तरं वास्यत इति। भङ्गुरवादिनामेव वासनोपपत्तिमती न स्थिरवादिनामिति।

अत्रेयं मीमांसकानां दृष्टिः—यदि पूर्वमुत्तरस्य जनकमभविष्यत् तर्हि पूर्वं, स्वानुरूपं विरूपं वा अजनयिष्यत्। असतोऽनुत्पन्नस्य वा न खलु जनकता क्वचिदनुभूयते, एवं विनष्टस्यापि। निष्पन्नं ज्ञानं क्षणमपि नावतिष्ठते, कदा तज्जनयिष्यति? यदा जनकत्वमेव नोपपन्नं तदानुरूपजननमिति कथमुपपद्यताम्। यस्य चान्वयो नास्ति, यश्च विनष्टः तस्यानुरूपमपरं कथं सम्भवेत्? आनुरूप्यं नाम धर्मान्वयः। पूर्वधर्मान्वय उत्तरज्ञाने यद्यभ्युपगम्यते तर्हि तस्य निरन्वयो विनाशो वा कथं सम्पत्स्येत? समानधर्ममादायैव सारूप्यघटना लोके प्रसिद्धा। पूर्वभावितैव कारणत्वं यदुक्तम्, तद् घटपटयोरपि पूर्वापरभावित्वे कार्यकारणभावस्स्यात्। अतः पूर्वभावितामात्रेण कारकत्वं वा कारणत्वं वा व्यापारमन्तरेण न सिध्येत्। अतः आनुरूप्यवासनापक्षो न युक्त इति। बाह्यार्थवादिनां हि पूर्वज्ञानजनिता आत्मस्था वासनाः सदृशदर्शनाद्यपेक्ष्य लब्धोद्बोधाः क्रमेण कार्यं जनयन्ति। ज्ञानमात्रवादिनस्तु वासनानां न किञ्चित् कार्यजननेऽनुग्राहकमस्ति। विलम्बे कारणाभावात् युगपदेव सर्वाः सर्वं कार्यमारभेरन्। एकदैव विश्वज्ञानमुत्पन्नमिति क्षणान्तरे किमपि न स्यात्। अतः संवृतिसत्यमिति यत्कल्प्यते तद्वत् वासनापि कल्पिता न परमार्थतः काचिदस्तीत्येष्टव्यम्। नैतादृशं वस्तु कस्मैचित् कार्याय घटत इति।

एवमसत्या युक्त्यनुपेताया युक्तिशून्यायाश्च वासनाया विकल्पनं तत्त्वदर्शिनां बौद्धानामिममाशयमवद्योतयति—यत् विषयेष्वास्थानिराकरणपुरस्सरमर्थनिराकरणे लोकाः प्रवर्तन्ताम् इति। किन्तु परवर्तिनो ग्रन्थकारास्तत्रैव सिद्धान्तप्रवाहं मन्यमाना भ्रान्ता इवेत्याभाति।

एवं परैः प्रयुक्ते साधने प्रत्यक्षविरोधप्रदर्शनेन दूषणे समुद्भाविते स एव निरालम्बनवादी बहिः प्रत्यक्षमेव न प्रसरतीत्युपपाद्य पूर्वोक्त-

दूषणानि निराकर्तुं प्रत्यवतिष्ठते। एवमेव भाष्यकारः श्रीशबरस्वामी 'शून्यस्तु कथम्? अर्थज्ञानयोराकारभेदं नोपलभामहे। प्रत्यक्षा च नो बुद्धिः। अतस्तद्भिन्नमर्थरूपं नाम न किञ्चिदस्तीति पश्यामः' इत्यादिना पक्षमुत्थाप्य परीक्षते। भाष्यस्यायमर्थः—बाह्यार्थग्राहिणो ज्ञानस्याश्रयणेन प्रत्यक्षादिविरोध उक्तः। बाह्यार्थ एव नास्ति, स च शून्य इति प्रत्यक्षमेवापलपामः, कथमयं पक्षो निराक्रियते? ज्ञानस्य बहिरर्थे प्रवर्तितुं शक्तिरेव नास्ति। भवन्मतेन ज्ञानमात्मनि तिष्ठति, अर्थस्तु बहिः। कथमनयोस्सम्बन्ध उपपद्यते। असम्बद्धप्रकाशने चातिप्रसक्तिः। ज्ञानप्रवृत्तिं प्रति विषय एव नास्तीति वदामः। एकस्यैव रूपस्योपलब्धेः। घटोऽयं नीलमिदं पटोऽयमिति यज्ज्ञानं प्रकाशते तदेकमेव। अर्थस्य ज्ञानस्य च विभागानवगमे विभागाभ्युपगमो न युक्तः। तदिदमुक्तं 'अर्थज्ञानयोराकारभेदं नोपलभामहे' इति। ज्ञानमेव प्रत्यक्षम्, न तद्भिन्नमर्थरूपं किञ्चिदस्ति। अत एवानिदम्प्रथमताकात्कालाद्वासनोपप्लावितनिखिलघटाद्याकारप्रकाशः। नात्र केनचिद्बाह्यमवस्थाप्येत, येन तदपलापे प्रत्यक्षविरोधः प्रसज्येत। एतादृशमेव प्रत्यक्षमिति साध्यमाने विरोधस्य कुतो वावसर इति।

इदं तावदत्र परीक्षणीयम्—किं प्रत्यक्षं स्वांशमात्रपर्यवसायि? उत तद् बाह्ये प्रवर्तितुं शक्नोति? यदि सर्वसंविदामात्मांश एव ग्राह्यः ततो दूषणबाधनात् साधनसिद्धौ नास्तिकस्य बाह्यापलापस्सेत्स्यति। यदि प्रत्यक्षं बाह्यार्थग्राहि ततो दूषणसिध्या प्रत्यक्षस्य बाह्यार्थपरत्वम् इति।

तत्र ज्ञानमेवैकमाकारवत्, तदेव च ग्राह्यमिति युक्तमुत्पश्यामः। ज्ञानन्तु प्रकाशस्वभावम् अनपेक्षितप्रकाशान्तरमेव साक्षात्कारि प्रकाशते। बाह्यस्य वस्तुन आकारवत्त्वं स्वीकृत्य तस्य जडस्य प्रकाशायोगाद् ग्राहकान्तरं प्रकल्पनीयम्। कल्प्यमानञ्च तन्निराकारमेष्टव्यम्। तदिदं निष्प्रमाणकम्। ज्ञानाभिधानं निराकारं वस्तु बाह्याद्वाकारवतः कल्पनमनुमानरूपं न भवितुमर्हति। बाह्यं वस्तु कल्प्यमानेन ज्ञानेन अविदित-

प्रतिसम्बन्धं सत् ज्ञानं कथमनुमापयेत् ? नित्यपरोक्षज्ञानवादिनो मीमांसकस्य क्वचिदपि न व्याप्तिसिद्धिः। किञ्च ज्ञानानुमाने किमर्थो लिङ्गम् ? उतार्थधर्मः ? नाद्यः, व्यभिचारित्वाद्धेतोः। असत्यपि ज्ञानेऽर्थस्य भावात्। न द्वितीयः ? स चाज्ञातुरपि साधारणोऽविशेषात्परबुद्धिमप्यनुमापयेत्। अतो नाप्रत्यक्षा बुद्धिस्सिध्यति। तस्मादर्थाकाराभ्युपगमे निष्प्रमाणकम् वस्त्वन्तरकल्पनम्। ज्ञानवैचित्र्यानुपपत्या तद्धेतुत्वेनार्थः कल्प्यते, स चार्थः निराकारस्य ज्ञानस्याकारं समर्पयतीति यद्युच्यते— तदिदमनुपपन्नम्— वैचित्र्यमर्थाधीनमिति न वक्तुं शक्यम् अत्यन्तापरिदृष्टपूर्वेण त्वर्थेन क्वचिद्वैचित्र्याधानस्यादृष्टत्वात्। समनन्तरप्रत्ययविशेषाद्वैचित्र्यं घटत एव। कार्यदर्शनबलेन कुतश्चिदेव समनन्तरप्रत्ययविशेषात् किञ्चिदाकारं ज्ञानं जायत इति किमनुपपन्नम् ? विलक्षणा ह्युपादानविशेषा विलक्षणशक्तय इति न किञ्चिद्दुष्यति। अतश्च कार्यदर्शनबलानुसारिण्येव च कारणव्यवस्था स्वीकार्या। अत एवासत्यपि बाह्ये स्वप्नादौ ज्ञानमात्रान्वयादेवाकारान्वयो दृश्यमानो ज्ञानप्रभावित एवावसीयते। न त्वेवमर्थवादिनो ज्ञानापेतमर्थस्याकारान्वयं दर्शयितुं शक्नुवन्ति, असति ज्ञाने आकारप्रतिभासायोगादिति। अतस्सिद्धं वासनानिमित्त एवायं ज्ञानाकारो नार्थसंसर्गधर्म इति। किञ्चार्थनिबन्धनत्वे ज्ञानाकरस्य द्विचन्द्रादिविभ्रमेऽन्यथार्थे व्यवस्थितेऽन्याकारा बुद्धिरुपजायते। कथं ह्यन्याकारोऽर्थो धियमन्याकारां जनयेत् ? तदवश्यमसत्यप्यर्थे भासमान आकारो ज्ञानस्यैवेति वक्तव्यम्। तत्सामान्यादितरेषु तथात्वमिति न्यायेन सर्वत्रैव तथावधारणमुचितम्। अतस्सिद्धं भासमान आकारो ज्ञानस्यैव नार्थापेक्षः। व्यवहारसंवादापेक्षया हि प्रमाणम् तद्विसंवादाच्चाप्रमाणम् इति सांव्यावहारिकी प्रमाणस्थितिः। परमार्थतया तु प्रमाणं चिन्तामयीमेव प्रज्ञामनुशीलयन्तः केचिदेव योगिनः निर्धूतनिखिलनीलाद्युपरागमभिमुखीकुर्वन्तीति तदेव तुरीयं प्रत्यक्षमिति सर्वमनवद्यम्।

मीमांसकानां प्रक्रिया त्वत्र भिन्नैव। ते ह्यर्थं प्रत्यक्षं ज्ञानञ्चानुमेयं मन्यन्ते। संवित्प्रकाशते घटः प्रकाशत इति प्रयोगद्वयमुपलभामहे। तदत्र

प्रकाशतेपदस्यार्थो विचारणीयः। परैरत्रोच्यते—संवित् स्वयमेव प्रकाशते न तु प्रकाशान्तरं अपेक्षत इति। तत्र धात्वर्थप्रकाशात् संवित् किमर्थान्तरम्? उत प्रकाश एवेति जिज्ञासायाम्, पदार्थान्तरमित्युक्ते संविदोऽप्यपरः प्रकाश एष्टव्यः। यदि च धात्वर्थादनर्थान्तरं संवित् तर्हि प्रकाशते पदेनैवालम् किं संवित्पदेन प्रयुक्तेनाधिकं फलमवाप्यते? अतः प्रतीतिकर्मतैव संविदः प्रकाशतेपदार्थस्स्वीकर्तव्यः, घटः प्रकाशत इति यथा। संवित् प्रकाशत इति कर्तृप्रत्यये विद्यमाने संविदः कर्मतानुपपन्ना, तथापि कर्तृभावस्तु वर्तते। तेनापि धात्वर्थाद्भेदस्सिध्यत्येव। यद्युभयमभिन्नं कथं तर्हि कर्तृभावः। न हि धात्वर्थः प्रकाश एव संवित्पदार्थ इति वक्तुं साम्प्रतम्। अतो नाप्राप्तस्य सिद्धिरस्ति, नापि कर्मणः प्राप्तिरस्तीति सत्यास्संविदोऽवश्यं प्राप्यकर्मता भावान्तरवद्वक्तव्यैव नान्या गतिरस्ति। त्रिधात्र पदार्था गम्यन्ते—अर्थः कर्म, आत्मा कर्ता, संवित्तु फलमिति, तत्र कथं संविदः कर्मत्वमिति कामं शंका स्यात्, किन्तु यथाऽर्थः कर्म तथा फलमपि कर्मैव स्वीकर्तव्यम्। यदि तत् स्वयं प्रकाशम् तर्हि मातृमेययोरपि स्वप्रकाशापातस्स्यात् तत्रैतावान् विशेषः—प्रतीतितः संविदं कर्माभ्युपगच्छामः। प्रतीमो हि वयं मातृमेयगोचरां फलभूतां संविदम्। घटादयोऽप्रकाशात्मानः, ते प्रकाशान्तरमपेक्षन्ताम्, संवित्तु प्रकाशरूपा किमिति प्रकाशान्तरमपेक्षेत? न हि दीपे प्रकाशमाने दीपान्तराद्दीपो ज्ञायत इति कथनमुचितम्, सत्यं दीपे प्रकाशमाने दीपान्तराद्दीपो न ज्ञायते, किन्तु प्रकाशेन दीपो ज्ञायत एव भिन्नः। वस्तुतस्त्वत्रैवं वक्तव्यम्—दीपेन प्रकाश उत्पद्यते, उत्पन्नस्सः दीपेन ज्ञायत इति। तथैवेन्द्रियादिसन्निकृष्टाद् घटादेरर्थात् ज्ञानमुत्पद्यते, तदनु ज्ञातादर्थात् संवित् प्रतीयत इति। ज्ञातो घट इति खलु भवन्ति व्यवहर्तारः। एवं व्यवहर्तारस्संविदं प्रतिपद्यन्ते। अतस्संविदो न स्वात्मप्रकाशात्मत्वम्, अर्थप्रकाशः खल्वसौ, दीपप्रकाश इति यथा। न चात्र ज्ञानार्थयोस्सम्बन्धाभावः, संयोगं समवायञ्च सम्बन्धमभिप्रेत्य सम्बन्धाभावे सत्यपि विषयविषयिभावसम्बन्धस्यात्र

सत्त्वात्। येयं प्रतीतिकर्मता सोऽयं विषयपदार्थः। प्रतीतिः क्रिया, आत्मा कर्ता, इन्द्रियाणि करणम्, अर्थः कर्म, तद् येयमर्थस्य प्रतीतौ कर्मता तदेव तस्य विषयत्वम्, तद्वान् विषयी। एवं विषयविषयिभावेन सम्बन्धेन ज्ञानमर्थश्च सम्बद्धावेव भवतः। ईदृशं यद्रूपं तत् प्रतीतेः प्राङ् न भृतम्, किन्तु परस्तान्निष्पद्यते। अन्यथा ज्ञाताज्ञातयोरविशेषता स्यात्। इदमेव ज्ञातता प्रकटतादिपदेन मीमांसकैर्व्यवह्रियते, इदमेव च ज्ञानज्ञाने लिङ्गम्। ये हि ज्ञानं प्रत्यक्षमास्थिषत तेऽपि प्रथमं तत्र प्रामाण्यं नावधारयन्ति, किन्तु समनन्तरं जायमानेन घटमहमपश्यम् घटेनाहं जलमपिबम् इत्याद्यनुव्यवसायेन निश्चिन्वन्ति। ज्ञानानुमानवादी च प्रकटतादिनानुमिते ज्ञाने प्रामाण्यं स्वत इति वदति। अत्र सूक्ष्मेक्षिकया विचारः कर्तव्यः—ज्ञाततापदेन ज्ञानजन्यः पदार्थगतोऽतिशयविशेषः कथ्यते। तेन ज्ञानविशिष्टता ज्ञाततेति पराभिमतं निरस्तम्। तथात्वे ज्ञानज्ञाततयोरितरेतराश्रयस्स्यात्। ज्ञानोत्पत्तिदशायां सोऽतिशयविशेषः प्रतीत इत्युच्यते। अतस्स्वयं सिद्धो ज्ञानं साधयति। ज्ञानस्य द्वे अवस्थे भवतः—उत्पत्तिः प्रतीतिश्चेति। तत्रोत्पत्तिरिन्द्रियसन्निकर्षादिजन्या, प्रतीतिश्च ज्ञाततया। अर्थस्य कर्मभाव उत्पत्तौ। तस्मादुत्पत्त्यैव ज्ञानस्य विषयोऽज्ञातपूर्वः सम्प्रति ज्ञातस्सन् ज्ञानमुपकल्पयति। ज्ञातपूर्वत्वेऽस्तीन्द्रियाणामसाधारणो व्यापारः। किञ्चिदेव तु कदाचिज्ज्ञातं भवति, न सर्वं सर्वदा। इन्द्रियेषु व्याप्रियमाणेषु जागरायामर्थतथात्वग्रहणम्, सुस्वापादाविन्द्रियाणां व्यापाराभावाददर्शनम्। आत्ममनसोरपि स्वरूपेण सतोरर्थतथात्वदर्शने न हेतुत्वम्, किन्तु यदेव किञ्चिद्बहिरिन्द्रियं चक्षुरादि कार्यदर्शनवशान्मनसा संयुक्तमित्यवगतं तदेव किञ्चिज्ज्ञापयति। अतएव चक्षुस्सन्निकृष्टमपि हि किञ्चिदेव कदाचिज्ज्ञातं भवति नापरम्, तदिदमसति विशेषे नावकल्पते। एवञ्च यस्यैव ज्ञानमुत्पन्नं तस्यासौ ज्ञातस्सन्नर्थोऽनुपपद्यमानो ज्ञानकल्पनायां हेतुर्भवतीति सिद्धम्।

अयं हि लोकशिद्धः पन्थाः—येऽग्न्यादयः प्रकाशतया प्रसिद्धाः ते घटादीनां प्रकाशकाः न तु स्वात्मन इति। स्वप्रकाशाय स्वात्मानं

नापेक्षन्ते, स्वस्य स्वस्मिन् प्रकाशायोगात् । यद्येवं तर्हि ज्ञानमप्रकाशितमेव प्रकाशत इत्यायाति इति चेदत्र ब्रूमः—चाक्षुषेण हि तेजसा प्रकाशितास्ते गृह्यन्ते, तेषां तद् ग्राहयितृ, न गृहीतृ, गृहीतृत्वञ्चेदिन्द्रियाणां चैतन्य-प्रसङ्गात् । यद्यपि नायनं तेज आलोकसहकृतं सत् घटादीनां प्रकाशक-मिति प्रकाशान्तरसापेक्षा वर्तते, तथापि भिन्नजातीयाविमौ प्रकाशौ नयनस्यालोकस्य च । अत एवान्धस्य प्रदीपादयो न बुद्धिविषयाः । स्वप्रकाशत्वे चान्धस्यापि धीगोचरा भवेयुः । एतेन ग्राह्यगृहीतृग्राहयितॄणां भेदस्साधितः ।

अहं सुखी इत्यादिप्रयोगेभ्यो जायमाने ज्ञाने आत्मनो द्विरूपत्वमुप-लभामहे ग्राह्यत्वं ग्राहकत्वञ्चेति, किन्तु इदं नीलम् इत्यादिज्ञाने नील-मात्रं प्रकाशते, न त्विन्द्रियाणां करणानां ग्राहकस्यात्मनो ज्ञानस्य वाकार उपलभ्यते; नीलमेव गृह्यते । तच्च नीलं ज्ञातं सत्प्रतीयत इत्युपपादितम् । अत्र यथा करणमिन्द्रियम् ग्राहक आत्मा न ज्ञायते, तथा ज्ञानमपि । कर्ममात्रस्यात्रावगतिः, न कर्तुः न च करणस्य नापि क्रियायाः । अतो ग्राह्यग्राहकयोर्भेदेनैव प्रतीतिरिति सिध्यति ।

एवं तैरुच्यते—यत् पूर्वं ज्ञानमुत्तरस्मिन् वासनापरनामानं शक्ति-मर्पयति । ततस्तद्रूपं तज्जायमानं तदालम्बनमित्याख्यायते । पूर्वज्ञाना-हितवासनावशेन जायमानमुत्तरं स्मृतिरूपमेव भवेत् । एवञ्च ग्राह्य-ग्राहकैकत्वं सिध्यतीति । तदिदं न युक्तियुक्तं प्रतिभाति—पूर्वन्त्वतीतम् तत्कथं वर्तमानतया गृह्येत । स्मृत्या च स इत्यतीतत्वानुविद्ध एव गोचरी-भवति । इह तु इदमित्येव जायते । अतो न पूर्वापरयोस्ताद्रूप्यम् । यदि तु वासनारूपमेव ज्ञानं न तदतिरिक्ता वासना नाम काचिदिति मतम्, तर्हि तदिदमनुपपन्नम्, निराधारायास्तस्या अनुपपन्नत्वात् । अतीता च सा नास्ति, अनागता सा असत्वीति कथं द्वयोरैकरूप्यम् ? अतः कथमपि ग्राह्यग्राहकयोरैक्यं न सिध्यति ।

किञ्च ग्राह्यग्राहकयोर्ज्ञानत्वेन रूपेणैक्यं मन्यते, तदपि न साधीयः। ज्ञानशब्दस्तु द्वेधा व्युत्पाद्यते—ज्ञायत इति ज्ञानं कर्मणि ल्युडन्तश्शब्दः, ज्ञप्तिर्ज्ञानं इति वा ज्ञायतेऽनेनेति वा भावकरणयोः व्युत्पाद्यते। तत्र प्रथमव्युत्पत्तौ ज्ञानमर्थो भवति, द्वितीयव्युत्पत्तौ च ज्ञानं धीर्भवति। एवं ज्ञानशब्द एक एवार्थज्ञानयोरुभयोर्वर्तते, अक्षादिशब्दवत्, शब्दमात्रन्त्वेकम्, अर्थस्तु भिन्न एव। सर्वथा ज्ञानाद्वस्तुभेदस्सिध्यत्येव। वस्तुभेदोऽयं काल्पनिकः न पारमार्थिक इति कथनमपि न युक्तिसंगतमिव। संवृतिसत्यं पारमार्थिकसत्यमिति सत्यभेदकल्पनं निष्प्रमाणमेव न, किन्त्वनुचितमपि। न हि सत्यं क्वापि मिथ्या भवतीति पूर्वमुपपादितम्।

अयमत्र निष्कर्षः—किमिदं जगत्? कस्मादिदं प्रावर्तिष्ट? इति विचार्य निर्णेतुमेत्र सर्वे दार्शनिकाः प्रवृत्ताः साधकबाधकयुक्तीरुपन्यस्य स्वस्वमतमवस्थापयन्ति परमतानि च दूषयन्तीति नैसर्गिकः पन्थाः। अद्यापरं मतं युक्त्या साधु खण्डितमित्येव तन्मतं लुप्तं न भवति, परेद्युस्तन्मतावलम्बी नूतनं किञ्चित्प्रतिपादयेत्, अथवा पूर्वं स्वमतावलम्बिभिरुक्ता एव युक्तीस्संगृह्य किञ्चित्स्वमतं पोषयितुं प्रवर्तत एव। आचन्द्रतारकमियं खण्डनमण्डनधारा स्थास्यत्येव। परस्परं विरुद्धेष्वापणे प्रसारितेष्वपि वस्तुषु ग्राहकः प्रेक्षावान् स्वापेक्षितमेव वस्तु गृह्णाति। वस्तूनां हानोपादेयता च प्रेक्षावदधीना। लशुनं दुर्गन्धयुतमनुपादेयञ्च, तदपि गृह्णन् तत्र न दुर्गन्धमनुभवति, न चापि तस्यानुपादेयत्वं मन्यते। तादृशोऽपि लोकोऽस्त्येव। लशुनस्य ग्राह्यत्वमग्राह्यत्वञ्च भिन्ननिष्ठमिति लोकेऽवगच्छामः। यश्च लोकातीतो जीवन्मुक्तो वा आत्मयाजी वा ब्रह्मिष्ठतमो वा प्रारब्धवशादिह लोके वर्तमानोऽप्यवर्तमानः तत्र ग्राह्यत्वाग्राह्यत्वबुद्धिविहीन एव तिष्ठेत्। स खलु लोकानुपदेष्टुं वा बोधयितुं वा न समर्थः। लशुनं भक्षयन्तं तमवलोक्य नास्माभिः तद्ग्राह्यत्वबुद्धिमद्भिर्भवितुं शक्यते। स तु कदाचिदमेध्यमपि भक्षयेत्, तत्रास्माकं न खलु ग्राह्यत्वबुद्धिर्भवति। ग्राह्यत्वाग्राह्यत्वयोरननुसन्धानेन तेषां प्रवृत्ति-

हानि वोपादाने वा जायत इति अङ्गीकर्तव्यम्। ते हि देहमिमं नश्वर-मवस्थितमुत्थितं वा न जानन्ति। तेषामाचरणं न व्यवहारोपयोगि, सर्वमतीत्य वर्तमानत्वात्तेषाम्। तेषां ज्ञानमस्मद् ज्ञानात् अत्यन्तं भिन्नम्। तत्सादृश्येन न लौकिकव्यवहारः कर्तुं शक्यः। लौकिकव्यवहारेण लोकानु-सारिणा भवितव्यम्, न त्वलौकिकेन। जैमिनेरनुशासनमिदं लौकिकं पन्थानं निर्दिशति। स्त्रीशरीरे महात्मनां लोकातीतानां कुणपत्वबुद्धि-र्भवेत्, अस्मभ्यन्तु तच्छरीरं रोचते। मातरि मातृत्वम्, सुतायां सुतात्वम्, स्नुषायां स्नुषात्वमस्तीति तत्र तत्र सा बुद्धिरावश्यिकी। सर्वत्र कुणपत्व-बुद्धौ सत्यां व्यवहार एव परिलुप्तस्स्यात्। प्रपञ्चस्तु नानाकारेण दृश्यते। तत्र वर्तमानैरस्माभिस्तदनुवर्तनं कर्तव्यमेव। अलौकिक्या लौकिक्याश्च स्थितेर्मेलनं न सम्भवति, मिश्रणं तदनुचितमपि। सर्वमिदं समालोच्य जैमिनिप्रदर्शिते मार्गे गच्छन्तः श्रीशबरस्वामिनः भट्टपादाश्च निरालम्बन-वादं शून्यवादञ्च परीक्षितवन्तः। इमे च सिद्धमात्मानं न कथयन्ति। यथायथं लोकस्थितिमवबोधयन्ति। आत्मानं सिद्धं मन्यमानः परो ब्रूयाद-लौकिकम्। किन्तु स न सिद्धः। तथा चेत्स कथं ब्रूयात्? किं ब्रूयात्? केन ब्रूयात्? इति शतशः प्रश्नाः प्रादुर्भवेयुः। दुस्समाधेया इमे प्रश्नाः। अतो वयं व्यावहारिकं पन्थानमेवानुसरामः॥

## श्रीवासुदेवदीक्षितः

एवं तावन्महर्षेस्सूत्रकारस्य निष्पक्षपातया दृशा विषयपरीक्षणशैली एवं परीक्ष्यप्रवर्तितानां कतिपयानां न्यायानां लोकोपयोगिता चेषदिव सम्प्रदर्शिता। अथेदानीं जैमिनिसूत्रवृत्तेः प्रणेतुः श्रीवासुदेवदीक्षितस्य वैदुष्यं विवेचनशैलीञ्चाधिकृत्य किञ्चिद्विमृशामः। अयं वेदेषु श्रौतस्मार्त-सूत्रेषु प्रयोगग्रन्थेषु व्याकरणे चानितरसाधारणं वैदुष्यमावहतीति वृत्ति-ग्रन्थादस्मात्स्पष्टं प्रतीयते। तत्तद्ग्रन्थगतविषयवैदुष्येण सह यथा-वत्कर्मणामनुष्ठाताप्ययमासीत्। यो हि स्वाधीतं शास्त्रं स्वजीवने यावत्

प्रयोगपथं नावतारयति तावत्सः शास्त्ररसज्ञ इति न परिगण्यते । परान् बोधयितुमेव न शास्त्राणि चिरन्तनैः प्रणीतानि, किन्तु स्वाचरणायापि । अन्यथा स्वयं नाचरति केवलमवबोधयतीति वक्तारो भवेयु । अतोऽयं ग्रन्थकारस्स्वयमाचरन् वृत्तिं लिखितवानिति प्रतीयते । तत्तदध्यायपरिसमाप्तौ लिखितेन परिचयेन ज्ञायते—श्रीमहादेववाजपेययाजितोऽन्नपूर्णागर्भसम्भूतौ श्रीविश्वेश्वरवाजपेयी, श्रीवासुदेवदीक्षितश्च । न्यायमीमांसाव्याकरणेष्वप्रतिहतगतेः स्वज्येष्ठभ्रातुः श्रीविश्वेश्वरवाजपेययाजितो लब्धविद्यावैशद्यः चोलमहीमहेन्द्रस्य श्रीशाहजिशरभजितुक्कोजिभोसलस्यामात्येन श्रीआनन्दरायविद्वत्सार्वभौमेण पञ्चपुरुषीपोष्यतया नियुक्तः, अमात्यानुष्ठीयमानक्रतुष्वाध्वर्यवं कुर्वन् बाल्य एव कृताधानः महाग्निचयनवाजपेयसर्वपृष्ठाप्तोर्यामादिवरिष्ठसोममखसन्तर्पितबर्हिर्मुखः श्रीवासुदेवदीक्षितः । जैमिनिसूत्राणां व्याख्यानाय यावती वैदुष्यसामग्री सा सर्वाप्यस्यासीत् । वेदाः तद्भाष्याणि श्रौतस्मार्तसूत्राणि व्याकरणं न्यायशास्त्रञ्चेति मीमांसाया आवश्यकानि । विनानया सामग्र्या मीमांसायां प्रवेश एव दुर्लभः, व्याख्यानन्तु दूरे । स्वयं विविधानि कर्माण्याचरन् प्रयोगेषु प्रावीण्यमवाप्य जैमिनिसूत्राणां व्याख्याने प्रवृत्तोऽयं सफलो जात इति निश्शङ्कं वदामः । स्वपरिश्रमानुरूपं ग्रन्थस्य नामापि 'अध्वरमीमांसाकुतूहलवृत्तिः' इत्यनेन व्यधायि । महर्षिजैमिनेस्सूत्राणि अध्वरमीमांसापराणि । अध्वराणां योऽनुष्ठाता यश्चाध्वरसम्बन्धिकल्पसूत्रेषु कृतभूरिपरिश्रमः, यश्च न्यायव्याकरणपरिष्कृतमतिः, स एव पठितुं व्याख्यातुञ्च प्रभुरिति नामकरणेनावद्योतयति । युक्तञ्चेदम्—यतश्च प्रायः प्रत्यधिकरणं वेदवाक्यान्येवाध्वरसम्बन्धीन्युदाहृत्य विचारः क्रियते जैमिनिसूत्रैरिति जैमिनिसूत्राण्यध्वरमीमांसाशब्देनोच्यन्ते । तेषां सूत्राणां कुतूहलेन वृत्तिः क्रियत इत्यध्वरमीमांसाकुतूहलवृत्तिरिति संज्ञा । वेदवाक्यानामर्थकरणे जैमिनिसूत्राणि करणानि 'एभिः करणसम्मतैः' इति भट्टपादोक्तेः । एवञ्च वेदवाक्यार्थनिर्णयाय प्रवृत्तत्वान्मीमांसासूत्राणामध्वरमीमांसाशब्दवाच्यता

नानुपपन्ना। सूत्रगतपदानां प्रकृतिप्रत्ययविभागदर्शनपुरस्सरं तदर्थ-करणमात्रादयं ग्रन्थकारो न विरमति, विशेषेण स्वप्रतिभोन्नीतान् विषया-नप्युपस्थापयति। तथाहि—मन्त्राधिकरणे समेषां मन्त्राणां विवक्षितार्थ-त्वम् 'अविशिष्टस्तु वाक्यार्थः' इत्यादिसूत्रसन्दर्भेण सूत्रकारो व्यवस्थाप-यति। सूत्रानुसारेण तेषां विवक्षितार्थत्वं प्रतिपाद्य मन्त्रजन्यशाब्दबोधः किं मन्त्रोच्चारयितुः ? उत श्रोतुः ? इति विकल्पमुत्थाप्य भाष्यवार्तिककार-योरुच्चारयितुरेव शाब्दबोध इति मतमभिधाय 'तत्तु वयं न मृष्यामहे किन्तु श्रोतुरेव मन्यामहे' इत्यादिना श्रोतुरेव मन्त्रजन्यं शाब्दबोधं स्वीकुर्वन् तत्र भूयसीर्युक्तीस्सङ्गृह्णाति। तत्र ये सम्बुध्यन्ता मन्त्राः 'विष्णो हव्यं रक्षस्व' इत्यादयस्तेषां शाब्दबोधः श्रोतुरेवेत्यविप्रतिपन्नम्। सम्बोधनं नाम ज्ञापनम्। उच्चारयिता च हे विष्णो मया निर्मितं हव्यं रक्षस्वेति ज्ञापयति। सम्बोध्यश्च विष्ण्वादिस्तज्ज्ञात्वा तदनुजानातीति प्रक्रियायामवलम्बितायां श्रोतुरेव शाब्दबोध इति सिध्यति। ये च स्तोत्र-शस्त्रीया मन्त्रास्ते तास्ता देवताः स्तुवन्तस्तत्तन्निष्ठगुणानभिदधति। स्तुत्या देवता गुणान् श्रुत्वा प्रसीदन्ति। इदञ्च श्रोतुश्शाब्दबोधे एव सङ्गच्छते। किञ्च शस्त्रमन्त्रपठने सान्तत्यादिनियमा वर्तन्ते, स्तोत्रमन्त्र-पठनेऽपि स्तोभाक्षारसंयोजनादयो नियमास्सन्ति। सनियमं मन्त्रोच्चारणे व्यापृता वक्तारो होत्रुद्गातृप्रभृतयो मन्त्रार्थानुसन्धारो यदि भवेयुः तर्हि यथानियममुच्चारणं कर्तुं न क्षमा भवेयुः। यथानियममुच्चारणाभावे च प्रायश्चित्तमापद्येत। अत एतादृशेषु मन्त्रेषु श्रोतुरेव शाब्दबोधस्स्वी-कर्तव्यः। ये च करणमन्त्राः 'देवस्य त्वा सवितुः' इत्यादयस्तेषां मन्त्रान्तेन कर्मादिसन्निपातो जैमिनिना द्वादशतृतीये 'मन्त्राणां करणार्थत्वान्मन्त्रान्तेन' इत्यधिकरणे सिद्धान्तितः। श्रौतसूत्रकारैरप्यापस्तम्बप्रभृतिभिरेवमेवानु-मन्यते। अत्र वक्तॄणां मन्त्रार्थविवक्षा यदि स्वीक्रियेत तर्हि तत्तन्मन्त्रा-भिहितार्थस्य स्मरणं कर्मानुष्ठानं प्रति कारणमिति वक्तव्यम्। तथा सत्यादौ मन्त्रोच्चारणं ततोऽनुष्ठेयार्थस्मरणं ततोऽनुष्ठानमिति क्रमस्स्यात्।

तत्र मन्त्रान्तेन कर्मादिसन्निपातो न घटते । श्रोतुः मन्त्रजन्यबोधाङ्गीकारे नेयमनुपपत्तिः । अनया रीत्या सर्वत्र मन्त्रोच्चारणे नोच्चारयितुः शाब्दबोधः किन्तु श्रोतुरेव । अव्युत्पन्नस्याप्युच्चारयितुः कर्मस्वार्तिज्यं न विरुध्यत इति स्वमतमुपक्षिप्तवान् वासुदेवदीक्षितः ।

द्वितीयाध्यायस्य द्वितीयपादेऽभ्यासाधिकरणे स्वस्य वेदग्रन्थेषु विद्यमानं वैदुष्यं साधु प्रदर्शयन्नन्ते वदति—'वेदार्थज्ञानकुशला मीमांसकशिरोमणयो विदाङ्कुर्वन्तु' इति । अस्याधिकरणस्य भाष्यकारप्रभृतयस्सर्वं एव ग्रन्थकर्तारः 'समिधो यजति' 'तनूनपातं यजति' इत्यादिवाक्यानि पञ्चोदाहृत्यानन्यपरविधिपुनःश्रवणेनाभ्यासेन कर्मणो यागस्य भेदम्, तद्भेदेन भावनाभेदम्, तद्भेदेन चापूर्वभेदं व्यवस्थापितवन्तः । तत्र पूर्वपक्षे समिदादयश्शब्दा गुणपरा अर्थवादपरा वा, सिद्धान्ते च नामसमर्पका इति स्थितिः । अत्र शातपथश्रुतिसन्दर्भं कौषीतकिब्राह्मणसन्दर्भं तैत्तिरीयशाखासन्दर्भंश्च समग्रमुल्लिख्य पूर्वोत्तरपक्षयोरसाङ्गत्यं प्रदर्शयति । शतपथब्राह्मणे 'देवाश्च ह वा असुराश्चोभये' इत्युपक्रम्य 'प्रयाजैर्यजते' इति प्रयाजानामुत्पत्तिवाक्यं श्रुतम् । अत्रोत्पत्तौ बहुवचनेन सङ्ख्यया कर्मभेदस्स्पष्टमवगम्यते । तत्र कर्मैक्यपक्षस्य पूर्वपक्षेऽनुन्मेष एव । कर्मभेदे च स्पष्टे तस्योन्मेषः कथं स्यात् । एवं सिद्धान्ते समिदादिशब्दानां नामत्वस्वीकारोऽप्यनुपपन्नः । नाम्नां यानि प्रयोजनानि सङ्कल्पर्त्विग्वरणगुणोपबन्धफलोपबन्धादीनि तेष्वेकस्यापि प्रयोजनस्यात्राभावान्नामपरत्वं समिदादीनामयुक्तम् । एवं सङ्कर्षकाण्डस्य द्वितीयाध्यायीयद्वितीयपादन्यायानुसारेण समिदादिपदानां देवतानामत्वं प्रथमं व्यवस्थाप्यानन्तरं 'वस्तुतस्तु' इत्यादिना 'समिधो यजति' 'तनूनपातं यजति' इत्यादीनां सप्रमाणनिर्देशं याज्याविधिपरत्वं न तु कर्मविधायकत्वमिति साधु निरूप्याधिकरणस्य 'वाजप्रसवीयं जुहोति' 'राष्ट्रभृतो जुहोति' 'वातनामानि जुहोति' इत्यादीन्युदाहृत्य विचारः कर्तव्य इत्युपसंहरति ।

एवं द्वितीयद्वितीयनवमेऽश्वदाभ्याधिकरणे 'योऽदाभ्यं गृहीत्वा सोमाय यजते' 'योंऽशुं गृह्णाति' इत्यनारभ्यवाक्यमुदाहृत्य 'अद्रव्यत्वात्केवले

कर्मशेषस्स्यात्' इति सूत्रेण ग्रहणाख्यसंस्कारविधिरिति सर्वैरेव ग्रन्थकारैस्सिद्धान्तितम्। श्रीवासुदेवस्तु 'अत्रेदं वक्तव्यम्' इत्यादिना तैत्तिरीयकश्रुत्यनुसारेण द्रव्यदेवताप्राप्तिमुपपाद्य आघारप्रस्तरप्रहरणस्विष्टकृदादिवदंश्वदाभ्ययोरपि ग्रहणसंस्काररूपत्वं यागरूपत्वञ्चेति साधयति। अधिकरणस्य तु 'यत्पृश्नयो गृह्यन्ते' इति तैत्तिरीयकश्रुतिमुदाहृत्य तत्राधिकरणशरीरमुपपादयति।

अरुणाधिकरणे ( ३-१-६ ) 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इति द्रव्यसंयुक्तसोमक्रयविधायकमुत्पत्तिवाक्यमुदाहृत्य किमिदमारुण्यं प्राकरणिके सर्वस्मिन् द्रव्ये निविशते—प्रकृतं कार्यं यद्द्रव्यव्यक्त्या साध्यते तदरुणया साधयेद् इति ? अथवा आरुण्यस्य क्रीणातिनान्वयं स्वीकृत्य तत्साधनीभूतायामेकहायन्यां निविशते ? इति सन्दिह्य सर्वैरेव भाष्यवार्तिककारादिभिर्विचारः प्रवर्तितः। तत्रारुण्यस्य प्रकृतसर्वद्रव्येषु निवेशः, तेन सर्वाणि करणान्यरुणानि कर्तव्यानीति पूर्वपक्षः। एवं प्रवृत्तस्य पूर्वपक्षस्य 'तेषामर्थाधिकरणे' ( ३-१-४ ) 'विहितस्तु सर्वधर्मः' इत्यादिसूत्रोक्तन्यायो मूलम्। तत्र हि 'संयोगतोऽविशेषात्' 'प्रकरणाविशेषाच्च' इति हेतुद्वयेनावघातादीनां धर्माणां परमापूर्वप्रयुक्तत्वमुक्तम्। तन्न्यायेनारुण्यस्यामूर्तत्वात् क्रयं प्रति करणत्वासम्भवेन प्रकृतापूर्वसाधनद्रव्यमात्रे निवेशो युज्यत इति सर्वाणि प्रकरणसम्बन्धीनि द्रव्याण्यरुणानि कर्तव्यानि। अरुणाशब्दश्चारुण्यगुणविशिष्टद्रव्यपरः, तृतीयायाः करणत्वमर्थः। तृतीयया करणभूतं द्रव्यमनूद्य तद्विशेषणतयारुण्यगुणो विधीयते, न करणतया। यद्यप्यत्रैकप्रसरताभङ्गो दोषस्स्यात्, प्रकृतिप्रत्यययोरुद्देश्यविधेयसमर्पकत्वात्, तथापि अरुणाशब्देनाजहत्स्वार्थलक्षणया विशेष्यविशेषणयोः शक्तिलक्षणाभ्यां भिन्नोपस्थितिविषयत्वान्नैकप्रसरत्वकृतो दोषः। अरुणाशब्दस्यारुण्यविशिष्टद्रव्यपरत्वं शक्तिलक्षणाभ्यां स्वीकृतमिति हेतोः प्रकृतक्रये तस्य द्रव्यस्य निवेशो न सम्भवी, क्रयस्य श्रौतैकहायन्यवरुद्धत्वात्, तत्र च लाक्षणिकद्रव्यस्य

निवेशासम्भवात्। अतः वाक्यतो विभज्यारुण्यस्य प्रकृतसर्वद्रव्येषु समावेश इति पूर्वपक्षः। सिद्धान्तस्तु––अरुणाशब्दः केवलगुणवचनः, तृतीया च तदारुण्यं करणतयाभिधत्ते। आरुण्यगुणस्यामूर्तत्वात् साक्षात्क्रियासम्बन्धमनाप्नुवाना करणता गुणस्य द्रव्यपरिच्छेदकत्वशक्तिं पर्यालोचयन्ती परिच्छेद्यतया वाक्यश्रुतैकहायनीं गृह्णन्ती तन्मुखेन प्रकृतक्रियां साधयति। एवञ्चारुणगुणपरिच्छिन्नपिङ्गाक्षित्वविशिष्टैकहायनीकरणकक्रयभावनेति वाक्यार्थः पर्यवस्यति। तेन च तृतीयया गम्यमानं करणत्वं प्रकृत्यर्थारुण्यगतं विधेयतयाश्रितं भवति। अतो न वाक्यादारुण्यस्य विभागः, किन्तु स्ववाक्योपात्तक्रयसाधनैकहायन्यामेव निवेशः, न तु प्राकरणिकसर्वद्रव्येष्विति।

अत्र श्रीवासुदेवः 'अत्रेदं वक्तव्यम्' इत्यादिना नवीनं किञ्चिदाविष्करोति—अरुणादिवाच्यानामुत्पत्तिवाक्यत्वे सिद्धे पूर्वोक्तपूर्वोत्तरपक्षयोरुत्थितिस्सम्भवेत्। क्रयोत्पत्तिविधिस्त्वन्य एवोपलभ्यते द्रव्यासंयुक्तम्—'तस्मात्सोमं क्रीणाति' ( श. ब्रा.······· ) इति। अनेन वाक्येनोत्पन्ने क्रये 'अरुणया पिङ्गाक्ष्यैकहायन्या क्रीणाति' 'अजया क्रीणाति' 'हिरण्येन क्रीणाति' इत्यादिवाक्यानि गुणविधय एव सम्पद्यन्ते। एवं सत्यरुणावाक्ये प्राप्तक्रयानुवादेनानेकगुणविधाने वाक्यभेदो न शङ्क्यः, अभ्युदयेष्टिन्यायेनारुण्यविशिष्टैकहानीविधानान्न वाक्यभेदः। द्रव्यासंयुक्तं क्रयोत्पत्तिवाक्यं नोपलब्धमिति पार्थसारथ्यादयोऽधिकरणशरीरमारचयन्ति, वासुदेवस्तु तादृशं वाक्यं प्रदर्शयन्नधिकरणस्वरूपं प्रतिपादयति। अस्मिन् प्रसङ्गे शतपथसन्दर्भं साधु प्रदर्श्याधिकरणसम्बद्धानन्यान्विषयान् विवेचयन् वैदिकग्रन्थेषु स्वस्य विद्यमानं परिश्रममवद्योतयति।

श्रीवासुदेवदीक्षितस्तत्र तत्र स्वस्य समालोचकत्वातिशयं प्रदर्शयन् तृतीयप्रथमस्य पञ्चदशे चतुर्द्धाकरणाधिकरणे शाखान्तरीयाधिकविधीनामुपसंहारानित्यत्वप्रतिपादनप्रसङ्गे आपस्तम्बसत्याषाढभारद्वाजबोधयनादिसूत्रकाराणामपि शाखान्तरीयाधिकविधीनामुपसंहारानित्यत्वमभि-

मतमित्युपपाद्य जैमिनेस्सूत्रकारस्यापि तदेव मतमित्युपसंहृत्य भाष्यकारादीन् समालोचयति कटुवचनैः—'यत्तु भाष्यकृदादिभिः' इत्यादिना। इदश्चात्र विषयपरिशोधनम्—षष्ठान्त्याधिकरणे भाष्यकाराः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभेत' इत्युदाहृत्यात्र पशुशब्दस्सामान्यपशुवाची ? उत विशेषेण छागवाची ? इति सन्दिह्य, 'नन्वेकेषामाम्नायते 'अजोऽग्नीषोमीयः' इति, सर्वशाखाप्रत्ययमेकं कर्मेति' इत्याशङ्क्य 'अत्रोच्यते—प्रतिशाखं भिन्नानि कर्माणीति कृत्वा चिन्ता' इति समाहितवन्तः। खण्डदेवाचार्या अपि 'इदञ्च सर्वं 'अजोऽग्नीषोमीयः' इति शाखान्तरवाक्यं नास्तीति कृत्वाचिन्तया बोध्यम्' इति यथाभाष्यमभिप्रयन्ति। अत्र वासुदेवः—कृत्वाचिन्तयाधिकरणप्रवृत्तिस्तत्रैव भवति यत्र चानुल्लिखितवाक्यविशेषं सूत्रं स्वबुध्युत्प्रेक्षितविषयवाक्ये तदधिकरणमनुन्मिषितं भवेत्, यत्र वा विषयान्तरस्य न स्फूर्तिस्तत्र च कृत्वाचिन्तयाधिकरणप्रवृत्तिः। प्रकृते च सूत्रकारः 'पशुचोदनायामनियमोऽविशेषात्' इति स्पष्टं विषयवाक्यमुल्लिखति। अत्र कथं कृत्वाचिन्तायाः प्रसक्तिः ? एवं कृत्वाचिन्तावर्णनापेक्षया सूत्रकारस्य शाखान्तरीयाधिकविध्युपसंहारानित्यत्वमभिमतमिति कल्पनमेवोचितमित्युपसंहरन् अभिप्रैति—यत्र यत्र सूत्रकारः स्वसूत्रेषु वाक्यविशेषमुल्लिखति तत्र तत्र शाखान्तराधिकविध्युपसंहारानित्यत्वं स्वीकरोतीति वर्णनीयमिति। स्वीयमिममाशयं वर्णयितुमुपक्रममाणो वासुदेवो लिखति—'यत्तु भाष्यकृदादिभिः कृत्वाचिन्तया तदधिकरणप्रवृत्तिर्वर्णिता, तदेतत्सर्वज्ञस्य सूत्रकारस्य मौढ्यं वर्णयद्भिस्तदपेक्षया सार्वज्ञ्यमपि स्वेषु प्रकटयद्भिः सूत्रकाराशयानभिज्ञत्वमेव तेषामाविष्कृतमिति तानेव वयमुपेक्षामहे' इति। महत उपालम्भस्य पात्रीकृतो भाष्यकारो वासुदेवेन। वासुदेवकथनानुसारेणानुल्लिखितवाक्यविशेषे सूत्रे विषयवाक्यस्फूर्त्यभावे वा केवलं कृत्वाचिन्ता न भवति। क्वचित्पूर्वपक्ष्यभिमतं न्यायमादायापि सा भवति। शाखान्तराधिकरणे सर्वशाखाप्रत्ययमेकं कर्मेति सिद्धान्तेनापरिचितो भाष्यकार इति न शक्यते

वदितुम् । सूत्रकारस्य 'अग्नीषोमीयं पशुमालभेत' इति विषयवाक्यमधिकरणस्याभिप्रेतमिति स्पष्टमवगम्यत एव । किन्तु 'अजोऽग्नीषोमीयः' इति स्पष्टे शाखान्तरवाक्ये विद्यमाने कथं चिन्ता क्रियत इति प्रश्ने जाते प्रतिशाखं भिन्नानि कर्माणीति कृत्वा चिन्ता क्रियत इति प्रश्नस्योत्तरं दीयते भाष्यकारेण । तत्र सूत्रकारस्य मौढ्यकल्पने स्वस्य च सार्वज्ञ्यप्रकटने न भाष्यकारस्य प्रवृत्तिः । सूत्रकारं सर्वज्ञं स्वीकुर्वन्नपि वासुदेवः क्वचित् तस्य सर्वज्ञतां न स्वीकरोति । पिण्डपितृयज्ञाधिकरणे चतुर्थचतुर्थाष्टमे 'पितृयज्ञस्स्वकालत्वादनङ्गं स्यात्' (४. ४. १८) इति जैमिनेस्सिद्धान्तसूत्रम् । पितृयज्ञस्यामावास्यानङ्गत्वप्रतिपादनपरमिदम् । तत्र 'अत्रेदं वक्तव्यम्' इत्यादिना ग्रन्थेनामावास्याशब्दस्य तैत्तिरीयकसन्दर्भेण 'इन्द्रो वृत्रं हत्वा असुरान् पराभाव्य सोऽमावास्यां प्रत्यागच्छत्, ते पितरः पूर्वेद्युरागच्छन्' इत्यादिना कर्मपरत्वमङ्गीकृत्य पिण्डपितृयज्ञस्यामावास्याकर्माङ्गत्वं व्यवस्थापयति । अधिकरणन्तु शाखान्तरविषयतया योजनीयमित्यपि वदति । एवं विवेचयतो वासुदेवस्यायमभिप्रायः प्रतिभाति—यद्, याज्ञिकानां पक्षः कथमपि पोषणीय इति । स्वयं याज्ञिकः कर्मानुष्ठाता मीमांसकश्च । यत्रैव याज्ञिकपक्षस्य मीमांसाविरोध आपतति, यथा— 'अङ्गं वा समभिव्याहारात्' इत्यादौ तत्र याज्ञिकपक्षसमर्थन एवायमभिनिविष्टो भवति । युक्तमिवेदं प्रतिभाति—अधीतमधीयमानं वा शास्त्रं यावत्स्वजीवने न समवतारयति तावदधीतशास्त्रस्य किं प्रयोजनम् । जीवने समवतारश्चानुष्ठानरूपः । 'वृन्ताकं न भक्षयेत्' 'अलाबूं न भक्षयेत्' इत्यादीनि शास्त्राणि न केवलमुपदेशाय, किन्त्वनुष्ठानाय । कर्मानुष्ठाने च कल्पानां सूत्राणाञ्चैवोपयोगः । अनुष्ठानावसरे संशये समुदिते याज्ञिकाः सूत्राणि कल्पांश्चालोडयन्ति, न मीमांसासूत्राणि । मीमांसासिद्धन्यायास्तत्र साहाय्यमाचरन्ति । ये चानधीतमीमांसाशास्त्रा याज्ञिकास्ते श्रौतसूत्राणि कल्पांश्चैव केवलं विलोक्य संशयान् दूरीकुर्वन्ति । मीमांसाशास्त्रेऽपि परिचयमादधाना याज्ञिकास्तु याज्ञिकपारम्पर्यं कल्पसूत्रनिर्णयञ्च प्रधानतयानुसर्तुं

मन आदधते। अत एव तत्र तत्राधिकरणेषु खण्डदेवाचार्याः सोमनाथप्रभृतयश्च 'याज्ञिकास्तु' इति निर्दिशन्तस्तेषां पृथगेव पन्थानं परिदर्शयन्ति।

मम तु प्रतिभाति—मीमांसकेषु श्रेणिद्वयं परिकल्पनीयम्। प्रथमश्रेण्यन्तर्गता अतिचिरन्तना जैमिनेरपि पूर्ववर्तिनः कर्मानुष्ठानेषु सुदृढा आसन्-स्वकृतकर्मभिरेव तानि तानि फलान्यवाप्यन्ते, नात्रान्यस्य कस्यचन हस्तक्षेपो भवितुमर्हतीति मन्यमानाः। तेषां मतमवबुध्याचरणञ्च संवीक्ष्य तदनुसारेण सूत्राणि जैमिनिः प्राणैषीत्। अप्रतिहतगतेरस्या धाराया उद्भवः कालो न मनसापि चिन्तयितुं शक्यः। वक्तारस्तु कामं वदेयुः—अस्मात्कालादियं धारा समुद्भूतेति, परमपार्थकमिदं तेषां वचनमिति विश्वसिमः। न ह्यस्य कालस्य द्रष्टा कश्चन, स्वबुद्धिप्रभवा खल्वियं कल्पना। कल्पनैव चेदङ्गीकार्या तर्ह्यनादितस्सिद्धेयं धारेति कुतो नाङ्गीक्रियताम्? 'यच्छब्द आह तदस्माकं प्रमाणम् नास्ति वचनस्यातिभारः' इति निश्चिन्वन्तः यथायथं कर्माणि समाचरन्तोऽभवन्। न केवलमामुष्मिकफलोपभोगाय कर्माचरणम् किन्त्वैहिकानामप्युच्चावचानां फलानामुपभोगाय साधनतया श्रौतानि स्मार्तानि च कर्माणि जगृहुः। कर्माणि क्रियन्ते फलानि चानुभवाम इति तेषां दृढो निश्चयः। 'दर्शपूर्णमासाभ्यां यक्ष्ये' ज्योतिष्टोमेन यक्ष्ये' इत्येव सङ्कल्पः, 'अपाम सोमममृता अभूम' इत्येवाध्यवसाय आसीत्। अस्यां धारायां प्रवहन्त इमे कदाचिद्दैवपराङ्मुखा नास्तिका जायेरन्निति धारामिमां केचन महात्मानः परिवर्तयितुमचेष्टन्त, तत्र साफल्यञ्चावाप्नुवन्। अत एव 'यक्ष्ये' इति सङ्कल्पानन्तरं 'तेन परमेश्वरं प्रीणयानि' इति संयोजयितुमारेभिरे। क्रमशस्सर्वे कर्मसु परमेश्वरस्य सम्बन्धं सुदृढीकृत्य कर्मान्ते च 'नारायणायेत्ति समर्पयामि' इति नित्यनैमित्तिककाम्यकर्मणां परमेश्वरसर्पणरीतिः प्रसृता। अस्यां श्रेण्यामन्तर्गतः श्रीवासुदेवः। जैमिनिप्रणीतानि सङ्कर्षकाण्डसूत्राणि, मीमांसासूत्राणि, बादरायणसूत्राणि, भगवत्पादनिर्णीतान् विषयान्, उपनिषदः, सायणभट्टभास्करविरचितानि वेदभाष्याणि निखिलानि च कल्पसूत्राणि

सुविमृश्य तत्र यथा कल्पसूत्रकाराणामभिमतं नोपहतं स्यात् तथा मीमांसासूत्राणि नयति। अस्मिन् प्रसङ्गे शबरस्वामी भवतु भट्टकुमरिलपादो वा तावगणयन्नेव स्वमतमवस्थापयति। प्रायोऽयं शास्त्रदीपिकां तद्व्याख्यां सोमनाथीयाञ्चानुसरन्नपि सति प्रसङ्गे तावपि समालोचयति। खण्डदेवामितञ्च क्वापि न खण्डयति, किन्तु सर्वतन्त्रस्वतन्त्रान् श्रीमदप्पय्यदीक्षितानपि न परित्यजति। तत्र खण्डदेवाचार्याणां सोमनाथस्य च युक्तीः परिपोषयन् दीक्षितेन्द्रान् समालोचयति। सूक्ष्मदृष्ट्या विचार्यमाणे दीक्षितेन्द्रोक्तविषयसमालोचनमेतेषां कियदवधि सङ्गतमिति न सहसा निर्णेतुं शक्यते। सत्यवसरे विषयमिममन्यत्र परिशीलयामः। इत्थमयं ग्रन्थकृतद् भाष्यकारं क्वचित्समालोचयन्नपि क्वचिदादरेण तन्मतं पोषयति। वार्तिककारमपि न परित्यजति, किन्तु वार्तिकं बहुत्र समर्थयते। वेदवाक्यानां जैमिनिसूत्राणाञ्चाविरोधेन शास्त्रमर्यादासंरक्षणमस्य प्रधानं लक्ष्यम्। देवातानां विग्रहादिपञ्चकस्वीकारः, स्वाध्यायाध्ययनविधेरक्षरग्रहणमात्रपर्यवसायित्वम् इत्यादयोऽस्येतरमोमीमासकवैलक्षण्यप्रतिपादकाः। एतादृशं वैलक्षण्यं सङ्कर्षकाण्डस्य तत्र तत्रोद्धरणेन तत्प्रयुक्तमिति स्पष्टमवगम्यते।

ग्रन्थकृतोऽस्य प्राय ईसातः परं १७००-१७६० समय आसीदित्यनुमीयते। बहुत्र शास्त्रदीपिकाव्याख्यातुः श्रीसोमनाथस्य शैलीमेवायमनुसरति। न केवलमनुसरति, किन्तु तत्रत्याः पङ्क्तीस्तथैव गृह्णाति। अनेन 'अध्वरमीमांसाकुतूहलवृत्तिः' सिद्धान्तकौमुद्याः व्याख्या 'बालमनोरमा' 'बोधायनश्रौतसूत्रव्याख्या' चेति त्रयो ग्रन्था विरचिताः।

कुतूहलवृत्तेः सम्पादनकार्यं बहुभ्यो वर्षेभ्यः पूर्वं समारब्धम्, तस्य पूर्तिरस्मिन्नेव वत्सरे सञ्जाता। एतावान् विलम्बो मत्पूज्यपादानामसन्निधानादेव जातः। लेखनसंशोधनावसरे बहुत्र नैकविधास्समुत्पन्नास्संशयाः, तेषामपाकरणं मन्दमतिरहं कथं कुर्याम्; तत्सदृशांश्च गुरुवरान् कुतः प्राप्नुयाम्? सन्दिग्धेषु स्थानेषु तान् स्मरन् कथमपि

पाठान्निरचिनवम्। मदीयो निश्चयो बाधितोऽपि स्यात्। तेन न मे कियानपि खेदः। विद्वद्वरैरबाधिते पाठे निश्चीयमाने तदवगत्य मम मनः प्रसीदेदेव। अस्य ग्रन्थस्य प्रकाशने दिल्लीस्थश्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठेन विशेषतश्च डा० श्रीमण्डनमिश्रशास्त्रिणा समग्रो भारः परिगृहीत इति महतीं मुदमाविष्करोमि। विद्यापीठ प्रबन्धसमित्यध्यक्षान् माननीयान् श्रीराजारामशास्त्रिणः राष्ट्रियसंस्कृतसंस्थानाधिकारिणश्च प्रार्थये यदेवंविधानि मीमांसाशास्त्रग्रन्थरत्नान्यन्यान्यपि प्रकाशपथमानीय विद्यापीठगौरवं संवर्द्धयन्त्विति। चतुर्थभागस्यास्य प्रस्तावनालेखनेन मम, पुस्तकस्य, विद्यापीठस्य च गौरवं संवर्द्धितवद्भ्यो महामहिमशालिभ्य उत्तरप्रदेशराज्यपालेभ्यो हैयङ्गवीनहृदयेभ्यः डा० एम्० श्रीचेन्नारेड्डिमहाभागेभ्यो मदीयां कृतज्ञतां प्रकटयामि। चतुर्थभागस्य सूच्यादिनिर्माणे संशोधनकार्ये च महदुपकृतवतीं मदन्तेवासिनीं मत्पूज्यपादानां पौत्रीं सौभाग्यवतीं कुमारीं ललितां वैदिकीभिराशीर्भिः परिपूरयामि। ग्रन्थसम्पादनारम्भकालात्तत्समाप्तिपर्यन्तं सन्दिग्धपाठनिर्द्धारणे स्वमतिप्रदर्शनेन विषयवाक्यानामाकरस्यान्वेषणकार्येण च कृतसाहाय्याय अप्पय्यदीक्षितेन्द्रकुलप्रसूताय काशिकहिन्दूविश्वविद्यालयवेदविभागाध्यक्षाय पण्डितश्रीरामनाथदीक्षिताय मत्सुहृदे हार्दिकान् साधुवादान् वितरामि। नूनमहं संस्कृतविश्वविद्यालयस्याधमर्णः। स च स्वकीये मुद्रणालये ग्रन्थमिमं मुद्रापयितुं स्वीकृतिं प्रदाय मां प्रोत्साहयामास। संस्कृतविश्वविद्यालयमुद्रणालयव्यवस्थापकः श्रीघनश्यामोपाध्यायः यन्त्राध्यक्षोऽन्ये च कर्मचारिणो मोहनप्रभृतयस्साधुवादार्हाः।

मार्गशीर्ष शु० २<br>
सं० २०३१ ( १५-१२-१९७४ )<br>
वाराणसी

विद्वज्जनपादाब्जमरन्दैक-<br>
मधुव्रतः<br>
**पी० एन्० पट्टाभिरामशास्त्री**

# अध्वरमीमांसाकुतूहलवृत्तेश्चतुर्थभागस्याधिकरण-सूची

दशमाध्यायस्य पञ्चमः पादः



दशमाध्यायस्य षष्ठः पादः

दशमाध्यायस्य सप्तमः पादः

दशमाध्यायस्याष्टमः पादः



एकादशाध्यायस्य प्रथमः पादः



एकादशाध्यायस्य द्वितीयः पादः

एकादशाध्यायस्य तृतीयः पादः



एकादशाध्यायस्य चतुर्थः पादः

द्वादशाध्यायस्य प्रथमः पादः



द्वादशाध्यायस्य द्वितीयपादः

चतुर्थभागाधिकरणसूची समाप्ता

———

❀ श्रीः ❀

# अथ दशमाध्यायस्य पञ्चमः पादः

निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।

धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

वृत्तः प्राकृतस्य पदार्थस्य बाधविचारः । अथास्मिन् पञ्चमपादे पदार्थैकदेशः प्रस्तूयते । अस्त्याग्रयणे "द्यावापृथिव्य एककपालः" पुरोडाशः । अस्ति कश्चिदद् "आश्विनो द्विकपालः" "वैष्णवस्त्रिकपालः" इत्यादि । प्रकृतौ च श्रुतम् "ध्रुवमसीति मध्यमं कपालमुपदधाति, यन्त्रमसीति द्वितीयम्, धरुणमसीति तृतीयम्, चिदसीति चतुर्थम्, परिचिदसीति पञ्चमम्, मरुतां शर्धोऽसीति षष्ठम्, घर्मोऽसीति सप्तमम्, चिदस्थप्रजामित्यष्टमम्, चितस्थोर्ध्वचित इत्यूर्ध्वमष्टाभ्य उपदधाति" इति । तदिह एकादिकपालं किं प्राकृतस्य प्रथमादिकस्य कपालस्य विकारः? उत कस्यचिदन्यतमस्येत्यनियमः? इति संशये, सिद्धान्तेनोपक्रमते—

**आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपस्स्यात् ॥ १ ॥**

आनुपूर्व्यवताम्-क्रमवतां प्रथमादिकपालानां मध्ये, एकदेशग्रहणेषु-एकद्वित्रिचतुरादिकपालग्रहणेषु, अन्त्यलोपस्स्यात्-एककपालं प्रथमकपालधर्मकम्, अतस्तन्मन्त्रेणोपधेयम् । उत्तरोपधानमन्त्रा लुप्यन्ते । एवं द्विकपाले प्राकृतप्रथमद्वितीयकपालमन्त्राभ्यामुपधानम् । अवशिष्टाः प्राकृता उपधानमन्त्रा लुप्यन्ते । एवं त्रिकपालादिष्वपि । आगमवत्-तृतीयान्ताद्वतिः । यथा नियतक्रमसङ्ख्याकानामुपविशतां समाजमधिकृत्य अस्मिन् समाजे आगन्तुका एते द्वित्रा उपवेशनीया इत्युक्ते अन्ते येषामुपवेशनं प्रसक्तम्, त एवागन्तुकानाम् आगमेन समावेशनेन बाध्यन्ते, न त्वाद्याः, तद्वदिहापि ॥

इतोऽप्येवमित्याह—

## लिङ्गदर्शनाच्च ॥ २ ॥

क्वचिद्विकृतौ "लुप्येत वा एतत् षष्टं कपालं यत्पञ्चकपालं निर्वपन्ति" इति वाक्यशेषः, अवशिष्टस्य षष्ठस्य कपालस्य लोपं दर्शयति, न तु प्रथमाद्यन्यतमस्य ॥

अथ पूर्वपक्षी प्रत्यवतिष्ठते—

## विकल्पो वा समत्वात् ॥ ३ ॥

वा शब्दः प्रत्यवस्थाने। एकादशकपालेषु प्राकृतस्य कस्यचिदेकस्य द्वयोस्त्रयाणां वेत्येवं धर्मप्राप्तावनियमः, न त्वाद्यधर्मनियमः। कुतः? समत्वात् - अविशेषात् ॥

यदुक्तमागमवदिति तत्राह—

## क्रमादुपजनोऽन्ते स्यात् ॥ ४ ॥

उपगतो जनः उपजनः-आगन्तुकः, अन्ते निवेशनीयः। तेन चान्ते प्रसक्तनिवेशा एव बाध्यन्त इति युज्यते। कुतः? क्रमात्—यत्र हि प्रथमादिपदार्थनिवेशक्रमो निश्चितः तत्रागन्तुकन्यायः। इह त्वनिश्चितः, सर्वेषां चोदकावगतत्वाविशेषात् ॥

अथ लिङ्गदर्शनमन्यथयति—

## लिङ्गमविशिष्टं सङ्ख्याया हि तद्वचनम् ॥ ५ ॥

"लुप्यते वा एतत् षष्ठं कपालम्" इत्यन्तलोपे न लिङ्गम् -षष्ठमिति[1] प्रथमादावप्यविशिष्टम्। कुतः? सङ्ख्याया हि तद्वचनम्—षष्ठमित्येतद्धि षट्सङ्ख्यायाः पूरणवचनं भवति, षण्णां पूरणं षष्ठमिति। षट्सु च मध्ये यस्मिन् कस्मिंश्चिदपगते ट्सषङ्ख्या लुप्यते। उपगते च तस्मिन् षट्सङ्ख्या पूर्यते। अतः प्रथमाद्यन्यतमलोपेऽपि षष्ठं लुप्यत इति व्यपदेशस्सेत्स्यतीति नेदं लिङ्गमन्त्यलोपे। तस्मादेकद्वित्र्यादिकपालेषु प्राकृतस्य कस्यचिदेकस्य कपालस्य द्वयोस्त्रयाणामित्येवंधर्मा भवन्ति, न त्वाद्यधर्मा एवेति पूर्वः पक्षः ॥

अथ सिद्धान्ती निराचष्टे—

## आदितो वा प्रवृत्तिस्स्यादारम्भस्य तदादित्वाद्वचनादन्त्यविधिस्स्यात् ॥ ६ ॥

---

१. इति हि. अ.

वा शब्दोऽवधारणे। अपनीयविधिरपविधिः एकद्व्यादिकपालेषु प्रकृतितः प्रथमकपालमारभ्य क्रमेण तद्धर्मप्रवृत्तिस्स्यात्। अवशिष्टकपालधर्मा लुप्यन्ते। कुतः? आरम्भस्य तदादित्वात्—आरम्भस्य विकृतावुत्तरोत्तरपदार्थावगमस्य पूर्वपूर्वपदार्थावगमपूर्वकत्वात्। विकृतौ हि प्राकृतप्रथमादिकपालोपधानपदार्थाः क्रमेण प्रज्ञाताः। ते तावद् विकृतौ चोदकतस्तेनैव क्रमेणावगताः। तेषु पूर्वपूर्वोपस्थितधर्मत्यागे किञ्चिदपि न प्रमाणमस्ति। वक्ष्यते हि द्वादशे 'मुख्यं वापूर्वचोदनाल्लोकवत्' इति। एकादशे च 'प्रथमं वा नियम्येत, कारणादतिक्रमस्स्यात्' इति च। "अपबर्हिषः प्रयाजान् यजति" इत्यादौ तु वचनादेव न्यायप्राप्तमन्त्यप्रयाजलोपमपनीय मध्यमस्य बर्हिःप्रयाजस्य लोपाश्रयणं स्यात्। वचनाभावे त्वन्त्यस्यैव लोपो युक्तः। उपान्त्यविधिस्स्यादिति क्वचित्पाठः॥

इति प्रथममेकदेशग्रहणे प्राथमिकग्रहणाधिकरणम्॥ १॥

२

एकत्रिको नाम कश्चिदस्ति विकृतिसोमक्रतुः। तत्र श्रूयते—"एकस्यामृचि बहिष्पवमानं तिसृषु होतुराज्यमेकस्यां मैत्रावरुणस्य तिसृषु ब्राह्मणाच्छंसिनः, एकस्यामच्छावाकस्य तिसृषु माध्यन्दिनः पवमानः" इत्यादि। प्रकृतौ तावच्छ्रुतम्—"त्रिच्छन्दा माध्यन्दिनः पवमानः" इति। तत्र च "त्रयस्तृचाः—गायत्रः प्रथमस्तृचः, बार्हतो द्वितीयः, त्रैष्टुभस्तृतीयः" इति। तदिह माध्यन्दिनपवमाने नवानामृचां मध्ये तिसृषूपादातव्यासु संशयः-किं त्रयाणां तृचानामाद्यासु गानम्? उत प्रथमतृचे? इति॥

तत्र पूर्वपक्षयति—

**एकत्रिके तृचादिषु माध्यन्दिने छन्दसां श्रुतिभूतत्वात्॥ ७॥**

एकत्रिके क्रतौ माध्यन्दिनपवमाने त्रयाणां तृचानामाद्यासु आदिभूतास्वृक्षु [गानं] स्यात्। कुतः? छन्दसां श्रुतिभूतत्वात्—प्रकृतौ माध्यन्दिनपवमानस्य त्रिच्छन्दस्त्वश्रवणादित्यर्थः। आद्यस्तु तृचो गायत्रीमात्रच्छन्दस्कः। तत्र गाने सति त्रिच्छन्दस्त्वं हीयेत। तस्मात्त्रयाणां तृचानामाद्यास्वृक्षु गानम्॥

अथ सिद्धान्तति—

**आदितो वा तन्न्यायत्वादितरस्यानुमानिकत्वात्॥ ८॥**

वा शब्दोऽवधारणे। आदौ प्रथम एव तृचे गानं स्यात्। कुतः ? तन्न्याय-त्वात्—न्याय्येति कर्मणि धञ्। तस्याद्यतृचे गानस्य न्याय्यत्वात्। तिसृणामृचां प्राकृत-क्रमाविरोधात्। त्रयाणां तृचानामाद्यासु गाने च प्राकृतक्रमाविरोधात्, ऋगन्तरै-र्व्यवधानात्। ननु त्रिच्छन्दस्त्वं प्रत्यक्षश्रुतम्, क्रमस्तु पाठप्राप्तः। अतस्त्रिच्छन्द-स्त्वानुग्रहाय त्रयाणां तृचानामाद्यास्वेव गानं युक्तमित्यत आह—इतरस्यानुमानि-कत्वादिति। इतरस्य-त्रिच्छन्दस्कत्वस्य प्रकृतौ प्रत्यक्षश्रुतत्वेऽपि विकृताविह तस्यानुमानिकत्वात्। न च चोदकतः प्राप्तिः क्रमेऽप्यविशिष्टा। तथा च तदनुग्रहायाा-द्यतृचोपादानं किं न स्यात् ? विनिगमनाविरहादिति वाच्यम्। सत्यं विकृताविह त्रिच्छन्दस्त्वस्य क्रमस्य च चोदकप्राप्तत्वाविशेषान्न तत्कृतः कश्चिद् बलाबलविशेषः, किन्तु यद्विकृतौ शीघ्रमुपतिष्ठते तदुपादेयम्। त्रिच्छन्दस्त्वविधिश्च छन्दसामृग्धर्म-त्वादृग्गतच्छन्दस्त्रित्वे पर्यवस्यति। तत्रापि ऋग्गतच्छन्दोऽनुवादेन त्रित्वविधिः। अनुवादश्च यथाप्राप्ति भवति। ऋचां चेह प्राप्तिः प्रकृतितः। प्रकृतौ च येन क्रमेण ऋचः प्रज्ञातास्तेनैव क्रमेण विकृताविह प्राप्ताः। प्राप्तासु मध्ये कतिपय ऋक्परिसङ्ख्याकलकत्रिच्छन्दस्त्वं चोदकत उन्मिषति। ततश्च त्रयाणां तृचाना-म्मध्ये आद्यस्य तृचस्य गायत्रस्य प्रथमा गायत्री प्रथममुपस्थितेत्युभयं सिद्धम्। सा च गायत्री द्वितीयां गायत्रीमेवोपस्थापयति, आनन्तर्यात् साजात्याच्च। न तु बार्हतस्य द्वितीयतृचस्य त्रैष्टुभस्य वा तृतीयतृचस्याद्याम्, व्यवहितत्वाद् अन्यच्छन्दस्क-त्वाच्च। उपस्थिता च सा द्वितीया गायत्री कर्तव्यत्वेनाध्यवसितत्वादुपक्रान्तप्राया भवति। सा च तृतीयां गायत्रीमेवोपस्थापयतीति साप्युपक्रान्तैव भवति। एता-वतैव "तिसृषु माध्यन्दिनः पवमानः" इति शास्त्रार्थस्य पर्यवसन्नत्वान्न ऋगन्तर-प्रसरः। तदेवं क्रमप्रथमोपस्थितिकतया बलवत्वात्तेन त्रिच्छन्दस्त्वं बाध्यते। यद्वा-आनुमानिकत्वादित्यस्य आर्थिकत्वादित्यर्थः। त्रिच्छन्दस्त्वं हि प्रकृतौ पाठादेव प्राप्तत्वादार्थिकम्। न चार्थिकं चोदकः प्रतिदिशति। अतः प्राकृतक्रमाविरोधाय आद्यतृच एव च गानम्॥

इतोऽप्येवमित्याह—

**यथानिवेशञ्च प्रकृतिवत् सङ्ख्यामात्रविकारत्वात्॥ ९॥**

यथानिवेशम्—यथाक्रमम् अद्य एव तृचे गानम्। एवन्त्वेव हि प्रकृतिवत्कृतं भवति। त्रयाणां तृचानामाद्यासु गाने प्राकृतक्रमविरोधात्। नन्वाद्यतृच एव गाने

प्राकृतत्रिच्छन्दस्त्वविरोधाच्चोदकबाधस्तुल्य इत्यत आह–सङ्ख्यामात्रविकारत्वादिति। त्रिच्छन्दस्त्वं प्रकृतौ न विधेयमित्युक्तमेव। अस्तु वा विधेयम्, तथापि तेन प्रकृतौ अक्षरसङ्ख्यापरिमाणविशेषात्मकच्छन्दोऽन्तरस्यैव विकारः बाधस्स्यात्। अतो न क्रमस्य तेन बाधः, त्रिच्छन्दस्त्वस्य ऋक्छन्दस्त्रित्वात्मकस्य ऋगङ्गत्वेन ऋगङ्गभूतक्रमबाधकत्वानुपपत्तेः। तस्मादाद्य एव तृचे गानम्॥

इति द्वितीयमेकत्रिके आद्यतृचे गानाधिकरणम्॥ २॥

३

सन्ति तावद् ज्योतिष्टोमे कतिपयस्तोत्रेषु धूर्नामकानि गायत्रगानविशेषात्मकसामानि। तान्येकस्मिन्नेकत्रिके क्रतौ चोदकतः प्राप्तानि। तत्र च कतिपयानि स्तोत्राण्येकस्यामृचि, कतिचित्तु तिसृष्वृक्षु इति स्थितम्। तत्र यानि स्तोत्राण्येकस्यामृचि, तत्र ऋङ्नाभ्यस्यत इति निर्विवादम्। यानि तु तिसृषु, तानि किं तिसृष्वेव कार्याणि? उतैकस्या एव ऋचोऽभ्यासेन त्रित्वं सम्पाद्य तिसृषु कार्याणि? इति संशये, पूर्वपक्षयति—

## त्रिकं तृचे धुर्यं स्यात् ॥१०॥

धुर्य इति सामान्याभिप्रायमेकवचनम्। 'गीतिविशेषो[1] गायत्रस्य धुरः" इति छन्दोगाः। धूर्गानसम्पाद्यस्तोत्रेषु मध्ये यत् त्रिकम्–सामान्याभिप्रायमेकवचनम्। ऋक्त्रयसम्पाद्यं स्तोत्रं तत् तृचे-तिसृषु ऋक्षु स्यात्। तथा सति "एकं साम तृचे क्रियते" इति [ प्राकृत ]धर्मानुग्रहात्, अभ्यासेन त्रिकसम्पादने च तद्विरोधात्। न चैकत्रिके "आवृत्तं धूर्षु स्तुवते" इति विशिष्य वचनबलात् प्राकृतत्रयबाध एव युक्त इति वाच्यम्। इदं हि वचनं यथाप्रकृत्येवेति तिसृषु ऋक्षु एकस्य साम्नः प्रत्येकमावृत्त्यभिप्रायकमनुवादमात्रञ्च। कर्तव्यमेकमेव साम प्रत्यृचं परिसमाप्य कर्तव्यमिति नवमे व्यवस्थापनात्॥

अथ सिद्धान्तयति—

## एकस्यां वा स्तोमस्यावृत्तिधर्मत्वात् ॥११॥

वा शब्दोऽवधारणे। एकस्यामेव ऋचि अभ्यासेन त्रित्वमापन्नायां धूर्गानं भवति, न तु यथाप्रकृति तिसृष्वृक्षु। कुतः? स्तोमस्यावृत्तिधर्मत्वात्—"आवृत्तं

---

१. विकारः ख.

धूर्षु स्तुवते" इति स्तोत्रस्यावृत्तिधर्मकत्वावगमात्। आवृत्तमिति हि स्तुतिक्रियाया एव विशेषणम्, न तु धूर्नामकगानानाम्, मुख्यान्वयस्याभ्यर्हितत्वात्। अतो न सामावृत्त्यभिप्रायकोऽयमनुवाद इति युक्तम्। न च तथापि सामावृत्तिनिबन्धनस्तोत्रत्रित्वानुवाद एव किं न स्यात्? तथा च न चोदकप्राप्ततृचबाध इति वाच्यम्। न हि सामावृत्तिमात्रात् स्तुत्यावृत्तिर्भवितुमर्हति, गुणाभिधानात्मिकायाः स्तुतेरभिधायकऋगावृत्तिं विना आवृत्त्ययोगात्। न च तिसृष्वपि ऋक्षु अन्यान्यगुणाभिधानात् स्तुतिभेदसम्भव इति वाच्यम्, प्रत्यृचं भेदेन जायमानाया स्तुतेरावृत्तिव्यपदेशायोगात्। एकरूपैव हि क्रिया पुनः पुनः क्रियमाणा आवृत्तिव्यपदेशं लभते। न हि ऋग्भेदे सति स्तुतिरेकरूपा सम्भवति, प्रत्यृचं वाक्यार्थस्य भिन्नतया प्रतिपाद्यगुणभेदे सति स्तुतिभेदस्यावर्जनीयत्वात्। एवञ्च "आवृत्तं धूर्षु स्तुवते" इति वचनस्यानुवादत्वमप्यनर्थकप्रायं नाश्रयणीयं भवति, अप्राप्तऋगभ्यासविधिपर्यवसानात्। न चैकस्यामृचि धूर्गानसम्पाद्यं यत् स्तोत्रं तदावृत्तिविधायकमेवेदं वचनं किं न स्यादिति वाच्यम्, अस्य वचनस्यैकस्यामृचि धूर्गानसम्पाद्यस्तोत्रविषयत्वे सति तत्रावृत्तिविधिबलादेव एकर्चत्वस्य सिद्धत्वेन "एकस्याम्" इति वचनवैयर्थ्यापत्तेः। तस्मात् त्रिषु धूर्गानसम्पाद्यस्तोत्रविषयमेवेदमावृत्तिवचनम्। स्तुत्यावृत्तिश्च ऋगेकत्वं तदावृत्तिञ्च विना न सम्भवतीति त्रिरावृत्त्या त्रित्वमापन्नायामेकस्यामेव ऋचि धूर्गानमिति ॥

इति तृतीयं धूर्गानाधिकरणम् ॥ ३ ॥

४

द्विरात्राद्यहर्गणेषु द्वादशाहधर्माः प्रवर्तन्त इत्यष्टमाद्यपादे स्थितम् 'गणेषु द्वादशाहस्य' [इत्यत्र। द्वादशाहस्य] द्वादश सौत्यान्यहानि। तत्र प्रायणीयं नाम प्रथममहः, उदनीयमुत्तममहः, मध्यतो दशरात्रः। तत्रादौ क्रमेण रथन्तरबृहद्वैरूपवैराजशाक्वररैवताख्यपृष्ठयुक्तः पृष्ठ्यषडहः। ततो गायत्र्यादिच्छन्दोग[ता]क्षरसमसङ्ख्याकस्तोत्रीयकतया गायत्र्यादिच्छन्दोभिर्मीयत इति व्युत्पत्त्या छन्दोमाख्यानि चत्वार्यहानीति। तदत्र किं द्विरात्रादिषु प्रथमेऽहनि प्रायणीयमारभ्य प्रथमधर्माः, द्वितीयधर्म इत्येवं क्रमेण कृत्स्नस्य द्वादशाहस्य विध्यन्तः प्रवर्तते? उत प्रायणीयोदयनीयौ

वर्जयित्वा मध्यमस्य दशरात्रस्य प्रथमादिक्रमेण धर्मः प्रवर्तते ? इति संशयः। अविशेषात् कृत्स्नस्यैव द्वादशाहस्य धर्मा यथाक्रमं प्रवर्तन्त इति प्राप्ते, सिद्धान्तयति–

## चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमस्स्यात् ॥१२॥

तुरवधारणे। चोदनासु–"द्विरात्रेण यजेत" इत्यादिषु विधिषु प्रायणीयोदयनीययोः यत् प्रथममित्यादिलिङ्गवशेन, अपूर्वत्वात्–प्रकृतिसम्भवाद् दशरात्रधर्मनियमस्स्यात्। तथाहि–अस्ति द्विरात्रे वाक्यशेषः, "यत् प्रथमं तद् द्वितीयम् यत् द्वितीयं तत् तृतीयं जगतीमन्तर्गच्छति" इति। द्विरात्रे यत् प्रथममहः, तद् द्वादशाहस्य द्वितीयं भवतीत्यर्थः, प्रकरणात्; न तु द्वादशाहे यत्प्रथमं तद् द्विरात्रस्य द्वितीयमिति, प्रकरणविरोधात्। यच्च द्विरात्रे द्वितीयमहः तद् द्वादशाहस्य तृतीयमित्यपि पूर्ववद्योज्यम्। यद् द्वादशाहे प्रायणीयमारभ्य चतुर्थं जागतमहः तदन्तर्गच्छति—परित्यजतीत्यर्थः। द्वादशाहे तावत् प्रायणीयं प्रथममहः, द्वितीयाहमारभ्य पृष्ठ्यषडहः, छन्दोमाश्च चत्वार इति दशरात्रः। उत्तममुदयनीयमहः। तत्र पृष्ठ्यषडहस्य प्रथममहर्गायत्रम्, द्वितीयमहस्त्रैष्टुभम् तृतीयमहर्जागतम्। तच्च प्रायणीयापेक्षया चतुर्थमिति स्थितिः। एवं द्विरात्रे दशरात्रधर्मप्रवृत्तौ सत्यां द्विरात्रे तदीययोर्गायत्रत्रैष्टुभयोरह्नोर्धर्मप्रवृत्तिरिति त[दव्य]वहिततृतीयस्य जागतस्य प्रायणीयापेक्षया चतुर्थस्य परित्याग इत्युपपत्तेः। यदि तु प्रायणीयमारभ्य द्वादशाहधर्मप्रवृत्तिः, तदा द्विरात्रे द्वितीयस्याह्नो गायत्रत्वापत्या त[दव्य]वहितत्रैष्टुभस्यैव परित्यागो वक्तव्यस्स्यात्, न तु जागतस्य व्यवहितत्वात्। तथा "गायत्रं प्रथममहस्त्रैष्टुभं द्वितीयम्" इति द्विरात्रे प्रथमद्वितीययोरह्नोर्गायत्रत्वत्रैष्टुभत्वदर्शनमपि दाशरात्रिकधर्मप्रवृत्तौ लिङ्गम्, प्रायणीयमारभ्य धर्मप्रवृत्तौ तु प्रायणीयतदुत्तराहयोर्द्वादशाहिकयोर्गायत्रत्वात् द्विरात्रेऽपि प्रथमद्वितीययोरह्नोर्गायत्रत्वमेव स्यात्। तत्र द्वितीयस्याह्नस्त्रैष्टुभस्यानुवादो नोपपद्येत। तथा प्रायणीयमारभ्य धर्मप्रवृत्तौ द्विरात्रे यत् प्रथमं तद् द्वादशाहिकप्रथमाहभूतप्रायणीयधर्मकमेव स्यात्, न तु द्वितीयाहर्धर्मकम्। द्विरात्रद्वितीयमहश्च द्वादशाहिकद्वितीयाहर्धर्मकमेव स्यात्, न तु तृतीयाहर्धर्मकम्। तथा च द्विरात्रे यत् प्रथमं तद् द्वादशाहस्य द्वितीयम्, यच्च द्विरात्रे द्वितीयं तद् द्वादशाहस्य तृतीयमित्येवं द्विरात्रे प्रथमस्याह्नो द्वितीयत्वं द्वितीयस्य तृतीयत्वञ्चोच्यमानं विरुध्येत। दाशरात्रिकधर्मप्रवृत्तौ तु तदविरोधः स्पष्ट एव॥

**'प्राप्तिस्तु रात्रिशब्दसम्बन्धात् ॥ १३ ॥**

तथा अवान्तरसामान्यमपि दशरात्रधर्मप्रवृत्तौ लिङ्गम्। अस्ति हि द्वादशाहे मध्यमस्य दशरात्रस्य पृथक् सङ्घातक्लृप्तिः—"पृष्ठ्यष्षडहः त्रयश्छन्दोमाः अविवाक्यं दशममहस्स एष व्यूढो दशरात्रः" इति। होत्रादेः प्रयोगभ्रेषे सति यत्राहनि अन्येनान्यस्य नोच्यते तदविवाक्यम्, दशमेऽहन्यविवाक्ये "उपहताय न वाच्यम्' इति श्रवणात्। एवञ्च सत्यपि गणत्वसामान्ये तदवान्तरसङ्घातत्वविशेषसामान्याद् दाशरात्रिकधर्मा एव द्विरात्रादिषु प्रवर्तन्ते, रात्रान्तशब्दवत्वमवान्तरसामान्यमधिकमिति वतोऽपि लिङ्गाद् दाशरात्रिकाणामेव धर्माणां द्विरात्रादिषु प्रवृत्तिरिति ॥

इति चतुर्थं द्विरात्रादिषु दाशरात्रिकाङ्गानुष्ठानाधिकरणम् ॥ ४ ॥

५

अग्निचयनप्रकरणे कृष्टक्षेत्रे बीजावापक्रमे "या जाता ओषधयः" इत्यनुवाको विंशतिमन्त्रः पठितस्तैत्तिरीये। तत्रैव च "ओषधीर्वपति चतुर्दशभिर्वपति" इति श्रुतम्। तत्र किमादित आरभ्य चतुर्दश मन्त्रा ग्राह्याः? उत आदितो मध्यतोऽन्ततो वेत्यनियमः? इति संशयः। 'आदितो वा प्रवृत्तिस्स्यात्' इत्यनुपदोक्तन्यायेन () आदित एव आरभ्य चतुर्दश मन्त्रा ग्राह्या इति प्राप्ते, सिद्धान्तयति—

**अपूर्वासु तु सङ्ख्यासु विकल्पस्स्यात् सर्वासामर्थवत्वात् ॥१४॥**

तुर्वैषम्ये। एकद्वित्रिकपालादिवैकृतविधिषु प्रथमातिक्रमे कारणाभावादादित एवारभ्य प्राकृता उपधानमन्त्राः प्रवर्तन्त इति युक्तम्, अवशिष्टतन्मन्त्राणां प्रकृताबष्टादिकपालेषु चरितार्थत्वात्। इह तु "चतुर्दशभिर्वपति" इत्येवञ्जातीयकासु सङ्ख्यासु अपूर्वासु-अप्राकृतिकासु श्रूयमाणासु विकल्पः। आदितो मध्यतोऽन्ततो वा उपादाय सङ्ख्यापूरणमित्यनियमस्स्यात्। एवं सत्येव सर्वासां मन्त्रश्रुतीनामर्थवत्वात्। आदित एवारभ्य सङ्ख्यापूरणेऽवशिष्टमन्त्रवैयर्थ्यात्। न हि प्राकृतप्रयोगे तदाधिक्यसम्भवः, विकृत्युपदिष्टत्वात्। अत्र भाष्येऽग्निचयने "वेशीनां त्वा" इत्याधूननार्थमन्त्रा इत्युक्तम्, उखास्थापने यदाधूननं तदर्था इति च व्याख्यातम्। तथाविधमन्त्राः क्वचिच्छाखायामन्वेषणीयाः। धूधातोराधवनार्थ इत्येव भाव्यम्, भाष्यादिप्रयोगात्। धूनधातुरप्यन्वेष्टव्यः ॥

इति पञ्चमं चयने ओषधिवपनार्थानां मन्त्राणामनियमोपादानाधिकरणम् ॥५॥

---

१. 'प्राप्तिस्तु रात्रिशब्दसम्बन्धात्' इति सूत्रपाठो न दृश्यते मातृकासु।

६

अस्ति त्रिवृत् पञ्चदशस्सप्तदश एकविंश इति चतुष्टोमो ज्योतिष्टोमः प्रकृतिसोमक्रतुः। सन्ति च विवृद्धस्तोमका विकृतिसोमाः—"एकविंशेनातिरात्रेण प्रजाकामं याजयेत् त्रिणवेनौजस्कामम्, त्रयस्त्रिंशेन प्रतिष्ठाकामम्" इत्यादयः। एकविंशतिसङ्ख्यात्मकं स्तुतीनां परिमाणं यस्य स एकविंशः। 'स्तोमे डविधिः' इति डः। एवं त्रिणवादावपि। किमिह प्राकृतानामेव साम्नामभ्यासेन सङ्ख्यापूरणम्? उताप्राकृतानामन्येषां साम्नामागमनेन? इति संशये, पूर्वपक्षयति—

**स्तोमविवृद्धौ प्राकृतानामभ्यासेन सङ्ख्यापूरणमधिकारात् सङ्ख्याया गुणशब्दत्वादन्यस्य चाश्रुतित्वात् ॥ १५ ॥**

स्तुतिपरिमाणं स्तोमः। तस्य प्राकृतस्तोमापेक्षया विकृतिविवृद्धौ-आधिक्ये सति, प्राकृतानामेव साम्नामभ्यासेन सङ्ख्यापूरणं भवति। कुतः? अधिकारात्—तेषां चोदकतस्सन्निधानात्, अन्यस्य-सामान्तरस्य अश्रवणाच्च। नन्वेकविंशेनेति सङ्ख्याविशिष्टसङ्ख्येयान्तरविधानादप्राकृतसामभिरेव सङ्ख्यापूरणमुचितमित्यत आह—सङ्ख्याया गुणशब्दत्वादिति। शब्दनं शब्दः, एकविंशतिसङ्ख्यायाः प्राक् सामगुणतया विधानादित्यर्थः। चोदकसन्निहितप्राकृतसामसु सङ्ख्यामात्रमिह विधीयते, लाघवात्। प्राकृतानि तु सामानि सङ्ख्येयानि तथैवावतिष्ठन्ते। यथा () पशौ "एकादश प्रयाजान् यजति" इत्यत्र प्राकृतेषु सङ्ख्येयेषु प्रयाजेषु सङ्ख्यामात्रविधानादभ्यासेन सङ्ख्यापूरणमिति द्वादशे वक्ष्यते, तद्वत्॥

अथ सिद्धान्तयति—

**आगमेन वाभ्यासस्याश्रुतत्वात् ॥ १६ ॥**

वाशब्दोऽवधारणे। अप्राकृतसाम्नामागमेनैव सङ्ख्यापूरणं न तु प्राकृतानां साम्नामभ्यासेन। कुतः? अभ्यासस्याश्रुतत्वात्। स्पष्टम्॥

ननु पाशुकप्रयाजैकादशत्वन्यायेनैकविंशतिसङ्ख्यामात्रस्य प्राकृतसामसु विधिबलात्तदभ्यासेनैव सङ्ख्यापूरणं युक्तमित्यत आह—

**सङ्ख्यायाश्च पृथक्त्वनिवेशात् ॥ १७ ॥**

न तावदिह प्राकृतसामानि सङ्ख्येयानि स्वशब्देनानूद्य प्रयाजैकादशत्ववदेकविंशतिसङ्ख्या विधीयते, येनाभ्यासः स्यात्। किन्तु सङ्ख्याविधिबलादेव सङ्ख्येयानामाक्षेपतो लाभो वाच्यः। सङ्ख्याविधिश्च सङ्ख्यायाः स्वरसावगतपृथक्त्वनिवेशित्वबलाद् भेदेनैव सङ्ख्येयमाक्षिपति, पृथक्त्वनिवेशिनी हि सङ्ख्या, यथा अष्टौ घटा इति। अभ्यासे तु पृथक्त्वाभावात् सङ्ख्या असमञ्जसा स्यात्। तस्मादप्राकृतसाम्नामेवागमेन सङ्ख्यापूरणम्॥

इतोऽप्येवमित्याह—

**पराक् शब्दात् ॥ १८ ॥**

"पराग् बहिष्पवमानेन स्तुवीत" इति पराक् शब्दादपि अप्राकृतसाम्नामागमनम् । पराक् शब्दो ह्यनभ्यासे वर्तते । यथा "पराचीस्सामिधेनीरन्वाह" इत्यनभ्यस्ता इति गम्यते । प्राकृतानामेव साम्नामभ्यासेन सङ्ख्यापूरणे तु तद्विरोधस्स्पष्ट एव ॥

इतोऽप्येवमित्याह—

**उक्ताविकाराच्च ॥ १९ ॥**

अधिकानामागमने सत्येवोक्तस्य अविकारात्—पुनर्वचनप्रयुक्तजामितादोषाभावात् । प्राकृतानामभ्यासे तु सः स्यात् । जामिता हि दोषः "जामि वा एतद्यज्ञस्य क्रियते यदेकं भूयः क्रियेत" इति निन्दितत्वात् । अतोऽपि नाभ्यासेन पूरणम् ॥

ननु 'आगमेन वाभ्यासस्याश्रुतत्वात्' इत्यनुपपन्नम्, अप्राकृतसाम्नामागमनस्याप्यश्रवणाविशेषात् । न चैकविंशेनेति विधीयमानसङ्ख्यया पृथक्त्वनिवेशस्वभावया सङ्ख्येयसाम्नां भेदलाभादभ्यासे च तदसमञ्जसं स्यादित्यागमेन सङ्ख्यापूरणमर्थापत्त्या गम्यत इति वाच्यम्, सामागमेऽपि सङ्ख्यायाः पृथक्त्वनिवेशस्सिद्धेः । एकविंशेनेति सङ्ख्या हि सङ्ख्येयपृथक्त्वमाक्षिपति । तस्याश्चेह न सामानि सङ्ख्येयानि । 'स्तोमे डविधिः' इत्यनुशासनबलेन तस्याः स्तुतिधर्मत्वावगमात् । स्तुतेः परिमाणं हि स्तोम उच्यत इत्याशङ्क्य समाधत्ते—

**अश्रुतत्वान्नेति चेत् स्यादर्थचोदितानां परिमाणशास्त्रम् ॥२०॥**

चेदन्तं व्यक्तम् । परिमाणशास्त्रम्-"एकविंशेन" इति स्तुतिपरिमाणविधानम्, अर्थचोदितानाम्—सङ्ख्याविधिप्रसूतार्थापत्तिलब्धानां सामान्तराणामागमकं स्यात् । साधनीभूतसामभेदेनैव स्तुतिभेदस्योपपादितत्वात् । ये तु 'स्तोमे डविधिः' इति स्तोमशब्दस्य स्तोमक्रियागतसङ्ख्यावाचित्वमाश्रयन्ते, तन्मतेऽपि एकविंशेनेति सङ्ख्यायाः पृथक्त्वनिवेशार्थं स्तोत्रीयापृथक्त्वं वाच्यम् । स्तोत्रीयात्वञ्च स्तुतिसाधनतयैव । तच्च सामाभिव्यङ्ग्यतयैव । एवञ्च व्यञ्जकीभूतसामभेदादेव व्यङ्ग्यानां स्तोत्रियाणामृचामपि भेदस्सिध्यतीति युक्तस्सामागमे पृथक्त्वनिवेशः ॥

इतोऽपि सामागम इत्याह—

**आवापवचनञ्चाभ्यासे नोपपद्यते ॥२१॥**

प्राकृतसामाभ्यासेन सङ्ख्यापूरणे सति "त्रीणि ह वै यज्ञस्योदराणि, गायत्री बृहत्यनुष्टुप्, अत्र ह्येवावपन्त्यत एवोद्वपन्ति" इत्यावापवचन-

ष्वाभ्यासे नोपपद्यते। अतोऽपि सामागम एव। एतेन ऋगागमो वा किं न स्यात्, तावतापि सङ्ख्यायाः पृथक्त्वनिवेशसिद्धेरिति प्रत्युक्तम्, आवापान्यानां गायत्र्याद्याधारकत्वनियमात्, ऋचाञ्च ऋक्ष्वावापासम्भवात् ॥

इतोऽपि सामागम इत्याह—

**साम्नाञ्चोत्पत्तिसामर्थ्यात् ॥२२॥**

'दश सामसहस्राणि शतानि च चतुर्दश।
साङ्गानि सरहस्यानि यानि गायन्ति सामगाः ॥

अशीतिशतमाग्नेयं पवमानं चतुश्शतम्।
ऐन्द्रं स्यात् षड्विंशतिधा तानि गायन्ति सामगाः' ॥

इत्येवं प्रत्यक्षविनियुक्तेभ्यस्सामभ्योऽन्यानि बहुलानि सामानि समाम्नाये उत्पन्नानि। तेषामुत्पत्तेश्च सामान्तरागमे सत्येव सामर्थ्यात्-सङ्गतप्रयोजनकत्वात् नाभ्यासेन सङ्ख्यापूरणम्। तथा सति तदुत्पत्तिवैयर्थ्यात्। अतोऽपि सामान्तरागमः ॥

नन्वनेन न्यायेनाज्यादिसर्वस्तोत्रेष्वपि सामान्तरागमेनैकविंशतिसङ्ख्यापूरणं स्यात्, न तु प्राकृतसामाभ्यासेनेत्याक्षिप्य समाधत्ते—

**धुर्येष्वपीति चेन्नावृत्तिधर्मत्वात् ॥२३॥**

धुर्यशब्दो धूराख्यगीतिविशेषसाध्याज्यस्तोत्रवाची छत्रिन्यायेन () अधुर्येषु रथन्तरादिस्तोत्रेष्वपि वर्तते, आज्यादिसर्वस्तोत्रेष्वपि वर्तते। [अतः] आज्यादिसर्वस्तोत्रेष्वपि सामागमस्स्यादिति चेत्तन्न; कुतः? आवृत्तिधर्मत्वात्—"अत्र ह्येवावपन्ति" इति वचनेन पाठप्राप्तस्य न्यायप्राप्तस्य चावापस्य पवमानमात्रविषयतया नियमितत्वेन तदितराज्यादिस्तोत्रेष्वेकविंशतिसङ्ख्यापूरणाय प्राकृतसामाभ्यासधर्मकत्वस्यैवावगमात्। एवञ्च सामान्येन सर्वस्तोत्रविषयोऽयं विचारः। अत्र चावृत्तेः आवापवचनेन पवमानमात्रविषयत्वसनुपदमेव वर्णितम् 'पवमाने स्याताम्' इत्यत्रेति पार्थसारथिप्रभृतयः। भाष्ये त्वेतत्सूत्रमन्यथा व्याख्यातम्—धुर्येष्वपि आज्यस्तोत्रेष्वपि सामागमस्स्याद् उक्तन्यायात्, न त्वभ्यास इति चेन्न; "आवृत्तं धूर्षु स्तुवते" इति वचनेन तेषां प्राकृतसामाभ्यासधर्मकत्वावगमादिति। एतद्ग्रन्थच्छायया रथन्तरादिस्तोत्रेषु सामागम एव प्रतीयते न त्वभ्यास इति विभाव्यम् ॥

**इति षष्ठं विवृद्धस्तोमकेषु साम्नामागमाधिकरणम् ॥६॥**

७

विवृद्धस्तोमके क्रतौ सामान्तरागमेन सङ्ख्यापूरणमिति स्थितम्। तत्र बहिष्पवमाने एकविंशत्यादिसङ्ख्यापूरणाय सामान्तरागमे उक्तन्यायात् प्राप्ते, सिद्धान्तयति—

**बहिष्पवमाने तु ऋगागमस्सामैकत्वात् ॥२४॥**

विवृद्धस्तोमके क्रतौ बहिष्पवमानादन्यत्र सङ्ख्यापूरणायोक्तन्यायात् सामागमः। बहिष्पवमाने तु सङ्ख्यापूरणाय ऋगन्तरागम एव भवति, न तु सामान्तरागमः। कुतः? सामैकत्वात्–"यदुत्तरयोः पवमानयोस्तृचाय तृचाय हिङ्करोति, अथ कस्माद् बहिष्पवमाने सकृदेव हिङ्करोतीति एकं हि तत्र साम" इति प्रकृतौ बहिष्पमानो सामैकत्ववचनात्। सामान्तराणामागमेन सङ्ख्यापूरणे च तद्विरोधात्। एकेन च साम्ना सङ्ख्यापूरणासम्भवादृगन्तरागमः फलति। न च "अत्र ह्येवावपन्ति" इत्यावापस्य गायत्र्याद्याधारत्वनियमादृचाश्च ऋक्ष्वावापासम्भवादिहाज्यादिस्तोत्रवदभ्यासेनैव सङ्ख्यापूरणं युक्तमिति वाच्यम्, "पराग् बहिष्पवमानेन स्तुवीत" इत्यभ्यासनिषेधात्, पराक् शब्दस्यानभ्यासवचनत्वात्। तस्मादगत्या सङ्ख्यापूरणाय ऋगागमः। सामैकत्ववचने च सति सङ्ख्यापूरणाय सामाभ्यासस्यावश्यकत्वात् पराक् शब्देनावगम्यमानोऽप्यनभ्यास ऋङ्मात्रविषयः पर्यवस्यति। तैत्तिरीये "पराचीभिस्तुवते" इति पराक्त्वस्य ऋग्धर्मतयैव श्रवणाच्च। न चैकेन साम्ना वैकृतसङ्ख्यापूरणायोगात् प्राकृतसामैकत्वमेव बाध्यतामिति वाच्यम्, प्राकृतसामैकत्वस्याबाधेनैव ऋगागमेनैव सङ्ख्यापूरणसम्भवे तद्बाधाश्रयणस्यानुचितत्वात्। तस्माद् बहिष्पवमाने ऋगागमेनैव सङ्ख्यापूरणमिति ॥

**इति सप्तमं बहिष्पवमाने ऋगागमाधिकरणम् ॥७॥**

८

प्रकृतौ तावद् दर्शपूर्णमासयोस्सामिधेन्यो नाम ऋचः "प्रवोवाजा" इत्याद्या एकादश पठिताः। "पञ्चदश सामिधेनीरन्वाह" इति श्रुतम्। "त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इति च। सन्ति च तत्रैव प्रकृतौ काम्यास्सामिधेनीकल्पाः–"एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य" इत्यादयः। ते च सङ्ख्यायुक्तवचनत्वसामान्यान्नित्यानुवचनविकारा इति तृतीये () स्थितम्। किमिह प्राकृतीभ्य एकादशभ्योऽधिकानामृचामागमेन सङ्ख्यापूरणम्, न च प्रथमोत्तमयोरभ्यासः? उत प्रथमोत्तमयोरेव यावदेकविंशत्यादिसङ्ख्यापूरणमभ्यासः? अथवा प्राकृतीभिरेका-

दशभिरधिकाभिश्चागमिताभिः प्रथमोत्तमयोरभ्यासेन च सङ्ख्यापूरणम ? इति संशये, द्वितीयमुपक्षिपति—

**अभ्यासेन सङ्ख्यापूरणं सामिधेनीष्वभ्यासप्रकृतित्वात् ॥२५॥**

प्रथमोत्तयोर्यावदभ्यासे कृते वैकृतसङ्ख्या पूर्यते, तावत्तदभ्यासेन सङ्ख्यापूरणं कार्यम् । कुतः ? अभ्यासप्रकृतित्वात्-कर्मणि क्तिच् । अभ्यासस्य प्रकृतत्वात् । प्रकृतावभ्यासेन सङ्ख्यापूरणस्य दृष्टत्वादित्यर्थः । प्रकृतौ ह्येकादश ऋचः पठिताः । "पञ्चदश सामिधेनीरन्वाह" इति तु विधिः । कथं पञ्चदशत्वमित्यपेक्षायां "त्रिः प्रथमामन्वाह त्रिरुत्तमाम्"इति विहितं त्रित्वञ्च पूरकसङ्ख्योपलक्षणम् । यावत्कृत्वः प्रथमोत्तमयोरभ्यासेन वैकृतसङ्ख्यापूरणं भवति, तावत्कृत्वस्तेऽभ्यसनीये इत्येवं पूरकसङ्ख्याविशिष्टसुजर्थोऽभ्यासो विधीयते । एवं हि सत्यपेक्षितविधानाद् दृष्टार्थलाभः, न तु त्रित्वसङ्ख्यास्वरूपविशिष्टसुजर्थविधिः । तथा सति स्वरूपेण त्रित्वसङ्ख्याया अनपेक्षितत्वेनादृष्टार्थत्वापातात् । तथा च वैकृतानुवचनेऽपि यावत्सङ्ख्यापूरणं प्रथमोत्तमयोरेवाभ्यासः, अन्यासान्तु निवृत्तिः ॥

सोऽयं द्वितीयपक्षी प्रथमपक्षमुपक्षिप्य प्रतिक्षिपति—

**अविशेषान्नेति चेत् स्यात्तद्धर्मत्वात् प्रकृतिवदभ्यस्येता सङ्ख्यापूरणात् ॥ २६ ॥**

अभ्यस्यमानयोः प्रथमोत्तमयोः स्वरूपतः अविशेषात्-भेदाभावात् सङ्ख्यायाश्च पृथक्त्वनिवेशस्वाभाव्याद्वैकृतैकविंशत्यादिसङ्ख्या असमञ्जसा स्यात् । तस्मादेकादशभ्योऽधिकानामृचामागमेन प्रथमोत्तमानभ्यासेन च सङ्ख्यापूरणं युक्तमिति चेद्ब्रूपे; तत्रेदमुत्तरम्—स्यादिह प्रथमोत्तमयोरभ्यासः । कुतः ? तद्धर्मत्वात्—विकृतीनां प्रकृतिधर्मकत्वात् । अत इहाप्यासङ्ख्यापूरणाद्—एकविंशत्यादिसङ्ख्यापूरणपर्यन्तमभ्यस्येत प्रथमा उत्तमा च । एवं हि प्रकृतिवत् कृतं भवति । चोदकावाधाय प्रथमोत्तमयोरेवाभ्यासः । भेदप्रयुक्तं कथञ्चिद् भेदमारोप्यैकविंशत्यादिसङ्ख्यानिवेशोऽभ्युपेय इति भावः ॥

अथ तृतीयपक्षमवलम्ब्य सिद्धान्तयति—

**यावदुक्तं वा कृतपरिमाणत्वात् ॥ २७ ॥**

प्रकृतौ यावदुपदिष्टम् एकादश ऋचः प्रथमोत्तमयोस्त्रिरभ्यासश्च तावदनुत्सृज्य ततोऽधिकानामृचामागमेन सङ्ख्यापूरणं कार्यम् । कुतः ? कृतपरिमाणत्वात्—प्रकृतौ प्रथमोत्तमयोरभ्यासस्य विवक्षितत्रित्वसङ्ख्याकत्वादित्यर्थः । पाञ्चदश्यं तावदेकादशानामृचां मध्ये कस्याश्चिच्चतुरभ्यासेन वा प्रथमोत्तमयोरन्यतरस्या द्विः

अन्यतरस्याः चतुरित्येवमभ्यासेन वा प्राप्नोति, तन्निवृत्त्यर्थं प्रथमामुत्तमामिति त्रिरिति च विधीयते। प्रथमोत्तमयोस्त्रित्वस्य चेति विशिष्टविधानाच्च न वाक्यभेदः। तत्र यदि त्रित्वं पूरकसङ्ख्यालक्षकं स्यात्, तर्हि प्रकृतौ प्रथमोत्तमयोरन्यतरस्याः द्विः अन्यतरस्याश्चतुरित्येवमभ्यासेनापि पाञ्चदश्यं पूर्येत। अतस्त्रिः प्रथमां त्रिरुत्तमामिति च त्रित्वं प्रकृतौ विवक्षितमेव। तथा च वैकृतानुवचनेष्वपि त्रिरभ्यास एव प्रथमोत्तमयोर्भवति, न तु यावत्पूरणमभ्यासः। एवञ्च त्रिरभ्यासविधिरपि द्विचतुरभ्यासनिवृत्तिसिध्यर्थ इति नादृष्टार्थत्वदोषः। तस्मात् [ यथा ] प्रकृति प्रथमां त्रिरभ्यस्यावशिष्टाः प्राकृता ऋचोऽनूच्याधिका ऋचो यावत्सङ्ख्यापूरणमागमय्योत्तमां त्रिरभ्यस्यतीति फलितम्। [ न च ] प्रकृतौ "त्रिः प्रथमामन्वाह त्रिरुत्तमाम्"इत्यत्र त्रिरिति व्यर्थः, प्रथमां पुनरन्वाह, उत्तमां पुनरन्वाहेति वा अभ्यस्येदिति अभ्यासमात्रं विधेयम्। एतावतैव पाञ्चदश्यसम्पत्तये 'समं स्यादश्रुतत्वात्' इति न्यायेन ( ) तयोस्त्रिरभ्याससिद्धिरिति वाच्यम्। पुनरनुवचनात्मकाभ्यासो हि 'प्रथमं वा नियम्येत कारणादतिक्रमस्स्यात्' इत्येकादशिकन्यायेन ( ) द्विरनुवचन एव पर्यवस्येत्। ततश्च पाञ्चदश्यसम्पत्तये एकादशानां प्रथमोत्तमयोर्द्विरभ्यासेन त्रयोदश सम्पत्तौ द्वयोरन्यत आगम इति स्यात्। तन्माभूदिति प्रकृतौ त्रिस्त्रिरित्यवश्यं विधातव्यमिति वैकृतानुवचनेष्वपि प्रथमोत्तमयोस्त्रिस्त्रिरेवाभ्यासः। अधिकानाञ्च सङ्ख्यापूरणाय दाशतयीभ्य आगम इत्येवोचितम्। न चैवं सत्येकादशानामृचां प्रथमोत्तमयोस्त्रिस्त्रिरभ्यासेनैव पाञ्चदश्यसम्पत्तौ "पञ्चदश सामिधेनीरन्वाह" इति व्यर्थमिति वाच्यम्, अनुवादमात्रत्वात्। यथा चैतत्तथा कौस्तुभे()प्रपञ्चितम्। वस्तुतस्तु-"सर्वाणि च्छन्दांस्यनुब्रूयादपरिमितमनुब्रूयाद् बहुयाजिनः"इति ब्राह्मणस्य बहुयाजिनः अपरिमितानुवचनमेव स्यान्न तु पाञ्चदश्यम्, तस्याबहुयाजिविषये सावकाशत्वात्। अतो बहुयाजिनोऽपि पाञ्चदश्यप्राप्त्यर्थं पुनः पाञ्चदश्यवचनमित्यापस्तम्बसूत्रीयधूर्तस्वामिभाष्ये व्यक्तम्। अत्र बहुयाजीति सोमयाजी विवक्षित इति सङ्कर्षस्य चतुर्थे ( ) स्फुटमित्यलम्॥

इतश्च न प्रथमोत्तमयोरेवाभ्यासेन सङ्ख्यापूरणमित्याह—

## अधिकानाञ्च दर्शनात्॥ २८॥

"एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य" इत्यादिकाम्यकल्पेषु क्वचिच्छाखायां श्रुतम्—"न जगत्या परिदध्यात्"इति। "प्रवोवाजा" इति प्रथमायाः "आजुहोता दुवस्यत"इत्युत्तमायाश्च गायत्र्या एवाभ्यासेनैव सङ्ख्यापूरणे जगत्या अप्रसक्तत्वान्निषेधानुवादो नावकल्पेत। अतो नाभ्यासेनैव सङ्ख्यापूरणं किन्तु प्राकृतीभिरेकादशभिरधिकाभिरागमिताभिः प्रथमोत्तमयोस्त्रिरभ्यासेन च सङ्ख्यापूरणमिति॥

नन्वेवमेकविंशतिरात्रादिषु विवृद्धस्तोमकेषु कर्मसु पवमानेष्विवाज्यादिस्तोत्रेष्वपि प्राकृतसामाभ्यासेनाधिकागमेन च सङ्ख्यापूरणं स्यादित्याशङ्क्य निराकरोति—

**कर्मस्वपीति चेन्न चोदितत्वात् ॥ २९ ॥**

चेदन्तं व्याख्यातम्। नैतत्; कुतः? चोदितत्वात्—"अत्र ह्येवावपन्ति" इत्यधिकागमस्य पवमानेभ्योऽन्यत्र निषेधस्य विहितत्वादित्यर्थः ॥

**इत्यष्टमं विवृद्धसामिधेनीष्वागमेन सङ्ख्यापूरणाधिकरणम् ॥ ८ ॥**

**९**

ज्योतिष्टोमे श्रूयते—"षोडशिनं गृह्णाति, उत्तरेऽहन् द्विरात्रस्य गृह्यते, मध्यमेऽहन् त्रिरात्रस्य गृह्यते, चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यते, अप्यग्निष्टोमे राजन्यस्य गृह्णीयात्, अप्युक्थ्ये ग्राह्यः, अतिरात्रे ब्राह्मणस्य" इति। किमयं षोडशी ज्योतिष्टोमे निविशते? उत तत उत्कृष्यते? इति संशये, उत्कर्षं पूर्वपक्षयति—

**षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् ॥ ३० ॥**

षोडशिनो वैकृतत्वमेव। कुतः? तत्र कृत्स्नविधानात्—तत्र षोडशिनि विहिते कुत्रैतस्य निवेश इत्याकाङ्क्षायाम् "उत्तरेऽहन् द्विरात्रस्य" इत्यादिना कृत्स्नविधानात्। अपेक्षितविधानेन यथा षोडशिविधिः कृत्स्नः शान्ताकाङ्क्षतया पर्यवसन्नो भवति, तथा विधानादित्यर्थः। "उत्तरेऽहन् द्विरात्रस्य" इत्यादिवाक्येन प्रकरणं बाधित्वापि विकृतिष्वेव तन्निवेशबोधनादिति यावत्। तस्मात् परिगणितास्वेतास्वेव विकृतिषु षोडशी, न तु प्रकृतौ। "अप्यग्निष्टोमे, अप्युक्थ्ये, अतिरात्रे ब्राह्मणस्य" इत्यत्राग्निष्टोमोक्थ्यातिरात्रशब्दास्तु विकृत्यग्निष्टोमादिपरा एव। "उत्तरेऽहन् द्विरात्रस्य" इत्यादिप्रायपाठात् ॥

इतोऽपि न प्रकृतौ षोडशीत्याह—

**प्रकृतौ चाभावदर्शनात् ॥ ३१ ॥**

प्रकृतौ-ज्योतिष्टोमातिरात्रे षोडशिनोऽभावं दर्शयति वाक्यशेषः—"द्वे संस्कृतानां विराजमतिरिच्येते" इति। सम्यक् स्तुतं संस्कृतिः यासु स्तोत्रीयासु ताः संस्कृताः। तासां द्वे ऋचौ विराजमतिरिच्येते, विराडिति दशविंशतित्रिंशदादिदशकं विवक्षितम्, "दशाक्षरा विराट्" इति दर्शनात्। प्रकृतिभूते हि ज्योतिष्टोमातिरात्रे षोडश्यभावे चत्वारि शतानि द्विचत्वारिंशच्च स्तोत्रिया इति दशकेभ्यो द्वयोरतिरेकः। षोडशिपक्षे तु चत्वारि शतानि त्रिषष्टिश्च स्तोत्रीया भवन्ति। तत्र द्वेऽतिरिच्येते इति

नोपपद्येत। तस्मादपि न प्रकृतौ षोडशी। यद्यप्यग्निष्टोमसंस्थ एव ज्योतिष्टोमः प्रकृतिभूतः, उक्थ्यादयस्तु तद्विकार इति तृतीयस्य षष्ठे निर्णीतम् 'संस्थास्तु समानविधानाः" इत्यधिकरणे 'विकारस्तु कामसंयोगे सति नित्यस्य समत्वात्' इति सूत्रेण, तथापि ज्योतिष्टोमः क्रतुः फलार्थः, अग्निष्टोमसंस्था तु तदङ्गम्। उक्थ्यादिसंस्थास्तु गुणकामाः। संस्थाभेदोपजननेऽपि त्रिवृदादिचतुष्टोमलक्षणं ज्योतिष्टोमस्वरूपन्त्वनुस्यूतं भवति न त्वपैति, देवदत्ते उन्मादादिना विकृतेऽपि देवदत्तत्ववत् इत्यादि तत्रैव प्रपञ्चितम्। तदभिप्रायेणात्र ज्योतिरतिरात्रस्य प्रकृतित्वव्यवहारः। वस्तुतस्तु कौषीतकब्राह्मणे ज्योतिष्टोमे दीक्षणीयाद्यग्निष्टोमाग्निमारुतान्तमनुक्रम्य "एष वा अग्निष्टोमः" इत्युक्त्वा "उक्थ्यानि भवन्ति" इत्युपक्रम्य उक्थ्यप्रचारानुक्त्वा "षोडशिनमुपयन्ति" इत्युपक्रम्य षोडशिप्रचारमुक्त्वा "अतिरात्रमुपयन्ति" इत्युपक्रम्यातिरात्रप्रचारमुक्त्वा "हारियोजनेन चरन्ति" इत्युपक्रम्योदवसानीयान्तं यज्ञपुच्छमाम्नातम्। तत्राग्निष्टोमादिचतुस्संस्था नित्यवदेव श्रुताः, न तु गुणकामाः। अतश्चतुस्संस्थस्य ज्योतिष्टोमस्य प्रकृतित्वं निर्विवादम्। अग्निष्टोमादिसंस्थाश्च प्रयोगभेदेन ज्योतिष्टोमाङ्गम्, एकस्मिन् प्रयोगेऽसम्भवात्। शाखान्तरे संस्थानां फलश्रवणात् 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इति न्यायेन खादिरत्वादिवद् गुणकामत्वमपीत्यलम्॥

इतोऽपि षोडशी न प्रकृतावित्याह—

## अयज्ञवचनाच्च॥३२॥

"न वै षोडशी नाम यज्ञोऽस्तीत्याहुः" इति श्रुतम्। न हि सर्वत्र षोडशिनोऽभावोऽस्ति "उत्तरेऽहन् द्विरात्रस्य" इत्यादिना कचिद्विकृतिषु प्रत्यक्षवचनात्। किन्तु षोडशी नाम यज्ञः परिगणितो विकृतिभ्योऽन्यत्र नास्तीत्यर्थ आस्थेयः। तस्मादपि वैकृत एव षोडशी॥

अथ सिद्धान्तयति—

## प्रकृतौ वा शिष्टत्वात्॥३३॥

वा शब्दोऽवधारणे। षोडशी प्रकृतौ स्यादेव। कुतः? शिष्टत्वात्—"अप्यग्निष्टोमे राजन्यस्य गृह्णीयात्, अप्युक्थ्ये ग्राह्यः, अतिरात्रे ब्राह्मणस्य" इति वाक्यत एव प्रकृतौ विधानात्। अत्र चाग्निष्टोमादिशब्दानां प्रकृतिप्रकरणस्थानां सन्निहिताग्निष्टोमादिपरत्वमेव युक्तमिति भावः॥

इतोऽप्येवमित्याह—

## प्रकृतिदर्शनाच्च॥३४॥

प्रकृतिभूतज्योतिष्टोमे षोडशिनं दर्शयति वाक्यशेषः—"तिस्रस्संस्तुतानां विराजमतिरिच्यन्ते" इति प्रकृतिज्योतिष्टोमातिरात्रे हि सति षोडशिनि चत्वारि

शतानि त्रिषष्टिश्च स्तोत्रिया भवन्ति। तत्र विराट्छन्दोलक्षितदशकतः तिस्रः स्तोत्रिया अतिरिच्यन्त इत्युपपद्यते। यदि तु षोडशिनि ( ) चत्वारि शतानि द्विचत्वारिंशच्च स्तोत्रिया भवेयुः, तत्र द्वे एव शतकतः अतिरिच्येयाताम्, ततश्च "तिस्रो विराजमतिरिच्यन्ते" इति नोपपद्येत। अतोऽपि प्रकृतावस्ति षोडशी ॥

ननु यदि प्रकृतौ षोडशी विधित्सितः, तर्हि "अप्यग्निष्टोमस्य" इत्यादि-वाक्यैरग्निष्टोमोक्थ्यातिरात्रेषु पुनर्विधानं व्यर्थम्, प्रकरणादेव सिद्धेः। तथा उत्तरेऽहन्नित्याद्यपि व्यर्थम्, चोदकत एव तत्सिद्धेरित्यत आह—

**आम्नानं परिसङ्ख्यार्थम् ॥३५॥**

"अग्निष्टोमे राजन्यस्य" इति वचनम् अराजन्यस्याग्निष्टोमे षोडशिनिवृत्त्यर्थम्, "अतिरात्रे ब्राह्मणस्य" इति तु अब्राह्मणस्यातिरात्रे षोडशिनिवृत्त्यर्थम्, "अप्युक्थ्ये ग्राह्यः" इति तु "नोक्थ्ये गृह्णीयात्" इति शाखान्तरप्रतिषिद्धप्रतिप्रसवार्थम्। विरोधाच्च विकल्पः। चोदकत एव द्विरात्रादिषु प्राप्तस्य पुनर्विधानन्तु-अराजन्य-स्यापि प्राप्त्यर्थम् ॥

अथ 'प्रकृतौ चाभावदर्शनात्' इत्यत्राह—

**उक्तमभावदर्शनम् ॥ ३६ ॥**

प्रकृतिभूते ज्योतिष्टोमातिरात्रे "संस्तुतानान्द्वे विराजमतिरिच्येते" इति षोडश्यभावदर्शनं पक्षे उपपद्यते। "तिस्रो विराजमतिरिच्यन्ते" इति शाखान्तरीय-वाक्यशेषे तत्र षोडशिसद्भावस्यापि दर्शनादित्युक्तं द्वितीयान्ते शाखान्तराधिकरण-गुणसूत्रे 'विहितप्रतिषेधात् पक्षेऽतिरेकस्स्यात्' इति ॥

अथ "न वै षोडशी" इत्यत्राह—

**गुणादयज्ञत्वम् ॥ ३७ ॥**

षोडशी नाम यज्ञः प्रकृतौ नास्तीति न तदभाव उच्यते, उक्तरीत्या प्रकृतौ सत्वात्। किन्तु षोडशी यज्ञो न भवतीत्यस्तुतशस्त्रस्य तस्यायज्ञत्वमुच्यते, "यद्वाव षोडशं स्तोत्रं षोडशं शस्त्रं तेन षोडशी" इत्युत्तरवाक्यानुसाराद् अस्तुतशस्त्रस्य च

तस्य अयज्ञत्वम् "अपशवो वा अन्ये गोअश्वेभ्यः" इतिवद्प्राशस्त्यगुणयोगादुपपाद्यमिति ( )। तस्मादस्ति प्रकृतौ षोडशी ॥

इति नवमं षोडशिनः प्राकृतत्वाधिकरणम् ॥९॥

१०

सोऽयं षोडशी[१] किमाग्रयणादेव ग्राह्यः ? उतोक्थ्यादपि ? इति संशये सिद्धान्तेनोपक्रमते—

**तस्याग्रयणाद् ग्रहणम् ॥ ३८ ॥**

तस्य षोडशिन आग्रयणग्रहसकाशाद् ग्रहणं भवति, "आग्रयणात् षोडशिनं गृह्णाति" इति वचनात् ॥

अथ पूर्वपक्षी प्रत्यवतिष्ठते—

**उक्थ्याच्च वचनात् ॥ ३९ ॥**

न केवलमाग्रयणादेव ग्रहणं षोडशिनः, किन्तु उक्थ्याच्च-उक्थ्यग्रहादपि ग्राह्यः। कुतः ? "उक्थ्यात् षोडशिनं गृह्णाति" इत्यपि वचनात्[२]। तदेवं पूर्वपक्षः प्रस्तुतः। तन्निराकरणं भविष्यति ॥

इति दशमे आग्रयणादेव षोडशिग्रहणाधिकरणे पूर्वपक्षः ॥ १० ॥

११

अन्तराधिकरणान्तरं प्रस्तूयते-किमयं षोडशी प्रतिसवनं ग्राह्यः ? उत तृतीयसवन एव ? इति संशयः। तत्र "प्रातस्सवने ग्राह्यस्तेजो वै प्रातस्सवनन्तेजस एव वज्रं निर्मिमीते। माध्यन्दिनसवने ग्राह्यः [३]ओजो वै माध्यन्दिनं सवनं [४]ओजस एव वज्रं निर्मिमीते। तृतीयसवने ग्राह्यः पशवो वै तृतीयसवनं पशुभ्य एव वज्रं निर्मिमीते" इति वचनात् प्रतिसवनं ग्राह्य[५] इति प्राप्ते, सिद्धान्तयति—

---

१. किमयं. ख. २. वचनाच्च. ख. ३. तेजः. ख.
४. तेजसः. ख. ५. गृह्यते. अ. क.

## तृतीयसवने वचनात् स्यात् ॥ ४० ॥

"प्रातस्सवने ग्राह्यः" इत्यादिभिस्त्रिभिर्वाक्यैः पूर्वोदाहृतैस्त्रिषु सवनेषु षोडशिनो ग्रहणमनुक्रम्य "यत् प्रातस्सवने गृह्णीयाद् वज्र उत्तरे सवनेऽभिप्रश्च्यवेत, यन्माध्यन्दिने सवने मध्यतो वज्रं निर्हण्यात्" इति पूर्वयोस्सवनयोस्तन्निन्दित्वा "तृतीयसवने ग्राह्यः तत् सर्वेषु सवनेषु सङ्गृह्णाति, न पूर्वे सवने आर्तिं नीयेते" इति तृतीयसवने तद्विधिरवगतः। ततश्च प्रातस्सवने ग्राह्य इत्यादिकं यत् प्रातस्सवन इत्यादिनिन्दाद्वारा तृतीयसवनविधिशेष एव भवति; सम्भवत्येकवाक्यत्वे तदनेकत्वाश्रयणस्यायुक्तत्वात्। अतस्तृतीयसवन एव विधिरित्यर्थः। तैत्तिरीय शाखायां "सवने सवनेऽभिगृह्णाति" इति वचनाद्विकल्पः ॥

इत्येकादशं तृतीयसवन एव षोडशिग्रहणाधिकरणम् ॥ ११ ॥

## दशमाधिकरणसिद्धान्तः

अथ पूर्वाधिकरणशेषः। तत्र "आग्रयणात् षोडशिनं गृह्णाति" इति, "उक्थ्यात् षोडशिनं गृह्णाति" इति च[1] आग्रयणादुक्थ्याच्च षोडशी ग्राह्य इति पूर्वपक्षस्स्थितः 'उक्थ्याच्च वचनात्' इति। तदिदमनुपपन्नम्—"पराञ्चमुक्थ्यान्निर्गृह्णाति षोडशिनम्" इति शाखान्तरीयवाक्ये हि षोडशिग्रहणस्योक्थ्यग्रहणोत्तरकालत्वं प्रतीयते। पराक् शब्दस्योर्ध्वकालीनवाचित्वात्। एवञ्च "उक्थ्यात् षोडशिनं गृह्णाति" इत्यपि तदेक-वाक्यत्वादुक्थ्यादूर्ध्वकाले षोडशिनं गृह्णातीत्यर्थकमेवेति कथमुक्थ्यादपि ग्रहण-मित्यत आह—

## अनभ्यासे पराक् शब्दस्तादर्थ्यात् ॥ ४१ ॥

पराक् शब्दतावदनभ्यासे वर्तते। कुतः? तादर्थ्यात्—"पराचीस्सामिधेनी-रन्वाह" इत्यत्र पराक् शब्दस्यानभ्यासार्थकत्वावगमात्। एवञ्चोक्थ्यादनभ्यासमि-त्यन्वयासम्भवात्, उक्थ्यान्निगृह्णाति षोडशिनं तञ्चानभ्यासमित्येवान्वयो वाच्यः। तत्र षोडशिग्रहस्योक्थ्यपात्रात् सकृद् ग्रहणेन पूरणस्यासम्भवे कदाचिदावृत्यापि पूरणस्य प्राप्तौ तन्निरासायानभ्यासविधिः। अत उक्थ्यादपि ग्रहणम् ॥

---

1. वचनात्. अ.

इतोऽप्येवमित्याह—

**उक्थ्यविच्छेदवचनाच्च ॥ ४२ ॥**

"विच्छन्दन्ति ह वा एतदुक्थ्यं यदुक्थ्यानि षोडशिनञ्च ततः प्रणयन्ति" इति श्रुतम्। उक्थ्यविशेषान् ग्रहान् षोडशिनञ्च ग्रहं ततः-स्थालीस्थादुक्थ्यग्रहाख्यसोमात् प्रणयन्ति-प्रचारार्थं विग्रहशो गृहीत्वा नयन्तीत्यर्थः। अत्र तत इत्यनेन उक्थ्यस्य षोडशिग्रहणं प्रत्यपादनत्वं स्पष्टमेवावगम्यते। अतोऽप्युक्थ्यादपि ग्रहणं यत् एतदेव उक्थ्य इति ज्ञेयम्। त्रिविधोक्थ्यप्रचारार्थं स्थालीस्थसोमात् त्रिस्त्रिर्ग्रहणं प्रातर्मध्यन्दिनसवनयोः स्थितम्। तृतीयसवने ततष्षोडशिग्रहणे च चतुर्धा निगृह्यत एव, तद्विरुध्येत इति ॥

अथ सिद्धान्ती निराचष्टे—

**आग्रायणाद्वा पराक्शब्दस्य देशवाचित्वात् पुनराधेयवत् ॥ ४३ ॥**

'कालो दिष्टोऽप्यनेहापि' इति कोशे दिष्टशब्दस्य कालवाचिषु परिगणनादिह देशशब्दः कालपरोऽवगन्तव्यः। वाशब्दोऽवधारणे। आग्रयणादेव षोडशी ग्राह्यः "आग्रयणाद् गृह्णाति" इति वचनात्, न तूक्थ्यादपि, प्रमाणाभावात्। "उक्थ्यात् षोडशिनं गृह्णाति" इति वचनन्तूक्थ्यग्रहणादूर्ध्वकाले षोडशिनं गृह्णातीत्येवम्परम्, "तं पराञ्चमुक्थ्यान्निगृह्णीयात्" इति शाखान्तरवचनानुसारात्। ननु तत्र परा क् शब्दोऽनभ्यासवचन इत्युक्तम्, तत्राह-पराक् शब्दस्येति। "पराचीनमग्न्याधेयादग्निं पुनरादधाति" इत्यत्र पराक्शब्दस्योर्ध्वकालपरतया दर्शनादित्यर्थः। न च विनिगमनाविरहश्शङ्क्यः, अनभ्यासवचनत्वे हि उक्थ्यादनभ्यासमित्यन्वयासम्भवादुक्थ्यान्निर्गृह्णातीत्यन्वयो वाच्यः। अनभ्यासमिति च विधेयम्, तच्च न सम्भवति। प्राप्ते षोडशिग्रहणे उक्थ्यापादानकत्वस्याभ्यासस्य च विधौ वाक्यभेदप्रसङ्गात्। अनभ्यासवचनत्वे पराक् शब्दवैय्यर्थ्यप्रसङ्गाच्च। "उक्थ्यात् षोडशिनं गृह्णाति" इति कार्यपर्याप्तसोमग्रहणस्य सकृच्छ्रुतत्वेन पुनर्ग्रहणाप्रसक्तेः। उक्थ्यात् पराञ्चम् ऊर्ध्वकालीनमित्यन्वये उक्थ्यस्यापादनत्वाभावात् कथं पञ्चमीति वाच्यम्, 'अन्यारादितरर्तेदिक् शब्दाञ्चूत्तरपदाजाहियुक्ते' इति पञ्चम्युपपत्तेः। पराक्छब्दस्य पराङ्मुख इत्यादौ दिग्वचनत्वात्। चैत्रात्पूर्वः फाल्गुन इत्यादि-

प्रयोगनिर्वाहाय दिशि दृष्टश्शब्दो दिक्छब्द इति तत्र वैयाकरणैर्व्याख्यातत्वात्। न चैवमपि 'षष्ठ्यतसर्थप्रत्ययेन' इति षष्ठी शङ्क्या, तस्या अञ्चूत्तरपदयोगेऽप्रवृत्तेः, पराक् शब्दस्य चाञ्चूत्तरपदत्वात्। उक्तं हि वैयाकरणैः–'प्राक् प्रत्यग्वा ग्रामादित्यादा वञ्चूत्तरपदस्य दिक्छब्दत्वेऽपि 'षष्ठ्यतसर्थप्रत्ययेन' इति षष्ठीं बाधितुं पृथग् ग्रहणम्' इति। वस्तुतस्तु-अतसर्थेति पर्युदासादेव प्रत्ययेनेत्यर्थलाभे पुनः प्रत्यय-ग्रहणात् श्रूयमाणप्रत्ययान्तेनेत्यर्थो लभ्यते। ततश्च प्राग् ग्रामात् इत्यादौ अञ्चूत्तर-पदस्य लुप्तक्विन्प्रत्ययान्ततया तद्योगे षष्ठ्या अप्रसक्तेस्तन्निवृत्यर्थमञ्चूत्तरपदग्रहणं न कर्तव्यमिति महाभाष्ये स्पष्टम्। न च सह अञ्चतीति सध्र्यङ् 'सहस्य सध्रिः'। देवदत्तेन सध्र्यङ् यज्ञदत्त इत्यत्रादिक् शब्देनापि योगे पञ्चमीलाभायाञ्चूत्तर-पदग्रहणमस्त्विति वाच्यम्, तत्प्रत्याख्यानपरभाष्यप्रामाण्यानुसारेण दिक् शब्द-साहचर्येण चाञ्चूत्तरपदस्यापि दिक्छब्दस्यैव ग्रहणादित्यास्तां तावत्। ननु पराक् शब्दस्यानभ्यासवचनत्वमङ्गीकृत्य "उक्थ्यान्निगृह्णाति" इति वाक्यार्थाश्रयणमेव युक्तम्, अपादानपञ्चमीरूपकारकविभक्तिलाभात्। ऊर्ध्वकालवाचित्वमाश्रित्य "उक्थ्यात् पराक्रम्" इत्यन्वयाभ्युपगमे 'अन्यारादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहि-युक्ते' इत्युपपदविभक्त्याश्रयणापातादुपपदविभक्तेः कारकविभक्तिर्बलीयसीति कारक विभक्त्याश्रयणस्यैव युक्तत्वादिति चेन्न; पराक् शब्दस्यानभ्यासपरत्वे तद्वैय्यर्थ्या-पत्या वाक्यभेदापत्या उक्थ्यापादानकाग्रयणापादानकयोस्समुच्चयविकल्पापत्या च पराक्शब्दस्य ऊर्ध्वकालपरत्वमभ्युपगम्य "उक्थ्यात् पराक्रम" इत्युपपद-विभक्त्याश्रयणस्यैव युक्तत्वात्। तस्मादाग्रयणादेव षोडशिग्रहणम्॥

अथ 'उक्थ्यविच्छेदवचनाच्च' इत्यत्राह—

## विच्छेदस्स्तोमसामान्यात्॥ ४४॥

उक्थ्यप्रचारकाले त्रीन् उक्थ्यग्रहान् प्रणयन्ति। ततः तदनन्तरं षोडशिनं प्रणयन्ति प्रचरितुमिति यत्, एतदेवोक्थ्यविच्छेदनं भवतीत्यर्थः। तत इति नोक्थ्यपरामर्शी नाप्यपादानपञ्चमीति न विरोधः। ननूक्थ्यप्रचारकाले स्थालीस्था-दुक्थ्यग्रहात् त्रिरुक्थ्यविग्रहणमुक्थ्यविच्छेद इति युक्तम्, न तु षोडशिग्रहणमपि, तस्य उक्थ्याद् ग्रहणाभावात्, तत्राह–विच्छेदस्स्तोमसामान्यादिति। उक्थ्यविग्रहा-

त्रयोऽपि एकविंशस्तोमकाः, षोडशिग्रहोऽप्येवमेव । तत्साम्यात् षोडशिग्रहणस्याप्युक्थ्यविच्छेदत्वेन उत्प्रेक्षेत्यविरोधः । तस्मादाग्रयणादेव षोडशिग्रहणमिति ।

## इति पूर्वाधिकरणशेषः ॥

१२

षोडशिनं प्रकृत्य श्रूयते—"अप्यग्निष्टोमे राजन्यस्य गृह्णीयाद् अप्युक्थ्ये ग्राह्यः" इति । किमत्र षोडशिग्रहयजिरस्तुतशस्त्रः ? उत सस्तुतशस्त्रः ? इति संशये, पूर्वपक्षयति—

## उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रस्स्यात् सति हि संस्थान्यत्वम् ॥ ४५ ॥

राजन्यकर्तृकेऽग्निष्टोमप्रयोगे षोडशिग्रहयजिः अस्तुतशस्त्रस्स्यात् । कुतः ? उक्थ्याग्निष्टोमसंयोगात्—अग्निष्टोमसंस्थायामुक्थ्यसंस्थायाञ्च निमित्ते षोडशिनो विधानात् । स्तुतशस्त्रे च सति तदुभयनिमित्तव्याघातात् । कुतः ? सति हि संस्थान्यत्वम्—स्तुतशस्त्रे हि [सति] संस्थान्यत्वं संस्थाभेदस्स्यात् । अतः षोडशिसंस्थत्वमेव स्यात्, न त्वग्निष्टोमसंस्थत्वमुक्थ्यसंस्थत्वञ्च । अग्निष्टोमाख्यस्तोत्रशस्त्रादूर्ध्वं स्तुतशस्त्रान्तराभाव एव ह्यग्निष्टोमसंस्था । एवमुक्थ्यसंस्था च । यद्यग्निष्टोमोक्थ्ययोरपि षोडशी सस्तुतशस्त्रः स्यात्, तदा षोडशिसंस्थैव स्यात्, तत ऊर्ध्वं स्तुतशस्त्रान्तराभावात् । न त्वग्निष्टोमसंस्थोक्थ्यसंस्था च, तत उर्ध्वं षोडशिस्तुतशस्त्रत्वात् । एवञ्चाग्निष्टोमोक्थ्यसंस्थारूपनिमित्ताभावात्तन्निमित्तकः षोडशी न स्यात् । न चाग्निष्टोमोक्थ्यशब्दाभिधेयत्वं स्तोत्रविशेषयोरप्यस्तीति तयोरेवात्र निमित्तत्वं किं न स्यात् ? षोडशिसंस्थायामप्यग्निष्टोमोक्थ्यस्तोत्रसद्भावेन तन्निमित्तकत्वानपायादिति वाच्यम्, अन्यत्राग्निष्टोमोक्थ्यशब्दयोस्स्तोत्रविशेषतत्संस्थोभयवाचित्वे सत्यपि इह संस्थामात्रपरत्वावश्यम्भावात् । अन्यथा—"अग्निष्टोमे राजन्यस्य गृह्णीयात्" इत्येव सिद्धे "अप्युक्थ्ये ग्राह्यः" इत्यस्य वैयर्थ्यात्, उक्थ्येऽप्यग्निष्टोमस्तोत्रस्य विद्यमानत्वात् । तस्मादस्तुतशस्त्रोऽयं षोडशी । एवञ्चाग्निष्टोमस्तोत्रादुक्थ्यस्तोत्राच्चोर्ध्वं स्तोत्रान्तराभावेनाग्निष्टोमस्तोत्रेणोक्थ्यस्तोत्रेण च समाप्त्या तत्संस्थत्वमुपपद्यत इति न निमित्तत्वव्याघातः ॥

अथ सिद्धान्तयति—

**सस्तुतशस्त्रो वा तदङ्गत्वात् ॥ ४६ ॥**

वाशब्द एवार्थे । अत्र षोडशी सस्तुतशस्त्र एव स्यात् । कुतः ? तदङ्गत्वात्—षोडश्यङ्गत्वेन स्तुतशस्त्रविशेषविधानात् । एवं हि तत्र श्रूयते—"एकविंशंस्तोत्रं भवति, हरिवच्छस्यते" इति । "इन्द्र जुषस्व प्रतिहायाहि शूर हरिह" इति हरिशब्दघटितं शस्त्रं शस्यत इत्यर्थः ॥

इतोऽप्येवमित्याह—

**लिङ्गदर्शनाच्च ॥ ४७ ॥**

"ऊर्ध्वा वा अन्ये यज्ञक्रतवस्सन्तिष्ठन्ते तिर्यञ्चोऽन्ये, ये होतारमभिसन्तिष्ठन्ते त ऊर्ध्वाः, येऽच्छावाकमभिसन्तिष्ठन्ते ते तिर्यञ्चः" इति श्रुतम् । केचित् क्रतवः होतृशस्त्रकयजिना समाप्यन्तेऽग्निष्टोमसंस्थाः । अन्ये तु क्रतवः अच्छावाकयजिना समाप्यन्ते उक्थ्यादयः । अस्मिन् वाक्यशेषे इत्थं द्वैविध्यं दृश्यते । यदि त्वत्र राजन्यस्याग्निष्टोमे उक्थ्ये च षोडशी अस्तुतशस्त्रस्स्यात्, तदाध्वर्युमेवाभिसन्तिष्ठेत, न तु होतारमच्छावाकं वा । ततश्च द्वैविध्यमुक्तं भज्येत । अतोऽप्यत्र षोडशी सस्तुतशस्त्रः । एवञ्च षोडशिशस्त्रस्य होतृशस्त्रत्वाद्धोतारमभिसन्तिष्ठत इत्यत्रान्तर्भावादविरोधः ॥

नन्वत्र षोडशिनस्सस्तुतशस्त्रत्वेऽग्निष्टोमोक्थ्यसंस्थालक्षणनिमित्तसञ्जातादस्तुतशस्त्रत्वमेव युक्तम् । स्तुतशस्त्रविधानन्तु "षोडशिना वीर्यकामः" इति काम्यषोडशिविषयं भविष्यति । "होतारमभिसन्तिष्ठन्ते, अच्छावाकमभिसन्तिष्ठन्ते" इति द्वैविध्यमपि प्रायिकं भविष्यतीत्यत आह—

**वचनात् संस्थान्यत्वम् ॥ ४८ ॥**

"अग्निष्टोमे राजन्यस्य गृह्णीयात्" इति "अप्युक्थ्ये ग्राह्यः" इति वचनाद्राजन्यप्रयोगेऽग्निष्टोमोक्थ्यसंस्थोपमर्देन षोडशिसंस्थत्वं विधीयते, राजन्यस्य यः क्रतुरग्निष्टोमसंस्थः उक्थ्यसंस्थश्च प्रसक्तः, तस्य तया न कर्तव्यः, किन्तु षोडशिसंस्थः कर्तव्य इति । ततश्चाग्निष्टोमोक्थ्यसंस्थयोर्निमित्तत्वाभावान्न निमित्त-

व्याघातप्रसक्तिः। न च सप्तम्या अग्निष्टोमोक्थ्यसंस्थयोः प्रतीयमानं निमित्तत्वं परित्यज्य कथमेवं व्याख्येति वाच्यम्, स्तुतशस्त्रविधिबलादेव तथा व्याख्यावश्यम्भावात्। न च स्तुतशस्त्रविधानं काम्यषोडशिविषयं भविष्यतीति शक्यं वक्तुम्, काम्यं नैमित्तिकञ्च षोडशिनमनुक्रम्याम्नातस्य स्तुतशस्त्रविधेः काम्यमात्रविषयतासङ्कोचस्यायुक्तत्वात्। अन्यथा काम्यषोडशिविध्यनन्तरमेव स्तुतशस्त्रविधानमभविष्यत्, नैमित्तिकषोडशिविध्यन्तरं नाभविष्यत्। तस्मात् सस्तुतशस्त्र एवात्र षोडशी। एवञ्च होतारमभि सन्तिष्ठन्ते, अच्छावाकमभि सन्तिष्ठन्त इति द्वैविध्यस्यापि प्रायिकत्वं नाश्रयणीयं भवति॥

इति द्वादशं षोडशिनः सस्तुतशस्त्रत्वाधिकरणम्॥ १२॥

१३

आङ्गिरसः कापिवनः चैत्ररथ इति सन्ति द्विरात्रा अहीनाः द्विसुत्याकाः। तेषु सर्वेषु उत्तरमहरतिरात्र इति स्थितिः। तत्र आङ्गिरसद्विरात्रे श्रूयते— "वैखानसं पूर्वेऽहन् साम भवति, षोडश्युत्तरे" इति। सोऽयमपूर्वविधिः? उत परिसङ्ख्याविधिः? इति संशये, पूर्वपक्षयति—

**अभावादतिरात्रेषु गृह्यते॥ ४९॥**

आङ्गिरसद्विरात्रे उत्तरेऽहनि षोडशिनः प्रकारान्तरेण प्राप्त्यभावात्, "षोडश्युत्तरे" इत्यपूर्वविधिना प्राप्तष्षोडशी गृह्यते। षोडश्युत्तर इत्यपूर्वविधिरिति यावत्। ननु "अतिरात्रे षोडशिनं गृह्णाति" "नातिरात्रे षोडशिनं गृह्णाति" इति प्रकृतिभूतेऽतिरात्रे षोडशिविकल्पः स्थितः। स तावत् चोदकतः आङ्गिरसद्विरात्रे तदितरद्विरात्रेष्वप्युत्तरेऽहनि प्राप्तः। तस्य पाक्षिकषोडशिन आङ्गिरसद्विरात्रे षोडश्युत्तर इति परिसङ्ख्याविधिरस्तु आङ्गिरसद्विरात्र एव, पाक्षिकषोडशिनस्तु तदितरद्विरात्रेष्विति। एवञ्च द्विरात्रान्तरेषु पक्षेऽपि षोडशी नैव भवति। आङ्गिरसद्विरात्रे तु पाक्षिकषोडशी भवतीति फलितम्। अथवा सर्वेषु द्विरात्रेषु षोडशी पाक्षिकश्चोदकतः प्राप्तः। स तावत् "उत्तरेऽहन् द्विरात्रस्य गृह्यते" इति सामान्यवचनेन द्विरात्रेषु नियम्यते—

द्विरात्रेषु उत्तरेऽहन्यवश्यं षोडशी ग्राह्य इति। [ननु] तस्य षोडशिनियमस्य "षोडश्युत्तरे" इति परिसङ्ख्यास्तु—आङ्गिरसद्विरात्र एव षोडशिनियमो नान्यत्रेति। एवञ्च द्विरात्रान्तरेषु षोडशिनियमस्य निवृत्तौ चोदकतो वैकल्पिकषोडशी तेषु भवत्येवेति फलितम्। तस्मात् "षोडश्युत्तरे" इति परिसङ्ख्याविधिरेव, न त्वपूर्वविधिरिति चेत्—मैवम्; न तावत् द्विरात्रान्तरेषु चोदकप्राप्तपाक्षिकषोडशिनः परिसङ्ख्या "षोडश्युत्तरेऽहन्" इत्यनेन क्रियत इति युज्यते। द्विरात्रान्तरेष्वपि पाक्षिकषोडशिप्रापकचोदकस्य "उत्तरेऽहन् द्विरात्रस्य गृह्यते" इति प्रत्यक्षवचनेन बाधितत्वात्। नापि द्विरात्रान्तरेषु "उत्तरेऽहन् द्विरात्रस्य गृह्यते" इति वचनेन प्राप्तस्य षोडशिनियमस्य परिसङ्ख्येति युज्यते। सामान्यवचनं हि तावद्विशेषोपस्थापनमुखेन कार्यक्षमम्, विशेषशास्त्रन्तु सामान्यमनपेक्ष्यैव कार्यक्षममिति विशेषवचनापेक्षया सामान्यवचनं मन्दप्रवृत्तिकम्। एवञ्च "उत्तरेऽहन् द्विरात्रस्य गृह्यते" इति नियमो द्विरात्रेषु यावत्प्रवर्तते, ततः प्रागेवाङ्गिरसद्विरात्रे "षोडश्युत्तरे" इति वचनं प्रवर्तमानमप्राप्तमेव षोडशिनं विधत्ते। न च "उत्तरेऽहन् द्विरात्रस्य गृह्यते" इति सामान्यवचनेनैव आङ्गिरद्विरात्रेऽप्युत्तरेऽहनि षोडशिनियमसिद्धेष्षोडश्युत्तर इति विशिष्य वचनं व्यर्थमिति वाच्यम्। न हि प्रमाणप्रवृत्तिः प्रयोजनाधीना, हेये उपेक्ष्ये च प्रत्यक्षादप्रवृत्तेर्दर्शनात्। एवञ्चान्यतस्सिध्यन्नप्यर्थो विधिशक्तिबलादनेन प्रथमं विधीयत इत्यास्थेयम्। तस्मात् "षोडश्युत्तरे" इत्यपूर्वविधिरेव ॥

अथ सिद्धान्तयति—

## अन्वयो वानरभ्यविधानात् ॥ ५० ॥

अनारभ्य—विशेषमनवलम्ब्य सामान्यत एव द्विरात्रेषु सर्वत्र "उत्तरेऽहन् द्विरात्रस्य गृह्यते" इति विधानात्। आङ्गिरसतदितरद्विरात्रेषु सर्वत्र चोदकप्राप्तविकल्पं बधित्वा षोडशिनियमस्य अन्वयः प्राप्तिरस्त्येव। तस्य च नियतषोडशिनः पुनर्विधानं द्विरात्रान्तरेषु षोडशिनियमपरिसङ्ख्यार्थमेवेति युक्तम्। न हि सामान्यशास्त्रत्वमेव दुर्बलत्वे बीजम्, विशेषशास्त्रत्वमेव बलवत्वे बीजम्, किन्तु मन्थरप्रवृत्तिकत्वमेव दुर्बलत्वे बीजम्, झटिति प्रवृत्तिकत्वमेव बलवत्वे बीजम्। इह तु "उत्तरेऽहन् द्विरात्रस्य गृह्यते" इति सामान्यवचनेन

द्विरात्रसंयोगस्य प्रत्यक्षत्वात्तन्मुखेन विशेषे-आङ्गिरसद्विरात्रे तदेव झटिति प्रवर्तते। षोडश्युत्तरविशेषवचने केवलमुत्तरेणाह्ना संयोगश्रवणादाङ्गिरसद्विरात्रगते तस्मिन्नहनीत्यंशः प्रकरणकल्प्य इति मन्थरप्रवृत्तिकमिदं विशेषवचनम्। अतश्चोदकप्राप्तपाक्षिकषोडशिनो द्विरात्रेषु तन्नियमविधायकेन "उत्तरेऽहन् द्विरात्रस्य गृह्यते" इति सामान्यवचनेनाङ्गिरसद्विरात्रेऽप्युत्तरेऽह्नि नियतषोडशिनः प्राप्तत्वात् "षोडश्युत्तरे" इति नापूर्वविधिः, किन्तु सामान्यवचनप्राप्तनियमस्य द्विरात्रान्तरेषु परिसङ्ख्यार्थमेवेदं वचनम् "षोडश्युत्तरे" इति। एवञ्चान्यतस्सि [ ध्यन्नप्यर्थो ] विधिशक्तिबलादनेनैव प्रथमं विधीयत इत्यर्थसिद्धमेवोक्तरीत्या विशेषविधेर्बलाभावात् सामान्यविधेरेव बलवत्वात्।

तदेवं वृत्तिकारोत्प्रेक्षितमधिकरणमनुपपन्नम्; तथाहि—न तावत् पूर्वपक्षो युज्यते। मन्थरप्रवृत्तिकेनापि सामान्यवचनेन सम्भवत्प्राप्तिकस्य नियतषोडशिनः पर्यवसानगत्या "षोडश्युत्तरे" इति पुनर्विधिवैयर्थ्यात्। यत्तु प्रयोजनान्तराभावेऽपि प्रमाणप्रवृत्तेः प्रयोजनाधीनत्वाभावादन्यतस्सिध्यन्नप्यर्थो विधिशक्तिबलादनेनैव प्रथमं विधीयत इति तदेतच्छिष्यदन्धनम्। लोके तावत् प्रयोजनाभावेऽपि हेयोपेक्ष्येष्वपि प्रमाणप्रवृत्तिर्लोकसिद्धा नापह्नोतुं शक्यते। वेदे तु मात्रामात्रस्याप्यानर्थक्यं न वक्तुं शक्यम्। नापि सामान्यवचनप्राप्तषोडशिन आङ्गिरसद्विरात्रे पुनर्विधानं तदितरद्विरात्रेषु तत्परिसङ्ख्यार्थमिति सिद्धान्तो युज्यते, द्विरात्रान्तरेष्वपि "उत्तरेऽहन् द्विरात्रस्य गृह्यते" इति सामान्यवचनस्याप्रवृत्तौ तद्वैय्यर्थ्यात्। एतेन "आग्नेयं चतुर्द्धा करोति" इति विशेषवाक्ये "पुरोडाशं चतुर्द्धा करोति" इति सामान्यवाक्यमिव मित्रविन्दादिगतसाम्प्रदश्यवाक्ये अनारभ्याधीतसाम्प्रदश्यवाक्यमिव च "षोडश्युत्तरे" इति विशेषवाक्ये "उत्तरेऽहन् द्विरात्रस्य गृह्यते" इति सामान्यवचनमुपसंह्रियत इति [1]वृत्तिकारान्तरमतमपि निरस्तम्, सामान्यवचनस्य वैय्यर्थ्यापत्या उपसंहारानुपपत्तेः। "पुरोडाशं चतुर्द्धा करोति" इत्यस्य तु शाखान्तरत्वान्न वैय्यर्थ्यम्। साम्प्रदश्यवाक्ययोस्तु-एकेन द्वारसम्बन्धः, अपरेण क्रतुसम्बन्ध इति न वैयर्थ्यम्। एवञ्चानारभ्याधीतसाम्प्रदश्यवाक्ये सामिधेनीसम्बन्धमात्रं प्रतीयते, न तु क्रतुसम्बन्धः। तत्र यावत् सामिधेनीद्वारा सर्वा विकृतीर्हृदयमागमय्य तत्सम्बन्धः कल्प्यते, ततः प्रागेव मित्रविन्दादिगतवाक्येन

१. वृत्तिकार. अ

क्रतुसम्बन्धे बोधिते सत्याकाङ्क्षाविरहान्न सामिधेनीद्वारा कृत्स्नविकृतिसम्बन्धकल्पनावकाश इति श्रुतसाम्प्रदश्यासु मित्रविन्दादिविकृतिषूपसंहार इति युज्यते। इह तु "षोडश्युत्तरे" इति विशेषवाक्ये प्रकरणादाङ्गिरसद्विरात्रसम्बन्धोऽवगतः। तत्र "उत्तरेऽहन् द्विरात्रस्य गृह्यते" इति सामान्यवाक्येऽपि तत्क्रतुसम्बन्धस्यैव बोधने तद्वैय्यर्थ्यम्। यदि तु प्रकरणाद्वाक्यस्य बलीयस्त्वात् प्रथममेव सामान्यवाक्ये सर्वद्विरात्रसम्बन्धः प्रतीयेत, तर्हि कथं तस्य वाक्यस्याङ्गिरसद्विरात्रमात्रविषये विशेषवाक्ये उपसंहारस्स्यात्। किञ्च परिसङ्ख्याविधौ त्रैदोष्यं दोषः। आङ्गिरसद्विरात्रे हि षोडशि[नियम] सम्बन्धप्रतिपादनमात्रेण द्विरात्रान्तरेभ्यो व्यावर्तकशब्दाभावे सामान्यवचनप्राप्तस्य नियमस्य व्यावृत्तिर्न लभ्यत इति "षोडश्युत्तरे" इत्यनेनाङ्गिरसां द्विरात्रे षोडशिनियमरूपस्स्वार्थः परित्याज्यः, द्विरात्रान्तरेभ्यष्षोडशिनियमव्यावृत्तिरूपः परार्थः स्वीकार्यः, द्विरात्रान्तरेषु प्राप्तष्षोडशिनियमश्च बाध्य इति स्वार्थत्यागः, परार्थग्रहणम्, स्वार्थबाधश्चेति परिसङ्ख्यायां त्रयो दोषाः प्रसज्येरन्। अतो वृत्तिकारोत्प्रेक्षितमधिकरणमनुपपन्नमिति मत्वा भाष्येऽधिकरणमिदमन्यथा योजितम्। तद्यथा--परिसङ्ख्याविधिरिति पूर्वः पक्षः। द्विरात्रान्तरेषु परिसङ्ख्यातत्वेन तत्र षोडशिनियमस्याभावादाङ्गिरसद्विरात्र एव नियमेन षोडशी गृह्यत इति प्रथमसूत्रार्थः। द्वितीयसूत्रस्य त्वेवं योजना-सर्वेष्वेव द्विरात्रेषूत्तरेऽहनि षोडशिनियमस्यान्वयः-सम्बन्धोऽस्त्येव, न त्वङ्गिरसां द्विरात्र एव। कुतः? अनारभ्यविधानात्–"उत्तरेऽहन् द्विरात्रस्य गृह्यते" इति सामान्यतो द्विरात्रे विधानात्, न "षोडश्युत्तरे" इति वचनात् सामान्यतो द्विरात्रे विधानात्। न च "षोडश्युत्तरे" इति वचनात् सामान्यवचनप्राप्तस्य द्विरात्रान्तरेषु परिसङ्ख्येति वाच्यम्, परिसङ्ख्यायां त्रैदोष्यप्रसङ्गात्। किमर्थन्तर्हि "षोडश्युत्तरे" इति वचनमिति चेन्न; पूर्वस्मिन्नहनि वैखानसाख्यवैशेषिकाहर्विधिर्युक्तः, यत उत्तरस्मिन्नप्यहनि षोडश्याख्यवैशेषिकमङ्गं वर्तत इति स्तावकतया सार्थक्यात्। एवञ्च "षोडश्युत्तरे" इत्यस्य परिसङ्ख्याविधित्वाभावाद् "उत्तरेऽहन् द्विरात्रस्य गृह्यते" इति सर्वेष्वेव द्विरात्रेषु षोडशिनियम इति। अत्र 'मन्त्रेणाश्वस्य रज्जुग्रहणविधिफलम्' इत्यादिश्लोके विधिरसायनस्थे () सोमनाथदीक्षितैः [१]किञ्चिद्व्यापृतं तत्तत एवानुसन्धेयम्॥

इति त्रयोदशमङ्गिरसां द्विरात्रे षोडशिनियमाधिकरणम्॥ १३॥

---

१. किञ्चिद्व्याकृतं. क.

१४

षोडशिनमेव प्रकृत्य श्रूयते—"चतुर्थे चतुर्थेऽहन्यहीनस्य" इति। किमेकस्याहीनस्याष्टरात्रस्य चतुर्थेऽहनि गृहीत्वा तदहरारभ्य पुनश्चतुर्थेऽहनि ग्राह्य इत्येवं द्विरभ्यासः, द्वादशरात्रे तु तदहरारभ्य चतुर्थेऽहनीत्येवं त्रिरभ्यासः, सप्तदशरात्रे तु तदहरप्यारभ्य चतुर्थेऽहनीति चतुरभ्यास इत्येवं प्रत्यहीनमभ्यासेन ग्राह्यः? उतैकैकस्याहीनस्यैकस्मिन्नेव चतुर्थेऽहनि सकृद् ग्राह्यः? इति संशयः। तत्र पूर्वपक्षयति—

**चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयेत भोजनवत् ॥ ५१ ॥**

"चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यते" इति वाक्ये प्रत्यहीनमभ्यासेन षोडशिग्रहणं प्रतीयेत। एकैकस्याहीनस्यैकस्मिन्नेव चतुर्थेऽहनि सकृत् सकृद् ग्राह्य इति। द्वितीयपक्षे ह्यहीनस्य यच्चतुर्थमहरित्युद्दिश्य षोडशी ग्राह्य इति वक्तव्यम्। तथा सति प्रत्युद्देश्यं विधेयपर्यवसानादेव प्रत्युद्देश्यं तदभ्यासस्य सिद्धत्वाद्वीप्सा अनर्थिका स्यात्। अतः अहीनस्य षोडशी ग्राह्य इति यत् तच्चतुर्थे चतुर्थेऽहनीत्येवं वीप्सैव विधेया, तत्र चाहीनस्येत्यस्य चतुर्थसम्बन्धित्वाभावात् किमपेक्षया चतुर्थमित्याकाङ्क्षायां ग्रहणदिनापेक्षया चतुर्थमिति लभ्यते, भोजनवत्। यथा चतुर्थे चतुर्थेऽहनि देवदत्तो भुङ्क्ते इत्यत्र पूर्वपूर्वभोजनदिनापेक्षया चतुर्थत्वं गम्यते, तद्वत् ॥

अथ सिद्धान्तयति—

**अपि वा सङ्ख्यावत्त्वान्नानाहीनेषु गृह्येत पक्षवदेकस्मिन् सङ्ख्यार्थभावात् ॥ ५२ ॥**

अपि वेत्यवधारणे। नानाहीनेषु-सर्वेष्वहीनेषु तदीयप्रथमसुत्यापेक्षया एकैकस्मिन् चतुर्थेऽहन्येव षोडशी सकृत् सकृद् गृह्येत, न त्वेकैकस्मिन्नहीने, पूर्वपूर्वषोडशिग्रहणदिनापेक्षया चतुर्थे चतुर्थेऽहनीत्यभ्यासः। कुतः? सङ्ख्यावत्त्वात्-चतुर्थशब्दस्य सङ्ख्याविशेषवाचकचतुश्शब्दप्रकृतिकत्वात्। ततः किम्? एकस्मिन् सङ्ख्यार्थभावात्-एकस्मिन्नहीने एकस्यैव सङ्ख्याविशेषवाचकशब्दप्रकृतिकचतुर्थ-

शब्दार्थस्य-चतुर्थस्य सद्भावात्। एकस्य ह्यहीनस्य प्रथमसुत्याहापेक्षया यच्चतुर्थ-महः तदेकमेव भवति। तदपेक्षया चतुर्थमहस्तु तस्याहीनस्याष्टममेवाहर्भवति, न तु चतुर्थम्। तदपेक्षया चतुर्थञ्च द्वादशं भवतीत्याद्यूह्यम्। अहीनस्य यच्चतुर्थ-महस्तत्र षोडशीति हि वचनव्यक्तिः। किमपेक्षया चतुर्थ इत्याकाङ्क्षायां श्रुतत्वाद-हीनस्येत्येवं सम्बध्यत इति तदपेक्षमेव चतुर्थत्वं प्रतीयते, न तु ग्रहणदिनापेक्षया, ग्रहणदिनस्याश्रुतत्वात्। एकैकस्य चाहीनस्य एकैकमेव चतुर्थमहरिति प्रत्यहीनं सकृत् सकृदेव ग्रहणम्। अहीनस्य चतुर्थमहरुद्दिश्य षोडशिग्रहणविधौ च प्रत्युद्देश्यं विधेयपर्यवसानादेव सिद्धा प्रत्यहीनं चतुर्थे चतुर्थेऽहनीति वीप्सानूद्यत एव, न तु सापि विधीयत इति लाघवम्। अहीनस्येत्येकवचनन्तु सामान्याभिप्रायम्। अहीनभेदाभिप्रायेणैव चतुर्थे चतुर्थे इति वीप्सानुवादः, पक्षवत्। यथा देवदत्तः पञ्चम्यां पञ्चम्यां भुङ्क्ते इत्यत्र प्रतिपक्षं पक्षप्रवृत्तितिथ्यपेक्षया पञ्चम्यां तिथाविति गम्यते, न त्वेकस्मिन्नेव पक्षे पूर्वपूर्वभोजनदिनापेक्षया पञ्चम्यां तिथाविति, तद्वदिहापि॥

अथ यदुक्तं भोजनवदिति तत्राह—

## *भोजने सङ्ख्यावत्वात्ततोऽपि सङ्ख्या स्यात्॥ ५३॥

देवदत्तश्चतुर्थे चतुर्थेऽहनि भुङ्क्ते इत्यत्रोत्तरोत्तरं चतुर्थमहः पूर्वपूर्व-चतुर्थशब्दोपात्ताद् भोजनदिनाच्चतुर्थमिति सम्भाव्यते। आद्यं यच्चतुर्थमहः तत् किमपेक्षया चतुर्थमित्याकाङ्क्षायां भोजनदिनप्रभृतीत्युक्ते तदाकाङ्क्षा न शाम्यति, भोजनादिविशेषस्य सर्वाद्यस्य नियतस्य कस्यचिदनुपस्थितेः। अतः व्रतविशेषं प्रकृत्य प्रवृत्ते देवदत्तश्चतुर्थे चतुर्थेऽहनि भुङ्क्ते इत्यस्मिन्वाक्ये व्रतारम्भे यद् भोज-नदिनं तदपेक्षया आद्यश्चतुर्थमहः द्वितीयतृतीयादिकन्तु चतुर्थमहः पूर्वपूर्वभोजन-दिनापेक्षया इत्येवं तात्पर्यवशाल्लोके तथा सम्प्रत्ययो भवति। तात्पर्यञ्च प्रकर-णादिनोन्नेयम्। इह तु वेदशब्दैकसमधिगम्योऽर्थ इति तत्र शाब्दमर्यादयैवोक्तरी-त्यार्थो वर्णनीयः। सूत्रयोजना त्वेवम्—उदाहृते भोजनवाक्ये प्रकरणादिगम्य-तात्पर्यवशेन सङ्ख्यावत्वाद् व्रतविशेषारम्भमारभ्य पूर्वपूर्वभोजनदिनापेक्षया

---

*भोजने तत्सङ्ख्यं स्यादिति सूत्रपाठोऽन्यत्र दृश्यते।

सङ्ख्या स्यात्। एकस्मिन्नेव देवदत्ते चतुर्थे चतुर्थ इति वीप्सा स्यादिति वैषम्यम् ॥

इति चतुर्दशं नानाहीनाधिकरणम् ॥१४॥

१५

ज्योतिष्टोमे श्रूयते—"यदि रथन्तरसामा सोमस्स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्यदि बृहत्सामा शुक्राग्रान् यदि जगत्सामाग्रायणाग्रान्" इति। किमिह बृहद्रथन्तरान्यतरसामा ज्योतिष्टोम एव जगत्सामशब्देन विवक्षितः? उत स एवोभयसामा? किं वा रथन्तरसामैव सः? अथवा "विभ्राट् बृहत् पिबतु" इति जगतीच्छन्दस्कायामुत्पन्नं साम यत्र स विषुवान्नामविकृतिसोमो विवक्षितः? इति चतुर्धा संशयः। तत्र ज्योतिष्टोम एवार्भवपवमाने कावाख्यं साम "अभि प्रियाणि" इति जगत्यामुत्पन्न [मस्ति], तदादाय ज्योतिष्टोम एव बृहद्रथन्तरान्यतरपृष्ठको जगत्सामशब्देन विवक्षित इति प्रथमः पक्षः। "रथन्तरसाम्ना बृहत्साम्ना उभयसाम्ना वा प्रथमं यजेत" इति वचनेन ज्योतिष्टोमो बृहद्रथन्तरोभयसामाप्यस्तीति तस्मिन्नेव जगत्सामकत्वनिमित्तकमाग्रयणाग्रत्वं प्रत्येतव्यम्। न च बृहद्रथन्तरयोर्द्वयोरपि जगत्यामनुत्पन्नत्वात् कथं तदुभयसामा ज्योतिष्टोमो जगत्सामशब्देनाभिधानमर्हतीति वाच्यम्। जगच्छब्दो हि कृत्स्नवचनः। कार्त्स्न्यं च नैकस्य, किन्त्वनेकसमुच्चये। अतस्समुच्चितोभयसामा ज्योतिष्टोम एव जगच्छब्देनाभिधानमर्हति। यदि त्वन्यतरसामक एव जगत्सामेत्यनेन विवक्षितस्स्यात्, तदा केवलरथन्तरपृष्ठके केवलबृहत्पृष्ठके च ज्योतिष्टोमे ऐन्द्रवायवाग्रताशुक्राग्रताभ्यामाग्रयणाग्रताया विकल्पोऽष्टदोषदुष्ट आश्रयितव्यस्स्यादिति द्वितीयपक्षः। यद्युभयसामैव जगत्सामशब्देन विवक्षितस्स्यात्, तर्हि "यदि जगत्सामा" इत्यनर्थकं स्यात्, "आग्रयणाग्रान् गृह्णीयात्" इत्येतावतैवोभयसाम्नि आग्रयणाग्रत्वसिद्धेः। न च तथा सत्यन्यतरसामन्यप्याग्रयणाग्रत्वं स्यादिति वाच्यम्। रथन्तरसाम्नो बृहत्साम्नश्च क्रतोरैन्द्रवायवाग्रताशुक्राग्रताभ्यामवरुद्धत्वात्। तस्मात् "ईशानमस्य जगतः स्वर्दृशम्" इति जगच्छब्दघटितायाम् "अभि त्वा शूर" इत्यृच्युत्पन्नं रथन्तरमेवादाय ज्योतिष्टोम एव जगत्सामेत्यनेन विवक्षित इति प्राप्ते, सिद्धान्तयति—

**जगत्साम्नि सामाभावादृक्स्साम तदाख्यं स्यात् ॥ ५४ ॥**

जगत्सामशब्दसंयुक्ते "यदि जगत्सामा" इत्यादिवाक्ये, ऋक्तः—"विभ्राड् बृहत् पिबतु" इति जगतीच्छन्दस्कायामृचि उत्पन्नं वैपुल्यं साम, तदाख्यम्—जगच्छब्दाभिधेयं स्यात्। विषुवानेव क्रतुरुक्थयोगेन जगत्सामेत्यनेन विवक्षित इति यावत्, न तु ज्योतिष्टोमः। कुतः ? सामाभावात्—न हि जगन्नामकं साम ज्योतिष्टोमेऽस्ति, सामवेदे जगन्नाम्नः साम्नोऽप्रसिद्धत्वात्। न च जगच्छब्दसंयुक्तायामृच्युत्पन्नं रथन्तरं साम जगच्छब्दाभिधेयं तत्रास्तीति वाच्यम्। शब्दानां हि स्वपरत्वे लक्षणा, अर्थे शक्तिः। अतो जगच्छब्देन तावज्जगच्छब्दो लक्षणीयः। लक्षितेन च तेन तच्छब्दसंयुक्ता ऋक् लक्षणीया। तद्द्वारा साम लक्षणीयम्-जगच्छब्दयुक्तायामृच्युत्पन्नं साम जगत्सामेति। अतो जगच्छब्देन जगतीच्छन्दोवाचकेन तच्छन्दस्कायामृच्युत्पन्नसामलक्षणैव ज्यायसी, जगत्यामृच्युत्पन्नं साम जगदिति। जगत्साम यस्मिन् जगत्सामेति बहुव्रीहिः। ईकारलोपश्छान्दसः। तस्माद्विषुवानेव जगत्सामेत्यनेन विवक्षितः। जगच्छब्दस्य रथन्तरपरत्वे साक्षाद्रथन्तरसामकत्वपुरस्कारेण विहितैन्द्रवायवाग्रत्वस्य विलम्बोपस्थितिकाग्रयणाग्रत्वेन विकल्पापाताच्च। न चैवमपि ज्योतिष्टोम एवार्भवपवमाने "कावमन्त्यं जगतीषु" इति कावसामादाय निवेशोपपत्तावुत्कर्षकल्पना न युज्यत इति वाच्यम्, तस्य साम्नो ज्योतिष्टोमे नित्यत्वेन यदिशब्दानुपपत्तेः। तस्माद्विषुवानेवात्र जगत्सामा विवक्षित इति दिक्। अत्राधिकरणे उभयसामा जगत्सामेति पक्षनिराकरणावसरे शास्त्रदीपिकायां 'न चोभयसामत्वं ज्योतिष्टोमेऽस्ति बृहद्रथन्तरयोर्विकल्पेनैव विधानात्' इत्युक्तम्। भाष्ये तु ज्योतिष्टोमस्योभयसामत्वमङ्गीकृत्योभयसामपरत्वपक्षः प्रकारान्तरेण निराकृतः। युक्तञ्चैतत्; "रथन्तरसाम्ना बृहत्साम्ना वा प्रथमं यजेत" इति वचनेन ज्योतिष्टोमे उभयसामत्वस्यापि सत्वात्। आपस्तम्बभारद्वाजसत्याषाढादिकल्पसूत्रेषु तथैव वचनाच्चेत्यास्तां तावत् ॥

इति पञ्चदशं जगत्सामाधिकरणम् ॥ १५ ॥

१६

बृहद्रथन्तरे प्रकृत्यामनन्ति—"संसव उभे कुर्यात्" "गोसव उभे कुर्यात्" इत्यादि। प्रकृतौ च "उपास्मै गायत इत्युपवति रथन्तरपृष्ठस्य प्रतिपदं कुर्यात्,

पवस्व वाचो अग्रय इत्यग्रवति बृहत्पृष्ठस्य प्रतिपदं कुर्यात्" इति श्रुतम्। किमिह रथन्तरबृहन्निमित्तकयोरुपवत्यग्रवत्योर्विकल्पः? उत रथन्तरनिमित्तका उपवत्येव भवति? अथवा उभयं न भवति? इति संशये, पूर्वपक्षयति—

**उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात् स्यात् ॥५५॥**

उभयसाम्नि संसवादौ रथन्तरनिमित्तकं बृहन्निमित्तकञ्च प्रतिपदुपादानं विकल्पेन प्रत्येतव्यम्। कुतः? समत्वात्-उभयोरपि निमित्तयोस्समत्वात्। न तु समुच्चयः, असम्भवात्। न ह्येकस्य क्रतोर्द्वे प्रतिपदौ सम्भवतः। प्रतिपदिति हि प्रथमा ऋगुच्यते। न द्वयोर्युगपत् प्राथम्यं सम्भवति॥

अथ द्वितीयपक्षयति—

**मुख्येन वा नियम्येत ॥ ५६ ॥**

"रथन्तरं पृष्ठं भवति" "बृहत्पृष्ठं भवति" इति प्रथमपठितं रथन्तरम्। तेन निमित्तेन प्रतिपन्नियम्येत-नियता प्रत्येतव्या। प्रथमातिक्रमे कारणाभावाद्रथन्तर-निमित्तकैव प्रतिपद् भवतीत्यर्थः॥

अथ सिद्धान्तयति—

**निमित्तविघाताद्वा क्रतुयुक्तस्य कर्म स्यात् ॥ ५७ ॥**

वा शब्दोऽवधारणे। निमित्तसंयोगं विना केवलक्रतुसंयुक्तस्य कस्यचिदृङ्म-न्त्रस्य प्रतिपत्त्वेन कर्म-उपादानं स्यात्, न तूपवत्या अग्रवत्या वा। कुतः? निमित्तविघातात्-उपवत्या निमित्तं रथन्तरम्, अग्रवत्या निमित्तं बृहत्, तयो-र्निमित्तत्वेन प्राकृतौ श्रुतयोस्संसवादौ निमित्तव्याघातादित्यर्थः। रथन्तरं पृष्ठमस्य बृहत्पृष्ठमस्येति पृष्ठान्तरव्यावर्त्तकत्वेनैव क्रतुविशेषणतयावगतत्वात्। तथाभूत-योरेव निमित्तत्वमिति भावः। अनिमित्तकञ्च प्रतिपदन्तरं क्वचिदन्वेष्टव्यम्॥

**इति षोडशं संसवाधिकरणम्॥ १६ ॥**

१७

ज्योतिष्टोमे उपांश्वन्तर्य्यामावधाराग्रहौ विधाय "ऐन्द्रवायवाग्रा ग्रहा गृह्यन्ते" इति प्रस्तुत्य "ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति, आश्विनं गृह्णाति" इत्यादि श्रुतम्। तत्र किमैन्द्रवायव उपांश्वन्तर्यामाभ्यां पूर्वमेव ग्रहीतव्यः? उत पाठ-

प्राप्तस्थान एव ? इति संशये, पूर्वपक्षयति—

**ऐन्द्रवायवस्याग्रतावचनादादितः प्रतिकर्षस्स्यात् ॥५८॥**

आदितः-सर्वग्रहाणामादौ उपांश्वन्तर्यामाभ्यां प्रागेव ऐन्द्रवायवग्रहणस्य पाठप्राप्तस्थानात् प्रतिकर्षस्स्यात्। कुतः ? अग्रतावचनात्-"ऐन्द्रवायवाग्रा ग्रहा गृह्यन्ते" इत्यत्र हि न ग्रहा विधीयन्ते, "ऐन्द्रवायवं गृह्णाति" "मैत्रावरुणं गृह्णाति" इत्यादिप्रातिस्विकविधिभिरेव तेषां प्राप्तत्वात्, किन्तु ये ग्रहास्त ऐन्द्रवायवाग्रा इति विधीयते। तत्र चैन्द्रवायवः अग्रे येषामिति बहुव्रीहिबलादन्यपदार्थानां ग्रहत्वावच्छिन्नानामैन्द्रवायवपूर्वकत्वं विधीयते—ग्रहाणां पुरस्तादैन्द्रवायवो ग्राह्य इति। ततश्च सर्वेषां ग्रहाणामैन्द्रवायवाग्रत्वधर्मसिध्यर्थमुपांश्वन्तर्यामाभ्यां पूर्वमेव सत ऐन्द्रवायवग्रहणस्य पाठप्राप्तस्थानात् प्रतिकर्षः ॥

अथ सिद्धान्तयति—

**अपि वा धर्मविशेषात्तद्धर्माणां स्वस्थाने**
**प्रकरणादग्रत्वमुच्यते ॥५९॥**

अपिवेत्यवधारणे। स्वस्थाने-पाठप्राप्तस्थान एवैन्द्रवायवस्य ग्रहणम्, न तूपांश्वन्तर्यामतः पूर्वम्। यतः धर्मविशेषात्-ल्यब्लोपे पञ्चमी। ऐन्द्रवायवाग्रत्वपुरस्कारेण तद्धर्माणाम्-ज्योतिष्टोमधर्माणां ग्रहाणामेवात्र विधिः, श्रुत्यनुग्रहात्। अग्रताविधौ तु वाक्यानुग्रहः। ऐन्द्रवायवाग्रा गृह्यन्त इत्यत्र ग्रहा एवैन्द्रवायवाः सामान्यरूपेण विधीयन्त इति यावत्। अग्रत्वन्त्वैन्द्रवायवस्य प्रकरणात्-पाठात् प्राप्तमुच्यते-अनूद्यते। न चोपांश्वन्तर्य्यामस्थानोत्तरमाम्नातस्यैन्द्रवायवस्य सर्वग्रहापेक्षया अग्रतायाः पाठादप्यप्राप्तेः कथं तदनुवाद इति वाच्यम्, मैत्रावरुणादिग्रहापेक्षया पाठतः प्राप्तस्याग्रत्वस्यानुवादोपपत्तेः ॥

ननु "धारया गृह्णाति" इति प्रकृतानां ग्रहाणामिहैन्द्रवायवाग्रत्वविधिः कुतो न स्यादित्यत आह—

**धारासंयोगाच्च ॥६०॥**

धारावाक्यस्य असन्निधानादित्यर्थः। [तथाहि] "वाग्वा एषा यदैन्द्रवायवो यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते" इत्यत्र धारावाक्यं न सन्निहितम्। यद्यपि ऐन्द्रवायवादिग्रहाः प्रातिस्विकविधिभिः प्राप्ता एव, तथापि तेषामिह संक्षेपतो विधानम्।

तत्प्रयोजनन्त्वग्रे वक्ष्यते 'पुरस्तादैन्द्रवायवस्याग्रस्य कृतदेशत्वात्' इत्यत्र। तस्मात् पाठप्राप्तस्थान एवैन्द्रवायवग्रहणम् ॥

**इति सप्तदशं ज्योतिष्टोम ऐन्द्रवायवस्य सर्वादावप्रतिकर्षाधिकरणम् ॥१७॥**

## १८

तदेवमैन्द्रवायवाग्रा ग्रहा गृह्यन्त इति सामान्यतो ग्रहेषु विहितेषु कामसंयुक्तानि कानिचिद्वचनान्याम्नातानि—"ऐन्द्रवायवाग्रान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्" इति। किमिह पाठप्राप्तस्थानात् प्रतिकृष्योपांश्वन्तर्यामादिसर्वग्रहाणामादित ऐन्द्रवायवग्रहणम्? उतोपांश्वन्तर्यामत ऊर्ध्वमेव? इति संशये पूर्वपक्षयति—

**कामसंयोगे वचनादादितः प्रतिकर्षः स्यात् ॥६१॥**

"ऐन्द्रवायवाग्रा ग्रहा गृह्यन्ते" इति वाक्ये मास्तु सर्वादितः प्रतिकर्षः, इह तु कामसंयुक्तवाक्ये सर्वादितः प्रतिकर्षः स्यात्। कुतः? वचनात्—ग्रहानाश्रित्य ऐन्द्रवायवाग्रतायाः कामाय विधानात्, उपांश्वन्तर्यामयोरपि ग्रहत्वाविशेषात् ॥

अथ सिद्धान्तयति—

**तद्देशानां वाग्रसंयोगात्तद्युक्ते कामशास्त्रं स्यान्नित्यसंयोगात् ॥६२॥**

वा शब्दो नार्थे। ग्रहानाश्रित्यैन्द्रवाग्रता कामाय विधीयते। ततश्चोपांश्वन्तर्यामयोरपि ग्रहत्वाविशेषात् सर्वादितः तत्प्रतिकर्ष इति न युज्यते; किन्त्वैन्द्रवायवग्रहणमेव कामाय विधीयते, श्रुत्यनुग्रहात्। तदग्रत्वन्तु पाठप्राप्तमेवानूद्यते। ग्रहानाश्रित्यैन्द्रवायवाग्रत्वगुणविधावपि न सर्वेषां ग्रहाणामाश्रयत्वम्, येन सर्वादितः प्रतिकर्षस्स्यात्। किन्तूपांश्वन्तर्यामव्यतिरिक्तानामेव। कुतः? तद्देशानामेवाग्रसंयोगात्—तया धारया दिश्यन्ते—उपदिश्यन्त इति तद्देशाः। धाराग्रहा इति यावत्। तेषामेव प्रकृताग्रत्वाश्रयतायोग्यत्वात्। किञ्च गुणविधौ तद्युक्ते-ग्रहगते तदग्रत्वे कामशास्त्रं प्रवर्तितव्यं स्यात्। एवञ्च वाक्यानुग्रहः। फलाय ग्रहविधौ तु श्रुत्यनुग्रहः। ननु पूर्वाधिकरणे "ऐन्द्रवायवाग्रा ग्रहा गृह्यन्ते" इति सामान्यतो ग्रहविधिरिति स्थितम्। ततश्च तेन "ऐन्द्रवायवं गृह्णाति" इति प्रातिस्विकविधिना

ऐन्द्रवायवाग्रहस्य नित्यत्वात्तस्य फलाय विधाने सति नित्यानित्यसंयोगविरोध इत्यत आह—नित्यसंयोगादिति। 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इति न्यायेन() नित्यस्यैव सतः फलसंयोगस्याप्युपपत्तेरित्यर्थः। अतो न कामसंयुक्तस्यास्यैन्द्र-वायवस्य प्रतिकर्षः॥

इत्यष्टादशमैन्द्रवायवस्य कामसंयुक्तेष्वप्यप्रतिकर्षाधिकरणम्॥१८॥

१९

ज्योतिष्टोमेऽधाराग्रहावुपांश्वन्तर्यामौ विधाय "ऐन्द्रवायवं गृह्णाति" "मैत्रा-वरुणं गृह्णाति" "शुक्रं गृह्णाति" "मन्थिनं गृह्णाति" "आग्रयणं गृह्णाति" "उक्थ्यं गृह्णाति" इत्यादिक्रमेण धाराग्रहाः श्रुताः। सन्ति च तत्र कामसंयुक्तानि वाक्यानि—"शुक्राग्रान् गृह्णीयात् प्रतिष्ठाकामः" इत्यादीनि। किमिह शुक्रादीनां पाठप्राप्तस्थाने ग्रहणम्? उत ततः प्रतिकर्षः? इति संशये, पूर्वपक्षयति—

**परेषु चाग्रशब्दः पूर्ववत् स्यात्तदादिषु॥६३॥**

पूर्वस्मिन्नधिकरणे "ऐन्द्रवायवाग्रान् गृह्णीयाद्यः कामयेत" इति कामसंयुक्ते वाक्येऽग्रशब्दः पाठप्राप्ताग्रत्वानुवादः, ग्रह एव फलाय विधीयत इति स्वस्थान एव तद्ग्रहणमिति स्थितम्, तद्वदेवैन्द्रवायववाक्यात् परेषु—अन्येषु तदादिषु—शुक्रादिवाक्येष्वपि अग्रशब्दः—अनुवादः। शुक्रादिग्रहा एव कामे विधीयन्त इति तेषामपि स्वस्थान एव ग्रहणं स्यात्॥

अथ सिद्धान्तयति—

**प्रतिकर्षो वा नित्यार्थेनाग्रस्य तदसंयोगात्॥६४॥**

वाशब्दोऽवधारणे। शुक्रादीनां स्वस्थानात् प्रतिकर्ष एव स्यात् यतः, नित्या-र्थेन-नित्यवच्छ्रुतेन शुक्रादिग्रहजातेन कामसंयोगः कामसंयुक्तवाक्येषु न बोध्यते। नात्र ग्रहाणां पूर्ववत् कामेषु विधिसम्भव इति यावत्। कुतः? अग्रस्य तदसंयो-गात्-ऐन्द्रवायवाद्यग्रत्ववत् शुक्राद्यग्रतायाः पाठप्राप्तत्वाभावेनाग्रशब्दस्य तदनु-वादत्वासम्भवात्। न हि प्रकृता धाराग्रहाः पाठतश्शुक्राद्यग्राः, येन तदग्रत्वानु-वादेन तेषां कामेषु विधिस्स्यात्। ऐन्द्रवायवाग्रा एव हि धाराग्रहाः पठिताः। शुक्रादिग्रहाणां कामेषु, शुक्राद्यग्रतायाश्च ग्रहेषु विधौ तु वाक्यभेदप्रसङ्गः।

तस्मात् नित्यप्राप्तधाराग्रहाश्रिताः शुक्राद्यग्रताः कामेषु विधीयन्त इति प्रतिकर्षस्सिद्धः। न च पूर्ववदिह प्रकृतास्सर्वे धाराग्रहा न विधीयन्ते, किन्तु शुक्रप्रभृतयो ये ग्रहाः पाठादेव शुक्राद्यग्रत्वेनावगतास्त एव कामेषु विधीयन्त इति न वाक्यभेद इति वाच्यम्, शुक्राद्यग्रत्वविशिष्टानां कामेषु विधौ गौरवात्। ततश्च लाघवात् प्राकृतान् सर्वधाराग्रहानाश्रित्य शुक्राद्यग्रतामात्रविधिरेव युक्त इति प्रतिकर्षस्सिद्ध एव॥

इतोऽप्येवमित्याह—

**प्रतिकर्षञ्च दर्शयति॥ ६५॥**

"धारयेयुस्तं यं कामाय गृह्णीयुरैन्द्रवायवं गृहीत्वा सादयेदथ तं सादयेद् यं कामाय गृह्णीयुः" इति काम्यग्रहे गृहीते धार्यमाणे ऐन्द्रवायवस्य ग्रहणन्दर्शयति। अतोऽपि प्रागैन्द्रवायवात् शुक्रादीनां प्रतिकर्ष इति॥

**इत्येकोनविंशं शुक्रादीनां ग्रहाणां प्रतिकर्षाधिकरणम्॥ १९॥**

२०

"शुक्राग्रान् गृह्णीयात् प्रतिष्ठाकामः" "आग्रयणाग्रान्[1] गृह्णीयादानुजावरः" इत्यादिविधिषु शुक्रादिग्रहाणां पाठप्राप्तस्वस्थानादपकर्ष इति स्थितम्। किमिह सर्वादित उपांश्वन्तर्यामतः प्रागपकर्षः? उत उपांश्वन्तर्यामत ऊर्ध्वमैन्द्रवायवतः प्राक्? इति संशये, विशेषाग्रहणात् सर्वग्रहाणामादितोऽपकर्ष इति प्राप्ते, सिद्धान्तयति—

**पुरस्तादैन्द्रवायस्याग्रस्य कृतदेशत्वात्॥ ६६॥**

ऐन्द्रवायवतः पुरस्तादुपांश्वन्तर्यामत ऊर्ध्वं शुक्रादेरपकर्षस्स्यात्। कुतः? अग्रस्य कृतदेशत्वात्—तस्यैव कालस्य काम्याग्रताधिकरणत्वेन निश्चितत्वात्। कामेषु हि शुक्राद्यग्रता गुणाः प्रकृतान् ग्रहानाश्रित्य विधीयन्ते। प्रकृताश्च "ऐन्द्रवायवाग्रा ग्रहा गृह्यन्ते" इति सामान्यविधिना प्रक्रान्ता ऐन्द्रवायवाद्या ग्रहा इति तानाश्रित्य शुक्राद्यग्रतागुणाः कामेषु विधीयन्ते, अतो न सर्वादितः प्रतिकर्षः। इदमेव च संक्षेपत ऐन्द्रवायवादिग्रहविधेः प्रयोजनम्। न चैतत्सामान्यविध्य-

१. गृह्णीतानुजावरः. क.

भावेऽपि "अण्व्या धारया गृह्णाति" इति धाराग्रहाधिकारादेव उपांश्वन्तर्यामयोरग्रताश्रयत्वस्य व्यावृत्तिसिद्धेस्सामान्यतो ग्रहविधिर्व्यर्थ एवेति वाच्यम। संक्षेपत ऐन्द्रवायवादिग्रहविध्यभावे हि सत्यपि धाराग्रहाधिकारे उपांश्वन्तर्यामयोरग्रताश्रयत्वव्यावृत्तेरलाभात्, अन्तर्यामस्यापि धाराग्रहत्वात्, "पवित्रवानन्तर्यामो गृह्यते" "धारया अन्तर्यामं गृह्णाति" इति श्रवणात्। सति त्वैन्द्रवायवादीनां संक्षेपतो विधौ तेषामेव सन्निहितानां ग्रहाग्रताश्रयत्वं लभ्यत इतीदमेव संक्षेपतस्तद्विधेः प्रयोजनमित्यास्तां तावत्। यत्त्वत्र तन्त्ररत्ने प्रयोजनान्तरमभिहितम्, तद्दूषयित्वा मयूखमालिकायां प्रयोजनान्तरमुपन्यस्तम्, तदेतत् सर्वमन्तर्यामस्य धाराग्रहत्वविस्मरणविजृम्भितत्वात् [ क्लिष्ट ]त्वाच्चोपेक्षितम्॥

इतोऽपि काम्या शुक्राद्यग्रता ऐन्द्रवायवपूर्वकालमादायैवेत्याह—

**तुल्यधर्मत्वाच्च ॥ ६७ ॥**

धाराग्रहत्वसाम्यादैन्द्रवायवादीनामेव शुक्राद्यग्रताश्रयत्वं न तूपांश्वन्तर्यामयोरिति भाष्यम्, तन्न; अन्तर्यामस्यापि धाराग्रहत्वस्योक्तरीत्या सत्वात्। वस्तुतस्तु यजिमत्वसाधर्म्यादैन्द्रवायवादीनामेव शुक्राद्यग्रताश्रयत्वम्, न तूपांश्वन्तर्यामयोः, तयोर्द्विहोमत्वादिति व्याख्येयम्॥

इतोऽप्येवमित्याह—

**तथा च लिङ्गदर्शनम् ॥ ६८ ॥**

"धारयेयुस्तं यं कामाय गृह्णीयुः ऐन्द्रवायवं गृहीत्वा सादयेदथ तं सादयेद्यं कामाय गृह्णीयुः" इति काम्यस्य धारणान्तरमैन्द्रवायवस्य ग्रहणं दर्शयति। तस्मादप्यैन्द्रवायवस्य पुरस्ताच्छुक्रादिप्रतिकर्ष इति॥

इति विंशं शुक्रादीनामुपांश्वन्तर्यामत ऊर्ध्वं प्रतिकर्षाधिकरणम्॥ २०॥

२१

"शुक्राग्रान् गृह्णीयात्" इत्यादिकाम्यवाक्येषु शुक्रादीनामैन्द्रवायवस्य पुरस्ताद् ग्रहणमिति स्थितम्। ऐन्द्रवायवादिषु च पूर्वपूर्वग्रहं गृहीत्वा सादयित्वा उत्तरमुत्तरं गृह्णातीति स्थितिः। तत्र शुक्रादिग्रहणेषु स्वस्थानात् प्रतिकृष्यमाणेषु तत्सादनमपि प्रतिकृष्यते ? न वा ? इति संशयः। ग्रहणवत् सादनस्यापि प्रकरणेन

कृत्यर्थतया ग्रहणाङ्गत्वाभावाद्वचनेन शुक्रादिग्रहणेऽपकृष्यमाणेऽपि तत्सादनं नापकृष्यत इति प्राप्ते, सिद्धान्तयति—

***सादनश्चाविशेषात् ॥ ६९ ॥**

सादनमपकृष्यते। कुतः ? अविशेषात्—सादनस्य ग्रहणाङ्गतया तदपकर्षेऽपि वचनाविशेषात्। ग्रहाणां ह्येकप्रयोगवचनपरिगृहीततया साहित्यं सम्पादनीयम्। न चैकेनाध्वर्युणा एकं ग्रहं गृहीत्वा तमनासाद्य ग्रहान्तरं ग्रहीतुं शक्यत इत्यासादनं साहित्यसम्पादनमुखेन लिङ्गाद् ग्रहणाङ्गम्। ततश्च साङ्गस्य ग्रहणस्यापि[प्रति]कर्षवचनस्य तात्पर्याद् ग्रहणापकर्षे सति पाठप्राप्तक्रमबाधेन सादनमप्यपकर्षमर्हति ॥

इतोऽप्येवमित्याह—

**लिङ्गदर्शनाच्च ॥ ७० ॥**

"धारयेयुस्तं यं कामाय गृह्णीयुः ऐन्द्रवायवं गृहीत्वा सादयेदथ तं सादयेद्यं कामाय गृह्णीयुः" इति सादनस्यापि प्रतिकर्षं दर्शयति। वस्तुतस्तु वचनादेव सादनस्यापि प्रतिकर्षसिद्धेरधिकरणमिदं मन्दप्रयोजनम् ॥

इत्येकविंशं शुक्रादिग्रहसादनप्रतिकर्षाधिकरणम् ॥ २१ ॥

२२

"शुक्राग्रान् गृह्णीयात्" इत्यादिकामवाक्येषु ग्रहणवत् सादनमपि प्रतिकृष्यत इति स्थितम्। प्रदानमपि प्रतिकृष्यते ? न वा ? इति संशये, पूर्वपक्षयति—

**प्रदानं चापि सादनवत् ॥ ७१ ॥**

प्रतिकृष्यत इति शेषः। न च प्रधानत्वादङ्गभूतग्रहणापकर्षे कथमपकर्षस्स्यादिति वाच्यम्, ग्रहणस्य हि प्रधानाङ्गत्वेऽपि यथावदानस्य प्रदानान्तत्वादनुसमयः, एवं ग्रहणमपि प्रदानान्तमिति ग्रहणस्य प्रदानोपक्रमरूपत्वात्तदपकर्षे प्रदानस्याप्यपकर्ष इत्याशयः ॥

---

* सादनश्चापि शेषत्वात्.

अथ सिद्धान्तयति—

**न वा प्रधानत्वाच्छेषत्वात् सादनं तथा ॥ ७२ ॥**

वाशब्दोऽवधारणे। सादनस्यापकर्षेऽपि न प्रदानस्यापकर्षः। कुतः? प्रधानत्वात्-प्रदानस्य प्रधानत्वेन गुणभूतसादनापकर्षेण तदपकर्षायोगात्। सादनन्तु शेषत्वात्-ग्रहणाङ्गत्वात्, तथा प्रत्येतव्यम् ग्रहणप्रतिकर्षे प्रतिकृष्टं प्रत्येतव्यम्। न चावदानस्य प्रदानान्ततया प्रदानोपक्रमरूपत्ववत्, ग्रहणस्यापि प्रदानान्ततया प्रदानोपक्रमरूपत्वात्तदपकर्षे प्रदानस्याप्यपकर्ष इति वाच्यम्। सादनं हि ग्रहाणां साहित्यार्थम्। ततश्च सादनविधिबलादेव तद्ग्रहणानां साहित्ये सति पूर्वपूर्वं ग्रहं गृहीत्वासाद्य उत्तरोत्तरो ग्रहो ग्राह्य इत्ययमर्थः पूर्वाधिकरणे स्थितः। तस्मात्सर्वेषु ग्रहेषु गृहीतेषु पश्चात् क्रमेण प्रदानमिति। न ग्रहणं नित्यप्रयोगे प्रदानोपक्रमरूपम्। ततश्च नित्यप्रयोगे यादृशं ग्रहणस्वरूपमवगतं तादृशस्यैव कामेषु प्रतिकर्षविधिलाभेन प्रदानोपक्रमत्वाभावान्न प्रदानप्रतिकर्षः॥

इति द्वाविंशं शुक्रादीनां प्रदानप्रतिकर्षाभावाधिकरणम् ॥ २२ ॥

२३

अस्ति द्वादशाहक्रतुः। तत्र सन्ति द्वादश सुत्याहाः। तत्र प्रायणीयो नाम प्रथममहः, उदयनीयो नाम द्वादशमहः, मध्ये[दश]रात्रः। तत्रादौ क्रमेण रथन्तरबृहद्वैरूपवैराजशाक्वररैवताख्यपृष्ठसामकानि षडहानि पृष्ठ्यषडहः। ततस्त्रयश्छन्दोमाः अविवाक्यं नाम दशममहरिति क्लृप्तिः। तत्रेदं श्रूयते—"ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमश्चाहः, अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहरथ शुक्राग्रमथाग्रयणाग्रम्, अथैन्द्रवायवाग्रं चतुर्थमहरथ शुक्राग्रमथाग्रयणाग्रम्, अथैन्द्रवायवाग्रं सप्तममहरथ शुक्राग्रमथाग्रयणाग्रम्" इति। तत्र प्रायणीयोत्तरभाविनि षडहे प्रथमद्वितीययोरह्नोरैन्द्रवायवाग्रत्वशुक्राग्रत्वश्रवणं किमर्थवादः? उत विधिः? इति संशये, पूर्वपक्षयति—

**त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात् ॥ ७३ ॥**

अनीकशब्दस्सेनायां प्रसिद्धः। इह ऐन्द्रवायवशुक्राग्रयणाग्रतानां समूहे गौणः। त्रयाणामनीकानां समाहारस्त्र्यनीका, 'तद्धितार्थोत्तरपदसमाहारे च' इति

द्विगुसमासः। 'अकारान्तोत्तरपदो द्विगुस्त्रियाम्' इति स्त्रीत्वम्। 'द्विगोः' इति ङीपं बाधित्वा अजादित्वाट्टापि अनीकशब्दोऽग्रत्वपरो भाष्यादिच्छायया लक्ष्यते। तथा सति प्रत्येकमैन्द्रवायवशुक्राग्रयणाग्रत्वानां प्रत्येकं त्रित्वविशिष्टानां समाहारस्त्र्यनीकेति व्याख्येयम्। न्यायोक्तेष्विति बहुत्वमविवक्षितम्। प्रकृतौ तावत् ज्योतिष्टोमे "यदि रथन्तरसामा सोमस्स्यादैन्द्रवायवाग्रान् गृह्णीयाद्यदि बृहत्सामा शुक्राग्रान्" इति श्रुतम्। ततश्च त्र्यनीकावाक्ये न्यायोक्तयोः चोदकप्राप्तयोरैन्द्रवायवशुक्राग्रत्वयोः पृष्ठ्यषडहस्य प्रथमे द्वितीये चाहनि प्राप्तत्वात्तदाम्नानं गुणार्थम्-तृतीयेऽहनि आग्रयणाग्रत्वविधेः प्रशंसार्थं स्यात्। उचितं तृतीयस्याह्न आग्रयणाग्रत्वविधानम्। प्रथमद्वितीययोरह्नोरैन्द्रवायवशुक्राग्रत्वयोरनुष्ठितयोस्तृतीयेऽहनि पुनरनुष्ठाने जामिताप्रसङ्गादित्यौचित्येन स्तुतिरुन्नेया॥

अथ सिद्धान्तयति--

## अपि वाहर्गणेष्वग्निवत् समानविधानं स्यात् ॥ ७४ ॥

अपिवेत्यवधारणे। "अथातोऽग्निमग्निष्टोमेनानुयजन्ति, तमुक्थ्येन, तमतिरात्रेण, तं त्रिरात्रेण, तं चतूरात्रेण, तं पञ्चरात्रेण, तं षड्रात्रेण, तं सप्तरात्रेण, तमष्टरात्रेण, तं नवरात्रेण, तं दशरात्रेण, तमेकादशरात्रेण" इति। तत्र द्विरात्राद्यहर्गणेषु चोदकप्रवृत्तेः प्रागेवाग्निः प्रत्यक्षमुपदिश्यते। तच्चाग्न्याश्रितगुणकामप्राप्त्यर्थम्। अतिदिष्टेषु गुणकामानामप्रवृत्तेः। उक्तं ह्यष्टमस्याद्यपादे 'गुणकामेष्वाश्रितत्वात् प्रवृत्तिस्स्यात्' 'निवृत्तिर्वा कर्मभेदात्' इति। अग्निवदिहापि षडहस्य प्रथमद्वितीययोरह्नोरैन्द्रवायवाग्रत्वशुक्राग्रत्वयोः "यदि रथन्तरसामा" "यदि बृहत्सामा" इति नैमित्तिकाग्रत्वादेरप्रवृत्तेः प्रागेव समानविधानं स्यात्—नित्यवदाम्नातैरङ्गैस्तुल्यतया विधानं स्यात्। अनैमित्तिकविधानं स्यादिति यावत्। ततश्च गर्गत्रिरात्रादिषु द्वादशाहविकारेषु द्वितीयाद्यहस्सु वामदेव्यादिपृष्ठकेषु बृहत्सामकत्वाद्यभावेऽपि शुक्राग्रत्वाद्यनुष्ठानं फलति। न चाङ्गान्तरपरिसङ्ख्यैवात्र कुतो न स्यादिति वाच्यम्। सत्यन्यस्मिन् प्रयोजने त्रिदोषदुष्टपरिसङ्ख्याश्रयणायोगादिति भावः॥

इति त्रयोविंशं त्र्यनीकाधिकरणम्॥ २३॥

२४

द्वादशाहो द्विविधः—समूढो व्यूढश्च। यत्रैन्द्रवायवाग्रत्वशुक्राग्रत्वाग्रयणाग्रत्वानां त्रिः परिवर्तमानानां समूहनं क्रमभङ्गो नास्ति, स समूढः। स च पूर्वस्मिन्नधिकरण उदाहृतः। यत्रोक्ताग्रत्वानां व्युत्क्रमेण वृत्तिः, स व्यूढः। श्रूयते हि—"ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथेतरेषां दशानामन्हामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे, अथैन्द्रवायवाग्रं पञ्चमहः, अथ द्वे शुक्राग्रे, अथाग्रयणाग्रमष्टममहः, अथ द्वे ऐन्द्रवायवाग्रे" इति। तत्राहर्गणानां द्वादशाहः प्रकृतिरित्यष्टमाद्यपादे स्थितम्–'गणेषु द्वादशाहस्य" इत्यत्र। स किमुभयविधोऽपि द्वादशाहोऽहर्गणानां प्रकृतिः? उत समूढ एव? इति संशये, पूर्वपक्षयति—

**द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत्समानविधानं स्यात् ॥ ७५ ॥**

द्वादशाहस्य व्यूढत्वं समूढत्वञ्च श्रुतं तदुभयमपि समानविधानं स्यात्—विधानं धर्माम्नानं तद्यस्य समानं साधारणं तत् समानविधानम्। उभयविधद्वादशाहसाधारणधर्मा इति यावत्। उभयविधसन्निधौ धर्माणामाम्नातत्वादिति भावः। पृष्ठवत्–यथा ज्योतिष्टोमे रथन्तरबृहत्पृष्ठसन्निधावाम्नातधर्मविशेषास्तदुभयसाधारणाः, तद्वत्॥

अथ सिद्धान्तयति—

**व्यूढो वा लिङ्गदर्शनात् समूढविकारस्स्यात् ॥ ७६ ॥**

वा शब्दोऽवधारणे। समूढ एवाहर्गणानां प्रकृतिस्स्यात्, न तु व्यूढोऽपि। यतः, व्यूढः समूढस्य गुणविकारस्स्यात्। तच्च कुतः? लिङ्गदर्शनात्–दृश्यते निश्चीयतेऽर्थोऽनेनेति दर्शनं न्यायः, लिङ्गात् न्यायाच्चेत्यर्थः। "यः कामयेत प्रजायेय इति स द्वादशरात्रेण यजेत" इति द्वादशाहस्योत्पत्तिवाक्यम्। तत्सन्निधौ चेदं नित्यवच्छ्रुतम् "ऐन्द्रवायवाग्रं प्रथममहरथ शुक्राग्रमथाग्रयणाग्रम्" इति त्रिः। समूढन्तु प्रकृत्य फलान्तरं श्रुतम्–"यः कामयेत बहु स्यां प्रजायेयेति स एतेन यजेत" इति। व्यूहनस्यैव गुणस्येदं फलम्, न तु क्रतोः। "यः कामयेत प्रजायेयेति स द्वादशरात्रेण यजेत" इति तस्य फलाम्नानात्। ततश्च यथा ज्योतिष्टोमस्य गुण-

विकारा उक्थ्यादयो न समानविधानाः, तथा व्यूढोऽपि। ननु व्यूढस्योत्पत्तिवाक्ये फलं न श्रुतम्। उत्पन्ने व्यूढे "यः कामयेत बहु स्याम्" इति फलं श्रुतम्। ततश्च व्यूहनं प्रकरणात् क्रत्वर्थम् वचनात् फलार्थमपि स्यात्, 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इति न्यायात्, दध्यादिवदिति चेत्—सत्यम्; व्यूढोत्पत्तिवाक्ये फलं न श्रूयते, तथापि फलवाक्येनापेक्षितत्वादियमुत्पत्तिः फलार्थैवेति न प्रकरणात् क्रत्वर्थत्वम्। दध्यादौ तु फलवाक्येनोत्पत्तेरनपेक्षितत्वेनानर्थक्यापत्त्या क्रत्वर्थत्वमप्याश्रीयत इति वैषम्यम्। तस्मात् समूढ एवाहर्गणानां प्रकृतिः। लिङ्गाच्च। व्यूढे तावच्छ्रूयते—"ऐन्द्रवायवस्य वा एतदायतनं यच्चतुर्थमहः" इति। व्यूढे तावच्चतुर्थेऽहन्यैन्द्रवायवाग्रता उपदिष्टा। तत्र "ऐन्द्रवायवस्य वा एतदायतनं यच्चतुर्थमहः" इति नोपपद्यते। व्यूढस्य समूढविकारत्वे तु प्रकृतिभूतं समूढमपेक्ष्य तदुपपद्यते, यच्चतुर्थमहरैन्द्रवायवस्यायतनमभूत्, तदिहाग्रयणाग्रमिति। अतोऽपि व्यूढस्समूढगुणविकारः। गुणविकारत्वाच्च न समानविधानत्वम्। अतस्समूढ एव प्रकृतिरहर्गणानाम्॥

अधिकरणस्य प्रयोजनमाह—

***तस्योभयथा प्रवृत्तिरैककर्म्यात्॥ ७७॥**

समूढोव्यूढ इत्युभयथा श्रुतस्य द्वादशाहस्य धर्माणामहर्गणेषु प्रवृत्तिः पूर्वपक्षे स्यात्। कुतः? ऐककर्म्यात्--एकशब्दस्साधारण्यवचनः।

एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा।
साधारणे समानेऽल्पे सङ्ख्यायाञ्च प्रयुज्यते॥

इति कोशः। एकं साधारणं कर्म धर्मोपदेशात्मकं यस्येति बहुव्रीहिः। धर्मोपदेशस्योभयसाधारणत्वादिति यावत्। अप्रवृत्तिरित्यपि च्छेदः। उभयप्रकारस्य तस्य द्वादशाहस्य धर्माणामहर्गणेषु अप्रवृत्तिस्सिद्धान्ते। कुतः? ऐककर्म्यात्—एकशब्दः प्राथम्ये। एकं प्रथमोपदिष्टं समूढद्वादशाहकर्म यस्य धर्मविधानस्य तद् एककर्म। धर्मोपदेशस्य समूढमात्रविषयत्वादिति यावत्॥

इति चतुर्विंशं व्यूढद्वादशाहस्य समूढविकारत्वाधिकरणम्॥ २४॥

---

* एतत्पूर्वं 'कामसंयोगादि'ति सूत्रं सूत्रपाठे दृश्यते।

२५

सन्ति गवामयने सौत्यान्यहानि त्रीणि शतानि एकषष्टिश्च। तत्राहःक्लृप्तिं ताण्डिनस्समामनन्ति। तत्रादौ यज्ञाः। तत्र प्रायणीयं प्रथममहः, चतुर्विंशं द्वितीयम्, ततः पञ्च मासाः। तत्रादौ चत्वारोऽभिप्लवमानाष्षडहाः, एकः पृष्ठ्यष्षडहः। तत्र क्रमेण त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशस्तोमानि षडहानि। तदेवं पञ्च-षडाहास्त्रिंशदहानि सम्पद्यन्ते। स मासः। एवं द्वितीयस्तृतीयश्चतुर्थः पञ्चमः। तत-स्त्रयोऽभिप्लवाष्षडहाः, तत एकः पृष्ठ्यष्षडहः, ततोऽभिजिन्नामकमेकमहः, ततस्त्रीणि स्वरसामाख्यान्यहानि इत्यष्टाविंशतिरहानि। आद्याभ्यां प्रायणीयचतुर्विंशाभ्यां सह त्रिंशदहानि। स एको मासः। सर्वाणि मिलित्वा षण्मासास्सम्पद्यन्ते। तदिदं पूर्वमर्द्धं पक्षशब्देन सकारान्तेन शालावयवपार्श्ववाचिनोपचर्यते। ततो विषुवा-न्नामैकमहः। तत उत्तरे षण्मासाः। तत्रादौ त्रीणि स्वरसामाख्यान्यहानि। ततो विश्वजिदहः। ततः पृष्ठ्यष्षडहः। तत्र षडहानि प्रातिलोम्येन त्रयस्त्रिंशत्रिणवैक-विंशसप्तदशपञ्चदशत्रिवृत्स्तोमकानि। तदिदं त्रयस्त्रिंशारम्भणमित्युच्यते। ततस्त्रयो-ऽभिप्लवाष्षडहा इत्यष्टाविंशतिरहानि। ततश्चत्वारो मासाः। तत्रादौ त्रयस्त्रिंशा-रम्भणः पृष्ठ्यष्षडहः। ततश्चत्वारोऽभिप्लवाष्षडहा इति त्रिंशदहानि। स मासः। एवं द्वितीयस्तृतीयश्चतुर्थश्च। ततस्त्रयोऽभिप्लवाष्षडहाः। आयुर्गौरिति द्वे अहनी। ततो द्वादशाहस्य प्रथमद्वादशान्तरालवर्तीनि दशाहानि स पञ्चमो मासः। ततो महाव्रतमतिरात्रश्च द्वेऽहनी। आद्यैरष्टाविंशत्या अहोभिस्सह स एको मासः। मिलित्वा षण्मासास्सम्पद्यन्ते। तदिदमुत्तरमर्द्धम्। इदमपि पक्षशब्देन शालापार्श्व-वाचिना सकारान्तेन नपुंसकलिङ्गेनोपचर्यते। मध्ये विषुवान्नाम कश्चिदहर्विशेषः। स च पृष्ठवंशत्वेनोपचर्यते। आमनन्ति हि—"यथा शालायै पक्षसी मध्यमं वंशमभिसमायच्छति, एवं संवत्सरस्य पक्षसी दिवाकीर्त्यमभिसन्तन्वन्ति" इति। दिवाकीर्त्यमिति विषुवानुच्यते। तद्ब्राह्मणस्य दिवैवाध्येतव्यत्वात्। तदेवं गवामयनस्य त्रीणि शतान्येकषष्टिश्चाहानि भवन्ति। तत्र उत्तरं पक्षोऽ-धिकृत्य श्रुतम्—"आवृत्तमुत्तरं पक्ष उपयन्ति" इति, "षड्भिरितो मासैरध्वानं यन्ति, षड्भिः पुनरायन्ति" इति च। पूर्वस्मिन् पक्षसि येन क्रमेणानुष्ठितं तत्प्राति-लोम्येनोत्तरं पक्षोऽनुष्ठेयमित्यर्थः। तदस्य गवामयनस्य समूढो द्वादशाहः प्रकृति-रित्यनुपदमेवोक्तम्। तत्र त्र्यनीकाम्नाता। सा च तत्र प्रायणीयादूर्ध्वं प्रवृत्ता।

इह च गवामयने प्रायणीयचतुर्विंशाभ्यामूर्ध्वं सा त्र्यनीका प्रवर्तते। प्रायणीयचतुर्विंशयोराहत्यैन्द्रवायवाग्रताविधानाद् आदित आरभ्य त्र्यनीकाप्रवृत्तौ द्वितीयेऽहनि शुक्राग्रतापत्त्या तद्विरोधात्। ततश्च गवामयने प्रायणीयचतुर्विंशाभ्यामूर्ध्वं तावतामह्नां पूरणाय त्र्यनीका नवाग्रत्वात्मिका। आवृत्तावश्यम्भाविन्यां किं क्षेत्रमाने कर्तव्ये यथा कृत्स्नमानदण्डमादौ निवेश्य तदुत्तरोत्तरप्रदेशेषु तथैव पुनर्मानदण्डनिवेशनेन क्षेत्रमानं क्रियते, तथा प्रायणीयचतुर्विंशाभ्यामूर्ध्वमभिप्लवषडहमारभ्य नवस्वहस्सु त्र्यनीका परिवर्तनीया? उत आदित एवारभ्य तावन्त्यहानि नवधा विभज्य आद्यभागवर्तिसुत्याहेषु ऐन्द्रवायवाग्रत्वावृत्तिः, द्वितीयभागे शुक्राग्रत्वावृत्तिरित्येवं क्रमेण नवसु विभागेषु स्वे स्वे स्थाने तत्तदग्रताभ्यास इति स्वस्थानविवृद्धिरिति संशये, पूर्वपक्षयति—

## एकादशिनीवत् त्र्यनीकापरिवृत्तिस्स्यात् ॥७८॥

परिवृत्तिः—दण्डकलितवदावृत्तिस्स्यात्। "ऐन्द्रवायवाग्रं प्रथममहः" इत्यादि त्र्यनीकावाक्येषु हि अहश्शब्द एव श्रुतो न तु भागशब्दः। एवञ्च प्रायणीयचतुर्विंशाभ्यामुत्तरस्याह्न ऐन्द्रवायवाग्रता तदुत्तरस्याह्नश्शुक्राग्रतेत्येवं नवस्वहस्सु त्र्यनीकायां समाम्नायां पुनरियमेवानीका चोदकत उपस्थिता भवति। तथा ततः परमपीत्येवं दण्डकलितवदेवावृत्तिर्युक्ता, न तु स्वस्थानविवृद्धिः। एकादशिनीवत्—एकादशत्वं परिमाणमस्याः पश्वावलेः सा एकादशिनी। 'शन्शतोर्डिनिः' इति डिनि प्रत्ययः। नान्तत्वात् ङीप्। "आग्नेयः कृष्णग्रीवः, सारस्वती मेषी, बभ्रुस्सौम्यः, पौष्णः श्यावा, शितिपृष्ठो बार्हस्पत्यः, शिल्पो वैश्वदेवः, ऐन्द्रोऽरुणः, मारुतः कल्माषः, ऐन्द्राग्नस्संहितः, अधोरामस्सावित्रः, वारुणः पेत्वः" इत्येकादशानां पशूनामन्वहमेकैकं पशुमालभते। ऐन्द्राग्नमुत्तमेऽहनीति द्वादशाहे स्थितम्। गवामयनेऽपि आद्येष्वेकादशस्वहस्सु क्रमेण आग्नेयादिपशूनामेकैकः। एवन्तदुत्तरोत्तरेष्वेकादशस्वहस्सु एकैकः पशुरित्येवं यथा दाण्डकलितवदावृत्तिः, तद्वदिहापि॥

अथ सिद्धान्तयति—

## स्वस्थानविवृद्धिर्वाह्नामप्रत्यक्षसङ्ख्यत्वात् ॥७९॥

वा शब्दोऽवधारणे। स्वस्थानविवृद्धिरेव त्र्यनीकाया भवति, न त्वन्वहमेकैकमग्रत्वमित्येवं दण्डकलितवदावृत्तिः। कुतः? अह्नामप्रत्यक्षसङ्ख्यत्वात्—

प्रत्यक्षः श्रौतोऽर्थः। अप्रत्यक्षः गौणोऽर्थः। तं चष्टे वक्तीत्यप्रत्यक्षसङ्ख्या। त्र्यनीकावाक्येष्वहश्शब्दानां गौण्या वृत्या क्रत्ववयवविशेषरूपभागानुवादपरत्वादित्यर्थः। अहश्शब्दानां स्वार्थपरत्वे हि ऐन्द्रवायवाग्रमहः, तच्च प्रथममित्येवं वाक्यभेदस्स्यात्। न चाहश्शब्दानां क्रतुभागपरत्वेऽपि ऐन्द्रवाग्रः क्रतुः भागः, स च प्रथम इत्येवं वाक्यभेदस्तुल्य इति वाच्यम्। प्रकृतौ द्वादशाहे नवानामग्रतानां विधेयता, एकस्मिन्नहनि च तदनुपपत्या क्रत्वन्तरालकालं नवधा विभज्य नवसु भागेषु क्रमादग्रता निवेशनीयेत्येवं विधेयपर्यालोचनयैव भागरूपोद्देश्यलाभात्। यथा अभ्युदयेष्टौ—"त्रेधा तण्डुलान्विभजेत्" इत्यत्र पूर्वदेवताभ्योऽपनयलक्षणविधेयसामर्थ्यपर्यालोचनया पूर्वदेवतासंयुक्ताह[वि]र्लक्षणोद्देश्यलाभः। तण्डुलपदञ्च हविर्मात्रोपलक्षणार्थम्। एवमिहाप्यहःपदं क्रतुभागोपलक्षणार्थमेव। क्रत्वन्तरालभागस्य चाहस्त्वाव्यभिचारादहश्शब्दानां तदनुवादत्वमप्युपपन्नम्। एवञ्च क्रतुभागधर्मत्वादग्रतानां परमापूर्वार्थत्वं लभ्यते। अहर्धर्मत्वे त्ववान्तरापूर्वार्थत्वमेव स्यात्। तस्मात् स्वस्थानविवृद्धिरेव ॥

इतोऽप्येवमित्याह—

**पृष्ठ्यावृत्तौ चाग्रयणस्य दर्शनात् त्रयस्त्रिंशे परिवृत्तौ पुनरैन्द्रवायवस्स्यात् ॥८०॥**

उत्तरस्मिन् पक्षसि आदितः त्रयः स्वरसामानः, ततो विश्वजित्, ततस्त्रयस्त्रिंशारम्भण एकः पृष्ठ्यषष्पडह इति क्लृप्तिः। तस्य च पृष्ठ्यषडहस्य पुनरावृत्तौ प्रातिलोम्येनावृत्तौ आद्यमहस्त्रयस्त्रिंशस्तोमकम्। तच्चोत्तरस्य पक्षसः पञ्चममहर्भवति। तस्मिन्नहन्याग्रयणाग्रत्वानुवादो वाक्यशेषे दृश्यते—"जगतीं वै छन्दांसि प्रत्यवरोहन्ति, आग्रयणाग्रा बृहत्पृष्ठानि त्रयस्त्रिंशस्तोमाः" इत्युत्तरस्मिन् पक्षसि प्रातिलोम्येनानुष्ठीयमाने गायत्र्यादिच्छन्दांसि जगतीं प्रत्यवरोहन्ति। तामादितः कृत्वानुष्ठेयानीति यावत्। ऐन्द्रवायवप्रभृतयो ग्रहा आग्रयणं प्रत्यवरोहन्ति। आग्रयणाग्राः प्रवर्तन्त इति यावत्। रथन्तरादिपृष्ठानि बृहत्प्रत्यवरोहन्ति। बृहदादितः कृत्वेतरपृष्ठानि कर्तव्यानीति यावत्। त्रिवृदादिस्तोमास्त्रयस्त्रिंशस्तोमं प्रत्यवरोहन्तीत्यर्थः। तदिदं स्वस्थानविवृद्धावेव घटते, न तु दण्डकलितवदावृत्तौ। स्वस्थानविवृद्धौ हि आदित एवारभ्य त्र्यनीका प्रवर्तते, न त्वाद्ये प्रायणीयचतुर्विंशाख्ये अहनी

वर्जयित्वा तत्प्रवृत्तिः। आद्ये भागे विंशतिसुत्यात्मके प्रवर्तमानाया ऐन्द्रवायवाग्रताया आद्ययोरह्नोर्यद्वाचनिकमैन्द्रवायवाग्रत्वं तेन विरोधाभावात्। एवञ्च प्रायणीयमाद्यमहरारभ्य त्र्यनीका प्रातिलोम्यतः प्रवर्तत इति प्रथमभागे विंशतिसुत्यात्मके तत्प्रथमभागस्याग्रयणाग्रत्वात्तदीये पञ्चमेऽहन्याग्रयणाग्रत्वदर्शनमुपपन्नं भवति। परिवृत्तौ दण्डकलितवदावृत्तौ तु ऐन्द्रवायव आदितस्स्यात्। तथाहि—दण्डकलितवदावृत्तौ आद्ये अहनी वर्जयित्वा अभिप्लवषडहादारभ्य त्र्यनीका प्रवर्तत इत्युक्तम्। ततश्च तृतीयाहरारभ्य नवसु नवस्वहस्सु त्र्यनीकायामेकोनविंशतिकृत्व आवृत्तायामेकसप्तत्यधिकं शतमहानि भवन्ति। आद्याभ्यां सह शतं त्रिसप्ततिश्चाहानि भवन्ति। सप्ताहानि पूर्वस्मिन् पक्षसि अवशिष्यन्ते, एकमहर्वर्जयित्वा तत्रत्यानि सप्ताहानि विषुवन्तम् उत्तरपक्षस्याद्यञ्चाहरभिव्याप्य परिसमापनीया। पूर्वस्मिन् यत् समाप्तं तस्यैवोत्तरे पक्षसि प्रातिलोम्येनानुष्ठेयतया पूर्वत्रापरिसमाप्तायास्त्र्यनीकाया उत्तरपक्षसि प्रातिलोम्यासम्भवेनोत्तरपक्षस्यपि द्वितीयमहरारभ्यानुलोम्येनैव तस्यास्समापनीयत्वात्। ततश्चोत्तरपक्षसि द्वितीयमहरैन्द्रवायवाग्रम्, तृतीयं शुक्राग्रम्, चतुर्थमाग्रयणाग्रम्, पञ्चममैन्द्रवायवाग्रमित्येवं पञ्चमस्याह्न आग्रयणाग्रत्वापत्या तत्राग्रयणाग्रत्वदर्शनमनुपपन्नं स्यात्। अतोऽपि स्वस्थानविवृद्धिरेव॥

अथ एकादशिनीवदित्यत्राह—

**वचनात् परिवृत्तिरैकादशिनेषु ॥ ८१ ॥**

ऐकादशिनेषु पशुषु वचनाद्दण्डकलितवदावृत्तिर्भवति। एवं हि श्रूयते-"आग्नेयं प्रथमेऽहन्यालभेत, सारस्वतं द्वितीयेऽहनि" इत्युपक्रम्य "वारुणमन्ततः" इत्युक्त्वा पुनः पर्यावृत्तेषु "आग्नेयं प्रथमेऽहन्यालभेत, सारस्वतं द्वितीये" इत्यादि। किमिह वचनं न कुर्यान्नास्ति वचनस्यातिभारः॥

इतोऽप्यैकादशिनो दण्डकलितवदावर्तन्त इत्याह—

**लिङ्गदर्शनाच्च ॥ ८२ ॥**

"प्राणा वा ऐकादशिनः, यदैकादशिनीभिरीयुरहान्यतिरिच्यन्ते" इति। दण्डकलितवदावृत्ताभिरैकादशिनीभिः यदि एकषष्टिस्त्रीणि च शतानि गावमयनिकान्य-

हानि ईयुः–प्राप्नुयुः, तदा द्वात्रिंशत् कृत्वा आवृत्ताभिरेकादशिनीभिः त्रीणि शतानि द्विपञ्चाशच्चाहानि व्याप्तानि भवन्ति। ततः नवाहानि अपशुकान्यतिरिच्यन्ते। तेष्वप्येकादशिनीप्रवृत्तौ नवभिः पशुभिर्नवस्वहस्सु परिनिष्ठितेषु पशुद्वयमतिरिच्येते-त्यर्थः। [ तद्धि दण्ड ] कलितवदेकादशिनीपरिवृत्तावेव घटते। स्वस्थानविवृद्धौ त्वेकषष्ट्यधिकशतत्रयस्यैकादशधा विभागे त्रयस्त्रिंशत् सुत्यात्मका दशभागाः। एकादशस्तु भाग एकत्रिंशत्सुत्यात्मकः। तत्र दशसु भागेष्वाद्यभागे त्रयस्त्रिंशत् सुत्यात्मके आग्नेयस्य पशोस्त्रयस्त्रिंशत्कृत्व आवृत्तिः। एवं द्वितीये भागे त्रयस्त्रि-शत्सुत्यात्मके सारस्वतस्य त्रयस्त्रिंशत्कृत्व आवृत्तिः। एवं तृतीयादिषु भागेष्वपि क्रमेण सौम्यादिसावित्रान्तानां पशूनामेकैकस्य त्रयस्त्रिंशत्कृत्व आवृत्तिः। तदेवं दशसु भागेषु त्रयस्त्रिंशत्कृत्व आवृत्तैराग्नेयादिसावित्रान्तैः पशुभिः परिनिष्ठितेषु एका-दशेंऽशे एकत्रिंशत्सुत्यात्मके वारुणेन पशुना एकत्रिंशत्कृत्व आवृत्तेन परिनिष्ठिते एकादशिनी समाप्ता। एकषष्ट्यधिकानि त्रीणि शतान्यहानि च समाप्तानि। तत्रा-हरतिरेकवादः पश्वतिरेकवादश्च नावकल्पते। तस्मादपि स्वस्थानविवृद्धिरेवेति।

तदेवं गवामयने आतिदेशिकीं त्र्यनीकामधिकृत्य भाष्येऽधिकरणमुत्प्रेक्षितम्। तदिदमनुपपन्नम्; ज्योतिर्गौरायुर्गौर्ज्योतिरायुरिति ह्यभिप्लवषडहः। एतेषु चाह-स्सु ज्योतिरादिनामधेयैरेकाहज्योतिरादिधर्मा भवन्ति। एकाहेषु च रथन्तरसाम-स्वैन्द्रवायवाग्रता, बृहत्सामसु शुक्राग्रता स्थिता। न तश्चाभिप्लवे प्रथमतृतीयपञ्चमा-नामह्नां रथन्तरसामत्वादैन्द्रवायवाग्रता, द्वितीयचतुर्थषष्ठानाञ्च बृहत्सामत्वाच्छु-क्राग्रता प्राप्नोति, न तु त्र्यनीकायां चोदकतः प्राप्तिः, चोदकान्नामधेयं बलवदिति हि सप्तमस्य चतुर्थे स्थितम् 'द्वादशाहिकमहर्गणे तत्प्रकृतित्वात्' इत्यत्र। आभिप्ल-विकान्येव चाहानि बहुशः परिवर्तन्ते गवामयने। एवं विश्वजिदादिष्वपि नामा-तिदेश इति न त्र्यनीका गवामयने चोदकतः प्राप्नुवन्ति। ततश्चातिदेशिकीं त्र्यनी-कामधिकृत्याधिकरणप्रवृत्तिवर्णनमनुपपन्नम्। किञ्च प्रकृतिभूते द्वादशाहे प्रायणी-योदयनीययोरन्तरालं दश दिनात्मकं न त्र्यनीकामात्रेण पूर्यते, किन्तु दशभिः दशमस्यैन्द्रवायवाग्रत्ववचनात्। ततश्च विकृतिभूते गवामयनेऽपि अशीत्यधिक-शतदिनात्मकं पूर्वं पक्षो दशधा विभज्यैकैकस्मिन् भागे अष्टादशदिनात्मके क्रमेणै-कैकाग्रत्वस्याष्टादश कृत्वः परिवृत्या परिनिष्ठिते सति दशमो भाग ऐन्द्रवा-

यवाग्रस्स्यात्। ततश्चोत्तरस्मिन् पक्षसि प्रातिलोम्येनानुष्ठीयमाने प्रथमो भागोऽष्टादशदिनात्मक ऐन्द्रवायवाग्रस्स्यात् । ततश्च तत्र त्रयस्त्रिंश-स्तोमकं पञ्चममहरपि तदन्तर्गतत्वादैन्द्रवायवाग्रं स्यादिति तत्राग्रयणाग्रत्वदर्शनं सिद्धान्तेऽप्यनुपपन्नमेव । प्रत्युत दण्डकलितवदावृत्तावेवेदं लिङ्गमुपपन्नम् । तथाहि—उत्तरे पक्षसि आदितस्स्वरसामाख्यानि त्रीण्यहानि। ततो विश्वजित्। ततः पञ्चमदिनप्रभृति त्रयस्त्रिंशदारम्भणः पृष्ठ्यष्षडह इति स्थितिः। अस्मिंश्च पृष्ठ्य-षडहे द्वादशाहिकपृष्ठ्यषडहधर्मा एव नामधेयेन प्राप्नुवन्ति, न तु त्र्यनीकानाम्, अतिदेशस्य प्रबलत्वात्। द्वादशाहे च पृष्ठ्यषडहे षष्ठाहे त्रयस्त्रिंशाख्ये आग्रयणा-ग्रत्वं स्थितम्। इह चोत्तरपक्षसि पृष्ठ्यषडहस्य प्रथममहस्त्रयस्त्रिंशमिति तत्राप्या-ग्रयणाग्रत्वमेव प्राप्नोति—"ऐन्द्रवायवाग्रं प्रथममहरथ शुक्राग्रमथाग्रयणाग्रमैन्द्र-वायवाग्रं चतुर्थमहरथ शुक्राग्रमथाग्रयणाग्रम्" इत्यथशब्दश्रवणेऽपि न तद्देशविशिष्ट-सुत्याहधर्मत्वमाग्रयणाग्रत्वस्य, विशिष्टोद्देशदोषप्रसङ्गात्। तथा च प्रदेशान्तरगत-स्यापि तस्य त्रयस्त्रिंशाख्यस्याह्न आग्रयणाग्रत्वं सम्पद्यत इति लिङ्गदर्शनमिदं दण्डकलितवदावृत्तावेव साधकम्। किञ्च सिद्धान्ते यज्ञभागधर्मत्वात् त्र्यनीकायाः क्रतुरेव नवधा विभाज्यः, न तु पूर्वमेव पक्षः। न चोत्तरपक्षसि प्रातिलोम्य-विधिबलात् पूर्वपक्षस्येव त्र्यनीकानिवेश इति वाच्यम्। प्रातिलोम्यवचनं हि यत् पूर्वपक्षसि कृतं तस्योत्तरपक्षसि प्रातिलोम्यमात्रं विधातुं क्षमते, न तु साधारण्येन प्राप्तस्य पूर्वस्मिन् पक्षस्येव नियमनमपि कर्तुमीष्टे। ततश्च कृत्स्नस्य क्रतोर्नवधा विभागे सति चतुर्दिनात्मक एकैको भागः। तत्र प्रथमभागे ऐन्द्रवायवाग्रता, द्वितीयभागे शुक्राग्रता, तृतीयभागे आग्रयणाग्रता, चतुर्थभागे ऐन्द्रवायवाग्रतेत्येवं षष्ट्युत्तरत्रिशतं सुत्याहाः परिनिष्ठिताः। ततः पूर्वपक्षसोऽन्ते विंशतिदिनानि, उत्तरपक्षसि आदौ विंशतिदिनानि च मध्यमो भागः। तत्र क्रमप्राप्तशुक्राग्रतैव भवतीति तद्भागमध्यगतस्योत्तरपक्षसि पञ्चधाप्यह्नस्त्र-यस्त्रिंशाख्यस्य शुक्राग्रतापत्त्या आग्रयणाग्रत्वदर्शनं सिद्धान्तेऽप्यनुपपन्नमेवेत्यादि दूषणान्युद्भाव्य वार्तिके प्रत्यक्षोपदिष्टां त्र्यनीकां गावामयनिकीमधिकृत्येद मधिकरणं योजितम्।

तद्यथा—गवामयने तावत् पूर्वं पक्षः प्रकृत्य त्र्यनीका प्रत्यक्षश्रुता "ऐन्द्र-वायवाग्रं प्रथममहरथ शुक्राग्रमथाग्रयणाग्रमथैन्द्रवायवाग्रमथ शुक्राग्रमथाग्रयणाग्र-

मथैन्द्रवायवाग्रमथ शुक्राग्रमथाग्रयणाग्रम्" इति। किमत्र दण्डकलितवदावृत्तिः ? उत पूर्वं पक्षो नवधा विभज्य विंशतिसुत्यात्मकैकैकस्मिन् भागे एकैकाग्रता ? इति संशयः। नामधेयापेक्षया प्रत्यक्षवचनस्य बलवत्वाद् ज्योतिरादावपि भवति त्र्यनीकेति न तामधिकृत्याधिकरणप्रवृत्तेर्विरोधः। प्रत्यक्षविहितत्र्यनीकया दशमञ्चाहरैन्द्रवायवमिति बाध्यत इति नवधैव विभागः। तत्र 'एकादशिनीवत् त्र्यनीकाविपरिवृत्तिस्स्यात्' इति पूर्वपक्षसूत्रं पूर्ववदेव योज्यम्। 'स्वस्थानविवृद्धिर्वा' इति सिद्धान्तसूत्रमपि पूर्ववदेव योज्यम्। तथैव लिङ्गदर्शनसूत्रमपि, दशधा विभागासम्भवात्। किञ्चेत्यपि न (?) नामातिदेशापेक्षया प्रत्यक्षत्र्यनीकावचनस्य प्रबलत्वात्। प्रत्युतेत्यपि न (?) नचैवमपि सिद्धान्ते त्र्यनीकाविधिनैव पूर्वपक्षसि प्रथमभागान्तर्गतयोराद्ययोः प्रायणीयचतुर्विंशयोरह्नोरैन्द्रवायवाग्रत्वसिद्धेः पुनस्तयोरैन्द्रवायवाग्रत्वविधिर्व्यर्थ इति वाच्यम्, भागधर्मत्वे सति परमापूर्वप्रयुक्ततया प्राप्नुवन्त्याप्यैन्द्रवायवाग्रतया तत्तदहरपूर्वप्रयुक्तत्वसिध्यर्थं पुनर्विधानात्। तत्फलन्तु गवामयनादन्यत्र स्वतन्त्रफलार्थ[त्वेन]विहिते एकाहभूते प्रायणीये चतुर्विंशे चासत्यपि रथन्तरसामत्वे ऐन्द्रवायवाग्रत्वनियमसिद्धिरिति ॥

इति पञ्चविंशं संवत्सरसत्रे त्र्यनीकाविवृध्यधिकरणम् ॥२५॥

## २६

समूढद्वादशाहे षडहेऽन्तरालके गायत्रं त्रैष्टुभं जागतमिति छन्दःक्लृप्तिः। व्यूढन्तु द्वादशाहं प्रकृत्य श्रूयते—"छन्दांसि वा अन्योन्यस्य लोकमभ्यध्यायन् गायत्री त्रिष्टुभा त्रिष्टुप् जगत्या जगती गायत्र्या" इति। त्रिष्टुभो लोकं स्थानं गायत्री, जगत्यास्स्थानं त्रिष्टुप्, गायत्र्यास्स्थानं जगतीत्येवमन्योन्यस्य स्थानं छन्दांस्यभ्यध्यायन्। त्रिष्टुभादीनां स्थाने गायत्र्यादीनि छन्दांसि कर्तव्यानीति यावत्। सोऽयं छन्दोव्यतिक्रम इत्युच्यते। अस्ति ज्योतिष्टोमे प्रातस्सवने सोमभक्षमन्त्रे "प्रातस्सवनस्य गायत्रच्छन्दस उपहूतस्योपहूतो भक्षयामि" इति गायत्रशब्दनिर्देशः। तथा माध्यन्दिनसोमभक्षमन्त्रे "माध्यन्दिनस्य सवनस्य त्रिष्टुप् छन्दसः" इति त्रिष्टुप् शब्दनिर्देशः। तथा तृतीयसवनसोमभक्षणमन्त्रे "तृतीयस्य सवनस्य जगतीच्छन्दसः" इति जगतीशब्दनिर्देशः। तथा ज्योतिष्टोमे क्रमेण बहिष्पवमानमाध्यन्दिनार्भवपवमानस्तोत्राङ्गमन्त्रेषु गायत्रादिशब्दनिर्देशः। तथा

दर्शपूर्णमासयोः परिधिषु "गायत्रो मध्यमः परिधिस्त्रैष्टुभो दक्षिणो जागत उत्तरः" इत्यर्थवादे गायत्रादिशब्दनिर्देशः। तथा ज्योतिष्टोमे श्रुतम्—"अष्टाकपाल ऐन्द्रः पुरोडाशः प्रातस्सवने एकादशकपालो माध्यन्दिने सवने द्वादशकपालस्तृतीय-सवने" इति। तेषु चास्ति गायत्र्यादिशब्दनिर्देशः—"यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यदेकादश कपालस्त्रिष्टुभैवास्मिन् इन्द्रियं दधाति, यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति" इति। यद्यप्ययमर्थवादो जातेष्टिप्रकरणे पठितः, तथापि शाखान्तरे सवनीयप्रकरणेऽपि पठित इति न दोषः। एते च निर्देशाश्चोदकपरम्परया गावमयनिकेष्वपि सोमभक्षणादिषु यथायथं प्राप्ताः। किमिह छन्दोव्यतिक्रमः गायत्र्यादिरूपेण स्तुतानामर्थानामपि भवेत्? उत मन्त्राणामेव? इति संशयः। तत्र छन्दसां स्वरूपेणान्योन्यस्थानप्राप्तिलक्षण व्यति-क्रमासम्भवान्मन्त्रगतगायत्र्याः छन्दस्सम्बन्धित्वमात्रेण तद्व्यतिक्रमो वाच्यः। गायत्र्यादिच्छन्दस्सम्बन्धित्वञ्च मन्त्रेऽर्थवादे वा गौण्या वृत्त्या तच्छन्दनिर्देशमात्रे-णार्थानामप्यस्तीति छन्दस्सम्बन्धित्वाविशेषान्मन्त्राणामर्थानाञ्च छन्दोव्यतिक्रमः। ततश्च गायत्रप्रातस्सवनीयो भक्षः त्रिष्टुप् छन्दोमाध्यन्दिनीयभक्षस्य स्थाने माध्य-न्दिनसवने कर्तव्यः, माध्यन्दिनीयश्च त्रिष्टुप्शब्दितभक्षः जगतीशब्दिततृतीय सवनीयभक्षस्य स्थाने तृतीयसवने कर्तव्यः, तृतीयसवनीयश्च जगतीशब्दित भक्षः गायत्रीशब्दितप्रातस्सवनीयभक्षस्य स्थाने प्रातस्सवने कर्तव्यः। तथा बहि-ष्पवमानो माध्यन्दिने माध्यन्दिनपवमानस्तृतीयसवन आर्भवपवमानः प्रातस्सवने कार्यः, सवनत्रयस्थपवमानानां क्रमेण "श्येनोऽसि गायत्रच्छन्दांसि वर्णोऽसि त्रिष्टुप् छन्दोऽसि जगतीच्छन्दः" इति मन्त्रेषु गायत्रत्वादिसंस्तवात्। तथा मध्यमः परिधिस्स्थविष्ठो दक्षिणस्य परिधेस्स्थाने, दक्षिणश्चाणीयान् द्राघीयानुत्तरस्य स्थाने, उत्तरश्चाणिष्ठो ह्रसिष्ठो मध्यमस्य स्थाने परिधातव्यः। "गायत्रो मध्यमः परिधिः" इत्यादिसंस्तवात्। अष्टाकपालो माध्यन्दिने एकादशकपालस्तृतीयसवने द्वादशकपालः प्रातस्सवने कार्यः, तेष्वपि गायत्रत्वादिसंस्तवात्। तथा मन्त्रेष्वपि गायत्र्यादिशब्दः त्रिष्टुबादिशब्दानां स्थाने प्रक्षेप्तव्या इति प्राप्ते, सिद्धान्तयति—

**छन्दोव्यतिक्रमाद्व्यूढे भक्षकपालपवनमानपरिधिमन्त्राणां यथाशक्ति वचनमूहवत् स्यात् ॥ ८३ ॥**

व्यूढद्वादशाहभक्षादीनां मध्ये यथाशक्ति छन्दश्शब्दो मुख्यवृत्तिमनतिक्रम्य छन्दसामेवान्योन्यस्थानप्राप्तिलक्षणव्यतिक्रमवचनाद् गायत्रादिशब्दानामेवोह इव प्रयोगः स्यात्, अर्थानां स्वतो गायत्र्यादित्वे प्रमाणाभावाद् गौणार्थग्रहणस्य च सत्यां गतावन्याय्यत्वाद् गायत्र्यादिनिर्देशस्त्वर्थवादमात्रम्। एवञ्च गायत्रीच्छन्दः त्रिष्टुभस्स्थाने कुर्यादिति वाक्यार्थेऽवगते यत्र मन्त्रे स्वातन्त्र्येण वान्यविशेषणत्वेन वा त्रिष्टुप् प्रकाशिता तत्र गायत्रीप्रकाशनं कार्यमिति फलति। ततश्च त्रिष्टुप् शब्दस्य लोपः तत्स्थाने गायत्रीप्रकाशनार्थं तत्पदप्रक्षेपश्चार्थिकः। एवञ्च "श्येनोऽसि त्रिष्टुप्छन्दाः" इत्येवमादिमन्त्रप्रयोगः प्रातस्सवनादौ कार्य इति न पदार्थेषु स्थानबाधः। एतेन छन्दसां स्वरूपेण व्यतिक्रमो नास्तीति निरस्तम्, उक्तरीत्या छन्दसामेव मुख्यव्यतिक्रमसम्भवात्॥

इति षड्विंशं छन्दोव्यतिक्रमाधिकरणम्॥२६॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकौतूहलवृत्तौ दशमध्यायस्य पञ्चमः पादः॥

## अथ दशमाध्यायस्य षष्ठः पादः

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

अथास्मिन् दशमस्य षष्ठपादे एकाहाहर्गणात्मकसोमयागविषयो बाधो व्युत्पाद्यते। सामसमाम्नाये तावत् प्रायेण सामान्येकैकस्यामेव ऋच्युत्पन्नानि। कतिपयानि तु सामानि सीमासन्तन्यादीनि "विदामवन्" इत्यादि तृचेषूत्पन्नानि। तत्र तृचेषूत्पन्नानां साम्नां यज्ञकर्मणि तृचेष्वेव गानमिति निर्विवादम्। यानि तु रथन्तरादिसामान्येकैकस्यामृच्युत्पन्नानि तानि किं यज्ञकर्मण्येकैकस्यामेव ऋचि गेयानि ? उत तृचेष्वेव ? इति संशये, पूर्वपक्षयति--

**एकर्चस्थानि यज्ञे स्युः स्वाध्यायवत् ॥ १ ॥**

यज्ञकर्मणि रथन्तरादिसामानि एकर्चस्थान्येव गेयानि। एका च सा ऋक्च एकर्चः 'ऋक् पूः' इत्यच् प्रत्ययः समासान्तः। अर्धर्चादित्वान्न स्त्रीत्वम्। एकर्चेषूत्पन्नानि एकर्चस्थानि। एकैकस्यामेव ऋचि गेयानीति यावत्। स्वाध्यायवदिति हेतुगर्भो दृष्टान्तः। अध्ययनवेलायामेकैकस्यामेव ऋचि गीतत्वात्तदैक्यरूप्याय यज्ञेऽपि तथैव गेयानि, न तु तृचेषु। अन्यथा तृचगाने सति स्वाध्यायप्राप्तमेकर्चस्थत्वं बाध्येत, स्वाध्यायप्राप्तसामस्वरूपस्योहलक्षणविकारश्चापद्येत। "एकं साम तृचे क्रियते स्तोत्रीयम्" इति वर्तमानापदेशत्वात् तृचोत्पन्नसामसु प्राप्ततृचगानानुवादकम्। एवं "यद्योन्यां तदुत्तरयोः" इत्यपि ॥

अथ सिद्धान्तयति--

**तृचे वा लिङ्गदर्शनात् ॥ २ ॥**

दृश्यते निश्चीयतेऽनेनेति दर्शनं न्यायः, लिङ्गात् न्यायाच्चेत्यर्थः। न्यायो यथा-"ऋक् सामोवाच मिथुनी सम्भवावेति, सोऽब्रवीन्नैव त्वं ममालमसि जायात्व

इति, द्वे भूत्वोचतुर्मिथुनीसम्भवावेति सोऽब्रवीन्नैव युवां ममालं स्थो जायात्वे इति, तास्तिस्रो भूत्वोचुर्मिथुनीसम्भवामेति, सोऽब्रवीत् सम्भवामेति। तस्मादेकं साम तृचे क्रियते स्तोत्रीयम्" इति श्रुतम्। अत्र च [1]ऋग्रूपस्त्रियास्सामपुरुषस्य च संवादेषु एकां द्वे च प्रत्याख्याय तिसृणामृचां सामपुरुषाङ्गीकृतत्वाभिधानेन तत्प्रशंसावगमबलेन क्रियत इति वर्तमानापदेशस्यापि विधिशक्तिरुत्तभ्यते। तस्मादेकर्चोत्पन्नसामसु तृचविधायकमेवेदम्, न तु निरर्थकप्रायोऽनुवादः। अतो यज्ञे तृचेष्वेव गानम्। लिङ्गाच्च। रथन्तरस्तोत्रे श्रुतम्—"अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति द्व्यक्षरेणोत्तरयोः" इति। तदिदं तृचगान एवोपपद्यते। एकर्चगाने तु प्रथमाया इति उत्तरयोरिति चानुपपन्नं स्यात्। अतोऽपि यज्ञे तृचेष्वेव गानमिति॥

इति प्रथमं साम्नां तृचगानाधिकरणम्॥ १॥

२

ज्योतिष्टोमे "अभि त्वा शूर नो नुमः" इत्यादि तृचे रथन्तरं सामेति स्थितम्। तत्र "अभित्वा शूर" इत्यस्यामृचि "स्वदृर्शम्" इतीन्द्रविशेषणमिति स्थितिः। तत्र "रथन्तरे प्रस्तूयमाने संमीलयेत् स्वर्दृशं प्रति वीक्षेत" इति श्रुतम्। किमिह स्वर्दृक्छब्दस्य वीक्षणस्य चाङ्गाङ्गिभावः—स्वर्दृक्छब्देन वीक्षेतेति स्वर्दृक् शब्दो वीक्षणाङ्गम् वीक्षणेन स्वर्दृक्शब्दं संस्कुर्यात् इति वा? तथासति वीक्षणं स्वर्दृक्शब्दाङ्गमिति? उत स्वर्दृक् शब्दोच्चारणकाले वीक्षेतेति कालार्थस्संयोगः? इति संशयः। कालार्थसंयोगे तावत् स्वर्दृक्छब्देन वस्तुत इन्द्ररूपार्थपरेण स्वर्दृक् शब्दः प्रथमं लक्षणीयः, तेन च लक्षितेन स्वर्दृक्छब्दकाले वीक्षेतेत्येवं कालो लक्षणीयः। अङ्गाङ्गिभावपक्षे तु स्वस्मिन्नेव लक्षणेति युज्यतेऽङ्गाङ्गिभावः। यद्यपि कर्म प्रवचनीययोग[2] निमित्तकद्वितीयाबलाल्लक्ष्यलक्षणभावसम्बन्ध एव शब्दतः प्रतीयते, तथापि न तत्र तात्पर्यम्, वीक्षणोपलक्षणार्थत्वे स्वार्थोच्चारणाभावेन परार्थतयैव स्वर्दृक् शब्दस्योच्चारणापत्तेः, किन्तु स्वर्दृशा वीक्षेतेति विभक्तिविपरिणामेन स्वर्दृक् शब्दस्य वीक्षणाङ्गत्वेऽवगतेऽर्थप्राप्तो लक्ष्यलक्षणभावः प्रतिनानूद्यते। वीक्षणस्य स्वर्दृक्शब्दाङ्गत्वन्तु "गार्हपत्यं प्रतीक्षते" इत्यादिवत् प्रतिशब्दं निरर्थकमाश्रित्य वीक्षणेन स्वर्दृशं संस्कुर्यादित्येवं कर्मणि द्वितीययैवोपपाद्यमिति प्राप्ते, सिद्धान्तयति—

१. ऋग्लक्षण. ख. २. प्रतियोग अं.

## स्वर्दृशं प्रति वीक्षणं कालमात्रं परार्थत्वात् ॥ ३ ॥

स्वर्दृशं प्रतीति वाक्ये वीक्षणं स्वर्दृक्छब्दस्य कालोपलक्षणमात्रम्—स्वर्दृक्छब्दकाले वीक्षेतेति, न त्वङ्गाङ्गिभावः। कुतः? परार्थत्वात्-स्वर्दृक् शब्दस्य पृष्ठस्तुतिनिष्पादनार्थत्वात्। अयमाशयः—न तावत् स्वर्दृक्शब्दस्य वीक्षणाङ्गत्वविधिस्सम्भवति, अनपेक्षितत्वात्। "अभि त्वा शूर नो नुमः" इत्यस्या हि ऋच एकदेशभूतः स्वर्दृक्शब्दः। सा च ऋक् क्रमप्रकरणाभ्यां स्तोत्राङ्गत्वेन विनियुक्ता। अतस्तदेकदेशस्य स्वर्दृक्शब्दस्यापि स्तोत्रार्थतया निराकाङ्क्षत्वान्न वीक्षणापेक्षा। न च निराकाङ्क्षस्यापि वचनाद्वीक्षणे विनियोगोऽस्त्विति वाच्यम्, स्वर्दृक्शब्दस्येन्द्रवाचिद्वितीयान्त[शब्द]समानाधिकरणस्य स्वर्गदृष्टवचनस्य द्वितीयान्तस्य प्रकाशनरूपदृष्टद्वारा वीक्षणे विनियोगसम्भवात्, अदृष्टद्वारा विनियोगस्य चात्यन्तजघन्यत्वात्। वीक्षणस्य रागप्राप्तस्य क्रत्वङ्गत्वाभावेन तादर्थ्ये आनर्थक्यप्रसङ्गाच्च। अतो न वचनबलादपि वीक्षणे विनियोगः। न च सम्पदादित्वाद् भावे क्विपमाश्रित्य स्वर्दृक्शब्दस्य वीक्षणेऽपि सामर्थ्यं सूपपादमिति वाच्यम्। तथा सति स्वश्शब्दानर्थक्यात्, दृक्छब्दमात्रेण तत्प्रकाशनोपपत्तेः। तथा च स्वः पदे कर्मार्थके उपपदे कर्तरि क्विपि व्युत्पन्नस्य स्वर्दृक् शब्दस्येन्द्रवाचिशब्दसमानाधिकरणस्य "नोनुमः" इत्यनेन सम्बन्धस्य इन्द्रस्तुतौ सम्भवत्सामर्थ्यकस्य तत्स्तुत्या निराकाङ्क्षत्वान्न वीक्षणे विनियोगसम्भवः। नापि वीक्षणेन स्वर्दृक् शब्दं संस्कुर्यादित्येवं वीक्षणस्य स्वर्दृक् शब्दाङ्गत्वविधिसम्भवः, वीक्षणस्य रागप्राप्तस्य दृष्टेनैव प्रयोजनेन निराकाङ्क्षतया तस्य स्वर्दृगर्थत्वस्यानपेक्षितस्य विधिप्रसङ्गात्। तस्मान्न स्वर्दृक् शब्दस्यापि वीक्षणाङ्गत्वम्। किञ्चोभयथाप्यङ्गाङ्गिभावविधौ "रथन्तरे प्रस्तूयमाने संमीलयेत्" इत्यस्य "स्वर्दृशं प्रति वीक्षेत" इत्यस्य[च]परस्परस्पर्शाभावात् वाक्यान्तरं स्यात्। कालोपलक्षणत्वपक्षे तु कियन्तं कालं सम्मीलयेदित्यवध्याकाङ्क्षायां स्वर्दृग् वाक्यस्य तदवधिप्रतिपादनेनैकार्थ्यसम्भवान्न वाक्यान्तरत्वम्। तदयमर्थः-रथन्तरे प्रस्तूयमाने सम्मीलयेदा स्वर्दृक् शब्दादिति। न चैवमपि "रथन्तरे प्रस्तूयमाने" इति सम्मीलनविधिः, "स्वर्दृशं प्रति" इति तदवधिविधिरिति वाक्यान्तरत्वं दुर्वारमिति वाच्यम्। संमीलनस्य हि स्वर्दृक् शब्दोच्चारणावधिकत्वे ततः परं संमीलनाभावाद्रागप्राप्तं वीक्षणं

वीक्षेतेत्यनूद्यत इति न वीक्षेत इत्यस्य वाक्यान्तरत्वम्। प्रतिना कर्मप्रवचनीयेन श्रुत्यैव लक्षणाभावप्रतीतेरुक्तं पारार्थ्यमपि न दोषः। अतः कालार्थ एव संयोगः। एवञ्च प्रतिशब्दस्य नात्यन्तानर्थक्यम्, नापि विभक्तिविपरिणामः। प्रयोजनं पूर्वपक्षे-"अभि त्वा शूर" इत्यभिवत्यामृच्युत्पन्नं रथन्तरं साम "यद्योन्यां तदुत्तरयोर्गायति" इति "रथन्तरं गायति" इति "रथन्तरमुत्तरयोर्गायति" इति वचनतो यदा उत्तरयोर्गीयते, तदोत्तरयोरभिवतीस्थानापन्नत्वान्न तत्र वीक्षणम्। तत्र स्वर्दृक्शब्दाभावात्। सिद्धान्ते तु 'अनपायो हि कालस्य लक्षणं हि पुरोडाशौ'()इति वक्ष्यमाणन्यायेनोपलक्षणीभूतस्वर्दृक् शब्दाभावेऽपि उपलक्ष्यकालस्यानपायात् स्वर्दृक्शब्दाभिव्यञ्जकगीतिकाले वीक्षणसिद्धिरिति ॥

इति द्वितीयं स्वर्दृगधिकरणम् ॥ २ ॥

३

अस्ति द्वादशाहे पृष्ठ्यष्षडहः। तत्र सन्ति षण्णामप्यह्नां क्रमाद्रथन्तरबृहद्वैरूपवैराजशाक्वररैवतानि पृष्ठसामानि। गवामयनेतु श्रुतम्-"पृष्ठ्यष्षडहो बृहद्रथन्तरसामा कार्यः" इति। तत्र किमेकैकस्मिन्नहनि सामद्वयम्? उतैकैकस्मिन्नहन्यन्यतरत् साम? इति संशये, पूर्वपक्षयति—

**पृष्ठ्यस्य युगपद्विधेरेकाहवद्द्विसामत्वम् ॥ ४ ॥**

संसवगोसवाद्येकाहवदेकैकस्मिन्नहनि द्विसामत्वं प्रत्येतव्यम्। कुतः? पृष्ठ्यस्य युगपद्विधेः-पृष्ठस्तोत्रसाधनस्य बृहतो रथन्तरस्य चेतरेतरसमुच्चितत्वेनैव विधानात्; बृहच्च रथन्तरञ्च बृहद्रथन्तरे, ते सामनी यस्य सः बृहद्रथन्तरसामेति द्वन्द्वगर्भो ह्ययं बहुव्रीहिः। ततश्चेतरेतरयुक्तयोरेव षडहसम्बन्धाद्यत्रैकं साम प्रयोक्तव्यं तत्र सामान्तरसहितमेव प्रयोक्तव्यमित्यवगमादेकैकमहरुभयसामकं कार्यम्। न च बृहच्च रथन्तरञ्च साम यस्येति त्रिपदबहुव्रीहिमाश्रित्येतरेतरनिरपेक्षयोरेव साम्नोर्विधानसम्भवान्न समुच्चय इति वाच्यम्, 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यं समासवचनम्' इति कात्यायनवचनेन त्रिपदबहुव्रीहौ द्वन्द्वसमासावश्यम्भावात् नित्यग्रहणेन महाविभाषाधिकारस्य तदितरविषयत्वात्, यथोत्तरञ्च मुनीनां प्रामाण्यमिति वैयाकरणसिद्धान्तानुसारेण पाणिनीयविभाषाधिकारस्य

तथा सङ्कोचावश्यम्भावात्। ततश्च प्रथमं बृहच्च रथन्तरञ्चेति द्वन्द्वं कृत्वा बृहद्रथन्तरे सामनी यस्येति द्वन्द्वगर्भबहुव्रीह्याश्रयणेनेतरेतरसाहित्येनैव साम्नोर्वि-धानात् प्रत्यहं समुच्चयः ॥

अथ सिद्धान्तयति—

**विभक्ते वासमस्तविधानात्तद्विभागेऽविप्रतिषिद्धम् ॥ ५ ॥**

वा शब्दोऽवधारणे। बृहद्रथन्तरसामनी विभक्ते। एवञ्च[न]समुदिते एव षडहे भवतः। प्रत्यहमन्यतरत् स्यादिति यावत्। कुतः? असमस्तविधानात्-बृहद्रथन्तरञ्च साम यस्येति त्रिपदबहुव्रीहिमाश्रित्यासमस्तयोरितरेतरनिरपेक्षयोरेव साम्नोर्विधानात्। कात्यायनवचनन्तु नेह प्रवर्तते। तथा हि—वाक् च त्वक् च प्रिया यस्येति, पञ्च गावो धनं यस्येति च त्रिपदबहुव्रीहाववान्तरद्वन्द्वतत्पुरुषयोर्महा-विभाषया विकल्पे प्राप्ते कदाचिद् द्वन्द्वतत्पुरुषाभावे 'द्वन्द्वाच्चुदषहान्तात् समाहारे' 'गोरतद्धितलुकि' इति समासान्तप्रत्ययाभावे सति वाक्त्वक्प्रियः पञ्चगोधन इत्यपि प्रयोगः प्रसज्येत, वाक्त्वचप्रियः पञ्चगवधनमित्येव शिष्यते। अतोऽवा-न्तरद्वन्द्वतत्पुरुषयोर्नित्यत्ववचनमिति महाभाष्ये स्थितम्। एवञ्च यत्रावान्तरद्वन्द्व-तत्पुरुषयोः प्रवृत्तावप्रवृत्तौ च शब्दरूपान्यत्वम्, तत्रैवेदं कात्यायनवचनं प्रवर्तते। प्रकृते बृहद्रथन्तरसामेति त्रिपदबहुव्रीहौ द्वन्द्वप्रवृत्तौ तदप्रवृत्तौ वा न रूपान्यत्वं पश्यामः। अतो नात्र द्वन्द्वस्य नित्यता। ननु मास्तु द्वन्द्वस्यात्र नित्यता, तथापि द्वन्द्वगर्भद्विपदबहुव्रीहिर्वा अद्वन्द्वगर्भत्रिपदबहुव्रीहिर्वेत्यत्र विनिगमनाविरह इत्यत्र आह—तद्विभागेऽविप्रतिषिद्धमिति। तत्-चोदकवाक्यं त्रिपदबहुव्रीहिमाश्रित्य विभागे सति परस्परनिरपेक्षतयैव साम्नोर्विधाने सति, अविप्रतिषिद्धम्-अवि-रुद्धम्। प्रकृतौ हि द्वादशाहे पृष्ठ्यषडहे प्रथमेऽहनि रथन्तरम्, द्वितीयेऽहनि बृहत्, तृतीयेऽहनि वैरूपमित्येवं प्रत्यहमेकैकं साम पृष्ठस्तोत्रे विहितम्। विकृतावपि गवामयने षडहे तथैव भवितव्यम्। द्वन्द्वगर्भबहुव्रीहिमाश्रित्य प्रत्यहं साहित्यैनैव साम्नोर्विध्याश्रयणे तु चोदकबाधस्स्यात्। अतिदेशानुरोधादेव प्रथमेऽहनि रथन्तरं द्वितीये बृहदित्येवं क्रमावगते बृहद्रथन्तरसामेति पाठप्राप्तं बृहतः प्राथम्यमपि बाध्यते। अन्यथा गवामयने पूर्वपक्षसि बृहद्रथन्तरसामेति विहितेऽस्य बृहद्रथ-न्तरसामत्वस्य बृहत्प्राथम्याश्रयणे सति, उत्तरपक्षसि प्रातिलोम्येनानुष्ठाने रथन्तर-

प्राथम्यं स्यात्। तथासति "जगतीं वै छन्दांसि प्रत्यवरोहन्त्याग्रयणं ग्रहा बृहत्पृष्ठानि त्रयस्त्रिंशस्तोमाः" इति, तत्र बृहत्प्राथम्यदर्शनमनुपपन्नं स्यात्। त्रिपदबहुव्रीहौ सामविशेषणबृहद्रथन्तरशब्दयोः 'सप्तमीविशेषेण बहुव्रीहौ' इत्यन्यतरस्य पूर्वं प्रयोज्यत्वाद्विशेषात् कश्चित्प्रयुक्त इति पाठक्रमश्च न प्रयोजकः। ननु वाक्त्वचप्रियः पञ्चगवधन इत्यादौ यत्र द्वन्द्वतत्पुरुषयोः प्रवृत्तौ अप्रवृत्तौ च रूपान्यत्वं तत्रैव 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यं समासवचनम्' इति प्रवर्तते, नान्यत्रेत्यस्तु। प्रकृते तु द्वन्दगर्भबहुव्रीहौ बृहद्रथन्तरशब्दे 'समासस्य' इत्यन्तोदात्तत्वम्। त्रिपदबहुव्रीहौ तु 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति बृहच्छब्दाकारस्योदात्तमिति स्वरभेदादस्ति रूपान्यत्वम्, स्वरभेदस्यापि रूपभेदप्रयोजकत्वात्। 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इत्युपक्रम्य "स्थूलपृषतीमनड्वाहमालभेत" इति श्रुतिमुदाहृत्य स्वरविशेषेणार्थभेदस्य महाभाष्ये उदाहृतत्वात्। तत्रैव "मन्त्रो हीनस्स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह" इत्यादि वचनाच्च। अतोऽत्र द्वन्द्वस्यावश्यकत्वात् तेन च साहित्यप्रतीतेरुभयोरेव साम्नोरन्वहं प्रवृत्तिर्युक्तेति चेत्, अत्र ब्रूमः–गवामयनमधिकृत्य हि छान्दोग्यब्राह्मणे पठ्यते—"षडहो बृहद्रथन्तरसामा कार्यः" इति। छन्दोगाश्च ब्राह्मणभागं सर्वमपि भाषिकस्वरेणाधीयते। उक्तञ्च—

छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः।
उच्चनीचस्वरं प्राहुः सर्वो भाषिक उच्यते ॥ इति।

सूत्रकारश्च द्वादशस्य तृतीये वक्ष्यति—'मन्त्रोपदेशो वा न भाषिकस्य प्रायापत्तेर्भाषिकश्रुतिः' इति। एतच्च तत्रैव भाष्यवार्तिकादिषु स्पष्टम्। स्पष्टतरञ्चास्माभिरुपपादयिष्यते। एवञ्च छन्दोगब्राह्मणगतस्य "षडहो बृहद्रथन्तरसामा कार्यः" इत्यस्य भाषिकस्वरकतया तत्र बहुव्रीहिद्वन्द्वस्वरसयोरप्रसक्तत्वात् तत्रापि रूपान्यत्वस्य दूरापास्तत्वान्न कात्यायनीयनित्यद्वन्द्ववचनस्य तत्र प्रवृत्तिरिति चोदकानुग्रहाय त्रिपदबहुव्रीहिमाश्रित्य प्रत्यहमन्यतरत् सामेत्येवाश्रयणीयम्। अस्तु वा द्वन्द्वः, तथापि न साहित्येन साम्नोर्विधिलाभः। तथाहि–उत्तरपदशब्दस्समासस्य चरमावयवे रूढ इति वैयाकरणसमयः। ततश्च द्वन्द्वे कृते द्विपदबहुव्रीहिर्न सम्भवति, बहुव्रीहिप्रवृत्तेः प्राक् सामशब्दस्योत्तरपदत्वाभावात्। एवञ्च पूर्वं बहुव्रीहौ कृते पश्चात् समासान्तादिप्रवृत्त्यर्थं द्वन्द्वप्रवृत्तिर्वक्तव्या।

तथा च पूर्वं बहुव्रीहिवेलायामन्यपदार्थे सामनि परस्परानन्वितयोरेव बृहद्रथन्तरयोरन्विततया पश्चादवगम्यमानमपि साहित्यं षडहापेक्षितमेवोपपाद्यम्, न तु तदवयवैकैकदिनापेक्षम्। यथा 'मासं देवदत्तो दधिपयोभ्यां भोजयितव्यः' इत्युक्ते मासापेक्ष एवेतरेतरयोगः, न तु तदवयवदिनापेक्षः, तद्वत्। तस्मात् प्रत्यहमन्यतरत् सामेत्यास्तां तावत् ॥

**इति तृतीयं गावामयनिकपृष्ठ्यषडहे बृहद्रथन्तरयोर्विभज्य गानाधिकरणम् ॥ ३ ॥**

४

ज्योतिष्टोमे तावत् क्रतुपशव एकादशिनाश्च विकल्प्यन्ते। तत्र सुत्यायां पश्वेकादशिनी समस्ता भवतीति स्थितिः। द्वादशाहे तु "आग्नेयं पशुं प्रायणीयेऽहन्यालभन्ते। श्वोभूते सारस्वतीं मेषीम्" एवं विहृतानामैकादशिनानामेकैकमन्वहमालभन्ते। "आग्नेयैकादशनीयेऽहन्यैन्द्राग्नं वा" इति विधाय पक्षान्तरमाम्नातम्— "ऐकादशिनान् प्रायणीयोदयनीययोरालभेरन्" इति। तत्र किमेकादशिनी समस्ता प्रायणीयेऽहनि, तथोदयनीयेऽप्यहनि ? उत कतिचिदेकादशिनाः पशवः प्रायणीयेऽहनि, कतिचिदुदयनीये ? इति संशये, पूर्वपक्षयति—

**समासस्त्वैकादशिनेषु तत्प्रकृतित्वात् ॥ ६ ॥**

तुः प्रत्यवस्थाने। अस्तु "बृहद्रथन्तरसामा कार्यः" इत्यत्र व्यस्तयोरेव साम्नोर्विधिः। इह तु प्रायणीयोदयनीययोरैकादशिनेषु पशुषु विधीयमानेष्वेकैकस्मिन्नहनि समासः-सामस्त्यमेव भवतु। कुतः ? तत्प्रकृतित्वात्-द्वादशाहस्य ज्योतिष्टोमप्रकृतित्वात्। ज्योतिष्टोमे चैकस्यां सुत्यायां समस्तैवैकादशिनी स्थिता। अतस्तत्प्रकृतिके प्रायणीये उदयनीये चैकैकस्मिन् सुत्याहे समस्तैवैकादशिनीति युज्यते। न चैवं सति प्रायणीयोदयनीययोरिति द्वन्द्वावगतसाहित्यविरोध इति वाच्यम्। प्रायणीयोदयनीययोरुद्देश्यत्वेन तद्गतसाहित्यस्याविवक्षितत्वात् ॥

ननु ज्योतिष्टोमादतिदेशत एव प्रायणीयोदयनीययोरप्येकादशिन्याः प्राप्तिसम्भवात् पुनस्तयोस्तद्विधिवैय्यर्थ्यमित्यत आह—

**विहारप्रतिषेधाच्च ॥ ७ ॥**

द्वादशस्वपि सुत्यास्वतिदेशतः प्रत्यहं समस्तैकादशिनानां सम्भवत्प्राप्तिकानां प्रायणीयोदयनीययोः पुनर्विधानस्य तदितरेषु दशस्वहस्सु समस्तैकादशिनीपरि-

सङ्ख्यानार्थत्वादित्यर्थः। चकारस्त्वावृत्त्यार्थान्तरद्योतनार्थः। अतिदेशतो द्वादशस्वपि सुत्याहेषु प्रत्यहं समस्तैकादशिन्याः प्राप्तौ "अन्वहमेकैकं पशुमालभेत" इति विहरणविधिनैकैकस्मिन्नहन्याग्नेयादितत्तदेकैकपशुव्यतिरिक्तानां दश दश पशूनां प्रतिषेधात् परिसङ्ख्यालाभात् प्रायणीयोदयनीययोरप्येकैकपशुप्राप्तौ तयोरप्राप्तसमस्तैकादशिनार्थम् "ऐकादशिनान् प्रायणीयोदयनीययोः" इति वचनमिति। तत्र च द्वन्द्वावगतसाहित्यस्योद्देश्यगतस्याविवक्षितत्वात्, प्रत्युद्देश्यञ्च गुणावृत्तेर्न्याय्यत्वात् प्रत्यहं समस्तैवैकादशिनी ॥

सिद्धान्तयति—

## श्रुतितो वा लोकवद्विभागस्स्यात् ॥ ८ ॥

वाशब्दोऽवधारणे। प्रायणीयोदयनीययोरेकादशिन्या विभाग एव-विहरणमेव स्यात्, न त्वन्वहं समस्तेति। कुतः? श्रुतितः-द्वन्द्वश्रवणात्। द्वन्द्वावगतसाहित्यस्य विवक्षितित्वादिति यावत्। न चोद्देश्यगतत्वात्, कथं साहित्यस्य विवक्षि[तत्वमि]ति वाच्यम्। एकादशिनी हि ज्योतिष्टोमे समाम्नाता। पुनरपि द्वादशाहप्रकरणे समाम्नाता। तत्र यदि द्वादशाहाङ्गत्वेन समधिगताः, अतएवैकादशिनाः प्रकृताः पशवस्समस्ताः प्रायणीयोदयनीयोद्देशेन विधीयेरन्, तर्हि द्वादशाहप्रकरणे पुनस्तदाम्नानमनर्थकं स्यात्। नापि प्रायणीयोदयनीययोरैकादशिनोद्देशेन विधिः, ऐकादशिनानां सोमाङ्गतया तदुद्देशेन प्रायणीयोदयनीययोस्सुत्ययोः प्रधानभूतयोर्विधानासम्भवात्। ततश्च द्वादशाहाङ्गत्वेन प्राकृता ऐकादशिनाः कस्मिन् प्रदेश आलब्धव्या इत्यपेक्षायां प्रदेशविधित्सायां प्रायणीयोदयनीययोरालभेरन्निति देशविशेषसमर्पणम्। प्रायणीयोदयनीयशब्दौ च तल्लक्षितकालपरौ-द्वादशाहाङ्गत्वेन ये एकादशिनाः प्राकृताः, तान् प्रायणीयोदयनीयकालयोरालभेरन्निति। तत्र च द्वन्द्वावगतसाहित्यस्योद्देश्यगतत्वाभावेन विवक्षितत्वादुभयत्र विभज्यैवैकादशिना निवेशमर्हन्ति। न चैवमपि देशस्यानुपादेयत्वात्तदुद्देशानुसारेण प्रधानावृत्तेरन्याय्यत्वाच्च। ततश्च द्वादशाहगतमेकादशिनीवाक्यं प्रायणीयोदयनीयवाक्यञ्च मिलित्वा प्रायणीये उदयनीये च विहृतानैकादशिनानालभेरन्नित्यर्थकं पर्यवस्यति। एवञ्चान्तरालिके दशरात्रेऽन्वहं समस्तैकादशिनी चोदकप्राप्ता न बाध्यते। "अन्वहमेकैकं पशुमालभेरन्" इति तु पक्षान्तरपरमिति न विरोधः ॥

इतोऽपि प्रायणीयोदयनीयवाक्यं विहृतैकादशिनीपरमित्याह—

**विहारप्रकृतित्वाच्च ॥ ९ ॥**

"अन्वहमेकादशिनानामेकैकं पशुमालभेरन्" इति विहरणपक्षमनुक्रम्य प्रायणीयोदयनीयवाक्यमनुक्रान्तम्। ततश्च विहारस्य-ऐकादशिनपशुविहरणस्य प्रकृतित्वात्-सन्निहितत्वादपि तत्प्रायपठितं प्रायणीयोदयनीयवाक्यं विहरणपरमेव प्रत्येतव्यम् ॥

ननु प्रायणीयोदयनीययोर्द्वयोस्समसङ्ख्ययोरैकादशिनानां विषमसङ्ख्यानां समशो विहरणं न सम्भवति। विषमविहरणे तु किमेकत्र त्रयः, इतरत्राष्टौ? किं वा एकत्र चत्वारः, इतरत्र सप्त? अथवा एकत्र पञ्च, इतरत्र षट्? इत्येवमनिर्द्धारणं स्यात्। एकादशिनानिति बहुवचनस्योभयत्राप्येवं निवेशसम्भवादित्यत आह—

**विशये च तदासत्तेः ॥ १० ॥**

एवं विशये सति तत्-आद्ये पञ्च, उत्तमे षट् इत्येवमेव विहरणं ग्राह्यम्। कुतः? आसत्तेः—प्रत्यासन्नत्वात्। एवंविधं विहरणं समविहरणस्य प्रत्यासन्नं पञ्चत्वषट्त्वयोः प्रत्यासन्नत्वात्, त्रित्वाष्टत्वादीनाञ्च व्यवहितत्वात्। नन्वेवमपि मुख्यः प्रायणीयो मुख्यां त्रित्वसङ्ख्यामेव गृह्णातु, बहुवचनस्य प्रत्यासन्नं त्रित्वमादायैवोपपत्तेः; 'प्रथमं वा नियम्येत कारणादतिक्रमस्स्यात्' इति द्वादशिकाधिकरणन्यायादित्याशङ्क्य निराकरोति—

**त्रयस्तथेति चेन्न समत्वात् प्रयाजवत् ॥ ११ ॥**

अपीत्यध्याहार्यम्। तथापि प्रत्यासत्तेर्नियामकत्वेऽपि त्रय एव पशवः प्रायणीये भवन्तु, इतरे उदयनीय इति चेत्तन्न; समत्वात्--एकत्र पञ्च, इतत्र षट् इत्याश्रयण एव हि विहरणस्य कथञ्चित् साम्यं प्रत्यासन्नं भवति। अन्यथा विप्रकृष्टं स्यात्; प्रत्यासन्नसमानुग्रहे च विप्रकृष्टसङ्ख्याश्रयणमन्याय्यम्। तथा सति साम्यस्यात्यन्तबाधापत्तेः। तस्मात् प्रायणीये पञ्च उदयदीये षडिति विहरणं सिद्धम्। न च विनिगमनाविरहश्शङ्क्यः, प्रायणीयस्य मुख्यस्यैव प्रत्यासन्नपञ्चत्वसङ्ख्याश्रयणस्य युक्तत्वात्। प्रयाजवदिति समशो विहरणमात्रे दृष्टान्तः, न त्वी-

षदूनसाम्याश्रयणेऽपि। दर्शपूर्णमासयोस्तावत् पञ्च प्रयाजास्सन्ति। ते पशौ प्राप्ताः। तत्रैतरेयादिब्राह्मणे "आप्रीभिराप्रीणाति" इयनुक्रम्य प्राकृतचतुर्थपञ्चमयोरन्तराले षडागन्तवः प्रयाजास्समाम्नाताः "समिधो यजति" "तनूनपातं यजति" "इडो यजति" "बर्हिर्यजति" "दुरो यजति" "उषासानक्ता यजति" "दैव्या होतारा यजति" "तिस्रो देवीर्यजति" "त्वष्टारं यजति" "वनस्पतिं स्वाहाकृतिं यजति" इति। तत्रागन्तुषु षट्सु आद्यास्त्रयश्चतुर्थविकाराः, इतरे त्रयः पञ्चमविकारा इति समशो यथा विभागः [तथा] सङ्कर्षकाण्डे द्वितीयस्य तृतीये वक्ष्यते—'चतुर्थोत्तमयोर्वा स्थानाद्विकाराः' इत्यत्र, तद्वदिहापि प्रायणीये पञ्च उदयनीये पञ्चेत्येवं समशो विभागः। अवशिष्टस्तु अवशिष्टानामन्ते निवेश इति न्यायादुदयनीय एव निविशते।

इति चतुर्थं प्रायणीयोदयनीययोरैकादशिनानां समशो विभागाधिकरणम् ॥ ४ ॥

५

"विश्वजित्सर्वपृष्ठो भवति" इत्यत्र षाडहिकानां रथन्तरबृहद्वैरूपवैराजशाक्वररैवताख्यानां षण्णां साम्नां विश्वजिदङ्गत्वेन विधिरिति स्थितम् सप्तमस्य तृतीये 'विश्वजिति सर्वपृष्ठे' इत्यधिकरणे— 'षडहाद्वा तत्र हि चोदना' इति। किमिह षण्णामपि साम्नां माहेन्द्राख्यपृष्ठस्तोत्रसाधनत्वम्? उतैकस्यैव साम्नस्तत्साधनत्वम्, इतरेषान्तु स्तोत्रान्तरेषु निवेशः? इति संशये, पूर्वपक्षयति—

## सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वात् ॥ १२ ॥

सर्वपृष्ठे-विश्वजिति तेषाम्-षण्णां साम्नाम् एकदेशत्वं स्यात्- माहेन्द्राख्यैकस्तोत्रविषयत्वं स्यात्। माहेन्द्रस्तोत्रे तेषां समुच्चयस्स्यादिति यावत्। न त्वितर स्तोत्रविषयकत्वम्। कुतः? पृष्ठशब्दात् पृष्ठशब्दस्य च कृतदेशत्वात्-नियतविषयकत्वात्। माहेन्द्रस्तोत्रमात्रे पृष्ठशब्दस्य मुख्यत्वादिति यावत् ॥

सिद्धान्तयति—

## विधेस्तु विप्रकर्षस्स्यात् ॥ १३ ॥

तुरवधारणे। माध्यदिनपवमानादिस्तोत्रेषु सर्वत्रैव रथन्तरादिसाम्नां विप्रकर्षः-एकैकस्य निवेशस्स्यात्। कुतः ? विधेः—"माध्यन्दिने पवमाने रथन्तरं करोति, आर्भवे बृहत्, मध्यत इतराणि-वैरूपं होतुः पृष्ठे, वैराजं ब्रह्मसाम, शाक्वरं मैत्रावरुणसाम, रैवतमच्छावाकसाम" इति माहेन्द्रस्तोत्रमात्रे वैरूपस्य, पवमानादिस्तोत्रेषु तदितरसाम्नाञ्च विधानात्। न च षडहे माहेन्द्राख्यपृष्ठस्तोत्र-साधनत्वेनावगतानामेवैषां साम्नामिह वचनादस्मात् स्तोत्रान्तरेष्वपि विनियोगो-ऽस्त्विति वाच्यम्। एवं सति 'सर्वपृष्ठो भवति' इत्येतावतैव माहेन्द्राख्यपृष्ठे षण्णामपि साम्नां प्राप्तत्वात् पुनर्वैरूपमात्रस्य विधिवैयर्थ्यापत्तेः। एवञ्च सर्वाणि पृष्ठानि पृष्ठसाधनत्वेन षडहेऽवगतानि सामानि यस्येति बहुव्रीहिः। षडहे पृष्ठ-साधनानि यानि सामानि तैर्विश्वजितमुपकुर्यादित्यर्थः। कस्मिन् स्तोत्रे किं साम निविशत इत्यपेक्षायां "माध्यन्दिने पवमाने रथन्तरम्" इत्यादिना देशविशेषविधिः। न च पवमानादिस्तोत्राणां पृष्ठशब्दवाच्यत्वाभावात् कथं तत्र पृष्ठसाधनत्वेन रूपेण साम्नां विधिरिति वाच्यम्, षडहे यानि सामानि पृष्ठसाधनान्यभूवन्, तैर्विश्वजि[द्‌यागमुप] कुर्यादित्येवं पृष्ठसाधनत्वोपलक्षितानां पवमानादिस्तोत्रेषु विध्यविरोधात्। तस्मान्न पृष्ठमात्रे साम्नां निवेशः, अपि तु यथावचनं पवमाना-दिष्वेवेति ॥

### इति पञ्चमं सर्वपृष्ठे साम्नां व्यवस्थाधिकरणम् ॥ ५ ॥

६

"उक्थ्यो वैरूपसामा" इत्यत्र पवमानादिस्तोत्रेषु सर्वेषु प्राकृतसामान्तराणि बाधित्वा वैरूपमेवैकं साम निविशते ? उत पृष्ठस्तोत्रमात्रे ? इति संशये, पूर्व-पक्षयति—

## वैरूपसामा क्रतुसंयोगात् त्रिवृद्वदेकसामा स्यात् ॥ १४ ॥

योऽयमुक्थ्यो वैरूपसामेति निर्दिष्टः स एकसामा-एकमेव वैरूपसाम सर्वेषु स्तोत्रेषु यस्य स एकसामा स्यात्। कुतः ? क्रतुसंयोगात्-क्रतोरेव वैरूपसाम्ना संयोगश्रवणात्, पृष्ठमात्रसंयोगस्याश्रवणात्। त्रिवृद्वत्। यथा "त्रिवृदग्निष्टुदग्नि-

ष्टोमः" इत्यत्र त्रिवृत्स्तोमो न पृष्ठमात्रे, किन्तु सर्वेषु स्तोत्रेषु, एवमिहापि। यथा वा "अथैष भूवैश्वदेवस्त्रिवृद् धेनुर्दक्षिणा" इति भूनाम्न्येकाहे क्रतौ धेनुः कृत्स्नक्रतुदक्षिणास्थाने तद्वच्च, न तु "आत्रेयाय हिरण्यं ददाति" इतिवत्क्वचिदेव ॥

अथ सिद्धान्तयति—

**पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात् ॥ १५ ॥**

वा शब्दोऽवधारणे। पृष्ठस्तुतिलक्षण एव कार्ये वैरूपं साम निविशते, न तु सर्वेषु स्तोत्रेषु। कुतः? प्रकृतिलिङ्गसंयोगात्-प्रकृतौ तावत् ज्योतिष्टोमे "रथन्तरसामा कार्यः" इत्यत्र रथन्तरं साम यस्येति सामान्तबहुव्रीहिणा पृष्ठस्तोत्रसाधनीभूतमेव साम विवक्षितमिति स्थितिः। इह च स्तोत्रसम्बन्धो न श्रूयते, किन्तु साममात्रं क्रत्वङ्गतया श्रूयते। तस्य च द्वारजिज्ञासायामविशेषात् सर्वस्तोत्राणि द्वारतया यावत् कल्प्यन्ते, ततः प्रागेव वैरूपसामेति सामान्तबहुव्रीहिलक्षणप्रकृतिलिङ्गविशेषेणोपस्थितायाः पृष्ठस्तुतेरेव 'यस्य लिङ्गमर्थसंयोगादभिधानवत्' इत्याष्टमिकाद्याधिकरणन्यायेन () द्वारत्वकल्पनान्न सर्वस्तोत्रेषु वैरूपसामनिवेशः ॥

अथ त्रिवृदग्निष्टोमदृष्टान्तो विषम इत्याह—

**त्रिवृद्वदिति चेन्न प्रकृतावकृत्स्नसंयोगात् ॥ १६ ॥**

त्रिवृत्वं यथा क्रतुसाधनसर्वस्तोत्रेषु निविशते, तथा वैरूपमपि साम सर्वत्र निविशतामिति चेत्—तन्न; कुतः? प्रकृतौ दृष्टेन लिङ्गेन त्रिवृत्त्वस्य कृत्स्नक्रतुसाधनस्तोत्रसम्बन्धानवगमात्। वैरूपसामेत्यत्र पृष्ठमात्रोपस्थापकं सामान्तबहुव्रीहिलक्षणप्रकृतिलिङ्गमस्ति। इह तु तथा स्तोत्रविशेषोपस्थापकप्रकृतिलिङ्गाभावदविशेषात् सर्वस्तोत्रेषु त्रिवृत्त्वान्वय इति वैषम्यम् ॥

अथ भुवि धेनुर्दक्षिणेत्यपि दृष्टान्तो विषम इत्याह—

**विधित्वान्नेति चेत् स्याद्विशये तन्न्याय्यत्वात्कर्माविभागात् ॥ १७ ॥**

"धेनुर्दक्षिणा" इति वाक्यस्य कृत्स्नक्रतुदक्षिणाकार्ये धेनुविधायकत्ववद्वैरूपसामवाक्यस्यापि क्रतुसम्बन्धिकृत्स्नस्तोत्रकार्येषु वैरूपसामविधायकत्वान्न

पृष्ठस्तुतिमात्रे वैरूपसाम्नो निवेश इति चेद्-ब्रूपे, तत्रेदमुत्तरम्-स्याद्विशये तन्न्यायत्वात् कर्माविभागादिति। तन्न्यायत्वात्-धेनुविधितुल्यन्यायत्वाद् वैरूप विधिरपि कृत्स्नस्तोत्रेषु किं न स्यादिति संशये-सम्भावनायां सत्यां पृष्ठस्तुतावेव वैरूपसामविधिस्स्यात्, न तु सर्वस्तोत्रेष्विति ब्रूमः। कुतः? कर्माविभागात्-आत्रेयदाने धेनुरित्येवं कर्मणो दानविशेषस्य अविभागात्-विशिष्य निर्देशाभावात्। "अथैष भूः" इत्यनुक्रम्य "धेनुर्दक्षिणा" इत्येव हि श्रुतम्। अतः प्रकरणात् क्रतोर्दक्षिणेत्यवगमात् कृत्स्न एव क्रतुदक्षिणाकार्यं धेनुविधिरिति युक्तम्। दक्षिणाशब्दाच्च-दक्षिणाशब्दो हि दक्षयति अन्यदीयकर्मण्यानमयतीति व्युत्पत्त्या भृतिद्रव्यमाचष्टे। अतश्च कर्मकरेभ्यो देयमानत्यर्थद्रव्यं दक्षिणा ऋत्विग्भ्यो देयद्रव्यमेव तथाविधम्, न त्वात्रेयादिभ्यो देयद्रव्यमपि, आत्रेयादीनां कर्मकरत्वाभावात्। न हि तेषां कर्म किञ्चिद् ज्योतिष्टोमे विहितमस्ति। अतो भुवि धेनुर्दक्षिणा कृत्स्नक्रतुदक्षिणास्थाने इति युक्तम्। इह तु प्रकृतिलिङ्गसंयोगात् पृष्ठस्तुतेरेवोपस्थित[त्वात्तत्रैव]वैरूपसाम्नो निवेशः॥

इतोऽप्येवमित्याह—

## प्रकृतेश्चाविकारात् ॥ १८ ॥

पृष्ठस्तुतिमात्रे वैरूपस्य निवेशे सति प्रकृतेस्सकाशात् चोदकतः स्तोत्रान्तरेषु प्राप्तानां साम्नाम् अविकारात्-अबाधात्। अन्यथा सर्वस्तोत्रेषु तन्निवेशे बहूनां प्राकृतसाम्नां बाधापत्तेः। तस्मादपि पृष्ठस्तुतिमात्रे वैरूपसाम॥

इति षष्ठं वैरूपसाम्नः पृष्ठस्तोत्रनिवेशाधिकरणम् ॥६॥

७

"त्रिवृदग्निष्टुदग्निष्टोमः" इत्यत्र किं त्रिवृच्छब्दस्त्रैगुण्यवाची? उत स्तोत्रीयानवकवाची? इति संशयः। लोके तावत् त्रिवृद्रज्जुरित्यादौ, वेदे च "त्रिवृद्यूपरशना" इत्यादौ त्रिवृच्छब्दस्त्रैगुण्ये दृष्टः। तथा स्तोत्रीयानवकवचनोऽपि वेदेऽवगतः। त्रिवृद् बहिष्पवमानमित्युक्त्वा स्तोत्रीयाणां नवानामनुक्रमणादिति स्मृतिपादे प्रपञ्चितम्। अत्र तु त्रिवृच्छब्दस्य स्तोत्रीयानवकपरत्वनिर्द्धारकं न किञ्चिदप्यस्ति। अतोऽत्र भवति संशयः। तत्र पूर्वपक्षयति—

**त्रिवृति सङ्ख्यात्वात् सर्वसङ्ख्याविकारस्स्यात् ॥१९॥**

त्रिवृति-त्रिवृद्वाक्ये त्रिवृच्छब्दाभिधेयस्य त्रैगुण्यलक्षणसङ्ख्याविशेषात्मकत्वात् या या क्रतुसाधनगता सङ्ख्या तस्यास्सर्वस्याः त्रैगुण्यात्मको विकारस्स्यात्। ततश्च प्रकृतौ यद्यत्सङ्ख्यासंयुक्तम्, तत्सर्वं त्रिगुणं कर्त्तव्यमिति फलति। यथा "एकहायन्या क्रीणाति" इत्यत्र 'तिसृभिः क्रयः' इत्यादि। न चात्र विनिगमनाविरहात् त्रिवृच्छब्दस्स्तोत्रीयानवकत्वपरो वा कुतो न स्यादिति वाच्यम्, तथा सति त्रिवृद्विधेरल्पविषयकत्वप्रसङ्गात्, त्रैगुण्यपरत्वे च विषयबाहुल्यलाभात् चोदकासङ्कोचाच्च ॥

अथ सिद्धान्तयति—

**स्तोमस्य वा तल्लिङ्गत्वात् ॥ २० ॥**

वाशब्दोऽवधारणे। स्तोत्रीयानवकात्मकस्तोमविशेषस्यैवात्र त्रिवृच्छब्दाभिधेयत्वम्, न तु त्रैगुण्यस्य। कुतः? तल्लिङ्गत्वात्—प्रकृतिलिङ्गसंयोगादिति यावत्। प्रकृतौ हि "त्रिवृद् बहिष्पवमानम्" इत्यत्र स्तोत्रीयानवकानुक्रमणात् "नवभिस्तुवन्ति" इति वचनाच्च त्रिवृच्छब्दस्य स्तोत्रीयानवके शक्तिरवधारिता। तस्याश्च वाक्यशेषाभावस्थलेऽप्यनपायाद्वाक्यशेषाभावोऽकिञ्चित्करः। किञ्च विध्यन्तरवाक्यशेषादपि त्रिवृच्छब्दसामान्यस्य स्तोत्रीयानवके शक्तिरवधार्यते। आतिथ्येष्टौ हि "नवकपालः पुरोडाशो भवति ते त्रयस्त्रिकपालास्त्रिवृता स्तोमेन सम्मिताः" इति श्रुतम्। नवकपालपुरोडाशस्तोमवदिह स्तूयते-अयं नवकपालः पुरोडाशस्त्रयस्त्रिकपालाः पुरोडाशा भवन्ति। अतस्त्रिवृता स्तोमेन सम्मिताः तुल्या भवन्ति, त्रिवृत्स्तोमस्य तृचत्रयात्मकत्वादिति। एवञ्च त्रिकपालानां त्रयाणां त्रिवृता स्तोमेन सम्मितत्वं वदन्नयं वाक्यशेषस्त्रिवृच्छब्दसामान्यस्य तृचत्रयात्मके स्तोमविशेषे शक्तिं दर्शयति। अतस्त्रिवृद्वाक्येऽपि त्रिवृच्छब्दस्य तृचत्रयात्मकस्तोमविशेषपरत्वमेवाध्यवस्यामः। यद्यपि लोके त्रिवृच्छब्दस्त्रैगुण्ये वर्तते, तथापि योगप्रसिध्या तदुपपाद्यम्। स्तोत्रियानवके तु रूढ्या वर्तते। योगाच्च रूढिर्बलीयसी। तस्मादिह प्रकृतिप्राप्तस्तोमान्तरबाधेनैव त्रिवृत्स्तोमविधिः ॥

**इति सप्तमं त्रिवृति स्तोमगतसङ्ख्याबाधाधिकरणम् ॥ ७ ॥**

·८

संसवाख्ये क्रतौ श्रुतम्—"उभे बृहद्रथन्तरे भवतः" इति। किमिहान्यतरदेव साम पृष्ठसाधनम् इतरत्तु स्तोत्रान्तरे निवेशनीयम्? उतैकस्मिन्नेव पृष्ठे साम्नोस्समुच्चयः? इति संशये, पूर्वपक्षयति—

**उभयसाम्नि विश्वजिद्वद्विभागस्स्यात् ॥ २१ ॥**

विश्वजिति सर्वपृष्ठे षाडहिकानां रथन्तरादिसाम्नां षण्णां मध्ये एकं साम पृष्ठे निविशते, इतराणि तु स्तोत्रान्तरेष्वित्यनुपदमेव स्थितम्। तद्वद् उभयसाम्नि संसवे साम्नोः विभागस्स्यात्—एकस्य पृष्ठे इतरस्यान्यत्रेत्येवं निवेशस्स्यात्, चोदकानुग्रहात्। प्रकृतौ हि रथन्तरं बृहद्वा साम पृष्ठसाधनम्। इह तत्समुच्चये चोदकबाधस्स्यात् ॥

अथ सिद्धान्तयति—

**पृष्ठार्थे वा तदर्थत्वात् ॥ २२ ॥**

वाशब्दोऽवधारणे। पृष्ठार्थे-पृष्ठलक्षणकार्ये एवैकस्मिन्नुभे सामनी समुच्चिते स्याताम्। कुतः? तदर्थत्वात्-समुच्चयविधानार्थत्वात्। विकल्पतः प्राप्तसामद्वयानुवादेन समुच्चयविधिरयम्—"उभे बृहद्रथन्तरे भवतः" इति। साम्नोश्च प्राप्तिरतिदेशतः। सा च पृष्ठस्तोत्रमात्र इति तत्रैव समुच्चयः। विश्वजिति तु वचनाद्विभज्य षाडहिकसाम्नां निवेश इत्यनुपदमेवोक्तम्। नेह तथा विभज्य सामविनियोजकं वचनमस्ति। चोदकबाधस्त्वन्यतरस्य साम्नस्स्तोत्रान्तरनिवेशेऽपि तुल्यः। ये तु प्रकृतौ रथन्तरसाध्यं पृष्ठमन्यत् अन्यच्च बृहत्साध्यमिति मन्यन्ते, तन्मतेऽप्यत्रैकस्मिन्नेव पृष्ठस्तोत्रे समुच्चयविशिष्टसामद्वयविधानम्, न तु सामसमुच्चयमुखेन पृष्ठसमुच्चयविधिः। तथा सति सामान्तरांशे स्तोत्रान्तररूपद्वारान्तरस्याक्लृप्तस्य कल्पनापत्तेः। अतश्चोभयमतेऽप्येकस्मिन्नेव पृष्ठस्तोत्रे द्वयोस्साम्नोस्समुच्चयः ॥

इतोऽप्येवमित्याह—

**लिङ्गदर्शनाच्च ॥ २३ ॥**

"संसवे उभे बृहद्रथन्तरे भवतः" इत्युक्त्वा "बृहद्रथन्तरे निधनेन समाप्येते" इत्याह। एकस्मिन् पृष्ठे उभयोस्साम्नोस्समावेशे सति निधनानां गीतिपरि-

पूरणार्थत्वेऽपि तद्गीतेः ऋगक्षराभिव्यञ्जकत्वाभावेनादृष्टार्थतया गीतिपरिपूरणस्य यतरसामसम्बन्धिनिधनत एव सम्भवात् सामान्तरसम्बन्धिनिधनानां नवृत्तौ प्रसक्तायां बृहद्रथन्तरे भेदेन स्वस्वनिधने कार्ये इति निधनभेदविधानमेतत्। तच्च साम्नोरेकस्मिन् पृष्ठे समावेशे सत्येव घटते। भिन्नस्तोत्रयोस्समावेशे सत्यर्थादेव तत्र निधने भेदस्य सिद्धत्वात्तद्वचनं नावकल्पेत। अतोऽपि समुच्चयः। ननु साम्नोरेकत्र पृष्ठे समावेशे तृचपर्यायेषु कस्य पूर्वसमावेशः, कस्य पश्चादित्यत्राप्येतदेवोत्तरम्—लिङ्गदर्शनाच्चेति। दृश्यते निर्णीयतेऽर्थोऽनेनेति न्यायः। लिङ्गात् न्यायाच्चेत्यर्थः। प्रथमनिर्दिष्टत्वाद्रथन्तरस्य प्रथमं प्रवृत्तिः, ततो बृहत इति न्यायः। "पूर्वाह्णो वै रथन्तरमपराह्णो बृहत्" इति लिङ्गं प्रपञ्चितं चात्र खण्डदेवीये॥

इत्यष्टमं संसवे बृहद्रथन्तरयोस्समुच्चयाधिकरणम्॥ ८॥

९

द्वादशाहे "त्रिवृत्पञ्चदशस्सप्तदश एकविंशस्त्रिणवस्त्रयस्त्रिंशः" इति पृष्ठ्यषडहं विधाय "संस्थिते षडहे मध्वाशयेद् घृतं वा" इति श्रुतम्। तदस्य षडहस्य गवामयने उत्तरपक्षसि प्रातिलोम्यं विहितम्—"पृष्ठ्यष्षडहस्त्रयस्त्रिंशारम्भणस्त्रिवृदुत्तमः कार्यः" इति। तत्र किं त्रयस्त्रिंशस्तोमके आद्येऽहनि समाप्ते मधुघृताशनम्? उत त्रिवृत्स्तोमके षडहस्योत्तमेऽहनि समाप्ते तदशनम्? इति संशये, पूर्वपक्षयति—

**पृष्ठ्ये रसभोजनमावृत्ते त्रयस्त्रिंशेऽहनि स्यात्तदानन्तर्यात् प्रकृतिवत्॥ २४॥**

पृष्ठ्यषडहे आवृत्ते प्रातिलोम्येन क्रियमाणे तत्राद्येऽहनि त्रयस्त्रिंशस्तोमके कृते सति, मधुघृतात्मकरसाशनं स्यात्, न तु तदुत्तमाहे त्रिवृति कृते सति। कुतः? प्रकृतिवत्तदानन्तर्यात्—प्रकृतौ हि द्वादशाहे षाडहिके त्रयस्त्रिंशस्तोमकेऽहनि कृते सति मधुघृताशनं दृष्टम्। इहापि तस्य त्रयस्त्रिंशानन्तर्येण भवितव्यम्॥

अथ सिद्धान्तयति—

**अन्ते वा कृतकालत्वात्॥ २५॥**

वा शब्दोऽवधारणे। षडहस्यैवान्ते मधुघृताशनम्। कुतः? कृतकालत्वात्—प्रकृतौ त्रयस्त्रिंशोत्तरकालत्वस्य विहितत्वादिति यावत्। "षडहे संस्थिते" इति

मधुघृताशनस्य षडहोत्तरकालत्वं प्रकृतावगतम्। तत्रोत्तमसहस्रत्रयस्त्रिंशमिति तदानन्तर्य्यमार्थिकम्। न चार्थिकं चोदकतः प्रतिदिशति। न च मधुघृताशनं प्रकृतौ त्रयस्त्रिंशाहे संस्थिते तस्मिन्नेवाहन्यनुष्ठितम्। एवञ्चानुष्ठानसादेश्यलक्षणक्रमवशात् त्रयस्त्रिंशस्यैवाङ्गं तदिति विकृतावप्यत्र त्रयस्त्रिंशान्त एव तदनुष्ठानं युक्तमिति वाच्यम्, "संस्थिते षडहे" इति वाक्येन षडहाङ्गत्वस्यैवावगमाद् वाक्यापेक्षया अनुष्ठानसन्निधिलक्षणक्रमस्य दुर्बलत्वात्। न च संस्थितस्य षडहस्य कथमङ्गविधिरिति वाच्यम्, "संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति" इतिवत्तद्व्यतिरिक्ताङ्गापेक्षया संस्थोपपत्तेः। तस्मादिह त्रिवृदन्ते षडहे संस्थिते एव मधुघृताशनमिति॥

इति नवमं द्वादशाहिकपृष्ठ्यषडहे त्रिवृदन्ते मधुघृताशनव्यवस्थाधिकरणम्॥ ९॥

## ( रसभोजनाधिकरणम् )

१०

"आवृत्तं पृष्ठमुपयन्ति" इति यत्र षडहस्यासकृदावृत्तिरस्ति तत्र किं प्रतिषडहसन्ते मधुघृताशनम्? उत सर्वाभ्यासान्ते सकृत्? इति संशये, पूर्वपक्षयति—

**अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात्॥ २६॥**

षडहस्य पुनः प्रयोगे सति मधुघृताशनस्यापि पुनःप्रयोगः स्यात्, षडहकर्मणः प्रधानभूतस्य पुनः प्रयोगात्-प्रतिप्रधानं तदङ्गभूतमधुघृताशनस्य च न्याय्यत्वात्॥

अथ सिद्धान्तयति—

**अन्ते वा कृतकालत्वात्॥ २७॥**

वा शब्दोऽवधारणे। षडहसर्वाभ्यासान्त एव सकृन्मधुघृताशनम्। कुतः? कृतकालत्वात्—कृते संस्थिते षडहे यः कालः, स एव कालो यस्येति विग्रहः। संस्थोत्तरकालकत्वादिति यावत्। न च प्रत्यभ्यासं षडहस्य समाप्तिरस्त्येवेति वाच्यम्। संस्था हि तद्विषयव्यापारोपरमः। पुनः प्रयोक्ष्यमाणस्य च नैव तद्विषयव्यापारोपरमोऽस्ति। प्रत्यभ्यासं हि तत्तदभ्यासस्यैव संस्थास्ति, न तु षडहस्य

पुनस्तद्विषयव्यापारानुवृत्त्या तदुपरमलक्षणसमाप्त्यभावात्। तस्मात् सर्वाभ्यासान्ते सकृन्मधुघृताशनम् ॥

इति दशमं गावामयनिकषडहे सकृन्मधुघृतप्राशनाधिकरणम् ॥ १० ॥

११

तदेवं निरन्तरं षडहावृत्तौ सर्वाभ्यासान्ते सकृन्मधुघृताशनमिति स्थितम्। यत्र तु गवामयनादौ अभिप्लवादिव्यवेतस्य षडहस्याभ्यासः तत्राभिप्लवादि व्यवधानेऽपि पश्चात् पृष्ठ्यषडहः करिष्यत इति न तद्व्यापारोपरमलक्षणसंस्थास्ति। यथा षडहप्रयोगमध्ये नान्तरीयकलौकिकव्यापारे सत्यपि न षडहविषयकव्यापारोपरमस्तद्वत्। अतः पूर्वाधिकरणन्यायेन सर्वाभ्यासान्त एवात्रापि मधुघृताशनमिति प्राप्ते, सिद्धान्तयति—

**आवृत्तिस्तु व्यवाये कालभेदात् स्यात् ॥ २८ ॥**

तुर्वैषम्ये। अभिप्लवादिव्यवाये सति प्रतिषडहं तदन्ते मधुघृताशनस्यावृत्तिस्स्यात्। कुतः ? कालभेदात्–पृष्ठ्यषडहं विधाय "अथाभिप्लवाः" इत्यादिना अभिप्लवादिविधाने सति षडहं समाप्याभिप्लवादयः कर्तव्या इति शास्त्रतात्पर्यावगमादस्त्येव तत्षडहसमाप्तिः। (नान्तरीयकलौकिकव्यापारस्थले तु न) समाप्त्यवगमकं प्रमाणमस्तीति वैषम्यम्। एवञ्चात्र षडहादुपरम्यैवाभिप्लवादिषु व्याप्रियते, न तु पूर्ववदुपरमः, निमित्तसंस्थावृत्तेर्नैमित्तिकं मधुघृताशनमप्यावर्त्यत इति ॥

इत्येकादशं गवामयनेऽभिप्लवव्यवायेऽसकृन्मधुघृतप्राशनाधिकरणम् ॥ ११ ॥

१२

सन्ति द्वादशाहे गृहपतिव्रतानि–"संस्थिते षडहे मध्वाशयेत्" इत्यादीनि। आशयेदिति प्रयोजककर्तरि णिच्। ऋत्विज इति द्वितीयान्ता योग्यतया सम्बध्यन्ते। तदिदं सत्रात्मके द्वादशाहे भवति न वेति संशये, पूर्वपक्षयति—

**मधु न दीक्षिता ब्रह्मचारित्वात् ॥ २९ ॥**

सत्रे मधु न दीक्षिता ऋत्विजः अश्नीयुः। कुतः ? ब्रह्मचारित्वात्–प्रकृतौ दीक्षितस्य ब्रह्मचर्यविधानात्। तस्य च ब्रह्मचर्यस्य चोदकतोऽत्र प्राप्तेः। ऋत्विजाञ्च

---

(). अपुस्तके भागोऽयं स्खलितः।

सत्रे यजमानत्वेन दीक्षितत्वात् ब्रह्मचारिणश्च धर्मशास्त्रेषु मधुभक्षणनिषेधाद् द्वादशाहे मध्वशननिषेधस्य चाहीनभूतद्वादशाहे चरितार्थत्वात्। न च सत्रे मधुभक्षणाभावाद्वैगुण्यं शङ्क्यम्, घृतभक्षणपक्षाश्रयणे सति वैगुण्याभावात्। अतो न [सत्र] भूतद्वादशाहे मधुभक्षणमिति ॥

अथ सिद्धान्तयति—

**प्राश्येत वा यज्ञार्थत्वात् ॥ ३० ॥**

वा शब्दोऽवधारणे। अयज्ञार्थत्वादित्यपि च्छेदः। सत्रभूतेऽपि द्वादशाहे मधु दीक्षितैरशितव्यमेव। कुतः? अयज्ञार्थत्वात्, ब्रह्मचर्याश्रमगतवेदाध्ययन-पुरस्कारेण प्रवृत्तधर्मशास्त्रस्थमधुवर्जनविधेस्सम्पन्नाध्ययनकगृहस्थाधिकारकक्रतु-गतमधुभक्षणविषयकत्वासम्भवादित्यर्थः। नन्वध्ययनधर्मत्वेनावगतमपि ब्रह्मचर्यं ज्योतिष्टोमे क्रत्वङ्गतया विहितमिति मधुवर्जनं तत्र क्रत्वर्थम्। तदिह सत्रेऽपि चोदकतः क्रत्वर्थतयैव प्राप्तिमर्हतीत्यत्रेदमुत्तरम्–यज्ञार्थत्वादिति। इह मधुभक्षणस्य क्रत्वर्थत्वात् ज्योतिष्टोमे च मधुभक्षणविध्यभावेन तत्र मधुवर्जनस्य रागप्राप्तमधु-भक्षणविषयत्वादित्यर्थः। यद्यपि ज्योतिष्टोमे दीक्षारम्भदिने "सर्पिर्मिश्रं दधि मधु चाभ्युपसेकमश्नाति" इति मध्वशनं क्रत्वर्थतया विहितमस्ति, तथापि तदिहा-तिदेशेन प्राप्तत्वात् प्रत्यक्षोपदिष्टमधुभक्षणेऽहीनभूतद्वादशाहमात्रविषयत्वेन सङ्कोचं कर्तुं न प्रभवति, प्रत्यक्षवचनेनैव वानुमानिकचोदकसङ्कोच[स्य] युक्तत्वात्। तस्मादहीनवत् सत्रेऽपि मधुघृतयोर्विकल्पः ॥

इति द्वादशं सत्रद्वादशाहे मधुघृतप्राशनाधिकरणम् ॥ १२ ॥

१३

अस्ति द्वादशाहे दशममहः—"अविवाक्यं नाम दशममहरुपयन्ति" इति। तत्सन्निधाविदं श्रूयते—"अनया त्वा पृथिव्या पात्रेण समुद्रं रसया प्रजापतये जुष्टं गृह्णामीति मानसं प्राजापत्यं गृह्णाति" इति। किमत्र दशमैकादशसुत्याहयोरन्त-राले द्वादशसुत्याभ्योऽन्यदधिकं सुत्यान्तरं विधीयते? उत तत्रैव दशमस्याह्नोऽङ्ग-भूतं ग्रहणाख्यसंस्कारमात्रं विधीयते? इति संशये, पूर्वपक्षयति—

**मानसमहरन्तरं स्यात् द्वादशाहव्यपदेशात् ॥ ३१ ॥**

मानसं सुत्यान्तरं स्यात्। कुतः ? द्वादशाहव्यपदेशात्–विविधमपदेशः भेदेन निर्देशः व्यपदेशः, "वाग्वै द्वादशाहो मनो मानसम्" इति वाक्त्वेन द्वादशाहस्य, मनस्त्वेन मानसस्य च भेदेन निरूपणाद् द्वादशाहमनसोरिव द्वादशाहमानसयोरपि भेदोऽवसीयते ॥

इतोऽप्येवमित्याह—

**तेन च संस्तवात् ॥ ३२ ॥**

"विधूतानि ह वै द्वादशाहस्य गतरसानि छन्दांसि तानि मानसेनैवाप्याययन्ति" इति। तेन मानसेन द्वादशाहिकच्छन्दसामाप्यायनवचनादपि द्वादशाहान्मानसं सुत्यान्तरमवगम्यते ॥

इतोऽप्येवमित्याह—

**अहरन्ताच्च परेण चोदना ॥ ३३ ॥**

"पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते" इति द्वादशिकान्यहानि सर्वाणि पत्नीसंयाजान्तानि। अतो दशममहरपि पत्नीसंयाजान्तमेव। मानसग्रहस्तत ऊर्ध्वं प्रवर्तते—"पत्नीस्संयाज्य प्राञ्च उदेत्य मानसाय प्रसर्पन्ति" इति। तदिदं मानसस्य दशमाहर्गतत्वे सति नावकल्पते। तस्मादपि सुत्यान्तरम् ॥

तर्हि तत्र दशाहशब्दोऽनुपपन्न इत्यत आह—

**पक्षे सङ्ख्या सहस्रवत् ॥ ३४ ॥**

पक्षपरिग्रहे, परिग्रहश्चात्र प्रामाणिकत्वेनाभ्युपगमः। पक्षे सति उक्तयुक्तिभिर्मानसं सुत्यान्तरमिति निश्चये सति, द्वादशाह इति सङ्ख्याशब्दः त्रयोदशसु सन्निकर्षाद् गौणः। सहस्रवत्। "सहस्ररात्रमास्ते" इति सहस्ररात्रं सत्रविशेषमधिकृत्य "अतिरात्रश्च सहस्रं चाहानि" इत्यहःक्लृप्तिरुक्ता। तत्र यथा एकाधिके सहस्रे सहस्रशब्दस्सन्निकर्षाद् गौणस्तद्वत्। तस्मान्मानसं सुत्यान्तरम् ॥

अथ सिद्धान्तयति—

**अहरङ्गं वांशुवच्चोदनाभावात् ॥ ३५ ॥**

दशमस्याह्नोऽङ्गमेव मानसः प्राजापत्यग्रहः, न तु सुत्यान्तरम्। कुतः? चोदनाभावात्–'अचोदकाश्च संस्काराः' इति पशुसोमाधिकरणस्थ(०)गुणसूत्रन्यायेन प्राजापत्यग्रहणविधेस्संस्कारमात्रपर्यवसायित्वेन यागान्तरविधित्वाभावात्। ऐन्द्रवायवादिवाक्यविशेषाः यागानामविधायकाः, किन्तु ग्रहणलक्षणसंस्कार-विधायका एवेति पशुसोमाधिकरणगुणसूत्रार्थः। तत्र द्रव्यदेवतासम्बन्धनिर्वाह-स्तु "सोमेन यजेत" इति सन्निहितयजेरेवेति तत्रैव प्रपञ्चितमस्माभिः। इहापि तथैव सन्निहितयजेरेव द्रव्यदेवतासम्बन्धनिर्वाह इति न सुत्यान्तरविधिः। न च प्राकृतयागद्रव्यभूतसोमभिन्नस्य समुद्रलक्षणद्रव्यस्य श्रवणात्तद्यागीयद्रव्यसंस्कार-कत्वासम्भवाद्यागान्तरविधिरेव वक्तव्य इति वाच्यम्, प्रकृतप्रत्यभिज्ञाबलेन रसावस्थसोमस्यैवात्र समुद्रशब्देन विवक्षिततया संस्कारविधित्वस्य निर्बाधत्वात्। तस्मान्मानसं सुत्यान्तरम्। अंशुवत्–अंशुग्रहदर्विहोमो यथैकदेशसोमरसस्य प्रक्षेपांशेन सर्वसोमसंस्कारः, तद्वत् ॥

इतोऽप्येवमित्याह—

**दशमविसर्गवचनाच्च ॥ ३६ ॥**

"एष वै दशमस्याह्नो विसर्गो यन्मानसम्" इति श्रुतम्। विसर्गः–अन्तः। इतोऽपि वचनाद्दशमस्याह्नोऽङ्गमेव मानसः प्राजापत्यग्रहः, न सुत्यान्तरम् ॥

इतोऽप्येवमित्याह—

**दशमेऽहनीति च तद्गुणशास्त्रात् ॥ ३७ ॥**

"दशमेऽहनि मानसाय प्रसर्पन्ति" इत्यादि तद् गुणशास्त्रं–मानसग्रहस्य दशमाहाङ्गत्वबोधकं वाक्यमस्ति। अतो वाक्यादपि तस्य दशमाहाङ्गत्वम् ॥

विपक्षे बाधकमप्याह—

**सङ्ख्यासामञ्जस्यं स्यात् ॥ ३८ ॥**

दशमाहाङ्गत्वे सत्येव द्वादशाह इति सङ्ख्याशब्दः समञ्जसस्स्यात्–आर्जवात् प्रवृत्तिमर्हति, सुत्यान्तरत्वे तु गौणस्स्यात्। तथा च तस्य गौणत्वाश्रयणमेव दोषः ॥

सुत्यान्तरत्वे बाधकान्तरमाह—

**पश्वतिरेके चैकस्य भावात् ॥ ३९ ॥**

द्वादशाहे एकैकस्मिन्नहन्येकैकः पशुरित्येवं विहृतामेकादशिनीं विधाय श्रुतम् "यः पशुरतिरिच्यते स ऐन्द्राग्नः कर्तव्यः" इति एकादशभ्योऽहोभ्य ऊर्ध्वं यः पशुरधिक उपादीयते स ऐन्द्राग्नः कर्तव्य इत्यर्थः। सुत्यान्तरत्वे सति त्रयोदशत्वाद्धिकौ द्वौ पशू अतिरिच्येयाताम्। एवञ्च पश्वतिरेकवाक्ये एकस्यैव पशोरतिरेकस्यैव सद्भावदर्शनान्न सुत्यान्तरम्।

यथ यदुक्तं 'भेदव्यपदेशात्' इति, 'तेन च संस्तवात्' इति च तदुभयत्राह—

**स्तुतिव्यपदेशमङ्गेनाविप्रतिषिद्धं व्रतवत् ॥ ४० ॥**

स्तुतिव्यपदेशमिति समाहारद्वन्द्वः। "गतरसानि द्वादशाहस्य छन्दांसि मानसेनाप्याययन्ति" इति मानसेन द्वादशाहिकच्छन्दसामाप्यायनस्तुतिः "वाग्वै द्वादशाहो मनो मानसम्" इति भेदनिर्देशश्चाङ्गभूतेनापि मानसेनाविप्रतिषिद्धम्-अविरुद्धम्। अवयवावयविभावे सत्यपि भेदस्याविरोधात्। अवयवस्तुत्या अवयविभूतद्वादशाहस्य स्तुत्युपपत्तेश्च। व्रतवत्–नामैकदेशे नामग्रहणम्। गवामयने महाव्रतं नाम किञ्चिदहः। तदधिकृत्य श्रुतम्–"यन्ति वा एते मिथुनाद्ये संवत्सरमुपयन्त्यन्तर्वेदि मिथुनौ सम्भवतस्तेनैव मिथुनान्न यन्ति" इति। ये संवत्सरसुत्याकं सत्रमुपयन्ति त एते मिथुनीभावात् च्यवन्ते। तथा च सत्यतिक्रमदोषस्स्यात्। अतः अन्तर्वेदि मिथुनौ सम्भवतः पुंश्चलुः मागधश्च। तेन च मिथुनीभावात् न च्यवन्ते क्रत्वतिक्रमदोषो न भवतीत्यर्थः। तदेवन्धर्मकेण महाव्रतेनाह्ना अवयवभूतेन सुत्यासमुदायात्मकगवामयनस्य स्तुतिर्यथा तद्वत्। व्रतग्रहणमुपलक्षणम्। यथा च लोके दीर्घकेशैश्शोभना युवतिरिति, तद्वदिहापि ॥

अथ यदुक्तं मानसस्य दशमाहाङ्गत्वे पत्नीसंयाजान्तता व्याहन्यत इति, तत्राह—

**वचनादतदन्तत्वम् ॥ ४१ ॥**

मानसग्रहस्य दशमाहाङ्गत्वेन विधिबलाद् दशमस्यान्हः अतदन्तत्वम्-पत्नीसंयाजान्तत्वं न भवति, "पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते" इति सामान्यवचनं दशमाहव्यतिरिक्तविषयमिति यावत्। तस्मान्न मानसं सुत्यान्तरमिति ॥

इति त्रयोदशमविवाक्ये मानसग्रहस्य संस्कारकर्मत्वाधिकरणम् ॥१३॥

१४

"ऋद्धिकामास्सत्रमासीरन्" इति सत्रं किमेकस्वामिकम्? उत बहुस्वामिकम्? इति संशये, पूर्वपक्षयति—

**सत्रमेकः प्रकृतिवत् ॥ ४२ ॥**

प्रकृतिभूतज्योतिष्टोमस्यैकस्वामिकतया तद्वदेव सत्रमप्येकस्वामिकमेव ॥ अथ सिद्धान्तयति—

**वचनात्तु बहूनां स्यात् ॥ ४३ ॥**

तुरवधारणे। बहूनामेव स्वामिनां सत्रं स्यात्, न त्वेकस्वामिकम्। कुतः? वचनात्-आसीरन्निति बहुवचननिर्देशात्। आख्यातोपात्ता हि सङ्ख्या विवक्षितैवेति षष्ठे प्रपञ्चितम्। अत आसीरन्निति बहुत्वसङ्ख्या चोदकप्राप्तमेकत्वसङ्ख्यां बाधते ॥

अत्राशङ्क्य निराकरोति—

**अपदेशस्स्यादिति चेन्नैकव्यपदेशात् ॥ ४४ ॥**

आसीरन्निति बहुवचनं विवक्षितार्थकमस्तु, तथापि बहुवचनमपदेशः-अनुवादस्स्यात्। एकैकशस्सत्रं कुर्वाणेषु बहुस्वामिषु यद् बहुत्वं तदनुवादो भविष्यतीति यावत्। दृश्यते हि लोके प्रयोगभेदाभिप्रायं बहुवचनम्। यथा देवश्चेद्वर्षेत् कृषेयुः कृषीवला इति। यथा वा वेदे "सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्" इति। अत्र हि पृष्ठशमनीयस्यैकैकस्वामिकत्वमिति निरूपितमेव प्राक्, तद्वदत्रापि बहुवचनं चोदकप्राप्तैकत्वसङ्ख्यानुग्रहाय प्रयोगाभिप्रायमेवास्तु इति चेत्तन्न; कुतः? एकव्यपदेशात्—एकशब्दः प्रधानपर्यायः।

'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा।
साधारणे समानेऽल्पसङ्ख्यायाश्च प्रयुज्यते ॥'

इति कोशः। "ऋद्धिकामास्सत्रमासीरन्" इति प्रयोगवाक्ये फलस्वामिभूतयजमानसम्बन्धिफलार्थव्यापारलक्षणप्रयोगस्य कर्तृबहुत्वविशिष्टस्य विधित्सितत्वेनैकेषां प्रधानानां फलस्वामिनां बहुत्वेन व्यपदेशाद्-अभिधानात्। स्वामिबहुत्वप्रयोगाङ्गत्वादिति यावत्। एकैकशः प्रयुज्यमाने तु सत्रे कथं स्वामिबहु-

त्वमङ्गं स्यात्, कस्यापि प्रयोगस्य बहुस्वामिकत्वाभावात्। एकशब्दस्सङ्ख्यावाची च, एकेन स्वामिना व्यपदेशात्। अहीनभूतद्वादशाहमेकस्वामिकं विदधत् सत्रस्य संहत्य बहुस्वामिकतां गमयति। उक्तरीत्या सत्रस्याप्येकस्वामिकत्वे तु तदसाङ्गत्यं स्पष्टमेव। पृष्ठशमनीये तु "सत्रादुदवसाय" इत्युदवसानसमानकर्तृकत्वावगमादुदवसाने च प्रत्येकमेव कर्तृत्वादेकैकस्वामिकत्वमेवेति निरूपितमेव प्रागिति वैषम्यम्। लोके च देवश्चेद्वर्षेत् कर्षकाः कृषेयुरित्यादौ तात्पर्यवशात्तथा निर्णयः। केनापि महत्तमेन हलेन बहुभिस्संहत्य कर्षणादर्शनात्। तस्मात् संहत्य बहुस्वामिकमेव सत्रम्॥

इतोऽप्येवमित्याह—

*** बहूनामिति चैकस्मिन्विशेषवचनं व्यर्थम्॥ ४५॥**

"यो वै बहूनां यजमानानां गृहपतिस्सत्रस्य स भूयिष्ठामृद्धिमाध्नोति" इति बहुभिः प्रवर्तिते सत्रे एकस्य गृहपतेः फलातिशयं दर्शयति। सत्रस्यैकस्वामिकत्वे त्वितरयजमानापेक्षया एकस्मिन् यजमाने फलातिशयवचनमसङ्गतार्थकं स्यात्। अतोऽपि संहत्य बहुस्वामिकं सत्रम्॥

इति चतुर्दशं सत्रस्य बहुयजमानकत्वाधिकरणम्॥ १४॥

१५

सत्रं बहुयजमानकमिति स्थितम्। तत्र किं यजमानैरन्ये ऋत्विजो वरणीयाः? उत यजमाना एव ऋत्विक्कर्माणि कुर्युः? इति संशये, पूर्वपक्षयति—

**अन्ये स्युः ऋत्विजः प्रकृतिवत्॥ ४६॥**

प्रकृतौ ज्योतिष्टोमे यजमानादन्ये ऋत्विजः, तद्वदिहापि यजमानेभ्योऽन्ये ऋत्विजस्स्युः॥

अथ सिद्धान्तयति—

**अपि वा यजमानास्स्युः ऋत्विजामभिधानसंयोगात्तेषां स्याद्यजमानत्वम्॥ ४७॥**

अपि वेत्यवधारणे। यजमाना एव सत्रे ऋत्विक्कर्मणां कर्तारस्स्युः, न तु तदन्ये। कुतः? अभिधानसंयोगात्—अभिधानेति कर्मणि ल्युट्। ऋत्विजां दीक्षा-

---

* 'सन्निवापञ्च दर्शयति' इति सूत्रपाठ इतः पूर्वं दृश्यते।

शब्दाभिधेययजमानसंस्कारविशेषेण संयोगात्। "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, ततो होतारं तत उद्गातारम्" इत्युपक्रम्य ऋत्विजां सर्वेषां दीक्षाविधानादिति यावत्। दीक्षा च यजमानसंस्कार एव प्रकृतौ। तस्मादिहापि तेषां दीक्षासंस्कारवतामृत्विजां यजमानत्वम्। ऋत्विक्कर्माणि यजमाना एव कुर्युरिति यावत्।

ननु "ये यजमानास्त ऋत्विजः" इति यच्छब्दोपबन्धाद्यजमानानामुद्देश्यत्वावगमाद्यजमाना इति यजमानानुद्दिश्य तत्रत्यसंस्कारार्थतया ऋत्विज इति ऋत्विक्कर्माणि विधीयन्ते–ऋत्विक्कर्मभिः यजमानास्संस्कर्त्तव्या इति। तथा च ऋत्विक्कर्तव्यकर्मभिर्यजमानकर्तृकैर्यजमानास्संस्क्रियन्त इत्यप्राकृतकार्याणि यानि, तानि यजमानकर्तृकाणि ऋत्विक्कर्तव्यकर्माणि सम्पद्यन्ते। अतः प्राकृतकार्यार्थतया अन्ये ऋत्विजो वरणीयाः। तेषाञ्चान्येषामृत्विजाम् "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" इत्यादिवचनेन दीक्षासंस्कारो विधीयते। यथा आधाने "यश्चाग्निमाधास्यन् स्यात् स एतां रात्रिं व्रतं चरेन्न मांसमश्नीयान्न स्त्रियमुपेयात्" इत्या[दिना]ध्वर्योर्नियमो विधीयते, तद्वदित्याशङ्क्य निराचष्टे—

**कर्तृसंस्कारो वचनादाधातृवदिति चेत् स्याद्विशये तन्न्यायत्वात् प्रकृतिवत्॥ ४८॥**

"ये यजमानाः" इति वाक्येन अप्राकृतयजमानसंस्कारार्थतयार्त्विज्यविधिः, अतः प्राकृतकार्यार्थतयान्ये ऋत्विजो वरणीयाः। तेषाञ्च ऋत्विजां दीक्षासंस्कारो वाचनिकः, नैतावता तेषां यजमानत्वमाधातृवदिति चेदाशङ्कसे, तर्हि अस्मिन् विशये चोद्ये इदमुत्तरं श्रुणु–यजमानानामेवार्त्विज्यं स्यात्, न तु यजमानेभ्योऽन्ये ऋत्विज इति। कुतः? तन्न्यायत्वात्–सः न्यायो यस्मिन् तत् तन्न्यायम् 'अपि वा यजमानास्स्युः ऋत्विजामभिधानसंयोगात्' इत्युक्तन्यायादित्यर्थः। एवं सत्येवाध्वर्युब्रह्मादिदीक्षा प्रकृतिवद् भवति, अन्यथा तस्या अप्राकृतकार्यकत्वं स्यात्, प्रकृतौ दीक्षायाः स्वामिसंस्कारार्थत्वात्। अत एव च ये यजमाना इति यजमानसंस्कारार्थतया न ऋत्विक्कर्मविधिः। करणभूतधात्वर्थतया यागाद्युपकारमन्तरेण ऋत्विक्कर्मणां यजमानसंस्कारलक्षणकार्यान्तरस्वीकारेऽप्राकृतकार्यत्वप्रसङ्गात्। ततश्च यत्तदोर्व्यत्यासेन य ऋत्विजस्ते यजमाना ऋत्विक्छब्दलक्षिते

कार्येऽपरित्यक्तस्वकार्या एव यजमानाः कर्तृत्वेन विधीयन्ते। अतश्च चोदकप्राप्ता अन्ये ऋत्विजो बाध्यन्ते ॥

ननु "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" इति सर्वेषामृत्विजां दीक्षाविधिबलाद्यजमाना एव ऋत्विज इति यदुक्तं तदनुपपन्नम्; तत्र ब्रह्महोत्रध्वर्यादिशब्दानां गृहपतिशब्दवद्यजमानपरत्वसम्भवादिति मन्दाशङ्कामुत्थाप्य निराचष्टे—

**स्वाम्याख्यास्स्युर्गृहपतिवदिति चेन्न प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्मेण ॥ ४९ ॥**

चेदन्तं स्पष्टम्। नैतद्युक्तम्; कुतः? प्रसिद्धग्रहणत्वात्—यानि कर्माणि प्रसिद्धानि आध्वर्यवं हौत्रं प्रशास्त्रीयमित्येवं समाख्यातानि तानि ग्रहणानि प्रवृत्तिनिमित्तानि येषान्ते प्रसिद्धग्रहणाः। अध्वर्य्वादिशब्दानां तत्तत्कर्मविशेषकर्तृषु रूढत्वादिति यावत्। ननु गृहपतिशब्दस्यावयवयोगेन गृहस्वामिनि वृत्तेस्तस्य ऋत्विक्परत्वमपि स्यादित्यत आह—असंयुक्तस्य तद्धर्मेणेति। आर्त्विज्यकर्मभिरसंयुक्तस्य केवलं याजमानं कुर्वाणस्यैव गृहपतिशब्दो रूढ्या वाचक इत्यर्थः ॥

इतोऽपि यजमाना एवर्त्विज इत्याह—

**बहूनामिति च तुल्येषु विशेषवचनं नोपपद्यते ॥ ५० ॥**

यदि यजमानेभ्योऽन्ये ऋत्विजः तर्हि तेऽपि गृहपतिवद्याजमान्यमेव कुर्वन्ति, न त्वार्त्विज्यकर्मेति गृहपतितुल्यास्स्युः। ततश्च "यो ह वै बहूनां यजमानानां गृहपतिस्स ह सत्रस्य भूयिष्ठामृद्धिमाप्नोति" इत्येकस्मिन् गृहपतौ फलातिशयवर्णनमनुपपन्नं स्यात्। तद्धि आर्त्विज्यासंयुक्तकेवलयाजमानकर्तृत्वरूपगृहपतित्वनिबन्धनमेव। तादृशगृहपतित्वञ्च तदितरसर्वयजमानानामपि तुल्यमिति कथमेकस्यैव गृहपतेः फलातिशयवर्णनमिति। यदि तु यजमाना एवर्त्विजः न त्वन्ये, तदा आर्त्विज्यासंयुक्तकेवलयाजमानकर्तृत्वमेकस्यैव गृहपतेरिति स[र्व]स्य फलातिशयवर्णनमुपपन्नं भवति। अतोऽपि यजमाना एव ऋत्विजः ॥

इतोऽप्येवमित्याह—

**दीक्षितादीक्षितव्यपदेशश्च नोपपद्येतार्थयोर्नित्यभावित्वात् ॥५१॥**

यदि सत्रेषु ऋत्विजो यजमानेभ्योऽन्ये, तदा "दीक्षितास्सत्रैर्यजन्ते" इति दीक्षितशब्दसंयुक्तवाक्यम् "अदीक्षिता अहीनैर्याजयन्ति" इत्यदीक्षितशब्दसंयुक्तञ्च वाक्यं नोपपद्येत। कुतः? अर्थयोर्नित्यभावित्वात्-प्रथमवाक्ये सत्रीयेषु ऋत्विक्षु स्वामित्वस्य, द्वितीयवाक्ये अहीनर्त्विक्षु अस्वामित्वस्य चार्थस्य नित्यभावित्वात्-नित्यः नियतः व्यवस्थितः भावः सन्निवेशोऽनयोरस्तीति नित्यभाविनौ। व्यवस्था-दर्शनादिति यावत्। प्रथमवाक्ये हि "सत्रैर्यजन्ते" इत्यात्मनेपदमहिम्ना कृत्स्नस्य सत्रव्यापारस्य स्वामिकर्तृकत्वावगमाद्—ऋत्विक्कर्मणामपि तत्र स्वामिकर्तृत्व-मवगतम्। द्वितीयवाक्ये तु याजयन्तीति हेतुमण्णिचा प्रयोजकत्वमृत्विजामवग-तम्, न तु स्वामिनीति स्पष्टमेव। अतोऽपि सत्रे यजमाना एव ऋत्विजः॥

इतोऽप्येवमित्याह—

**अदक्षिणत्वाच्च ॥ ५२ ॥**

"न सत्रे दक्षिणा दीयन्ते" इति सत्रस्यादक्षिणात्वमुच्यते। यदि तत्र यजमानेभ्योऽन्ये ऋत्विजस्स्युः तदा तत्र दक्षिणाभाववचनं नोपपद्येत। दक्षिणा-भावे परार्थकर्मणि तेषां प्रवृत्त्यनुपपत्तेः। अतोऽपि सत्रे यजमाना एव ऋत्विजः॥

इति पञ्चदशं सत्रेषु यजमानानामेवर्त्विक्त्वाधिकरणम्॥ १५॥

१६

अथ प्रसङ्गात् सत्रभूतद्वादशाहस्य लक्षणमाह—

**द्वादशाहस्य सत्रत्वमासनोपेयिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात् ॥ ५३ ॥**

"ऋद्धिकामा द्वादशाहमुपयन्ति" इति "द्वादशाहमासते" इति च चोदनेन यजमानबहुत्वेन च द्वादशाहस्य सत्रत्वं प्रत्येतव्यम्। कुतः? सत्रशब्दाभिसंयो-गात्—"य एवं विद्वांसस्सत्रमासते" "सत्रमुपयन्ति" "चतुर्विंशतिपरमास्सप्त-दशावरास्सत्रमासीरन्" इति सत्रशब्दसहचरितलिङ्गदर्शनात्। एवञ्चासनोपेय्य-न्यतरशब्दचोदितत्वे सति नियतसङ्ख्याविशेषविशिष्टकर्तृकत्वं सत्रसामान्यस्य लक्षणमिति सूचितम्। ज्योतिष्टोमेऽतिव्याप्तिवारणाय सत्यन्तम्। कतिपयसत्राणि

उपेयिचोदितानि—"अष्टादशरात्रं पशुकामा उपेयुः" एवं "विद्वांसस्संवत्सरमुपयन्ति" इत्यादीनि, कानिचित्तु आसतिचोदितानि—"य एवं विद्वांसस्त्रयोदशरात्रमासते" इत्यादीनि। तदुभयेषां सङ्ग्रहायान्यतरग्रहणम्। "षडहेनोपासीत" इत्यहीनगतषडहेऽतिव्याप्तिवारणाय नियतसङ्ख्येत्यादि विशेष्यदलम्। अहीनानान्त्वनियतसङ्ख्याकाः स्वामिनः तदधिकारे "एको यजेत त्रयष्षड् द्वादश त्रयोदश वा पञ्चदश वा" इत्युपक्रम्य "अपरिमिता वा दीक्षेरन्" इति श्रवणात्॥

अथ प्रसङ्गादहीनलक्षणमाह—

**यजतिचोदनादहीनत्वं स्वामिनां चास्थिरपरिमाणत्वात्॥ ५४॥**

यजतिचोदितत्वे सत्यनियतसङ्ख्याकयजमानकत्वमहीनत्वमित्यर्थः। द्विरात्रादीनां यजतिचोदितत्वाद् "एको यजेत त्रयष्षड्वा" इत्याद्युदाहृतवचनेन यजमानसङ्ख्याया अनियतत्वाच्च। बहुयजमानके यमयज्ञेऽतिव्याप्तिवारणाय सत्यन्तम्, तस्य दानप्रधानत्वाद्यजिरूपत्वाभावान्नातिव्याप्तिः। "आ यातु देवस्सुमनोभिरक्तुभिः" इत्यनुवाकसाध्योऽयं यज्ञः आपस्तम्बबोधायनादिसूत्रेषु प्रसिद्धः। ज्योतिष्टोमेऽतिव्याप्तिवारणायानियतसङ्ख्यादिविशेष्यदलम्॥

इति षोडशं सत्राहीनलक्षणाधिकरणम्॥ १६॥

१७

अस्ति पौण्डरीको नाम कश्चिदेकादशसुत्याकोऽहीनः। तत्र श्रुतम्—"अयुतं दक्षिणा ददात्यश्वसहस्रमेकादशम्" इति। अयुतं गास्सहस्रमश्वांश्च दक्षिणा ददातीत्यर्थः। किमत्र गवामयुतमश्वसहस्रञ्च प्रतिसुत्यं देयम्? उतैकमेव गवामयुतमश्वसहस्रञ्च विभज्य प्रतिसुत्यमेकैको भागो देयः? इति संशये, पूर्वपक्षयति—

**अहीने दक्षिणाशास्त्रं गुणत्वात् प्रत्यहं कर्मभेदात् स्यात्॥ ५५॥**

पौण्डरीकेऽहीने दक्षिणाशास्त्रं प्रत्यहम्—प्रतिसुत्यं गवामयुतस्य अश्वसहस्रस्य च दानविधायकं स्यात्, न तु विभज्य प्रत्यहम्। कुतः? गुणत्वात्—उक्तसङ्ख्यादक्षिणादानस्य पौण्डरीकाङ्गत्वात्, पौण्डरीकशब्दवाच्यानाञ्चैकादशानां सुत्याकर्मणां भेदात् प्रतिप्रधानञ्च गुणावृत्तेर्न्याय्यत्वात्॥

अथ सिद्धान्तयति—

**सर्वस्य वैककर्म्यात् ॥ ५६ ॥**

वा शब्दोऽवधारणे। सर्वस्य कृत्स्नस्यैवैकादशसुत्याकस्य पौण्डरीकस्य क्रतोः एकमेव गवामयुतमश्वसहस्रञ्च। कुतः? ऐककर्म्यात्—आनतिलक्षणकार्यैकत्वात्, प्रयोगैकत्वाच्चेत्यर्थः। पौण्डरीकशब्दवाच्यानामेकादशानां सुत्यानां समुदितानामेव प्रधानानां फलसाधनत्वाद्युगपत् प्रयुयुक्षायां सहायत्वेन ऋत्विजः कर्तार उपादीयमानाः प्रयोगाङ्गम्। युगपच्चिकीर्षितप्रधानानाञ्च प्रयोग एक एव। प्रयोक्तॄणाञ्च ऋत्विजामानतिरेकैव। उक्तदक्षिणादानस्य कार्यं तदानतिश्चैकैव। सा चैकेनैव गवामयुतेनाश्वसहस्रेण च सिध्यतीति विभज्यैव प्रत्यहं गवामयुतमश्वसहस्रञ्च देयम्॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**पृषदाज्यवद्वाह्नां गुणशास्त्रं स्यात् ॥ ५७ ॥**

वा शब्दः प्रत्यवस्थाने। दक्षिणागुणशास्त्रमिदमेकादशानामह्नां प्रत्यहमेवैकैकस्य गवामयुतस्याश्वसहस्रस्य च विधायकमस्तु। एकादशापि ह्येतास्सुत्याः प्रत्येकमेव ज्यौतिष्टोमिकसुत्याविकाराः, न तु समुदिताः। तथा सति सवनीयपश्वादीनामपि समुदायाङ्गत्वापातात् प्रतिसुत्यं प्रवृत्त्यनुपपत्तेः। तस्मादिह प्रतिसुत्यमेकैकं गवामयुतमश्वसहस्रञ्च निविशते। पृषदाज्यवत्। यथा "पृषदाज्येनानूयाजान् यजति" इत्यत्र "औपभृतं पृषदाज्यम्" "पृषदाज्येन हृदयमभिघारयति" इत्यत्रान्यत् पृषदाज्यम्, "पृषदाज्येन वनस्पतिं यजति" इत्यत्र ततोऽन्यत् पृषदाज्यमित्येवमन्यदन्यदेव पृषदाज्यं निविशते, तद्वत्॥

अथ सिद्धान्ती परिहरति—

**ज्यौतिष्टोम्यस्तु दक्षिणास्सर्वासामेककर्मत्वात् प्रकृतिवत्तस्मात्तासां विकारस्स्यात् ॥ ५८ ॥**

तुर्वैषम्ये। तृतीयस्य सप्तमे 'दीक्षादक्षिणन्तु वचनात् प्रधानस्य' इत्यत्र "तस्य द्वादशशतं दक्षिणा" इति विहिता ज्योतिष्टोमसम्बन्धिन्यो दक्षिणाः प्रधानसम्बन्ध्यभीष्टवादिप्रयोगकर्तॄणामृत्विजामानतिमुखेन प्रधानाङ्गमिति स्थितम्।

ततश्च तत्रानतिद्वारा सोमयज्यभ्यासात्मकसुत्यारूपप्रधानप्रयोगाङ्गं दक्षिणादानमिति स्थितिः। अत इह विकृतौ सर्वासां समुदितानां सुत्यानामुक्तरीत्या प्रयोगैकत्वादानतिलक्षणकार्यैकत्वाच्च प्रकृतौ द्वादशं शतमिवैकमेव गवामयुतमश्वसहस्रञ्चैकामेव ऋत्विजामानतिं सम्पाद्य कृत्स्नपौण्डरीकसुत्याप्रयोगमुपकरोति। तस्मात् हेतोः सर्वविकारः—गवामयुतस्याश्वसहस्रस्य चैकैकस्यैव सर्वासु सुत्यासु विकारः—विभज्य निवेशस्स्यात्। सवनीयपशुस्तु न प्रयोगद्वारकः, किन्तु साक्षादेव प्रयोगाङ्गमिति तद्भेदादावर्त्यमिति वैषम्यम्॥

अथ पुनः पूर्वपक्षी प्रत्यवतिष्ठते—

**द्वादशाहे तु वचनात् प्रत्यहं दक्षिणाभेदस्तत्प्रकृतित्वात् परेषु तासां सङ्ख्याविकारस्स्यात्॥ ५९॥**

तुः प्रत्यवस्थाने। पौण्डरीकप्रकृतिभूते द्वादशाहे प्रत्यहं दक्षिणाभेदश्रुतिः "अन्वहं द्वादशशतं ददाति" इति। इदञ्च वचनं ज्योतिष्टोमात् प्राप्तानां द्वादशशतसङ्ख्याकानां गवामुक्तरीत्या प्रयोगाङ्गतया सकृद्दानप्रसक्तौ प्रत्यहं तावत्सङ्ख्याकदानावृत्तिविधिपरम्। अतः परेषु-अन्येषु पौण्डरीकादिष्वपि तासां—दक्षिणानां प्रयुक्तत्वात् सङ्ख्यायाः प्रत्यहं विकारः—आवृत्त्या निवेशस्स्यात्। कुतः? तत्प्रकृतित्वात्—द्वादशाहप्रकृतित्वात्॥

अथ सिद्धान्ती निराचष्टे—

**परिक्रयाविभागाद्वा समस्तस्य विभागस्स्यात्॥ ६०॥**

वाशब्दोऽवधारणे, नार्थे च। द्वादशाहे "अन्वहं द्वादशशतं ददाति" इति वचनं प्रकृतिप्राप्तद्वादशशतदक्षिणादानस्य प्रयोगाङ्गत्वात् सकृदेव प्रसक्तौ प्रत्यहमावृत्तिपरं न भवति, द्वादशाहस्याप्येकप्रयोगतया परिक्रयाविभागात्-आनत्येकत्वात्। ततश्च प्रत्यहं गवां द्वादशशते दीयमाने द्वादशसुत्यासमुदायस्य चतुश्चत्वारिंशदुत्तरत्रिशताधिकसहस्रं गावस्सम्पद्यन्ते। तावत्सङ्ख्याकानां गवां समुदायश्चैकैव दक्षिणा। अन्वहमिति वचनस्य तावत्सङ्ख्याकानां गवां समुदायो द्वादशाहस्य दक्षिणेत्यत्रैव तात्पर्यम्। अतो द्वादशाहे समस्तस्य चतुश्चत्वारिंशदुत्तरत्रिशताधिकसहस्रसमुदायस्य प्रत्यहं विभागः स्यात्—द्वादशधाविभज्यैकैकभागस्य

द्वादशशतात्मकस्य प्रत्यहं दानं स्यादिति यावत् । एवञ्च पौण्डरीकदक्षिणाया अपि उक्तसङ्ख्याकायास्समुदायस्थानापन्नत्वान्न प्रत्यहमावृत्तिरिति ॥

ननु यदि द्वादशाहे चतुश्चत्वारिंशदुत्तरत्रिशताधिकसहस्रसमुदायात्मिकैकैव दक्षिणा, तर्हि युगपत् सकृदेव दीयताम्, किमवयवशोऽन्वहं दानेनेत्यत आह--

**भेदस्तु गुणसंयोगात् ॥ ६१ ॥**

हेतौ पञ्चमी । फलमपि हेतुः । यथा अध्ययनेन वसतीति । भेदस्तु-अन्वहमवयवशो दानन्तु गुणसंयोगलाभाय "दाक्षिणानि जुहोति" "अन्तरेण सदश्च गार्हपत्यञ्च, अन्तरेण सदश्चाग्नीध्रञ्चान्तरेण चात्वालोत्करावुदीचीरुत्सृजन्ति" इत्यादि दक्षिणाधर्माणामवयवशो लाभार्थमिति यावत् । तस्मादिह विभज्यैव दानमिति ॥

इति सप्तदशं पौण्डरीके दक्षिणाया विभज्यदानाधिकरणम् ॥ १७ ॥

१८

पौण्डरीके गवामयुतमश्वसहस्रञ्चैकैव दक्षिणा । सा च विभज्य प्रत्यहं देयेति स्थितम् । अस्ति प्रकृतौ ज्योतिष्टोमे दक्षिणानां नयनं "माध्यन्दिने सवने दक्षिणा नीयन्ते उत्तरेण सदश्च गार्हपत्यञ्च" इत्यादि । तदिदं पौण्डरीके चोदकपरम्परया प्राप्तम् । तदिदं नयनं किं गवामयुतस्याश्वसहस्रस्य च समस्तस्य प्रत्यहं भवेत् ? उत समस्तस्यान्यतमे कस्मिंश्चिदहनि ? अथवा एकैकस्मिन्नहनि एकमेकं गोसहस्रं नेतव्यम्, एकादशे त्वहन्यश्वसहस्रं नेतव्यम् ? इति संशये, प्रथमपक्षयति—

**प्रत्यहं सर्वसंस्कारः प्रकृतिवत् सर्वासां सर्वशेषत्वात् ॥ ६२ ॥**

गवामयुतस्याश्वसहस्रस्य च सर्वस्य प्रत्यहं नयनसंस्कारस्स्यात् । कुतः ? सर्वासां सर्वशेषत्वात्—सर्वासां दक्षिणानां नयनस्य सर्वसुत्याशेषत्वात् । शेषभूतानाञ्च दक्षिणानां यो यो नयनसंस्कारः स स तेन तेनान्हा युज्यते । तस्मात्प्रत्यहं सर्वसंस्कारः । एवञ्च प्रकृतिवत् कृतं भवति । [प्रति] सुत्यं माध्यन्दिनसवने समस्तदक्षिणानयने सति चोदकानुग्रहश्चेति यावत् ॥

द्वितीयपक्षमुपक्षिप्य प्रथमपक्षी प्रतिक्षिपति—

**एकार्थत्वान्नेति चेत् स्यादुत्पत्तौ कालभेदात् ॥ ६३ ॥**

सर्वस्य दक्षिणाद्रव्यस्य प्रत्यहं नयनमिति न युज्यते । कुतः ? एकार्थत्वात्—पूर्वाधिकरणोक्तरीत्या गवामयुतमश्वसहस्रञ्चैकैव दक्षिणा । तदर्थश्च नयनसंस्कारः ।

अन्यतमेऽहनि सकृदेव कर्तव्यः, सकृत्संस्कृतायास्तस्याः पुनस्संस्कारे प्रयोजनाभावात्। तस्मादन्यतमेऽहनि माध्यन्दिने सवने समस्तदक्षिणाद्रव्यस्य नयनमिति चेद् ब्रूपे, तत्रेदमुत्तरम्-प्रत्यहं समस्तस्य दक्षिणाद्रव्यस्य नयनं स्यात्। कुतः? उत्पत्तौ कालभेदात्-उत्पत्तौ प्रकृतौ ज्योतिष्टोमे कालभेदात्—"माध्यन्दिने सवने दक्षिणा नीयन्ते" इति दक्षिणानयनस्य माध्यन्दिनकालविशेषसंयोगात्। भिद्यन्ते चात्र प्रत्यहं माध्यन्दिनसवनानि। ततश्च गृह्यमाणविशेषत्वाद्यस्य माध्यन्दिने सवने समस्तं दक्षिणाद्रव्यं न संस्क्रियेत, तस्य संस्कारलोपस्स्यात्, अन्वहं प्रयोगभेदात्। न ह्यन्यत्र क्रियमाणनयनेनान्यत्र संस्कारो भवति। तस्मात्प्रत्यहं समस्तस्य दक्षिणाद्रव्यस्य नयनमिति प्रथमपक्षः स्थितः॥

अथ सिद्धान्तयति—

**विभज्य तु संस्कारवचनात् द्वादशाहे ॥ ६४ ॥**

तुरवधारणे। गवामयुतस्याश्वसहस्रस्य च विभज्यैव प्रत्यहं नयनसंस्कारस्स्यात्, न तु समस्तस्य प्रत्यहम्। कुतः? द्वादशाहे "अन्वहं द्वादशशतं ददाति" इति वचनबलेन अवयवा [नामेव] समुदायस्संस्कार्य इत्यवगमात्। अन्वहमिति वचनस्य ह्येतदेव प्रयोजनमिति पूर्वाधिकरणे वर्णितम् 'भेदस्तु गुणसंयोगात्' इति सूत्रेण। ततश्चेहापि पौण्डरीके यथाप्रकृत्यवयवश एवं प्रत्यहं नयनसंस्कार इति॥

इत्यष्टादशं पौण्डरीके प्रत्यहं विभज्य दक्षिणानयनाधिकरणम् ॥१८॥

१९

क्वचिदिष्टौ श्रूयते—"मनोः ऋचस्सामिधेन्यो भवन्ति" इति। मनुशब्दघटिता इत्यर्थः। तत्र किं यावत्यो मानव्य ऋचो बाह्वृच्ये दाशतये प्रसिद्धाः तावत्यस्सामिधेनीषु विनियोक्तव्याः? उत यावतीभिः प्राकृती पाञ्चदश्यसङ्ख्या पूर्यते तावत्य एव? इति संशये, पूर्वपक्षयति—

**लिङ्गेन द्रव्यनिर्देशे [1]सर्वप्रत्ययस्स्याल्लिङ्गस्य सर्वगामित्वादाग्नेयवत् ॥ ६५ ॥**

मनोः ऋच इति लिङ्गेन-विशेषणेन द्रव्यनिर्देशे-ऋग्विधाने लिङ्गस्य-मनुशब्दघटितस्य विशेषणस्य सर्वसाधारण्यात् सर्वप्रत्ययस्स्यात्-सर्वसां मानवीना-

१. सर्वस्य.

मृचां दाशतयीनां विनियोगस्स्यात्। सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति सर्वाशब्दस्य पुंवद्भावः। आग्नेयवत्-क्वचिदग्निविशेषे "आग्नेयैस्सूक्तैस्संवत्सरमुपदधान आसीत" इत्यत्र सर्वेषामाग्नेयसूक्तानां दाशतयीनामुपधाने विनियोग इति सङ्कर्षकाण्डे द्वितीयाध्यायस्य प्रथमपादे 'यदृषीणामाग्नेयमिति याज्ञसेनीः प्रत्युपबन्धात्' इत्यधिकरणे 'दाशतयीभ्यो यावदर्थमागमयेद्यथा गायत्रीषु स्तुवत इति' 'सर्वेषान्तद्व्याख्यातम्' इत्युत्तराधिकरणे च प्रपञ्चयिष्यते। तद्वदिहापि सर्वासां मानवीनामृचां सामिधेनीषु विनियोगः। आग्नेयवदित्युपलक्षणम्। ऋजीषवच्च। यथा च अहर्गणे "ऋजीषमप्सु प्रास्यति" इति सर्वेषामह्नामृजीषमवभृथे प्रास्यते, तद्वत्॥

अथ सिद्धान्तयति—

**यावदर्थं वार्थशेषत्वादल्पेन परिमाणं स्यात्तस्मिंश्च लिङ्गसामर्थ्यम् ॥ ६६ ॥**

वाशब्दोऽवधारणे। प्रकृतौ पञ्चदश सामिधेन्यः। ताश्च समिदाधानार्थाः, 'समिधामाधाने षेण्यन्' इत्यनुशासनात्। पञ्चदशैव च प्रकृतौ समिदाधानानि। तानि चाग्निसमिन्धनार्थानि। तानि च चोदकत इह प्राप्तानि यावन्ति, तावत्सङ्ख्याका एव मानव्य ऋच उपादेयाः, न तु सर्वा मानव्यो दाशतय्यः। कुतः? अर्थशेषत्वात्-प्रकृतौ "प्रवोवाजा" इत्यादीनामृचां सामिधेनीनां पञ्चदशानां पञ्चदशसङ्ख्याकसमिदाधानार्थत्वात् तावत्य एव मानव्य ऋच उपादेयाः, न त्वधिकाः। यतः अल्पेन-मानवीगतपाञ्चदश्यपरिमाणेनोपादीयमानेन प्राकृतं समिदाधानपाञ्चदश्यपरिमाणमनुगृहीतं स्यात्। अधिकानामुपादाने तु प्राकृतं पाञ्चदश्यं बाध्येत, अधिकसमिदाधानप्रसङ्गात्। न चेष्टापत्तिः, गुणानुरोधेन प्रधानावृत्तेरयुक्तत्वात्। ननु "मनोः ऋचः" इति बहुत्वस्य कपिञ्जलाधिकरणन्यायेन त्रित्वे पर्यवसानात् तिसृणामेव मानवीनामुपादानं स्यात्। एवञ्च प्राकृतपाञ्चदश्यबाधस्तदवस्थ एवेत्यत आह—तस्मिंश्च लिङ्गसामर्थ्यमिति। तस्मिन्-मानवीनामृचामेव विधाने मनोरिति लिङ्गेन ऋग्विधेस्सामर्थ्यम्, न तु सङ्ख्याविशिष्टानां मानवीनां विधौ। यदि हि प्राकृतकार्ये सङ्ख्याविशिष्टानां मानवीनामृचां विधानं स्यात्, तदा कपिञ्जलाधिकरणन्यायात् तिसृणामेवोपादानं स्यात्। नैवमस्ति, पञ्चदशसङ्ख्याकसामिधेनीकार्यत्वेनावगतानि यानि समिदाधानानि

तत्र प्राकृतीनां "प्रवोवाजा" इत्यादीनामृचां स्थाने मानवीनामृचामेव विधानेन प्राकृतीनामृचां बाधेऽपि न प्राकृतपाञ्चदश्यबाधे कश्चिद्धेतुरस्ति, सङ्ख्यान्तरस्याविधानात्। एवञ्च प्राकृतपाञ्चदश्याविरोधेनैव मानवीनाम्॥

अथाग्नेयवदित्यत्राह—

**आग्नेये तु कृत्स्नविधिः॥ ६७॥**

"आग्नेयैस्सूक्तैस्संवत्सरमुपदधान आसीत" इत्याग्नेयशब्दसंयुक्ते वाक्ये दाशतयीनां सर्वेषामाग्नेयसूक्तानामुपधाने विनियोग इति युक्तम्, प्रतिसूक्तम् "एकैकामिष्टकामुपदधाति" इति वचनात्। दाशतयाम्नाताग्नेयसूक्तापेक्षया चोपधेयानामिष्टकानां भूयस्त्वेऽपि सङ्कर्षे वक्ष्यमाणरीत्या आवृत्या कात्स्न्र्येनोपधान सम्भवात्। सङ्कर्षे हि प्रथमाध्यायस्य द्वितीयपादे 'भूयांसि कर्माण्यल्पीयांसो मन्त्रास्तत्र सर्वाणि मन्त्रवन्ति समशः प्रविभज्य पूर्वैः पूर्वाणि कुर्यादुत्तरैरुत्तराणि' इत्यधिकरणे मन्त्रावृत्तिप्रकारो वक्ष्यते। इह तु समिदाधानानां कार्याणां पञ्चदश्या नियमान्न सर्वासां मानवीनां तत्र विनियोगसम्भव इति वैषम्यम्॥

अथ ऋजीषदृष्टान्तोऽपि विषम इत्याह—

**ऋजीषस्य प्रधानत्वादहर्गणे सर्वस्य प्रतिपत्तिस्स्यात्॥ ६८॥**

ऋजीषस्यावभृथे प्रासनरूपप्रतिपत्त्या संस्कार्यत्वेन प्रधानत्वादहर्गणे यदहस्सम्बन्धि ऋजीषं न प्रास्यते, तस्य संस्कारलोपः स्यात्। अतः सर्वस्य ऋजीषस्य प्रासनरूपा प्रतिपत्तिस्स्यात्। इह तु यदि ऋचां संस्कार्यत्वं स्यात्, तदा सर्वासां संस्कारलोपस्स्यादिति सर्वासामुपादानं स्यात्। नैवमस्ति, तासामग्निसमिन्धनशेषत्वेनोपादेयत्वात्। गुणानुरोधेन च प्राधानावृत्तेरयुक्तत्वात्। अतो यावदर्थमेवोपादानमिति वैषम्यम्॥

इत्येकोनविंशं मानवीषु ऋक्षु पाञ्चदश्यनियमनाधिकरणम्॥ १९॥

२०

**वाससि मानोपावहरणे प्रकृतौ सोमस्य वचनात्॥ ६९॥**

प्रकृतौ ज्योतिष्टोमे सोमस्य राज्ञो मानं श्रुतम् "अभित्यन्देवं सवितारमिति मिमीते" इति। तत्रैव सोमस्य राज्ञो वाससि बद्धस्य शकटे स्थापितस्य अधस्तात्

ग्रावसु उपावरोहणं श्रुतम्-"राजानमन्तरेवे ग्रावसूपावहरति" इति। ईषयोः शकटाग्रगतयोः दण्डविशेषयोर्मध्यादित्यर्थः। तदिदं मानं वाससि भवति, उपावहरणमपि वससि बद्धस्यैव भवति, न तु वाससा विना। कुतः? "वाससि मिमीते" "वाससोपावहरति" इति वचनात्। वाससा सहेत्यर्थः। इदं सूत्रमुत्तरविवक्षया प्रवृत्तं वेदितव्यम्, वचने सति पूर्वपक्षस्यानुन्मेषात्॥

इति विंशं वाससि मानोपावहरणानुष्ठानाधिकरणम्॥ २०

२१

तदिदं वाससा सोमोपावहरणं द्वादशाहे चोदकतः प्राप्तम्। तत्र किम् उपावहरणवासोभेदस्स्यात्? न वा? इति संशये, भेदे प्रमाणाभावादेकमेव सर्वेषामह्नामुपावहरणवास इति प्राप्ते, सिद्धान्तयति—

**तत्राहर्गणेऽर्थाद्वासः प्रकृतिस्स्यात्॥ ७०॥**

अहर्गणे-साध्यसुत्याके द्वादशाहे, तत्र-तस्मिन्, वाससा सोमोपावहरणे अर्थाद् वासोभेदस्स्यात्। प्रकृतौ तावद् यस्मिन् वाससि क्रयकाले सोमो मित उष्णीषे बद्धः तेनैव वाससा प्राप्तस्सवनेऽभिषवकाले राजानमुपावसृत्य प्रातस्सवने पर्याप्तं विभज्य गृहीत्वा अवशिष्टस्सोमस्तस्मिन्नेव वाससि बध्वा माध्यन्दिनसवनाय शकटे स्थाप्यते। माध्यन्दिनसवने प्रवृत्ते एवमेवोपावहृत्यावशिष्टं सर्वं सोमं तदुपावहरणवासोऽच्छावाकाय दीयते इति स्थितिः। एवञ्च द्वादशाहेऽपि प्रथमेऽहनि माध्यन्दिने राजानमुपावसृत्योपावहरणवाससि अच्छावाकाय दत्ते सति उत्तरेऽहनि पुनरुपावहरणाय वासोऽन्तरमुपादेयम्। एवमहरन्तरेष्वप्यहस्सु। यद्यपि "ग्रावस्तुते सोमोष्णीषं प्रयच्छति" इति सोमोष्णीषस्यैवाच्छावाकाय दानमुक्तम्, न तूपावहरणवाससः। तथाचैकमेव वासस्सर्वेष्वहस्सूपावहरणाय प्रभवति, तथापि तथाविधशाखान्तराभिप्रायमधिकरणमिति॥

इत्येकविंशमहर्गणे उपावहरणवासोभेदाधिकरणम्॥ २१॥

२२

द्वादशाहे प्रत्यहमन्यदन्यत् सोमोपावहरणवास इति स्थितम्। तावन्ति वासांसि क्रयात् पूर्वं सोममानवेलायां सम्पाद्यानि? उत प्रतिसुत्यमुपावहरणवेलायम्? इति संशये, पूर्वपक्षयति—

**मानं प्रत्युत्पादयेत् प्रकृतौ तेन दर्शनादुपावहरणस्य ॥ ७१ ॥**

मानं प्रति मानकाले तावन्ति वासांसि सम्पाद्य तेषु मातव्यः सोमः। कुतः ? प्रकृतौ तेनोपावहरणस्य दर्शनात्—यस्मिन् वाससि क्रयकाले मानं सोमस्य कृतं तेनैव वाससाभिषववेलायामुपावहरणस्य दर्शनात्। तद्वद् द्वादशाहेऽपि प्रत्यहं मानवाससैवोपावहरणेन भवितव्यम्। तस्मात् क्रयाहे मानकाले वासांसि तावन्ति सम्पाद्य तेषु सोममानमेकैकेन च तेन मानवाससा प्रत्यहमुपावहरणम्॥

अथ सिद्धान्तयति—

**हरणे वा श्रुत्यसंयोगादर्थाद्धि प्रकृतौ तेन ॥ ७२ ॥**

वा शब्दोऽवधारणे। प्रत्यहमुपावहरणवेलायामेव वासः प्रकल्पनम्, न तु मानवेलायाम्। कुतः ? श्रुत्यसंयोगात्—"मानवाससोपावहरति" इति वचनाभावादित्यर्थः। प्रकृतौ "वाससोपावहरति" इत्येव श्रुतम, न तु मानवाससेति। ननु प्रकृतौ तथाविधवचनाभावेऽपि क्रयकाले यस्मिन् वाससि सोमो मित उपनद्धश्शकटे स्थापितः, तेनैव वाससा उपावहरणं क्रियते। वासोन्तरोपादाने यत्न गौरवात् शास्त्रार्थस्य तावतैवोपपत्तेश्च। तथाच प्रकृतौ मानवाससैवोपावहरणस्य दृष्टत्वादिहापि प्रत्यहं मानवाससोपावहरणं कार्यमिति मानवेलायामेव तावतां वाससामुपकल्पनमुचितमित्यत आह—अर्थादित्यादि। हि यतः, तेन-मानवाससेत्येतत् प्रकृतौ आर्थिकमेव, न तु वाचनिकम्। न चार्थिकं चोदकः प्रतिदिशति। एवञ्चाहर्गणे मानवेलायामुपावहरणानुपपत्त्यस्फुरणादेकस्मिन्नेव वाससि मिते सोमे उपनह्य शकटे स्थापितेऽभिषववेलायामुपावहरणार्थमनुपपत्तिवशात् प्रत्यहं वासोभेदस्सिध्यति॥

इति द्वाविंशमहर्गणे उपावहरणार्थं वासोऽन्तरोपादानाधिकरणम्॥ २२ ॥

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचिताया-
मध्वरमीमांसाकौतूहलवृत्तौ
दशमाध्यायस्य षष्ठः पादः

# अथ दशमाध्यायस्य सप्तमः पादः

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

तदेवं सोमयागविषयो बाधः प्राधान्येन विचारितः । अथास्मिन् सप्तमपादे सोमाङ्गपश्वादिष्ववदानप्रदेशादिबाधः प्राधान्येन विचार्यते । "अग्नीषोमीयं पशुमालभेत" इत्यत्र किं कृत्स्नः पशुरेकं हविः ? उत पश्वङ्गानि वपाहृदयादीनि ? इति संशये, पूर्वपक्षयति—

**पशोरेकहविष्ट्वं समस्तचोदितत्वात् ॥ १ ॥**

पशोः कृत्स्नस्यैकस्यैव हविष्ट्वं प्रत्येतव्यम् । कुतः ? समस्तचोदितत्वात्—कृत्स्नस्यैवैकस्य पशोर्देवतासम्बन्धस्य विहितत्वात् । न च "कृत्स्नां वपामवद्यति" "हृदयस्याग्रेऽवद्यति, अथ जिह्वाया अथ वक्षसः" इत्येवं वपाहृदयादीनां हविस्संस्कारावदानसंयोगदर्शनात्तेषामेव हविष्ट्वमिति वाच्यम् । पशोर्ह्यष्टमस्य द्वितीये प्रातर्दोहविकारत्वमुक्तम्—'पयो वा कालसामान्यात्' इति । ततश्च पशोः प्राकृतेऽवदाने वपाहृदयादिप्रदेशविधिः । तेन "मध्यादवद्यति" "पूर्वार्द्धादवद्यति" इति प्राकृतप्रदेशबाधः । ततश्च पशोरेवावदानमिति वपाहृदयादीनामवदानसंस्कारविधानाभावान्न हविष्ट्वम् । एवञ्च वपाद्यवत्तं वषट्कारसमयेऽध्वर्युणा होतव्यम्, यजमानस्तु तस्मिन्समयेऽग्नीषोमाभ्यामिदं न ममेति कृत्स्नः पशुस्त्यक्तव्यः ॥

अथ सिद्धान्तयति—

**प्रत्यङ्गं वा ग्रहवदङ्गानां पृथक् कल्पनत्वात् ॥ २ ॥**

वा शब्दोऽवधारणे । अङ्गमङ्गं प्रत्यङ्गम् । वीप्सायामव्ययीभावः । पश्वङ्गभूतवपाहृदयादीनामेव हविष्ट्वं प्रत्येतव्यम्, न तु समस्तस्य पशोः । कुतः ? अङ्गानां पृथक् कल्पनत्वात्—पृथक् श्रुतं कल्पनम् अवदानं येषां तान्यङ्गानि पृथक् कल्पनानि । वपाहृदयादीनामवदानश्रवणादिति यावत् । न हि "कृत्स्नां वपामव-

द्यति" इत्यत्र प्राकृतावदानं विवक्षितम्, तदुद्देशेन वपालक्षणप्रदेशस्य कार्त्स्न्यस्य विधौ वाक्यभेदापातात्। एवं हृदयादिवाक्येष्वपि प्राकृतावदानोद्देशेन हृदयादि-प्रदेशविधौ अग्रेशब्दाथशब्दाभ्यां क्रमस्य च विधौ वाक्यभेदस्स्यात्। अतो वपाहृदयादिवाक्यानि वपादिविशिष्टावदानान्तरविधय एव। तत्र च पाठक्रमादेव क्रमस्य प्राप्तत्वादग्रेशब्दाथशब्दावनुवादकौ। प्राकृतावदानोद्देशेन हृदयादिप्रदेश-विधौ 'एकार्थास्तु विकल्पेरन्' इति द्वादशाधिकरणन्यायेन प्राकृतद्व्यवदान-प्रापकचोदकानुरोधेन च हृदयादीनां विकल्प एव स्यात्। प्राकृतावदाने हृदयादीनां समुच्चये तेषां बहुत्वेन तेभ्यो द्व्यवदानस्यासम्भवेन तच्चोदकबाधापत्तेः। एवञ्च विकल्पे सति क्रमस्याप्रसक्तेरग्रेशब्दाथशब्दौ निरवलम्बनौ स्याताम्। एवञ्च वपाहृदयादिविशिष्टावदानविधिबलात्तेषामेव हविष्ट्वम्। न चोत्पत्तिवाक्ये पशोर्दे-वता सम्बन्धावगमविरोध इति वाच्यम्, तस्य वपाहृदयादिप्रणाड्यैवोपपत्तेः। ग्रहवत्। यथा ऐन्द्रवायवादिवाक्येषु देवतासम्बन्धावगमात् सोमरस एव हविः, न तूत्पत्तिशिष्टापि सोमलता, तस्याश्च रसप्रणाड्यैव देवतासम्बन्धस्तद्वत्। तस्मादग्नीषोमाभ्यामिदं न ममेत्येवं वपाहृदयादिहविषामेव त्यागः, न तु समस्तस्य पशोः। अङ्गानां पृथक्कल्पनत्वादित्यस्य विशस्य वपाद्यङ्गानामुद्धृतत्वेनाकृति-विशिष्टप्राणिविशेषात्मकस्य पशोर्वषट्कारसमये विनष्टत्वेन तस्य रूपेण देवता-सम्बन्धासम्भवान्न हविष्ट्वमित्यप्यर्थः। न चैवं सति "यदाग्नेयोऽष्टाकपालः" इत्यत्रापि पुरोडाशस्य द्विरवदानतो विनष्टत्वेन वषट्कारसमये देवतासम्बन्धा-भावात् द्व्यवदानप्रणाड्यैव हविष्ट्वं देवतासबन्धश्च स्यात्। ततश्च कृत्स्नः पुरोडाशो देवतायै त्यज्यत इति वार्तिकसिद्धान्तो व्याकुप्येत इति वाच्यम्, द्व्यवदान प्रणाड्यैव पुरोडाशस्य देवतासम्बन्ध इति भाष्यसम्मतपक्षस्यैव प्रामाणिकत्वात्। यथा चैतत्तथा तृतीयचतुर्थे सर्वप्रदानाधिकरणेऽवोचाम॥

इति प्रथमं पशौ हृदयाद्यङ्गानामेव हविष्ट्वाधिकरणम्॥ १ ॥

२

पश्वङ्गानि वपाहृदयादीनि हवींषीति स्थितम्। किमन्यतमेन केनचिदङ्गेन यागो निर्वर्तयितव्यः? उत वपया हृदयं जिह्वा वक्षो यकृद्वृक्कौ सव्यं दोरुभे पार्श्वे दक्षिणा श्रोणिर्गुदकाण्डमित्येकादशभिरन्यैश्च सर्वैरङ्गैः? किं वा वपा-

हृदयाद्येकादशभिरेव ? इति संशयः। तत्र उत्सूत्रः प्रथमः पक्षः क्रमबोधकाग्रेशब्दाथशब्दविरोधादेव पूर्वाधिकरणे निरस्तः॥

अथ द्वितीयपक्षयति—

**हविर्भेदात् कर्मणोऽभ्यासस्तस्मात्तेभ्योऽवदानं स्यात्॥ ३॥**

वपायाः हृदयाद्येकादशानां तदितरेषाञ्च सर्वेषामङ्गानामवदानक्रियाया अभ्यासस्स्यात्। सर्वैरङ्गैर्यागो निर्वर्तयितव्य इति यावत्। उत्पत्तिवाक्ये तावत् पश्वाकृतेर्देवतासम्बन्धश्श्रुतः। अतः पश्वाकृत्या परिच्छिन्नेन द्रव्येण यष्टव्यमित्यवगतम्। सा च पश्वाकृतिरवयविद्रव्यं साक्षात् परिच्छिनत्ति। तस्य चावयविद्रव्यस्य पशुलक्षणस्य विशसनविधानान्न साक्षाद्यागसाधनत्वं सम्भवतीति तदवयवानामवयविद्वारेण पश्वाकृत्या परिच्छिन्नानां यागसाधनत्वं पर्यवस्यति। अवयवी च पशुश्चयवेषु व्यासज्य वर्तमानो युगपत् सर्वानेवावयवानुपस्थापयति। ततश्चाविशेषात् सर्वैरङ्गैर्यष्टव्यम्। तस्मात्तेभ्यस्सर्वेभ्यः वपायाः हृदाद्येकादशभ्यस्तदितरेभ्यश्चाङ्गेभ्योऽवदातव्यम्॥

अथ सिद्धान्तयति—

**आज्यभागवद्वा निर्देशात् परिसङ्ख्या स्यात्॥ ४॥**

वा शब्दोऽवधारणे। विशसनविधानादवयवानां यद्यागसाधनत्वमवगतम् तद् वपाहृदयादिपरिगणितेषूपसंहृतं भवति। "वपामवद्यति" "हृदयस्याग्रेऽवद्यति" इत्यादिना तेषामेव हविस्संस्कारावदानवचनात्। अत इतरेषामङ्गानां परिसंख्या-हविष्ट्वनिरासस्स्यात्। तदवदानश्रवणस्य परिसङ्ख्यार्थत्वात्, आज्यभागवत्। यथा गृहमेधीये "आज्यभागौ यजति" इति पुनः श्रवणमितराङ्गपरिसङ्ख्यार्थं तद्वत्॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**तेषां वा द्व्यवदानत्वं विवक्षन्नभिनिर्दिशेत् पशोः पञ्चावदानत्वात्॥ ५॥**

वा शब्दः प्रत्यवस्थाने। "हृदयस्याग्रेऽवद्यति" इत्यादिवाक्यसमूहः तेषाम्-हृदयाद्येकादशाङ्गानां द्व्यवदानत्वं विवक्षन् अवदानद्वित्वविवक्षया हृदयादीनि

अभिनिर्दिशेत्–प्रातिस्विकतयोपदिशेत्, न त्ववदेयपरिगणनाय। कुतः? पशोः पञ्चावदानत्वात्। "पञ्चावत्तैव वपा कार्या" इति वपाग्रहणं पाशुकहविर्मात्रोपलक्षणमित्यत्रैव पादान्ते वक्ष्यते। [ननु] "चतुरवत्तिनो मध्यात् पूर्वार्धाच्च प्रधानहविषोऽवदानम्, पञ्चावत्तिनस्तु पश्चार्धात्तृतीयमवदानम्" इति सङ्कर्षे द्वितीयस्य द्वितीये पञ्चावत्तपेटिकायां वक्ष्यते–'औषधाद्वा तत्सम्प्रदानेनाभिप्रेतम्' इत्यत्र। एवञ्च सर्वेषां पश्वङ्गानामवदाने प्राप्ते "एकादश वै पशोरवदानानि तानि द्विर्द्विरवद्यति" इति विधानम्। कानीव तान्येकादशेत्यपेक्षायां हृदयादिरूपाणि तान्येकादशेत्येवमपेक्षितविशेषसमर्पणपरतया तदेकवाक्यतापन्नानि द्व्यवदाननियमार्थानि सम्पद्यन्ते। एवञ्च "पञ्चावत्तैव वपा कार्या" इति त्र्यवदानं हृदयाद्येकादशाङ्गव्यतिरिक्तेष्वङ्गेष्ववतिष्ठते। न चैवं सति वपाया अपि त्र्यवदानं स्यादिति [वाच्यम्,] "उपस्तीर्य हिरण्यशकलमवदाय कृत्स्नां वपामवदाय हिरण्यशकलमुपरिष्टात्कृत्वाभिधारयत्येवं पञ्चावत्ता भवति" इति विशिष्यवचनेन तद्बाधात्। एवञ्च परिसङ्ख्यापकप्रमाणाभावात् सर्वेषामेवाङ्गानां हविष्ट्वम्। न चैवमपि न सर्वेषां पश्वङ्गानां हविष्ट्वम्, "एकादश वै पशोरवदानानि" इत्यनेनैकादशैव पशोरवदेयाङ्गानि न त्वङ्गान्तराणि इत्यङ्गान्तरेष्ववदानपरिसङ्ख्यानादिति वाच्यम्। न ह्येवं वचनव्यक्तिः–पशोरेकादशैवावदेयानि स्युः तानि च द्विरवद्यतीति, अर्थद्वयविधानापत्त्या वाक्यभेदप्रसङ्गात्। किं तर्हि? यान्येकादश हृदयाद्यङ्गानि तान्येव द्विरवद्यतीति वचनव्यक्तिः। तत्र च प्राथम्याद्येकादशेत्येवोद्देश्यसमर्पकम्, अवदानानि इत्यनुवाद इति वा। तानीत्येकपदोपादानाद्वा न विशिष्टोद्देशदोषः। तस्मात्सर्वेषामङ्गानां हविष्ट्वम्॥

इतोऽप्येवमित्याह—

**अंसशिरोनूकसक्थिप्रतिषेधश्च तदन्यपरिसङ्ख्यानेऽनर्थकस्स्यात्प्रदानत्वात्तेषां निरवदानप्रतिषेधस्स्यात्॥ ६॥**

शिरः प्रसिद्धम्। अंसौ स्कन्धौ। तावन्तरा तिर्यगस्थिविशेषसंयुक्तमांसविशेषः अनूकः। श्रोण्योरुपरिदेशौ सक्थिनी। एतेषां वपाहृदयादिपरिगणनेभ्योऽन्येषां प्रतिषेधः श्रूयते–"नासंयोरवद्यति, न शिरसो, नानूकस्य, नापरसक्थ्योः" इति। स तावत् तदन्येषां परिगणितेभ्योऽधिकानामङ्गानामवदानपरिसङ्ख्याने

सत्यनर्थकस्स्यात्। यदि तु हृदयादिपरिगणितानामवदानद्वित्वविधेरेव न तु तदितराङ्गावदानपरिसंख्या, तदा तेषामंसादीनां प्रदानस्य प्रदेयत्वस्य हविष्ट्वस्यावयविपशुद्वारा पश्वाकृतिपरिच्छिन्नत्वाविशेषेण न्यायतया निरवदानं तेभ्योऽप्यङ्गेभ्यो निष्कृष्यावदानं "पञ्चवत्तैव वपा कार्या" इति प्राप्तमिति तत्प्रतिषेध उपपन्नो भवति। तस्मादप्यंसशिरोनूकसक्थिव्यतिरिक्ताङ्गानां सर्वेषां हविष्ट्वमिति ॥

अथ सिद्धान्ती निराचष्टे—

## अपि वा परिसङ्ख्या स्यादनवदानीयशब्दत्वात् ॥७॥

अपि वेत्यवधारणे। परिगणिताङ्गेभ्य इतरेषामङ्गानां हविष्ट्वस्य परिसङ्ख्यानिरासः स्यादेव। कुतः? अनवदानीयशब्दत्वात्–अवदानीयेति भावे अनीयर्। अवदानीयम् अवदानम्, तस्य शब्दः येषु न विद्यते तानि परिगणिताङ्गेभ्योऽधिकाङ्गान्यनवदानीयशब्दानि। अधिकाङ्गानामवदानाश्रवणादिति यावत्। तथा चोत्पत्त्यवगतपशुगतयागसाधनत्वस्यावदानसंयुक्तवपाहृदयादिष्वेवोपसंहारात्तदितराङ्गानां हविष्ट्वनिरासः। न चोक्तरीत्या हृदयादिवाक्यानाम् "एकादश वै पशोरवदानानि तानि द्विर्द्विरवद्यति" इत्यनेनैकवाक्यतया अवदानद्वित्वविधानार्थत्वादवदानविधानाभावात्, सङ्कोचकप्रमाणाभावात् स्यादेव सर्वेषां हविष्ट्वमिति वाच्यम्। हृदयादिवाक्यानाम् "एकादश वै पशोरवदानानि" इत्यपेक्षितावदेयसङ्ख्येयस्वरूपमात्रबोधनार्थत्वे हृदयादीनां प्राकृतावदाने विकल्पापत्त्या अग्रेशब्दाथशब्दयोर्निरवलम्बनत्वापत्त्या हृदयादिवाक्यानां विशिष्टावदानान्तरविधित्वस्यैव युक्तत्वेन वपाहृदयादिष्वेव तादृशावदानसंयुक्तेषु पशुगतसाधनत्वस्योपसंहारे सति तदितरेषां हविष्ट्वनिरासः। तानि च हृदयादीनि "एकादश वै पशोरवदानानि" इत्यनूद्य "द्विरवद्यति" इति विधिः, अवदाननिवृत्तिश्च तत्फलमित्यनुपदमेव पादान्ते स्पष्टं भविष्यति। तत्र च यान्येकादशहृदयादीनि तानि द्विर्द्विरवद्यति इति वचनव्यक्तिः फलति। अवदेयबहुत्वानुसारेण द्विर्द्विरिति वीप्सालाभात्। ननु पशुगतयागसाधनत्वस्य हृदयादिष्वेव कतिपयाङ्गेषूपसंहारेऽसशिरोनूकसक्थिप्रतिषेधोऽनुपपन्न इत्यत्राप्येतदेवोत्तरम्–अनवदादीयशब्दत्वादिति। भावे अनीयर्। अवदानीयं अवदानं तस्याभावः—अनवदानीयम्। नञ् तत्पुरुषः। न चार्थाभावेऽव्ययीभाव एव स्यादिति वाच्यम्, 'रक्षोहागमलध्वसन्देहाः प्रयोजनम्,

अद्रतायां सहितम्' इति महाभाष्यप्रयोगानुसारेणार्थाभावे तत्पुरुषस्यापि विकल्पेन प्रवृत्तेर्वैयाकरणसम्मतत्वात्। अनवदानीयस्य—अवदानीयस्यावदान-प्रतिषेधस्य शब्दः अनुवादः येषु अंसादिषु तान्यनवदानीयशब्दानि। अंसादि-प्रतिषेधोऽनुवाद इति यावत्।

भाष्ये तु अनवदानीयशब्दत्वादित्येतदन्यथा व्याख्यातम्—वाजपेये मारुत्या अनवदानीयानि "आजिसृद्भ्य उपहरति" इति कतिपयपश्वंगानामन-वदानीयत्वानुवादान्न सर्वपश्वङ्गानां हविष्ट्वमिति, तन्न; तत्रानवदानीयशब्दस्य अंसादि विषयत्वेनोपपत्तेः "नांसयोरवद्यति" इत्यादिप्रतिषिद्धातिरिक्तसर्वाङ्गानां हविष्ट्वस्य पूर्वपक्षेऽपि संमतत्वात्। तस्मादुक्तैव व्याख्या युक्ता॥

इतोऽपि न सर्वेषामवदानमित्याह—

## अब्राह्मणे च दर्शनात्॥ ८॥

वाजपेये "मारुत्याः ककुदं राजपुत्रः प्राश्नीयात्" इति श्रुतम्। परिगणि-तेभ्योऽधिकानामप्यङ्गानां हविष्ट्वे इदमनुपपन्नं स्यात्। "नाब्राह्मणस्सान्नाय्यं प्राश्नीयात्" इति निषेधात्, पाशुकहविषाञ्च सान्नाय्यविकारत्वात्। अधिकाङ्गानां हविष्ट्वाभावे तु ककुदो हविष्ट्वाभावेन साम्नाय्यविकारत्वाभावाद्राजपुत्रविषये तत्प्राशनप्रतिषेधाप्रसक्तेर्नानुपपत्तिः॥

इतोऽपि न सर्वाङ्गानां हविष्ट्वमित्याह—

## श्रृताश्रृतोपदेशाच्च तेषामुत्सर्गवदयज्ञशेषत्वम्॥ ९॥

सर्वेषां श्रपणं स्यात् "द्वयाङ्गान्यभिमृशति, श्रृतान्यश्रृतानि च" इति श्रृताश्रृ-तानुवादादपि तेषां पश्वङ्गानां सर्वेषां अयज्ञशेषत्वम्—यागसाधनत्वं नास्ति। सर्वेषामङ्गानां हविष्ट्वे हि श्रपणं सर्वेषामङ्गानां स्यात्। तथा सति श्रृताश्रृतानु-वादोऽनुपपन्नस्स्यात्। अतोऽपि वपाहृदयादिपरिगणिताङ्गेभ्य इतरेषामङ्गानां हविष्ट्वपरिसङ्ख्या, उत्सर्गवत्। यथा "पर्यग्निकृतं पात्नीवतमुत्सृजति" इत्यत्र पर्यग्निकरणोत्तराङ्गपरिसङ्ख्या, तद्वत्॥

इति द्वितीयं पशोर्हृदयादीनामेव हविष्ट्वाधिकरणम्॥ २॥

३

अग्नीषोमीये पशौ श्रूयते—"त्र्यङ्गैः स्विष्टकृतं यजति" इति। किमिह प्रधानयागार्थावशिष्टहृदयाद्येकादशसु मध्ये कतिपयेभ्यस्त्र्यङ्गेभ्यः स्विष्टकृद्यागः ? उत तदन्येभ्यः ? इति संशये, पूर्वपक्षयति—

**इज्याशेषात् स्विष्टकृदिज्येत प्रकृतिवत् ॥ १० ॥**

इज्याशेषादिति सामान्याभिप्रायमेकवचनम्। प्रकृतौ तावत् प्रधान यागार्थावशिष्टात् स्विष्टकृद्यागः, इहापि तथैव भवितव्यम्। प्रधानयागार्थावशिष्टहृदयाद्येकादशसु मध्ये कतिपयत्र्यङ्गेभ्य एव स्विष्टकृद्यागः, न तु तदन्येभ्यः॥

अथ सिद्धान्तयति—

**त्र्यङ्गैर्वा शरवद्विकारस्स्यात् ॥ ११ ॥**

वा शब्दोऽवधारणे। प्रधानार्थहृदयाद्यपेक्षया अन्येभ्य एव त्र्यङ्गेभ्यः स्विष्टकृद्यागस्स्यात्, न तु प्रधानयागार्थावत्तशिष्टेभ्यः। न ह्यत्र स्विष्टकृद्यागे चोदकतः प्राप्तप्रधानयागार्थावत्तशिष्टहृदयाद्यङ्गोद्देशेन त्रित्वविधिस्सङ्गच्छते। तथा सति हि समासैकदेशस्याङ्गशब्दस्य प्रथमं स्वार्थप्रत्यायकत्वं पश्चात् त्रिशब्दस्यैकदेशान्तरस्येत्येवमवयवशो व्यापारद्वयप्रसङ्गेन पदद्वयस्यापि सम्भूयैकव्यापारत्वाभावेनैकार्थीभावलक्षणसामर्थ्याभावापत्त्या समासानुपपत्तेः। अतोऽत्र त्रित्वविशिष्टाङ्गान्तराण्येव स्विष्टकृद्यागे विधीयन्ते, "दक्षिणं दोस्सव्या श्रोणी गुदतृतीयानि त्र्यङ्गानि" इति वाक्यशेषाच्च। ततश्च स्विष्टकृद्यागे प्रधानार्थावत्तशेषाण्यङ्गानि प्रकृतिप्राप्तानि त्र्यङ्गैः प्रत्याम्नातैर्बाध्यन्ते, शरवत्। "शरमयं बर्हिः" इति शरैर्यथा कुशा बाध्यन्ते, तद्वत्। न चैवमपि त्र्यङ्गैः हृदयादीनां न प्रत्याम्नानम्, तत्कार्ये विधानाभावात्। प्रकृतौ तावत् स्विष्टकृद्यागः शेषप्रतिपत्त्यर्थः, ततश्चेहापि पशौ प्रधानार्थावत्तशेषाणां प्रधानतया प्राप्तिः, त्र्यङ्गाणान्तु स्विष्टकृति गुणभावेन विधिः। एवञ्च विषयभेदादयुक्तो बाध इति वाच्यम्। प्रत्यम्नानाभावेऽपि वचनादेव बाधोपपत्तेः। न ह्यत्र्यङ्गाणां स्विष्टकृदर्थतया विधिः। स्विष्टकृदेव त्र्यङ्गार्थतया विधीयते—त्र्यङ्गाणि स्विष्टकृता प्रतिपादयेदिति। ततश्चेज्याशेषप्रतिपत्त्यर्थतया प्रज्ञातस्य तस्येज्याशेषतोऽपच्छिद्यानिज्याशेषप्रतिपत्त्यर्थत्ववचनाद्युक्तो बाधः। न हि प्रधानेज्याशेषाणामेव प्रतिपत्त्यपेक्षा नान्येषामित्यस्ति [नियमः।] अनिज्याशेषत्वेऽपि

हृदयाद्यर्थेलब्धपश्वनुनिष्पन्नानामङ्गानामाकीर्णकरत्वमात्रेण शकृल्लोहितादिवद्यज्ञदेशरिक्तीकरणार्थं प्रतिपत्त्यपेक्षत्वात्। अङ्गैरिति तृतीया तु प्रयाजशेषेणेतिवदुपपन्ना()। तस्मादनिज्याशेषेभ्य एवात्र स्विष्टकृत्॥

इति तृतयं त्र्यङ्गाधिकरणम्॥ ३॥

४

अत्रैवाग्नीषोमीयपशौ श्रूयते--"अध्यूध्नीं होत्रे हरन्ति" इति। ऊधःप्रदेशगतं मांसमध्यूध्नी। अध्यूध्निमिति क्वचिच्छाखायां पठ्यते। किमियमध्यूध्नी होतुरिडाभक्षं न निवर्तयति? उत निवर्तयति? इति संशये, सिद्धान्तेनोपक्रमते—

**अध्यूध्नी तु होतुस्त्र्यङ्गवदिडाभक्षविकारस्स्यात्॥ १२॥**

अध्यूध्नी या श्रुता तया होतुरिडाभक्षस्य बाधस्स्यात्। होत्रे भक्षार्थं हरन्तीति यत् तद् अध्यूध्नीमिति हि वचनव्यक्तिः। एवञ्च होतुर्भक्षेऽध्यूध्न्याः प्रत्यक्षश्रुतत्वात्तया चोदकप्राप्तो होतुरिडाभक्षो बाध्यते। [ननु] अध्यूध्न्या इडान्तर्गताया होतुरन्येषाञ्च भक्षप्राप्तौ होतुर्नियम्यते-अध्यूध्नीं भक्षाय हरन्तीति यत् तत् होत्रे इति। ततश्च इडायामृत्विग्भिर्विभज्य भक्ष्यमाणायां तदन्तर्गता अध्यूध्नी कदाचित् होतृभागे कदाचिदन्यस्य भागे इत्यनियमे प्राप्ते होतृभाग एवान्तर्भवतीति लभ्यत इति कथं होतुरिडाभक्षनिवृत्तिरिति चेन्न; प्रकृतौ हि इज्यावत्तशेषेभ्य इडावदानं श्रुतम्, अध्यूध्नी तु इज्यावत्तशेषत्वाभावादिडान्तर्गता न भवतीत्यप्राप्तैव सा न शक्यानुवदितुम्—अध्यूध्नीं भक्षाय हरन्तीति यत् तत् होत्र इति। अतो होतृभक्षे सा विधीयत इति तस्येडाभक्षनिवृत्तिः त्र्यङ्गवत्। यथा त्र्यङ्गैः इज्याशेषाणां स्विष्टकृति निवृत्तिः, तद्वत्॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**शेषे वा समवैति तस्माद्रथवन्नियमस्स्यात्॥ १३॥**

वा शब्दः प्रत्यवस्थाने। इडात्मके शेषकार्ये अध्यूध्नी अन्तर्भवति; "अनस्थिभिरिडां वर्धयति" इति वचनात्। ताञ्चेडान्तर्गतामध्यूध्नीमनूद्य सम्भवति नियमविधिः-यामध्यूध्नीं भक्षाय हरन्ति तां होत्र इति। नन्वेवमप्युभयथापि वचनव्यक्तिसम्भवाद्विनिगमनाविरह इत्यत आह—रथवदिति। यथा वाजपेये

सप्तदशसु रथेषु यजुर्युक्तोऽपि रथः कस्मैचिद्देयत्वेन प्राप्तः। अध्वर्योरपि रथादिषु किञ्चित् देयत्वेन प्राप्तम्। तदस्यां दशायां प्रवृत्तस्य "यजुर्युक्तमध्वर्यवे ददाति" इत्यस्य रथव्यतिरिक्तद्रव्येष्वध्वर्युभागप्रापकचोदकानुग्रहाय यद्यजुर्युक्तं ददाति तदध्वर्यव इत्येवं नियमविधिस्स्वीक्रियते, न तु यदध्वर्यवे ददाति तद्यजुर्युक्तमिति। तथेहापि चोदकानुग्रहाय यदध्यूध्नीं हरन्ति तत् होत्रे इत्येव नियमविधिः स्वीकार्य इति न होतुरिडाभक्षनिवृत्तिः॥

अथ सिद्धान्ती निराचष्टे—

**अशास्त्रत्वात्तु नैवं स्यात् ॥ १४ ॥**

तुर्वैषम्ये। यजुर्युक्तरथः कस्मैचिदृत्विजे देयत्वेन प्राप्त इति कृत्वा यद्यजुर्युक्तं ददाति तदध्वर्यव इति नियमविधिर्युज्यते। इह तु यदध्यूध्नीं हरन्ति तद्धोत्र इत्येवं न नियमविधिस्स्यात्, अशास्त्रत्वात्–अध्यूध्न्या इडान्तर्भावस्याप्रामाणिकत्वादित्यर्थः। "अनस्थिभिरिडां वर्धयति क्लोमानं प्लीहानं पुरीतम्" इति परिगणितत्वेनाध्यूध्न्या इडायामप्रसक्तेरित्याशयः। ततश्च "अध्यूध्नीं हरन्ति" इत्यनूद्य तद्धोत्र इति न नियमविधिस्सङ्गच्छते, यद्धोत्रे भक्षं हरन्तीति तद् अध्यूध्नीमित्येवं होतुर्भक्षे अध्यूध्न्याः प्रतिपाद्यत्वेन विधानात्तस्येडाभक्षनिवृत्तिरेव। तथा च यत् प्राकृतं होत्रे भक्षार्थं हरणं तेन अध्यूध्नीं प्रतिपादयेदिति वचनव्यक्तिः॥

पूर्वपक्षी प्रत्यवतिष्ठते—

**अपि वा दानमात्रं स्याद्भक्षशब्दानभिसम्बन्धात् ॥१५॥**

तथापि अध्यूध्नीहरणेन दक्षिणादानमेव होतुः निवर्त्यं स्यात्, न त्विडाभक्षणम्। कुतः? भक्षशब्दानभिसंयोगात्–हरतेरेव श्रवणात्, भक्षाय हरन्तीत्यश्रवणात्, हरतेश्च दाननियतसम्प्रदानचतुर्थीयोगे दानार्थकत्वात्। यथा भूतेभ्यो बलिं हरतीत्यादौ। तथा चाध्यूध्नीदानेन दक्षिणादानमेव होतुर्निवर्तेत, न त्विडाभक्षः॥

अथ सिद्धान्ती निराचष्टे—

**दातुस्त्वविद्यमानत्वादिडाभक्षविकारस्स्याच्छेषं प्रत्यविशिष्टत्वात् ॥१६॥**

अध्यूध्नीहरणेनेडाभक्षस्य बाधस्स्यादेव, न तु दक्षिणादानस्य, दातुरविद्यमानत्वात्। भक्षाय होतृहस्ते समर्पणमेव ह्यत्र हरतिना विवक्षितम्, न तु दानम्,

हरणस्याध्वर्यवत्वात्। अध्वर्योश्च पशुस्वाम्याभावेन अध्यूध्नीदातृत्वासम्भवात्। अतोऽत्र प्रापणमेव हरणम्, न तु दानम्। नन्वेवमपि हरणमात्रस्य श्रवणाद् भक्ष शब्दाश्रवणात् कथमध्यूध्न्या होतृहरणेनेडाभक्षनिवृत्तिरित्यत आह—शेषं प्रत्यविशिष्टत्वादिति। शेषप्रतिपत्तिसंस्कारात्मकभक्षणार्थहरणमेवात्र हरतिना विवक्षितम्, न तु हरणमात्रम। कुतः? अविशिष्टत्वात्—प्रकृतौ तावत् होतृहस्ते समर्पणात्मकं होतृहरणं दृष्टम्। इदमप्यध्यूध्नीहोतृहरणं प्राकृतहोतृहरणत्वसामान्याद् भक्षणार्थनयनात्मकमेव विवक्षितम्। एवञ्च प्राकृतं होतृहरणमेवोपस्थितत्वादप्राकृताध्यूध्नीलक्षणसंस्कार्यान्तरसम्बन्धित्वेन विधीयते, तद्धरणस्य च प्रकृतौ भक्षार्थत्वादध्यूध्न्या होतुर्भक्षसिद्धिः, प्राकृतभक्षान्तरनिवृत्तिश्च। एवञ्च प्राकृत भक्षणार्थहोतृहरणेनाध्यूध्नीं प्रतिपादयेदिति फलति। [होतृकर्तृक] भक्षणोपयोगित्वेन होत्रर्थत्वाद्धोत्र इति तादर्थ्यचतुर्थीति न चतुर्थ्यनुपपत्तिः। भाष्ये तु हरणमिह न दानम्, दातुरभावात्। न च यजमानो दाता, पशोः कृत्स्नस्य देवतायै त्यक्तत्वेनेज्याशेषे यजमानस्य स्वामित्वानपायात्। वार्तिकमतेऽपि हृदयाद्यङ्गानामेव कार्त्स्न्येन देवतासम्बन्धाभ्युपगमादितरांशे स्वामित्वस्य दुर्निवारत्वात्। तस्मादुक्तरीत्यैव व्याख्यानं खण्डदेवानुमतं साधु इत्यलं वहुना॥

इति चतुर्थमध्यूध्न्यधिकरणम्॥ ४॥

५

अत्रैव पशौ "वनिष्टुमग्नीधे हरन्ति" इत्यत्रापि पूर्वाधिकरणमतिदिशति—

## अग्नीधश्च वनिष्टुरध्यूध्नीवत्॥१७॥

वपासदृशं स्थविरान्त्रं वनिष्टुः। सोऽपि होतुरध्यूध्नीवद् अग्नीधे इडाभक्षन्निवर्तयति। ननु "अनस्थिभिरिडां वर्धयति क्लोमानं प्लीहानं पुरीततम्" इति परिगणनादध्यूध्न्या इडायामप्रसक्तेरध्यूध्नीं भक्षाय हरन्तीति यत् तद्धोत्र इति विधानासम्भवात् होत्रे भक्षाय हरन्तीति यत् तदध्यूध्नीमिति वचनव्यक्तिमाश्रित्य होतुरिडाभक्षनिवृत्तिरित्यास्थितं पूर्वाधिकरणे। इह तु हृदयं जिह्वां वक्षो यकृत् वृक्यौ वनिष्टुं चेडामवदाय "तस्या वनिष्टुं प्रास्यति" इति वनिष्टोरिडान्तर्भूतत्वेनाग्नीधस्तदन्यस्य च तत्प्राप्तौ वनिष्टुं भक्षाय हरन्तीति यत् तदग्नीध एवेति नियम-

विधिसम्भवात्तदतिरिक्तेडांशभक्षो यजुर्युक्तरथन्यायेन पूर्वाधिकरणपूर्वपक्षरीत्या अग्नीधो न निवर्तत इति चेत्-सत्यम्; अस्तीडायां वनिष्टोः प्रासनम्। तत् [उपस्त-रणा]भिघारणवदिडासंस्कारार्थमेव। अतो नास्य वनिष्टोरिडान्तर्भावः। यथा "पयसा मैत्रावरुणं श्रृणाति" इति ग्राह्यसोमरससंस्कारकस्य पयसोऽनुदेयत्वं तद्वत्। तत्र च यदि वनिष्टुप्रासनवाक्ये भक्षयितुं प्रास्येदिति भक्षसंयोगः श्रूयेत, तदा अग्नीधोऽन्यस्य च तद्भक्षणे प्राप्ते अग्नीध इति नियमार्थं स्यात्, न चैवमस्ति। ततश्च "वनिष्ठुमग्नीधे हरन्ति" इति वाक्ये प्राक् सामान्यतो भक्षसम्बन्धस्या-प्राप्त्या नियमवि[ध्य] सम्भवात्। प्राकृतमेवाग्नीदुद्देश्यकं भक्षार्थहरणमुपस्थि-तत्वादप्राकृतवनिष्टुलक्षणसंस्कार्यान्तरं सम्बन्धित्वेन विधीयते—यदिदं प्राकृतं भक्षार्थमग्नीधे हरणं तेन वनिष्टुं प्रतिपादयेदिति। तस्मादग्नीधोऽपि वनिष्टुव्यति-रिक्तेडाभक्षनिवृत्तिः॥

इति पञ्चमं वनिष्टोर्भक्षविकाराधिकरणम्॥ ५॥

६

पशौ किं मैत्रावरुणस्येडाभक्षणं नास्ति? उतास्ति? इति संशये, पूर्वपक्षयति—

**अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम् ॥१८॥**

प्रकृतौ दर्शपूर्णमासयोरध्वर्युहोतृब्रह्माग्नीद्यजमानानामिडाभक्षणं स्थितम् "यजमानपञ्चमा इडां प्राश्नन्ति" इति। ततश्च मैत्रावरुणस्य प्रकृता [व] भावात् तस्य चोदकतो[न] भक्षप्राप्तिः॥

अथ सिद्धान्तयति—

**स्याद्वा होत्रध्वर्युविकारत्वात्तयोः कर्मभिस्सम्बन्धात् ॥ १९ ॥**

वाशब्दोऽवधारणे। स्यादेव चोदकतो मैत्रावरुणस्येडाभक्षः। कुतः? मैत्रावरुणस्य होत्रध्वर्युविकारत्वात्। तच्च कुतः? तयोः कर्मभिः सम्बन्धात् तयोः—होतुरध्वर्योश्चेत्युभयोः कर्मणा तस्य सम्बन्धात् "मैत्रावरुणः प्रेष्यति चानुचाह" इति वचनात्। ततश्च "होता यक्षत्" इत्यादयो "यज्ञ" इत्यन्ताः प्रैषाः "समिधो यज, अग्निं यज, सोमं यज" इत्यादिप्राकृतप्रैषकार्यापन्नाः। "अग्नि-र्वृत्राणि" इत्यादिपुरोनुवाक्यानुवचनानि तु होतृकर्तृकप्राकृतपुरोनुवाक्यावचन-

कार्यापन्नानि। तदुभयविधकर्मकारित्वेन मैत्रावरुणस्य होत्रध्वर्युकार्यापन्नत्वाद् भवति प्राप्तिरिडाभक्षस्य। ननु नाध्वर्युहोत्रादिकर्तृतृप्त्यर्थः प्राकृत इडाभक्षः, येन होत्रध्वर्युकार्यकारितया तदुभयकार्यप्रयुक्तं भक्षं मैत्रावरुणो लभेत। किन्तु "इडां भक्षयन्ति" इति द्वितीयाश्रुत्या हविस्संस्कारक एव प्राकृत इडाभक्षः। स च संस्कारः प्राकृतैरेव कर्तृभिः क्रियमाणे भक्षे सिध्यतीति न मैत्रावरुणस्येडाभक्ष इति चेत्—सत्यम्; द्वितीयासंयोगात्प्रतिपत्त्यर्थः प्राकृत इडाभक्षः, तथापि तत्राध्वर्यु होत्रादिनियमाम्नानवलात् नियमांशेन कर्तृबलाधानमुखेन कर्तृसंस्कारार्थत्वमपि प्राकृतभक्षस्येति षष्ठस्य चतुर्थे निरूपितम्—'निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत्' इत्यत्र। एवञ्च यथा "प्रयाजशेषेण हवींष्यभिधारयति" इत्यभिघारणस्य प्रयाज-शेषप्रतिपत्त्यर्थस्यापि हविराधारत्वनियसवशेन हविस्संस्कारार्थतया हविस्संस्कारो [मा विलोपि इति] सन्निहितसर्वहविष्ष्वभिघारणम्, न त्वेकस्मिन्; एवमिहापि कर्तृसंस्कारो मा विलोपीति मैत्रावरुणस्याप्यस्ति भक्षः॥

इति षष्ठं मैत्रावरुणस्यापि शेषभक्षास्तित्वाधिकरणम्॥ ६॥

७

पशौ मैत्रावरुणस्य होत्रध्वर्युकार्यकारित्वादिडाभक्ष इति स्थितम्। स किं द्वौ भागौ भक्षयेत्? उतैकमेव भागम्? इति संशये पूर्वपक्षयति—

**द्विभागस्स्याद् द्विकर्मत्वात्॥ २०॥**

द्वौ भागौ अस्य द्विभागः स्यान्मैत्रावरुणः। कुतः? द्विकर्मत्वात्—द्वे हौत्रा-ध्वर्यवकर्मणी अनुवचनप्रैषात्मके अस्य द्विकर्मा। उभयकार्यकारित्वादित्यर्थः।

अथ सिद्धान्तयति—

**एकत्वाद्वैकभागस्स्याद् भागस्याश्रुतिभूतत्वात्॥ २१॥**

वा शब्दोऽवधारणे। एको भागोऽस्यैकभागस्स्यान्मैत्रावरुणः, न तु द्विभागः। कुतः? एकत्वान्मैत्रावरुणस्य। नु तस्यैकत्वेऽपि उभयकार्यकारित्वाद् भागद्वयमित्यत आह— भागस्याश्रुतिभूतत्वादिति। अश्रुति-अश्रवणम्, भूतः-प्राप्तिः अश्रुतिभूतः। अश्रवणादिति यावत्। मैत्रावरुणस्य होतृभागो मैत्रावरुण

भागश्चे[त्य]त्र न श्रूयते, किन्तु चोदकतस्तत्प्राप्तिर्वक्तव्या। प्रकृतौ भक्षणं होतृगतशक्त्याधानलक्षणं संस्कारार्थम्। तस्य च संस्कारस्यैकेनैव भागेनोपपत्तेः न भागद्वयप्राप्तिः। किञ्च प्रकृतौ कर्तॄणां समविभागस्थितः, इहापि तथैव प्राप्तेरेक एव भागः॥

इति सप्तमं मैत्रावरूणस्यैकभागताधिकरणम्॥ ७॥

८

पशौ प्रतिप्रस्थातुरिडाभक्षोऽस्ति न वेति संशये, पूर्वपक्षयति—

**प्रतिप्रस्थातुश्च वपाश्रपणात्॥ २२॥**

प्रतिप्रस्थातुरपि स्यादिडाभक्षः। कुतः? वपाश्रपणात्। पशुस्तावत् प्रातर्दोहविकारः। प्रकृतौ च प्रातर्दोहश्रपणमध्वर्युकर्तृकम्। इह च वपा श्रपण[म]ध्वर्युकार्यं प्रतिप्रस्थातृ[कर्तृ]कमिति तस्यापि स्यादिडाभक्षः॥

अथ सिद्धान्तयति--

**अभक्षो वा कर्मभेदात्तस्यास्सर्वप्रदानत्वात्॥२३॥**

वा शब्दोऽवधारणे। नैव स्यात् प्रतिप्रस्थातुरिडाभक्षः। कुतः? तस्यास्सर्वप्रदानत्वात्-वपाया निश्शेषहुतत्वेन तस्या इडावादाप्रसक्तेः। ननु वपाया निश्शेषहुतत्वेऽपि वपाश्रपणरूपाध्वर्युकार्यकारित्वमादाय हृदयादिभक्षणं किं न स्यादित्यत आह—कर्म भेदादिति। भक्षणं हि हविस्संस्कारद्वारा तद्धविस्साध्यापूर्वस्योपकरोति। "यजमानपञ्चमा" इत्यादिविहितः कर्तृनियमोऽपि भक्षयितृगतस्तद्धविस्साध्यापूर्वस्यैवाङ्गं नान्यस्येति कर्तृनियमस्यापि तद्धविस्साध्यं यदपूर्वं तत्कर्तृसंस्कार एव द्वारम्। ततश्च वपाया हृदयादीनाञ्चाभ्यासापूर्वभेदात् हृदयादिसाध्येष्वपूर्वेषु प्रतिप्रस्थातुः कर्तृत्वाभावान्न भक्षः। यद्यपि काञ्चिच्छाखामवलम्ब्य कात्यायनसूत्रे हृदयाद्यवदानं प्रतिप्रस्थातृकर्तृकमुक्तम् "दक्षिणतो वेद्यामासाद्य प्रतिप्रस्थातावद्यति" इति। यस्यां तैत्तिरीयादिशाखायामेवंविधं वचनं नास्ति तद्विषयमिदमधिकरणम्। शाखान्तरोपसंहारानित्यत्वस्य शाखान्तराधिकरणे प्रपञ्चितत्वात्।

यद्यप्यापस्तम्बसूत्रे हृदयाद्यवदानस्याध्वर्युकर्तृकत्वेऽपि प्रतिप्रस्थातुरपि तद्भक्षण-मुक्तम्, तथापि तद्वचनान्तरमूलकमिति न दोषः ॥

इत्यष्टमं प्रतिप्रस्थातुर्भक्षाभावाधिकरणम् ॥ ८ ॥

९

चातुर्मास्येषु साकमेधाख्यतृतीयपर्वणि "मरुद्भ्यो गृहमेधिभ्यस्सर्वासां दुग्धे सायमोदनम्" इति प्रकृत्य श्रूयते—"आज्यभागौ यजति यज्ञताया" इति। किमिदमाज्यभागश्रवणं चोदकप्राप्तानुवादमात्रम्? उत चोदकप्रवृत्त्युपयोगी प्रकृतिविशेषसादृश्योपपादनमुखेन ऐष्टिकविध्यन्तनियमनार्थम्? अथवा "यज्ञताया" इत्यर्थवादप्रवृत्त्यर्थम्? किं वाप्राकृताज्यभागविधानार्थम्? यद्वा अतिदेशप्राप्ता-ङ्गान्तरपरिसङ्ख्यार्थम्? अपि वा आज्यभागव्यतिरिक्तातिदेशार्थम्? उताहो चोदकस्याज्यभागमात्रोपसंहारार्थम्? आहोस्वित् चोदकपरिलोपनेन गृहमेधी-यस्य प्रकृतिराहित्यलक्षणापूर्वतासम्पादनार्थम्? इत्यष्टधा संशये, प्रथमपक्षयति—

**विकृतौ प्राकृतस्य विधेर्ग्रहणात् पुनः श्रुतिरनर्थिका स्यात् ॥२४॥**

विकृतिभूतायां गृहमेधीयेष्टौ प्राकृतस्य विधेः—विध्यन्तस्य चोदकत एव ग्रहणसम्भवात् पुनस्तत्राज्यभागश्रुतिः अनर्थिका—अप्राप्तप्रापणरूपप्रयोजनशून्या स्यात्। अनुवादमात्रं स्यादिति यावत् ॥

अथानर्थकप्रायानुवादत्वाश्रयणमयुक्तमिति दोषस्य प्रथमपक्षे स्फुटत्वात्तद-भिधानमुपेक्ष्य द्वितीयपक्षमुपक्षिपति—

**अपि वाग्नेयवद् द्विशब्दत्वं स्यात् ॥२५॥**

अपिवेति पक्षान्तरे। गृहमेधीयभावनापेक्षितविध्यन्तस्य द्विशब्दत्वं स्यात्—द्वौ शब्दौ प्रकृतिवद् विकृतिः कर्तव्येति आज्यभागौ यजतीति च चोदकप्रत्यक्ष-वचनात्मकौ यस्य विध्यन्तस्य तद्द्विशब्दत्वं स्यात्। न च चोदकवचनमेवेष्टिकर्तु-र्विध्यन्तप्रापकम्, तस्य कृत्स्नविध्यन्तविषयत्वात्, न त्वाज्यभागश्रवणमपीति वाच्यम्। चोदकप्रवृत्तिः सादृश्यनिबन्धना। सादृश्यञ्च गृहमेधीययागस्य दर्शपूर्ण-मासाभ्यामेव विद्यते, आज्यभागवत्त्वसाम्यात्; न तु सोमेन, तस्यापूर्वत्वेनाज्य भागवत्त्वाभावादि[त्या]ज्यभागपुनःश्रवणस्य चोदकप्रवृत्तिनिमित्तैष्टिकनियत-

सादृश्यापादकतया ऐष्टिकविध्यन्तप्राप्तावुपयोगात्तस्य द्विशब्दत्वं बोध्यम्। तथा चाज्यभागपुनःश्रवणमैष्टिकविध्यन्तविधानार्थमिति द्वितीयः पक्षः। ननु पुनः श्रवणात् कर्मान्तरविधानमेवात्र किं न स्यादित्यत आह–आग्नेयवदिति। यथा "अग्निमग्न आवह" इत्यग्निशब्दके मन्त्रे अग्निः द्वाभ्यामग्निशब्दाभ्यामावोढव्यतया आवोढृतया च गम्यते, तद्वदिहापि प्राकृतावाज्यभागौ पुनराज्यभागशब्देन निर्दिश्येते उक्तरीत्या ऐष्टिकविध्यन्तविधानार्थम्॥

तमिमं द्वितीयपक्षं प्रतिक्षिपन् तृतीयपक्षमुपक्षिपति—

**न वा शब्दपृथक्त्वात्॥२६॥**

वाशब्द एवार्थे। "अग्निमग्न आवह" इत्यत्राग्निरेकस्य द्विशब्दत्वेन दृष्टान्तो नैव भवति। कुतः? शब्दपृथक्त्वात्–अग्निमिति द्वितीयान्ताग्निशब्दः प्रथमाज्यभागदेवतापरः। सम्बुध्यन्तस्त्वग्निशब्द आहवनीयपर इति सङ्कर्षे चतुर्थस्य द्वितीये वक्ष्यते–'आहवनीय आवोढा सामिधेनीभिरिष्टा निविद्भिरुपस्तुत्य अग्निमग्न आवहेति श्रावयति तस्मादाहवनीयस्यानन्तर्यात्' इत्यत्र। तत्राग्निशब्दयोरर्थपृथक्त्वान्नाग्नेरेकस्य द्विशब्दत्वम्, किन्तु द्वयोरप्यग्न्योः प्रतिपत्यर्थं भिन्नशब्दाभ्यामुपादानम्, प्रवृत्तिनिमित्तभेदात्। इह तु चोदकसिद्धाज्यभागयोः पुनःश्रवणं व्यर्थमेवेति न द्विशत्वम्। न च चोदकप्रवृत्त्यौपयिकसादृश्यप्रापकन्तत् पुनःश्रवणमिति वाच्यम्, औषधद्रव्यकत्वादेवैष्टिकविध्यन्तातिदेशसिद्धेः। न च विनिगमनाविरहश्शङ्क्यः, आज्यभागयोः पशुसाधारणतया ऐष्टिकविध्यन्तनियमस्योत्पत्तिवाक्यश्रुतौदनशब्दावगतौषधद्रव्यकतयैव साधकत्वात्। न चैवं सति "सौम्यं चरुन्निर्वपेत्" इत्यत्रापि चरुशब्दोपात्तौषधद्रव्यकत्वादेव विध्यन्तनियमसिद्धेर्न्निर्वपतिग्रहणं व्यर्थमिति वाच्यम्, केवलप्रत्ययप्रयोगासम्भवेन विधिप्रत्ययार्थं धातोरुपादानात्। ननु तर्हि व्यर्थमाज्यभागपुनःश्रवणमित्यत्राप्येतदेव सूत्रमुत्तरम्–न वा शब्दपृथक्त्वादिति। शब्दस्य आज्यभागपुनर्वचनस्य पृथक्त्वात्–अर्थवादप्रवृत्तिपक्षे प्रयोजनान्तरसत्वान्न वैयर्थ्यमित्यर्थः। आज्यभागौ यज्ञतासम्पत्यर्थौ। तत्सत्वे दर्शपूर्णमासादिषु यज्ञत्वदर्शनात्। तादृशौ चाज्यभागावैष्टिकविध्यन्ते स्तः। तस्मादैष्टिकविध्यन्तः प्रशस्त इत्यर्थवादप्रवृत्तिरुन्नेया॥

तमिमं तृतीयपक्षं प्रतिक्षिपन् चतुर्थपक्षमुपक्षिपति—

**अधिके चार्थवत्त्वात्स्यादर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्त्वात् ॥२७॥**

गृहमेधीये आज्यभागकर्मणी अविकारे-अप्राकृते कर्मान्तरे प्रत्येतव्ये। कुतः? अर्थवत्त्वात्-कर्मान्तरत्वे सत्येव पुनःश्रवणस्यार्थवत्त्वात्। तच्च कुतः? अपूर्वत्त्वात्-अप्राप्तप्रापकत्वात्, अन्यथा आन[र्थक्या]त्। ते चाप्राकृते आज्य भागकर्मणी अधिके-प्रधानयागादुपरिष्टात् कार्ये, पाठक्रमात्। अधिके वेति पाठेऽपि वाशब्दश्चार्थः। ननूक्तरीत्या आज्यभागपुनःश्रवणमर्थवादप्रवृत्त्यौपयिकमस्तु, कर्मान्तरत्वेऽपूर्वान्तरकल्पनाप्रसङ्गात्, अत आह—अर्थवादगुणाभावे वचनादिति। अर्थवादगुणस्य-अर्थवादत्वप्रयोजकधर्मस्य विध्येकवाक्यत्वस्याभावे-असद्भावे आज्यभागयोः पुनर्वचनात्। विध्येकवाक्यत्वाभावेनार्थवादत्वासम्भवादिति यावत्। "आज्यभागौ यजात" इत्यस्य "यज्ञताया" इत्यर्थवादशेषत्वे "आज्यभागौ यजति यज्ञताया" इति कृत्स्नस्यार्थवादत्वमेव पर्यवस्यति। तत्त न सम्भवति। अर्थवादो हि विधेयप्रशंसार्थतया विधिवाक्यस्यैकदेशः। स च सन्निधावाम्नात एव तदेकदेशो भवति। नात्र कश्चिद्विधिस्सन्निहितः, गृहमेधीयविधेरत्यन्तव्यवहितत्वात्। न च चोदकतस्सन्निहितविध्यन्तस्तुतिरेव किं न स्यादिति वाच्यम्। चोदको हि प्रकृतिवच्छब्देन प्रधानविध्यन्तर्गतः। एवञ्च प्रकृतिवच्छेषत्वमित्यनेन प्रधानविधिशेषत्वमित्युक्तं स्यात्। न ह्यत्रासम्बन्धिबहुपदव्यवहितगृहमेधीयप्रधानविध्येकक्यता सम्भवति। नापि कर्मान्तरत्वविधौ सम्भवति। कथञ्चिदतिव्यवहिततदेकवाक्यत्वकल्पना तु न युज्यते। ननु "अप्सुमन्तावाज्यभागौ" "पुष्टिमन्तावाज्यभागौ" "जीवातुमन्तावाज्यभागौ" इत्यादिवद् गुणवि धानार्थमेवात्र पुनः श्रवणं किं न स्यादित्यत आह—तेषु हि तादर्थ्यमिति। हि यतः, तेषु-उदाहृतेषु वाक्येषु गुणविधानं युज्यते, अप्सुमत्त्वादिगुणानां श्रवणात्। नेह तथा कश्चिद् गुणः श्रूयते। तस्मात् कर्मान्तरे एवाज्यभागाविह विधीयेते ॥

अथ पञ्चमपक्षमुपक्षिप्य प्रतिक्षिपति—

## प्रतिषेधस्स्यादिति चेन्नाश्रुतत्वात् ॥२८॥

किमिह प्रकरणान्तरात् कर्मान्तरत्वम्? उताभ्यासात्? नाद्यः कल्पः; प्रकरणान्तरं ह्यसन्निधानं बुद्धौ विपरिवृत्त्यभावलक्षणम्। न चात्र तत्सम्भवः, आज्यभागयोश्चोदकतो विपरिवर्तमानत्वात्। नापि चोदकेन तदप्राप्तौ पुनर्विधानात्मकादभ्यासात् कर्मान्तरत्वमिति द्वितीयः कल्पः; आज्यभागशब्देन प्रसिद्धाज्य भागयोरेव प्रत्यभिज्ञायमानतया कर्मान्तरत्वासम्भवात्। अन्यथा-आज्यभागशब्दस्य धर्मलक्षकत्वापातात्। तस्माच्चोदकतस्सर्वाङ्गेषु प्राप्तेष्वाज्यभागयोः पुनःश्रवणादितरेषामङ्गानां प्रतिषेधः परिसङ्ख्या स्यात्—आज्यभागावेव यजति न समिदादियागानिति हि वचनव्यक्तिरिति चेत्-नाश्रुतत्वात् -"आज्यभागौ यजति" इत्यत्रेतराङ्गप्रतिषेधवाचिनश्शब्दस्याश्रुतत्वात्। पुनः श्रवणसामर्थ्यात्तत्रापि तात्पर्यकल्पने स्वार्थत्यागः परार्थग्रहणं प्राप्तबाधश्चेति त्रैदोष्यापत्तेः। अतो नेतराङ्गपरिसङ्ख्यार्थं पुनःश्रवणम्॥

अथ षष्ठपक्षमुपक्षिप्य प्रतिक्षिपति—

## अग्रहणादिति चेन्न तुल्यत्वात् ॥२९॥

"आज्यभागौ यजति" इतिं प्रत्यक्षवचनेन शीघ्रप्रवृत्तिकेनाज्यभागयोः प्राप्तत्वादानुमानिकेन पश्चात्प्रवृत्तिकेनाज्यभागयोरग्रहणादाज्यभागवर्जमेव चोदकः प्रापयतीति चेन्न; कुतः? तुल्यत्वात्–चोदकस्य सर्वाङ्गसाधारणत्वात्। यदि हि चोदकः पृथक् पृथक् प्राकृतान् पदार्थानपेक्षेत, तदाज्यभागौ प्रत्यक्षगृहीताविति कृत्वा तौ न गृह्णीयात्। अन्यान्येव चाङ्गानि गृह्णीयात्। किन्तूपकारमुखेन सर्वानपि पदार्थान् युगपत् प्रापयति। ततश्च चोदकेनैवाज्यभागयोरपि प्राप्तत्वात् तत्पुनः श्रवणमनर्थकमेव स्यात्। प्रत्यक्षवचनगृहीतावाज्यभागौ वर्जयित्वाङ्गान्तराणि चोदकः प्रापयतीति नोपपद्यते॥

स्यादेतत्; गृहमेधीयः प्रकृतिवत् कर्तव्य इति चोदकस्य प्रकृतिवच्छब्दस्य सर्वाङ्गेषु प्रसक्तस्याज्यभागयोरुपसंहारार्थं तत्पुनःश्रवणम्—आज्यभागौ यजतीत्येवं-प्रकारेण प्रकृतिवत् कर्तव्य इति। सामान्यविशेषभावाच्च न पौनरुक्त्यम्। यथा

प्राकृतसाम्प्रदश्यविधेः श्रुतसाम्प्रदश्यासु मित्रविन्दाषूपसंहारस्तद्वदित्यस्तु सप्तमः पक्ष इत्यत्राह—

## तथा तद्ग्रहणे स्यात् ॥३०॥

प्रकृतिवद् गृहमेधीयः कर्तव्य इति चोदकस्य तद्ग्रहणे-ताभ्यामाज्य भागाभ्यामुपसंहारे सति तथा—पूर्ववद् आनर्थक्यं पुनः श्रवणस्य स्यात्। प्राकृत-वैकृतसाम्प्रदश्यप्रत्यक्षविध्योरेकेन सामिधेनीसम्बन्धः, अन्येन क्रतुसम्बन्ध इति कथञ्चिदुभयोरस्ति सार्थक्यम्। इह तु चोदको न प्रत्यक्षः, किन्तु कल्प्यः। न चात्र कल्पनावश्यम्भावः, येन कल्पयित्वापि चोदकं कथञ्चित्सार्थक्यमाश्रीयेत। उभयथाप्यनुष्ठानविशेषाभावेन तत्कल्पनानावश्यकत्वात्। एवञ्च प्रत्यक्षवचनस्यैव पदार्थद्वारा प्रकारप्रापकत्वमाश्रयितुं युक्तमिति चोदकस्यैवाभावान्न तदुपसंहारा-र्थत्वं प्रत्यक्षवचनस्य युज्यते ॥

अथाष्टमपक्षेण सिद्धान्तयति—

## अपूर्वतान्तु दर्शयेद् ग्रहणस्यार्थवत्त्वात् ॥३१॥

तुरवधारणे। आज्यभागश्रवणं प्रकृतिराहित्यलक्षणापूर्वतामेव गृहमेधीय-स्यावगमयति। कुतः ? ग्रहणस्यार्थवत्त्वात्—ग्रहणस्य—आज्यभागवचनस्य चोदक-परिलोपलक्षणप्रयोजनवत्त्वात्। यागेन भावयेदिति हि यागगतव्यापारलक्षण-प्रकारत्वकल्पकेन प्रकरणेनाज्यभागयोरपि तादृशव्यापारत्वात्मकं रूपं प्रकृतौ क्लृप्तम्। ततश्च विकृतावप्यत्र प्रकारापेक्षिण्यां भावनायां यावत् सादृश्ये[न] चोदकः कल्प्यते, ततः प्रागेवाज्यभागश्रवणे सति लक्षणया झटिति तद्गतव्यापाररूपो-पस्थित्या तदन्वयेन विकृतिभावनाया निराकाङ्क्षत्वादपूर्वत्वं स्यादिति वाच्यम्। अप्राकृतेषु तादृशव्यापारत्वरूपं प्राङ् न क्लृप्तमित्यामनहोमादिश्रवणमात्रेण तद्रूपानु-पस्थित्या सन्निहितैस्तैरुपकाराकाङ्क्षाशान्त्यभावात् तत्र प्रथमं चोदकस्यैव प्रवृत्तिः, पश्चात्तु तेषां सन्निध्याम्नानानर्थक्यपरिजिहीर्षया निराकाङ्क्षाया अपि विकृतिभावनाया आकाङ्क्षामुत्थाप्य तदन्वय इति नामनहोमादीनामपूर्वतापाद-कता। एवञ्चात्र चोदकस्य प्राकृताङ्गप्रापकशास्त्रस्याभावादप्राप्तबाधः। पञ्चमपक्षे तु प्राप्तबाध इति भेदः। न च पक्षद्वयेऽपि कोऽनुष्ठानभेद इति वाच्यम्। प्राप्त-परिसङ्ख्यानपक्षे आज्यभागविधेर्लक्षणया तदितरपरिसङ्ख्यार्थत्वेन 'अब्राह्मण-

मानय' इत्यत्र ब्राह्मणभिन्नस्य तत्सजातीयस्यैव क्षत्रियादेर्ग्रहणवद् आज्यभाग भिन्नस्य तत्सजातीयस्य यागान्तरस्यैव परिसङ्ख्या। अष्टमपक्षे तु चोदकपरिलोपा दाज्यभागभिन्नस्य सर्वस्यैव परिसङ्ख्येति भेदः॥

इति नवममाज्यभागाधिकरणम्॥ ९॥

१०

गृहमेधीये "आज्यभागौ यजति" "स्विष्टकृते समवद्यति" "इडामुपह्वयते" इति श्रुतम्। तत्र प्राकृताङ्गस्य पुनः श्रूयमाणस्यापूर्वतासम्पादकत्वं यदुक्तं तत् किमेकैकस्य ? उत सर्वेषाम् ? इति संशये, सर्वेषां प्रकृतौ क्लृप्तोपकारत्वाविशेषाद् एकैकेनापि प्रधानाकाङ्क्षाशान्तेस्सम्भवात् विकल्प इति प्राप्ते, सिद्धान्तयति—

**ततोऽपि यावदुक्तं स्यात्॥३२॥**

अपि शब्दो भिन्नक्रमः। ततः-आज्यभागविध्यनन्तरं यावदुक्तम्—स्विष्टकृदादि तावदपि गृहमेधीये भवेत्। यथा प्रकृतौ प्रकरणपठितानां सर्वेषां युगपदेवेत्थम्भावेनान्वयात्प्रकरणस्याकाङ्क्षापरपर्यायव्यापारत्वेन युगपद्ग्रहणम्, एवमिहापि प्रकृतौ क्लृप्तोपकाराणामाज्यभागादीनां पुनः श्रुतानां सर्वेषामपि युगपद्ग्रहणेन समुदितानामेव प्रधानाकाङ्क्षापूरकत्वम्, नैकैकस्येति न विकल्पः॥

इति दशमं गृहमेधीयेष्टावाज्यभागादीनामेकैकस्याप्यपूर्वताधिकरणम्॥१०॥

११

तदेवमाज्यभागस्विष्टकृदिडापुनःश्रवणं तदितराङ्गविषये चोदकपरिलोपमुखेनाप्राप्तपरिसङ्ख्यार्थमिति स्थितमधिकरणद्वये। तत्र पूर्वतराधिकरणे पञ्चमपक्षे आज्यभागश्रवणं तत्सजातीययागान्तरपरिसङ्ख्यार्थमिति स्थितम्। तत्र "अग्निं स्विष्टकृतं यजति" इति पुनःश्रवणेन शेषभक्षपरिसङ्ख्यास्ति न वेति संशये, सिद्धान्तेनोपक्रमते—

**स्विष्टकृति भक्षप्रतिषेधः स्यात्तुल्यकारणत्वात्॥३३॥**

स्विष्टकृति श्रुयमाणे तेन भक्षणपरिसङ्ख्या स्यात्। कुतः ? तुल्यकारणत्वात्—भक्षणस्यायागत्वेन स्विष्टकृत्साजात्याभावेऽपि प्रतिपत्तिकारणत्वेन तत्साजात्यात्॥

अथ पूर्वपक्षी प्रत्यवतिष्ठते--

**अप्रतिषेधो वा दर्शनादिडायां स्यात् ॥३४॥**

वा शब्दः प्रत्यवस्थाने। स्विष्टकृत्पुनः श्रवणेन भक्षणपरिसङ्ख्या न भवति। यदि हि तत्परिसङ्ख्या स्यात्, तर्हि "इडामुपह्वयते" इतीडाविषये भक्षणानुक्त्या तस्योपह्वानदर्शनमनुपपन्नं स्यात्। अतस्स्विष्टकृच्छ्रवणं चोदकप्राप्तानुवादकमित्येव वक्तव्यम्। एवञ्चेडोपाह्वानदर्शनमप्यनुवादतयैवोपपन्नम्। तस्मान्न भक्षपरिसङ्ख्या॥

अथ सिद्धान्ती निराचष्टे—

**प्रतिषेधो वा विधिपूर्वस्य दर्शनात् ॥३५॥**

वा शब्दोऽवधारणे। स्विष्टकृता श्रूयमाणेन शेषभक्षणपरिसङ्ख्या स्यादेव, प्रतिपत्तित्वेन साजात्यात्। न चेडोपाह्वानदर्शनविरोधः। कुतः? विधिपूर्वस्य दर्शनात्-विधीयत इति विधिः-पूर्वं विहितः प्राकृत इडोपहवः पूर्वविधिः, तस्य स्विष्टकृत्पुनःश्रवणेन परिसङ्ख्या, तस्य प्रतिप्रसवार्थतया दर्शनात्-विधानात् स्विष्टकृद्वचनेन परिसङ्ख्या तस्येडोपाह्वानस्य प्रतिप्रसवार्थतया इडोपाह्वानवाक्यस्योपपत्तिरिति यावत्। एवञ्चेडाभिन्नप्राशित्रभक्षस्य स्विष्टकृत्पुनःश्रवणेन परिसङ्ख्या भवति। इडाभक्षस्तु प्रतिप्रसवाद् भवति। यद्यपि प्रकृतौ प्राशित्रभक्षणमिडाभक्षानन्तरकालकम्। तदिह गृहमेधीयेऽप्रसक्तमेव, "इडान्ता भवति" इति तस्येडान्तत्वात्, तथापि क्वचिच्छाखायामिडाभक्षणात् प्रागेव प्राशित्रभक्षणं प्रकृतौ विहितम्। तस्यात्र चोदकप्राप्तौ परिसङ्ख्या युज्यत इति पञ्चमपक्षप्रयोजनप्रपञ्चनपरमेतदधिकरणम्॥

इत्येकादशमाज्यभागाधिकरणपञ्चमपक्षप्रयोजनपराधिकरणम् ॥११॥

१२

ज्योतिष्टोमे श्रूयते—"इडान्तातिथ्या सन्तिष्ठते, न पत्नीस्संयाजयन्ति, नानूयाजान् यजति" इति। किमिह प्रायणीयातिथ्ययोश्शंयुवाकेडान्तत्वस्य कृत्स्नसंस्थायाश्च विकल्पः? उत शंयुवाकेडान्तत्वमेव? इति संशये, पूर्वपक्षयति—

**शंय्विडान्तत्वे विकल्पस्स्यात् परेषु पत्न्यनुयाज-**
**प्रतिषेधोऽनर्थकस्स्यात् ॥३६॥**

संयुशब्दः शंयुवाकपरः। प्रत्नीशब्दश्च पत्नीसंयाजपरः। शंय्विडान्तत्वे श्रूयमाणे तस्य कृत्स्नसंस्थायाश्च विकल्पस्स्यात्। कुतः? शंयुवाकादिडायाश्च परेषु-उदीच्याङ्गेषु कर्तव्येषु मध्ये पत्नीसंयाजानामनूयाजानाञ्च प्रतिषेधात्। यदि च शंय्विडान्तत्वमेव स्यात्, तर्हि तदूर्ध्वभाविनामङ्गानां सर्वेषामेव निवृत्तौ पत्नी-संयाजानुयाजप्रतिषेधः अनर्थकस्स्यात्। अनुवादत्वञ्चानर्थकप्रायम्। अथ शंय्वि-डान्तत्ववचने[न] तदूर्ध्वभाविनामङ्गानामकर्तव्यत्वे प्राप्ते पत्नीसंयाजानुयाज-प्रतिषेधवचनं परिसङ्ख्यार्थम्—पत्नीसंयाजानेव न कुर्यात्, अन्यानि कुर्यादेवेति। ततश्च पत्नीसंयाजानुयाजप्रतिषेधवचनाभ्यां परिसङ्ख्यापराभ्यां पत्नीसंयाजवर्जं कृत्स्नसंस्थाविधानाच्छंय्विडान्तत्ववचनाभ्यां तत्संस्थाविधानाच्च द्वयोस्संस्थयो-र्विकल्पः॥

अथ सिद्धान्तयति—

**अनुवादो वा कर्मणस्स्यादशब्दत्वात् ॥३७॥**

वा शब्दोऽवधारणे। शंय्विडान्तत्वमेव, न तु पक्षे कृत्स्नसंस्था। कुतः? कर्मणः अशब्दत्वात्—कर्मणः कृत्स्नसंस्थापनस्य वाचकशब्दरहितत्वात्। कृत्स्न-संस्थायाश्शब्दतः शक्त्या अप्रतीतेरिति यावत्। यदि हि पत्नीसंयाजानुयाज-प्रतिषेधवचनं परिसङ्ख्यापरं सत् कृत्स्नसंस्थाविधिपरम्, शंय्विडान्तत्ववचनञ्च तत्संस्थापरमाश्रित्य विकल्प आश्रीयेत, तदा वाक्यान्तरत्वं प्रसज्येत। अष्टदोष-दुष्टश्च विकल्प आश्रयितव्यः, त्रिदोषा च परिसङ्ख्या प्रसरेत्। तस्मादिह शंय्वि-डान्तत्वमेव विधीयते। पत्नीसंयाजानूयाजप्रतियेधवचनन्तु तत्स्तुत्यर्थोऽनुवादः। शंय्विडान्तत्वं प्रशस्तं पत्नीसंयाजानुयाजाभावेन लाघवादिति स्तुतिरुन्नेया। तस्मात् शंय्विडान्ते एव प्रायणीयोदयनीये, न तु कृत्स्नसंस्थे॥

इति द्वादशं प्रायणीयातिथ्ययोः शंय्विडान्तताधिकरणम् ॥१२॥

१३

शंय्विडान्तत्वमेव प्रायणीयातिथ्ययोरिति स्थितम्। प्रकृतौ तावत् द्वौ शंयुवाकौ। तत्र सूक्तवाकस्योपरिष्टात् पत्नीसंयाजप्रचारात् प्रागाहवनीये एकश्शंवाकप्रचारः। पत्नीसंयाजानामुपरिष्टाद्गार्हपत्ये द्वितीयः। तथा प्रकृतौ द्वे इडे स्तः। तत्र स्विष्टकृत उपरिष्टादनुयाजानां पुरस्तादेकः, पत्नीसंयाजानामुपरिष्टाद् द्वितीयः। किमिह पूर्वाभ्यां शंय्विडाभ्यां तदन्तता? उतोत्तराभ्याम्? इति संशये, पूर्वपक्षयति—

**प्रतिषेधार्थवत्त्वाच्चोत्तरस्य परस्तात् प्रतिषेधस्स्यात् ॥३८॥**

शंय्विडान्तत्ववचनेनोत्तरस्य–द्वितीयस्य पत्नीसंयाजोत्तरकालीनशंय्विडस्य परस्तात्–उपरिष्टात् कर्तव्यानामङ्गानां प्रतिषेधः–निवृत्तिस्स्यात्। एवञ्च ये पूर्वस्य शंय्विडस्योपरिष्टात् उत्तरशंय्विडात् प्राञ्चः पदार्थाः तेषामपि न निवृत्तिः फलति। कुतः? प्रतिषेधार्थवत्त्वात्[1]–यदि हि पूर्वशंय्विडाभ्यान्तदन्तता, तदा तासामुपरिष्टात् कर्तव्यमध्यपातिनां पत्नीसंयाजानुयाजानां प्रतिषेधोऽनर्थः स्यात्। उत्तराभ्यामेव शंय्विडाभ्यान्तदन्तत्वपक्षे तु ताभ्यां प्राक् कर्तव्यमध्यपातिनां पत्नीसंयाजानां प्रतिषेधोऽर्थवान् भवति। च शब्दोऽनुक्तयुक्तिसमुच्चयार्थः। पूर्वशंय्विडाभ्यां तदन्तत्वे तदुत्तरेषामुत्तरशंय्विडस्य पुरस्ताद् भाविनामपि चोदकतः प्राप्तानां बाधः प्रसज्येत। उत्तरशंय्विडाभ्यान्तदन्तत्वे तु तेषां न बाध इति तदंशेऽपि चोदकानुग्रहो भवति। तस्मादुत्तरशंय्विडाभ्यामेव तदन्तता॥

अथ सिद्धान्तयति—

**प्राप्तेर्वा पूर्वस्य वचनादतिक्रमस्स्यात् ॥३९॥**

वा शब्दोऽवधारणे। शंय्विडान्तत्वे पूर्वस्यैव शंय्विडस्य ग्रहणं नोत्तरस्य। कुतः? प्राप्तेः–तस्यैव प्रथमसुपस्थितत्वादित्यर्थः। यस्तु पूर्वशंय्विडमतिलङ्घ्य गच्छेत्, तस्य वचनाद् अतिक्रमः स्यात्–प्रथमोपस्थितपरित्यागात्। तस्मात्पूर्वाभ्यामेव शंय्विडाभ्यां तदन्तत्वम्। प्रत्यक्ष[वचन]स्वारस्यानुसाराच्चोदकसङ्कोचो न दोषाय। प्रतिषेधस्तु आर्थोऽनुवाद इत्युक्तमेव॥

---

१. अर्थवचनात्. ख०

इतोऽप्येवमित्याह—

**प्रतिषेधस्य त्वरायुक्तत्वात्तस्य च नान्यदेशत्वम् ॥४०॥**

शंय्विडोत्तराङ्गप्रतिषेधः त्वरायुक्तः श्रूयते—"तद्देवाः प्रायणीयन्निरवपन्, तच्छान्तमासीत्। अथासुरा यज्ञमायन्, तच्छंय्यन्तमेव कृत्वा त्वरितमाद्रियन्त, तथातिथ्यन्निरवपन् तदिडान्तमासीत्। अथासुरा यज्ञमायन् तदिडान्तमेव कृत्वा त्वरितमान्द्रियन्त" इति। असुरभयात्त्वरया तदन्तमेवाकुर्वन्नित्यर्थः। तस्मादपि तस्य शंय्विडस्य पूर्वकालिकत्वमेवादर्तव्यम्, न तु तदपेक्षया अन्यदेशत्वम्—उत्तरकालीनत्वम्। तस्मात् पूर्वाभ्यामेव शंय्विडाभ्यान्तदन्तता॥

इति त्रयोदशं प्रायणीयातिथ्ययोः पूर्वशंय्विडाभ्यां संस्थाधिकरणम्॥ १३ ॥

१४

ज्योतिष्टोमे "त इषुं समस्कुर्वताग्निमनीकं सोमं शल्यं विष्णुं तेजनम्" इत्युपक्रभ्य "यदुपसद उपसद्यन्ते" इत्युपसदो विहिताः। तत्र आग्नेयस्सौम्यो वैष्णवश्चेति त्रयो यागाः, आज्यहविषस्तिस्रः प्रधानाहुतय इति स्थितिः। तत्र श्रूयते—"अप्रयाजास्ताः अननूयाजास्ताः" इति, "स्रुवेणाघारमाघारयति" इति च। किमिह प्रतिषिद्धप्रयाजानूयाजवर्जं कृत्स्नमङ्गजातं कर्तव्यम्? उत गृहमेधीयवदपूर्वत्वात् प्रत्यक्षोपदिष्टव्यतिरिक्तं किमप्यङ्गजातं न कर्तव्यम्? इति संशयः। परिसङ्ख्यापक्षस्तु भाष्ये उत्प्रेक्षितोऽप्यनुपदमेव गृहमेधीयवन्निरस्तत्वादुपेक्षितः।

तत्र पूर्वपक्षयति—

**उपसत्सु यावदुक्तमकर्म स्यात्॥ ४१ ॥**

उपसत्सु प्रतिषेध्यत्वेन यावदुक्तं तावत एव अकर्म-अनुष्ठानं न स्यात्। इह तु सर्वमङ्गजातं कर्तव्यम्, चोदकतः प्राप्तेः। यावच्च प्रत्यक्षोपदिष्टं तावतः कर्मणोऽनुष्ठानं स्यात्, प्रतिषिद्धवर्ज्यमिति वा योज्यम्॥

अथ सिद्धान्तयति—

**स्रौवेण वागुणत्वाच्छेषप्रतिषेधस्स्यात्॥ ४२ ॥**

वाशब्दोऽवधारणे। स्रौवेणाघारेण प्रत्यक्षोपदिष्टेन इतराङ्गजातस्य निवृत्तिस्स्यात्, न तु सर्वं प्रवर्तते। कुतः? अगुणत्वात्—अगुणः प्राकृताङ्गपुनःश्रवणम्,

गृहमेधीयाज्यभागन्यायेनापूर्वतावोधकत्वात्। प्रयाजानुयाजप्रतिषेधस्तु अवयुत्यानुवादमात्रम् ॥

अथ पूर्वपक्षी पत्यवतिष्ठते—

**अप्रतिषेधो वा प्रतिषिध्य प्रतिप्रसवात् ॥ ४३ ॥**

वा शब्दः प्रत्यवस्थाने। गृहमेधीयाज्यभागे पुनःश्रवणस्यानन्यार्थत्वादपूर्वताप्रापकत्वं युज्यते। इह तु स्रौवाघारेण तदितराङ्गनिवृत्तिर्न भवति, स्रौवाघारवचनस्यान्यार्थत्वात्। तत् कुतः? प्रतिषिध्यप्रतिप्रसवात्। श्रूयते हि— "नान्यामाहुतिं पुरस्ताज्जुहुयाद् यदन्यामाहुतिं पुरस्ताज्जुहुयाद्, अन्यन्मुखं कुर्यात् स्रुवेणाघारमाघारयति" इति प्राकृतीभ्य आहुतिभ्योऽन्याम्—प्रधानभूताग्नेयाद्यौपसदाहुतिम्। प्राकृतीराहुतीरहुत्वा पुरस्तान्न जुहुयात्, किन्तु प्राकृतीराघाराद्याहुतीः पुरस्ताद्धुत्वैव औपसदाहुतीर्जुहुयात्। यत्—यदि प्राकृतीभ्य आहुतिभ्यः अन्यां औपसदाग्नेयाद्याहुतिं प्राकृतीराहुतीरहुत्वा पुरस्ताज्जुहुयात्, तदा अन्यद् यज्ञस्य मुखं कुर्यात्। तच्चानुचितम्। आघाराद्याहुतयो हि सर्वेष्टीनां मुखम्। तस्मात् स्रुवेणाघारमाघारयति। सर्वप्राकृतोपलक्षणमेतत्। तदैव "नान्यामाहुतिं पुरस्तात्" इत्यादिना आघारान्याभावमाशङ्क्य तत्प्रतिप्रसवविधानेनाघारवाक्यस्यान्यार्थत्वान्नापूर्वतागमकत्वम्। एवञ्च प्रयाजानुयाजप्रतिषेधोऽर्थवान् भवतीति तद्वर्जं सर्वाङ्गजातं कर्तव्यमिति भाष्यानुसारेण सूत्रमिदं व्याख्यातम्।

तदिदमनुपपन्नम्—आघारादीनां चोदकतः प्राप्तत्वेन तदभावशङ्काया एवानुन्मेषात्। न चोपसत्सु आघारादीनामाम्नानादेव तदभावशङ्कोन्मेषसम्भव इति वाच्यम्, एवं सति गृहमेधीयेऽप्याघारादीनामनाम्नानवशेन तदभावशङ्कायामाज्यभागश्रवणस्य प्रतिप्रसवार्थत्वसम्भवेनापूर्वत्वप्रापकत्वानुपपत्तिप्रसङ्गात्। खण्डदेवस्तु—आग्नेय-सौम्य-वैष्णव-प्रधानयागत्रयं विधाय "अग्निर्हि मुखम्" इति स्तुत्वा "नान्यामाहुतिम्" इत्यादि श्रुतम्। आग्नेयादिप्रधानाहुतिभ्यो ऽन्यां प्राकृतिमाहुतिं पुरस्तान्न जहुयात् यदि प्रधानाहुतिभ्योऽन्यामाहुतिं पुरस्ताज्जुहुयात्, तदा अन्यद् यज्ञस्य मुखं कुर्यात्। तत्त्वनुचितम्—अग्निर्हि यज्ञस्य मुखमिति प्रधानपूर्वभाव्याहुतिमात्रस्य प्रतिषेधे प्राप्ते स्रुवेणाघारयतीत्यस्य प्रतिप्रसवविधानेनार्थवत्त्वान्नाज्यभागपुनःश्रवणवदपूर्वतागमकत्वसम्भवः। ततश्च

स्रुवाघारव्यतिरिक्तानां प्रधानपूर्वभाव्याहुतीनां प्रतिषेधात् "अप्रयाजाः" इत्यबयुत्यानुवादः "अननूयाजाः" इति [पर्युदासप्रशंसार्थत्वेना] र्थवानेव। ततश्चोत्तराघारप्रयाजाज्यभागानुयाजवर्जं सर्वमङ्गं कर्तव्यमिति व्याचख्यौ।

अथ सिद्धान्ती निराचष्टे—

**अनिज्या वा शेषस्य मुख्यदेवतानभीज्यत्वात् ॥ ४४ ॥**

वाशब्दोऽवधारणे। गृहमेधीयाज्यभागन्यायेन "स्रुवेणाघारमाघारयति" इति प्रकृताङ्गपुनःश्रवणस्यापूर्वत्वावगमकत्वात् शेषस्य—इतराङ्गजातस्य, अनिज्यानिवृत्तिस्स्यात्। नान्यामित्याघारवाक्यस्य प्रतिप्रसवार्थत्वात् कथमपूर्वतागमकत्वमित्यत आह–मुख्यदेवतानभीज्यत्वादिति। अग्न्यादिप्रधानदेवतासु मध्ये प्रथमदेवता [ अग्निः ] तस्यानभीज्यत्वम्–आहुतिभाक्त्वाभावः नान्यामाहुतिमित्यादिवा विवक्षितम्। प्रधानाहुतिषु मध्ये प्रथमाहुत्यपेक्षया अन्यां सौमीं वैष्णवीं वाहुतिं पुरस्तान्न जुहुयात्, "यद् अन्यां सौम्याद्याहुतिं पुरस्ताज्जुहुयात्, तदा अन्यद् यज्ञस्य मुखं कुर्यात्। अग्निर्हि यज्ञस्य मुखम्" इत्येवं पाठात् प्राप्तप्रधानक्रमप्रशंसापरमेवैतत्—"नान्यामाहुतिं पुरस्ताज्जुहुयाद्यद्यन्यामाहुतिं पुरस्ताज्जुहुयात्" इति। ततश्च नान्यामित्यादिवाक्यमुपसद्विधेरेव शेषः, न तु "स्रुवेणाघारमाघारयति" इत्यस्य। तथा च तत्पुनःश्रवणस्यानन्यार्थत्वादपूर्वत्वमुपसदाम्। एवञ्च नान्यामित्यस्य प्रया [ज] विध्येकवाक्यत्वलाभः। आघरादिप्रतिषेधपरत्वे तु वाक्यान्तरत्वं स्यात्। अप्रयाजाननुयाजवचनन्त्वनुवादमात्रम्, आख्याताभावात्। स्रुवाघारवचनन्त्वाख्यातसद्भावाद् "यज्ञस्य प्रज्ञात्या" इति स्तुतिसम्बन्धाच्च विधायकं सदपूर्वतां गमयति ॥

इति चतुर्दशमुपसत्स्वाघारस्यापूर्वताधिकरणम् ॥ १४ ॥

१५

अवभृथे श्रूयते—"अप्सुमन्तावाज्यभागौ" इति। "अप्स्वग्ने सधिष्टव" इत्याद्यप्सुशब्दसंयुक्तयाज्यानुवाक्याकावित्यर्थः। तथा "अपबर्हिषः प्रयाजान् यजति" श्रुतम्। "बर्हिर्यजति" इति श्रुतश्चतुर्थः प्रयाजो बर्हिरित्युच्यते। अपगतः बर्हिर्यागः येभ्यः प्रयाजेभ्यः ते अपबर्हिषः। बर्हिर्यागवर्जाश्चत्वारः प्रयाजा भव-

न्तीत्यर्थः। तथा "अपबर्हिषावनूयाजौ" इति श्रुतम्। "देवं बर्हिः" इति याज्याकप्रथमो यागो बर्हिरित्युच्यते। तद्वर्जावनूयाजावित्यर्थः। किमत्र बर्हिःप्रयाजं बर्हिरनूयाजञ्च वर्जयित्वा इतरत् सर्वमङ्गजातं भवति? उत यावदुक्तम्? इति संशये, पूर्वपक्षयति—

**अवभृथे बर्हिःप्रतिषेधात् शेषकर्म स्यात् ॥ ४५ ॥**

अवभृथे बर्हिर्यागयोरेव प्रतिषेधात् शेषस्य-इतराङ्गजातस्य चोदकतः प्राप्तेः कर्म-अनुष्ठानं स्यात् ॥

अथ सिद्धान्तयति—

**आज्यभागयोर्वागुणत्वाच्छेषप्रतिषेधस्स्यात् ॥ ४६ ॥**

वाशब्दोऽवधारणे। आज्यभागयोरेवात्रानुष्ठानम्। "अप्सुमन्तावाज्यभागौ" इति तत्पुनश्श्रवणात्। प्राकृताङ्गपुनःश्रवणस्य च गृहमेधीयाज्यभागन्यायेनापूर्वतागमकत्वात्। अतः शेषस्य-आज्यभागव्यतिरिक्तस्याङ्गजातस्य प्रतिषेधः-निवृत्तिः स्यात्। नन्वनन्यार्थमेव प्राकृताङ्गपुनः श्रवणमपूर्वत्वगमकम्। इह त्वाज्य भागपुनःश्रवणम् अप्सुमत्त्वगुणविधानार्थम्—यावाज्यभागौ तौ अप्सुमन्तौ कर्तव्याविति। अतः कथं तदितराङ्गनिवृत्तिरित्यत आह—अगुणत्वादिति। गुणविधानार्थत्वाभावादित्यर्थः। "अप्स्ववभृथेन चरन्ति" इति क्रमे "अप्स्वग्ने सधिष्टव" "अप्सु मे सोऽब्रवीत्" इति मन्त्रौ पठितौ। ततश्च लिङ्गक्रमाभ्यामेवाज्यभागयोस्तदुभयमन्त्रप्राप्तेः केवलाज्यभागविधिरेवायम्। अप्सुमन्ताविति त्वनुवादः। अतोऽवभृथः अपूर्वः ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**प्रयाजानां त्वेकदेशप्रतिषेधादवाक्यशेषत्वं तस्मान्नित्यानुवादस्स्यात् ॥ ४७ ॥**

तुः प्रत्यवस्थाने। प्रयाजग्रहणमनूयाजानामप्युपलक्षणम्। यदाज्यभागपुनः श्रवणात्तदितरनिवृत्तिः, तदा अपबर्हिषः प्रयाजानिति किमर्थम्? न तावदाज्यभागपुनःश्रवणेन निवृत्तानां प्रयाजानां प्रतिप्रसवविधिः, तर्हि बर्हिर्यागस्यापि प्रयाजत्वात् प्रतिप्रसवप्राप्तावपबर्हिष इत्यपि विधातव्यम्। तथा सवि

प्रयाजान् कुर्यात् तांश्चापबर्हिष इति भवेद्वाक्यभेदः। ततश्च चोदकप्राप्तप्रयाजानुवादेनापबर्हिष्ट्वविधिरिति वक्तव्यम्। एवञ्च प्रयाजानामेकदेशस्य बर्हिःप्रयाजस्य प्रतिषेधादवाक्यशेषत्वम्। शेषशब्दोऽन्यपर्यायः, "आज्येन शेषं संस्थापयति" इतिवत्। अवाक्यशेषत्वं वाक्यान्यत्वं न भवति-वाक्यभेदो न भवति। एवम् "अपबर्हिषावनूयाजौ" इत्यत्रापि योज्यम्। ननु चोदकप्राप्तप्रयाजानूयाजानुवादेनापबर्हिष्ट्वविधौ चोदकत एवाज्यभागयोरपि प्राप्तेस्तत्पुनःश्रवणं व्यर्थमित्यत आह—तस्मादिति। तस्माद् बर्हिर्यागवर्जं सर्वाङ्गानां प्राप्तत्वाद् आज्यभागपुनः श्रवणं नित्यानुवादः॥

अथ सिद्धान्ती निराचष्टे—

**गृहमेधीयवद्वा स्यात् ॥ ४८ ॥**

वा शब्दोऽवधारणे। गृहमेधीयवदाज्यभागपुनःश्रवणादवभृथस्यापूर्वत्वमेव स्यात्। न चापूर्वत्वे "अपबर्हिषः प्रयाजान्" इति वाक्यस्य प्रयाजानां प्रतिप्रसवविधायकत्वं तेषु बर्हिर्यागप्रतिषेधकत्वञ्च स्वीकार्यमिति वाक्यभेदस्स्यादिति वाच्यम्, अपबर्हिष्ट्वविशिष्टप्रयाजविधौ वाक्यभेदानवकाशात्। तस्मादवभृथेष्टौ बर्हिर्यागव्यतिरिक्ताः प्रयाजानूयाजाः "आज्यभागौ" इत्यादि प्रत्यक्षोपदिष्टमेव भवति, नान्यत् प्राकृतमिति॥

इति पञ्चदशमवभृथे आज्यभागयोरपूर्वकर्मताधिकरणम् ॥ १५ ॥

१६

ज्योतिष्टोमे अग्निषोमीयपशौ पलाश-खदिर-बैल्व-रौहितादयो यूपवृक्षा इति स्थितम्। वाजपेये तु श्रूयते—"खादिरो यूपो भवति" इति। किमिह प्रत्यक्षश्रुतखदिरस्यातिदिष्टपलाशादीनाञ्च प्रकृतिवद्विकल्पः? उत प्रत्यक्षश्रुतखदिरेण इतरेषां निवृत्तिरिति संशये, सिद्धान्तेनोपक्रमते—

**विरोधिनामेकश्रुतौ नियमस्स्याद् ग्रहणस्यार्थवत्वाच्छरवच्छ्रुतितो विशिष्टत्वात् ॥ ४९ ॥**

विरोधिनाम्—पलाशादीनाम्मध्ये एकस्यान्यतमस्य खदिरस्य पुनः श्रुतौ, तस्य नियमस्स्यात्, इतरस्य परिसङ्ख्या स्यात्। कुतः? ग्रहणस्यार्थवत्वात् – एवं

सत्येव खदिरपुनर्ग्रहणस्य प्रयोजनवत्वात्। ननु पलाशादीनामपि चोदकवचनतः प्राप्तत्वात् कथं न निवृत्तिरित्यत आह--श्रुतितो विशिष्टत्वात्-शासु अनुशिष्टौ। खदिरस्य प्रत्यक्षविहितत्वात्। प्रत्यक्षवचनेन चानुमानिकस्य चोदकवचनबाधस्य न्याय्यत्वात्, शरवत्। यथा "शरमयं बर्हिर्भवति" इति प्रत्यक्षोपदिष्टैश्शरैरतिदिष्टकुशबाधस्तद्वत्॥

नन्वत्र खदिरस्य तदितरेषाञ्च पलाशादीनां चोदकतः प्राप्तत्वात् "खादिरो भवति"इत्यनुवादोऽस्तु, खदिरनियमविधौ पलाशादिविषये चोदकबाधापत्तेरिति प्रत्यवतिष्ठमानं पूर्वपक्षिणं सिद्धान्ती निराचष्टे—

**उभयप्रदेशान्नेति चेच्छरेष्वपीति चेत् ॥५०॥**

खदिरस्य तदितरेषां पलाशादीनां चेत्युभयेषां प्रदेशात्-अतिदेशान्न खदिरनियम इति चेन्मन्यसे, तर्हि शरेष्वप्येवं प्रसज्येत। तत्रापि कुशा न निवर्तेरन्॥

अत्राशङ्क्य निराचष्टे—

**विरोध्यग्रहणात्तथा शरेष्विति चेत्तथेतरस्मिन् ॥५१॥**

बर्हिःकार्ये प्रत्यक्षविहितेषु शरेषूपात्तेषु तद्विरोधिनां कुशानां चोदकप्राप्तानां तथा-बाधः। तेन झटिति प्रवृत्तिकेन प्रत्यक्षवचनेनानुमानिकपश्चात्प्रवर्तमानचोदकवचनबाधस्य न्याय्यत्वादिति चेत्तर्हि इतरेषु पलाशादिष्वपि प्रत्यक्षखदिरविधिना चोदकबाधो युज्यते। तस्मात् खदिरनियमः॥

ननु खदिरपुनःश्रवणस्यानुवादत्वमेवोचितम्। खदिरनियमविधौ पलाशादिविषये चोदकबाधप्रसङ्गात्। न च प्रत्यक्षखदिरवचनेन पालाशादिविषये शरवचनेन कुशा इव चोदकबाधो न्याय्य इति वाच्यम्। प्रकृतौ हि खदिरादिनियमविधिराक्षेपादिलौकिकप्रमाणप्राप्तवटपनसादिनिवृत्तिफलक इति स्थितम्। ततश्चेहापि खदिरनियमविधिना आक्षेपादिलौकिकप्रमाणप्राप्तवटादिवृक्षनिवृत्तावपि चोदकप्राप्तपलाशादिनिवृत्ति[र्न]सम्भवति। शरमयं [इत्यत्र]बर्हिःकार्यवाचकबर्हिश्शब्दवत् पलाशादिकार्यवाचकशब्दाभावेन पलाशादिकार्ये खदिर विधानाभावात्। अतोऽत्र खदिरपुनःश्रवणमनुवादमात्रमित्याशङ्क्य निराकरोति—

## श्रुत्यानर्थक्यमिति चेन्न ग्रहणस्यार्थवत्वादु-भयोरप्रवृत्तिस्स्यात् ॥५२॥

श्रुतेः-खदिरपुनःश्रवणस्य नियमविरोधित्वेऽप्युक्तरीत्या पलाशादिनिवृत्त्यसम्भवाद् आनर्थक्यम्—अनर्थकप्रायानुवादत्वमिति चेत्-श्रुणु; ग्रहणस्य-खदिरपुनःश्रवणस्य पलाशादिनिवृत्तिफलकनियमविधित्वेनार्थवत्वसम्भवात्, अनर्थकप्रायस्य चानुवादत्वस्य सति विधित्वसम्भवे आश्रयणायोगात्। प्रत्यक्षश्रुतखदिरस्यातिदिष्टपलाशादेश्चेत्युभयोरप्रवृत्तिः-प्रत्यक्षश्रुतखदिरेणेतरस्य पलाशादेर्निवृत्तिरेव स्यात्। यद्यपि पलाशादिकार्यं शब्देनोद्दिश्य तत्र खदिरविधिः, तथापि नियमविधिबलात् खदिरस्य नियतत्वावगतौ तेनैव कृतकार्यत्वादाक्षेपादिलौकिकप्रमाणप्राप्तवटादेरिव चोदकप्राप्तस्य पलाशादेरप्यर्थादेव निवृत्तिस्सिध्यति ॥

### इति षोडशं वाजपेयादौ यूपादीनां खादिरत्वादिनियमाधिकरणम् ॥१६॥

### १७

अध्यायादौ तावदर्थलोपात् प्राकृतबाधं व्युत्पाद्य पश्चात्तद्विशेषो विचारितः। प्रत्याम्नानस्य तु प्राकृतबाधकत्वसम्भवासम्भवौ क्वचिन्न विचारितौ। किन्तु प्रत्यायम्नानस्य बाधकत्वं सिद्धवत्कृत्य तद्विशेष एव बहुधा तत्र तत्र विचारितः। अधुना तु सामान्यतः प्रत्याम्नानस्य प्राकृतबाधकत्वं सम्भवति न वेति विचार्यते। "सौम्यं श्यामकं चरुन्निर्वपेत्" इत्यादिविकृतिषु प्रत्यक्षश्रुतद्रव्यदेवतेन किं प्राकृतव्रीह्याद्यग्न्यादिद्रव्यदेवतस्य न बाधः ? उत बाधः ? इति संशये, सिद्धान्तेनोपक्रमते–

## सर्वासां वा गुणानामर्थवत्वाद् ग्रहणमप्रवृत्तेस्स्यात् ॥५३॥

वा शब्दोऽवधारणे। सर्वासाम्-विकृतिचोदनानां ये द्रव्यदेवतविशेषार्थकाः गुणाः प्रत्यक्षश्रुताः तेषामेव ग्रहणं स्यात्, न तु चोदकप्राप्तानां प्राकृतानामपि। कुतः ? अर्थवत्वादप्रवृत्तेः-वैकृतगुणैरेव विकृतियागेषूपकारलक्षणप्रयोजनस्य सिद्धत्वेन प्राकृतद्रव्यदेवतविषये चोदकस्याप्रवृत्तेः। प्रत्यक्षश्रुतद्रव्यदेवतविशेषलक्षणगुणैरेव यागसिद्धिं पर्यालोच्य चोदकः व्रीह्याद्यग्न्यादिद्रव्यदेवतवर्जमेव प्राकृतधर्मान् प्रापयतीति यावत् ॥

अथ पूर्वपक्षिणं प्रत्यवतिष्ठमानं निराचष्टे—

**अधिकं स्यादिति चेन्नार्थाभावात् ॥५४॥**

वैकृतं द्रव्यदेवतं झटिति प्रवृत्तिकात्प्रत्यक्षवचनात् प्रथमं प्राप्नोतु। अधिकम्—अन्यत्प्राकृतं द्रव्यदेवतमपि पश्चाच्चोदकतः स्यात्। न च प्राप्तमपि प्राकृतं द्रव्यदेवतं दुर्बलचोदकप्रमाणप्राप्तत्वात् प्रत्यक्षवचनेन बाध्यतामिति वाच्यम्, प्रापकचोदकवचनस्याप्रामाण्यापत्या दुर्बलेनापि तेन प्रापितस्य प्राकृतस्य बाधानर्हत्वात्। तस्मात्प्रत्यक्षश्रुतवैकृतगुणानां प्राकृतगुणानाञ्च विकल्प इति चेत्तन्न; कुतः ? अर्थाभावात्—प्रत्यक्षश्रुतद्रव्यदेवतेनैव विकृतियागसिद्धौ सत्यां प्रयोजनाभावान्न प्राकृतद्रव्यदेवतविषये चोदकस्य प्रवृत्तिसम्भवः। यद्यपि चोदकस्य सर्वाङ्गेषु युगपदेकप्रसरत्वात् प्रत्यक्षश्रुतवर्जं प्राकृतधर्मातिदेशो गृहमेधीयाधिकरणेऽनुपदमेव निरस्तम्—'अग्रहणादिति चेन्न तुल्यत्वात्' इति, तथाप्युपकारपृष्ठभावेन पदार्थानामतदेशेन यदुपकारजनकीभूतः पदार्थो विकृतावाम्नातस्तदुपकारजनकीभूतप्राकृतपदार्थातिरिक्तपदार्थानामेव विकृतावतिदेशात् प्राकृतपदार्थस्याकाङ्क्षाभावे सति तत्रातिदेशविषयत्वस्यैवाकल्पनान्न प्राकृतद्रव्यदेवतस्य प्रामाणिकत्वम्। एवञ्च वस्तुतोऽप्राप्तस्यैव द्रव्यदेवतादेर्विशेषादर्शने सति प्रापकशास्त्रस्याहवनीयादिशास्त्रवत् क्लृप्तत्वेन प्राकृतद्रव्यदेवतादिविषयत्वभ्रमात् प्राप्तत्वव्यवहार इति तृतीये फलाधिकरणे ( ) कौस्तुभे प्रपञ्चितम्। अतः प्रत्याम्नानात् प्राकृतद्रव्यदेवतादिबाधः। तस्माद् विकृतिषु प्रत्यक्षश्रुतैः प्रत्याम्नातैः प्राकृतानां बाधः ॥

इति सप्तदशं विकृतिषु प्राकृतद्रव्यदेवतबाधाधिकरणम् ॥१७॥

१८

उक्तमधिकरणमन्यत्राप्यतिदिशति—

**तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः प्रवृत्तौ हि विकल्पस्स्यात् ॥५५॥**

प्रत्यक्षश्रुतेन द्रव्यदेवतेन प्राकृतद्रव्यदेवतस्य बाध इति स्थितम् पूर्वाधिकरणे। तथा सोमापौष्णपशौ "औदुम्बरो यूपो भवति" इत्येकार्थविकारे नियोजनलक्षणैकप्रयोजनके औदुम्बरत्वेन वैकृते यूपे श्रूयमाणे प्राकृतस्य खादिरादियूपस्य अप्रवृत्तिः-प्राकृतयूपकार्यस्य नियोजनस्य प्रत्यक्षश्रुतेनैवौदुम्बरयूपेन

सिद्धत्वेन तत्र प्राकृतखादिरयूपस्यानाकाङ्क्षिततया तद्विषये चोदकस्यैवाप्रवृत्ते-रुक्तत्वात्। तत्प्रवृत्तौ हि प्राकृतस्य वैकृतस्य च विकल्पः-अष्टदोषदुष्ट आश्रयितव्यस्स्यात् ॥

ननु प्राकृतवैकृतयोर्मास्तु विकल्पः, समुच्चयस्स्यादेव, प्राकृतवैकृतयूपेषु युगपत् पशुनियोजने सति दार्ढ्यातिशयात्, पशोरत्यन्तानपक्रमसिद्धेः, एकयूप-नियोजनापेक्षया विशेषसद्भावात्। एतादृशविशेषस्य च वैकृतैकयूपेनासिद्धेः तत्सिध्यर्थं वैकृतयूपानामप्यपेक्षितत्वे तद्विषये चोदकप्रवृत्तेर्दुर्वारत्वात्। तस्मादस्तु प्राकृतवैकृतसमुचय इत्याशङ्क्य निराकरोति—

**यावच्छ्रुतीति चेन्न प्रकृतावशब्दत्वात् ॥५६॥**

प्रत्यक्षवचनतश्चोदकतो वा यावतां यूपानां श्रवणं तावतां समुच्चयोऽस्त्विति चेत्तन्न; कुतः ? प्रकृतावशब्दत्वात्—प्रकृतौ यूपानेकत्वस्याश्रुतत्वादित्यर्थः। ततश्च प्राकृतैकयूपोद्देशेनौदुम्बरत्वमात्रविधानान्न यूपान्तरप्रसक्तिरित्याशयः ॥

इत्यष्टादशं सोमापौष्णपशौ खादिरयूपनियमाधिकरणम् ॥१८॥

१९

"सोमारौद्रं चरुन्निर्वपेच्छुक्लानां व्रीहीणाम्" इत्यत्र किं व्रीहयो यवाश्च चोदकतो विकल्पेन प्राप्नुवन्ति, तत्र यदा व्रीहयः प्राप्नुवन्ति तदा ते शुक्ला भवन्तीति विवक्षितम् ? उत यवा नैव भवन्ति किन्तु शक्लव्रीहय एव भवन्ति ? इति संशये, पूर्वपक्षयति—

**विकृतौ त्वनियमस्स्यात् पृषदाज्यवद् ग्रहणस्य गुणार्थत्वादु-भयोश्च प्रदिष्टत्वाद् गुणशास्त्रं यदेति स्यात् ॥५७॥**

तुर्वैषम्ये। अस्त्वौदुम्बरो यूप इत्यादौ प्राकृतखादिरादियूपनिवृत्तिः, इह तु विकृतौ प्राकृतद्रव्ययोरनियमः—विकल्पस्स्यात्। कुतः ? उभयोश्च प्रदिष्टत्वात्—उभयोरपि व्रीहियवद्रव्ययोः चोदकतः प्राप्तत्वात्। ननु प्रत्यक्षश्रुतव्रीहिद्रव्येण चोदक-प्राप्तं यवद्रव्यं बाध्यतामित्यत आह—ग्रहणस्य गुणार्थत्वादिति। शुक्लानां व्रीहीणा-मित्यस्य पक्षप्राप्तव्रीह्यनुवादत्वेन तत्र शुक्लत्वलक्षणगुणविधानार्थत्वादित्यर्थः। ततश्चान्यार्थत्वान्न व्रीहिपुनःश्रवणमितरद्रव्यं परिसङ्ख्यातुं शक्नोति, पृषदाज्यवत्।

यथा पशौ "पृषदाज्येनानूयाजान् यजति" इत्यत्राज्यग्रहणं पृषत्तागुणविधानार्थ-मनूद्यते पृषत्तागुणाधायकदध्ना नाज्यस्य बाधः, तद्वत्। एवञ्च शुक्लानामिति गुणविधानम्—यदा व्रीहयः प्राप्नुवन्ति तदा ते शुक्ला इत्येवंपरं स्यात्। अतो यवा अपि पक्षे प्राप्नुवन्ति ॥

अथ सिद्धान्तयति—

**ऐकार्थ्याद्वा नियम्येत श्रुतितो विशिष्टत्वात् ॥५८॥**

व्रीहियवद्रव्ययोरुभयोरपि पुरोडाशनिर्वृत्तिलक्षणैकप्रयोजनकत्वादन्यतरदेव द्रव्यं नियम्येत। तदपि व्रीहिद्रव्यमेव, न तु यवद्रव्यम्। कुतः? श्रुतितो विशिष्ट-त्वात्—प्रत्यक्षविहितत्वाद् व्रीहिद्रव्यस्येत्यर्थः। न च गुणविधानाय व्रीहिग्रहण-मनुवाद एवेति वाच्यम्, सोमारौद्रयागस्य, चोदकप्राप्तव्रीह्यनुवादेन शुक्लत्वस्य च विधौ वाक्यभेदापत्तेः। अतो द्रव्यगुणोभयविशिष्टयागविधिरेवायम्। तथा च विशेषणीभूतव्रीहिद्रव्यस्य चोदकाद्विकल्पेन प्राप्तस्य नियमविधिस्सम्पद्यत इति तेन यवद्रव्यं बाध्यते ॥

इतोऽप्येवमित्याह—

**विरोधित्वाच्च लोकवत् ॥५९॥**

व्रीहयो यवाश्च निरपेक्षमेव पृथक् चोदनाविहिताः विरोधिनः तदीयगुणा अपि व्रीहित्वाद्यवयवा विरोधिन एव, लोकवत्। यथा लोके 'पयसा न मत्स्या-नश्नीयात्' इत्युक्ते आज्यादिसंमिश्रा अपि मत्स्याः पयसा विरुध्यन्त इति गम्यते, तद्वत्। अतस्सगुणा व्रीहयो यवान् वारयन्ति ॥

ननु सोमारौद्रवाक्ये शुक्लविशिष्टयाग एव विधीयताम्। तत्र पक्षप्राप्तद्रव्य-सम्बन्धोऽनुवादार्थमेव व्रीहिग्रहणमस्तु, न तु व्रीह्युद्देशेन शुक्लत्वविधिरिति न वाक्यभेद इत्यत आह—

**क्रतोश्च तद्गुणत्वात् ॥६०॥**

सोमारौद्रवाक्ये क्रतोः—यागस्य व्रीहिद्रव्यगुणत्वलक्षणोभयगुणविशिष्टत्वेन विधानात्। यागे शुक्लत्वलक्षणगुणमात्रस्य विधौ यवेष्वपि शुक्लत्वापत्या व्रीहि-शब्दस्य पाक्षिकानुवादत्वापत्तेः। अतो व्रीहिद्रव्यशुक्लत्वगुणोभयविशिष्टयाग-विधिरेवेति विशेषणभूतव्रीहिद्रव्यनियमविधिरेवायमिति न यवाः प्रवृत्तिमर्हन्ति ॥

इतोऽप्येवमित्याह—

**विरोधिनाञ्च तच्छ्रुतावशब्दत्वाद्विकल्पस्स्यात् ॥६१॥**

तच्छ्रुतौ–व्रीहिद्रव्यश्रवणे सति, तद्विरोधिनां यवानां बाधाभावे सति बिषमशिष्टो विकल्पस्स्यात्। कुतः ? अशब्दत्वात्–यवानां प्रत्यक्षशिष्टत्वाभावात्, अनुमानिकचोदकशिष्टत्वात्, व्रीहिद्रव्यस्य च प्रत्यक्षविहितत्वात्, विषमशिष्टविकल्पस्य चावश्यं वर्जनीयत्वात्। अतोऽपि न यवा भवन्ति ॥

अथाज्यवदित्यत्राह—

**पृषदाज्ये समुच्चयो ग्रहणस्य गुणार्थत्वम् ॥६२॥**

सोमारौद्रवाक्ये यागस्य, व्रीह्युद्देशेन गुणस्य च विधौ वाक्यभेदापत्या विशिष्टविधिरभ्युपेय इति विशेषणभूतव्रीहिद्रव्यनियमविधिरिति युक्तम्। पृषदाज्यवाक्ये तु–अनूयाजानां तदाज्यस्य च चोदकतः प्राप्तत्वादाज्योद्देशेन पृषत्तागुणविधिर्न्निर्बाधः, विधेयान्तराभावात्। एवञ्च तत्राज्यग्रहणस्य पृषत्तालक्षणगुणविधानार्थानुवादमात्रत्वमित्याज्यस्य विध्यभावान्न पृषत्तासञ्जननार्थदध्ना आज्यस्य बाधः, किन्तु समुच्चय एवेति वैषम्यम् ॥

अथाशङ्कते—

**यद्यपि चतुरवत्तीति तु नियमेनोपपद्यते ॥६३॥**

तुश्शङ्कायाम्। विरोधिप्राकृतपदार्थेष्वन्यतमस्य विकृतौ श्रवणे तस्य तत्र नियमः, इतरेषान्तु निवृत्तिरित्यभ्युपगमे "यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या" इत्यत्रापि पञ्चावत्तत्वस्य नियमे सति चतुरवत्तत्वस्य बाधस्स्यात्। तथा सति "यद्यपि चतुरवत्ती" इति पशौ चतुरवत्तत्वनिर्देशोऽनुपपन्नस्स्यात् ॥

अथ परिहरति—

**क्रत्वन्तरे वा तन्न्याय्यत्वात् कर्मभेदात् ॥६४॥**

वा शब्दोऽवधारणे। क्रत्वन्तरे–क्रतुविशेषे पशौ, तत्–प्रत्यक्षश्रुतं पञ्चावत्तत्वमेव भवति, न तु चतुरवत्तत्वम्। कुतः ? न्याय्यत्वात्–कर्मणि घञ्। न्याय्यत्वाद् उक्तन्यायादिति यावत्। "यद्यपि चतुरवत्ती" इति तु कर्मभेदादुपपाद्यम्।

न हि चतुरवत्तत्वं पाशुकमत्र विवक्षितम्, किन्तु दर्शपूर्णमासयोर्यश्चतुरवत्ती यजमानः तस्यापि पञ्चवत्ता वपा कार्येत्यर्थो विवक्षित इत्यदोषः ॥

इत्येकोनविंशं सोमारौद्रचरौ व्रीहिनियमाधिकरणम् ॥१९॥

२०

अग्नीषोमीयपशौ "यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या" इत्यत्र किं वपामात्रस्य पञ्चावत्तत्वम्? उत हृदयादीनामपि? इति संशयः। वपोद्देशेनैव विधानान्न हृदयादीनां पञ्चावत्तत्वम्। न च वपाया अपूर्वसाधनत्वेनैवोद्देश्यत्वादपूर्वसाधनत्वस्य च हृदयादिसाधारण्यात् स्यादेव हृदयादीनामपि पञ्चावत्तत्वमिति वाच्यम्। न हि पशुयागापूर्वसाधनत्वेन वपाया उद्देश्यत्वम्, तथा सति वपाग्रहणवैयर्थ्यात्। ग्रहैकत्वाधिकरणन्यायेन ()उद्देश्यविशेषणस्याविवक्षितत्वेऽपि उद्देश्यस्य वपास्वरूपस्य तदुत्तरचमसाधिकरणन्यायेन()विवक्षितत्वात्। एवञ्च ग्रहविवक्षाबलेन ग्रहयज्याभ्यासापूर्वभेदस्यैव लक्षणीयत्वाद्यथा ग्रहेषु श्रुतस्सम्मार्गश्चमसेषु न प्रवर्तते, तथात्र वपाभ्यासापूर्वविशेष एव वपाशब्देन लक्ष्यत इति न हृदयादिषु पञ्चावत्तत्वमिति पूर्वपक्षमुद्भाव्य निराकरोति—

**यथाश्रुतीति चेन्न चोदनैकत्वात् ॥६५॥**

श्रुतिं वपाशब्दश्रवणम् अनतिक्रम्य यथाश्रुति पञ्चावत्तत्वं प्रत्येतव्यम्, न तु हृदयादिष्वपीति चेत्तन्न; कुतः? चोदनैकत्वात्—न ह्यत्र वपामुद्दिश्य पञ्चत्वविशिष्टा[वदान]विधिः, अवदानांशस्य प्रकृतित एव प्राप्तत्वात्। अतो वपावदानोद्देशेन पञ्चत्वविधिरिति वक्तव्यम्। अवदानमात्रोद्देशेन तद्विधौ पञ्चत्वविधौ वपाग्रहणानर्थत्वात्। एवञ्चावदानानि पञ्च भवन्ति तानि च वपाया इति स्याद्वाक्यभेदः। एवञ्चोद्दिश्यमानावदानस्य वपाविशेषणत्वासम्भवात् प्राकृतावदानोद्देशेन पञ्चत्वविधिरेवायम्। वपाग्रहणन्तु पाशुककर्ममात्रोपलक्षणमनुवाद एव। ततश्च स्यादेव हृदयादीनामपि पञ्चावत्तत्वम्।

ननु "त्र्यङ्गैः स्विष्टकृतं यजति" इत्यत्र समासस्यैकप्रसरत्वादङ्गोद्देशेन यथा न त्रित्वविधिः, तथात्रापि पञ्चावत्तशब्देऽवदानोद्देशेन पञ्चत्वविधिर्न सम्भवति, किन्तु वपोद्देशेनैव पञ्चावत्तत्वविधिः। न चावदानस्य प्रकृतित एव प्राप्तिसम्भवान्न तद्विधिरिति वाच्यम्, पञ्चत्वविशिष्टाप्राकृतावदानान्तरविधिसम्भवात्। न चावदा-

नान्तरत्वेऽदृष्टार्थत्वापत्तिश्शङ्क्या, अप्राकृतावदानकार्यापन्नत्वेन प्राकृतहविस्संस्कार-लक्षणदृष्टार्थत्वोपपत्तेः। यथा "प्राकाशावध्वर्यवे ददाति" इत्यत्राप्राकृतमेवादानान्तरं विधीयमानं प्राकृताध्वर्युभागदानकार्यापन्नं दृष्टार्थं तद्वत्। न चावदानस्य सङ्ख्यायाश्च विधौ वाक्यभेदश्शङ्क्यः, त्र्यङ्गैरित्यादिवत् समासवशेनैव सङ्ख्यावदानयोः वैशिष्ट्यसिद्धेर्विध्यावृत्तिलक्षणवाक्यभेदानवकाशात्। एवञ्च वपाशब्दस्योद्देश्यसमर्पकत्वान्नानर्थक्यप्रायमनुवादत्वम्। तत्र च पञ्चावत्तत्वस्योक्तरीत्या वपायज्यभ्यासापूर्वविशेषप्रयुक्तत्वान्न हृदयादिषु प्रवृत्तिः। यथा "पयसा मैत्रावरुणं श्रृणाति" इत्यादिश्रयणानां तत्तद्ग्रहयज्यभ्यासापूर्वप्रयुक्तत्वान्नेतरेषु प्रवृत्तिः, तद्वदिति चेत्—सत्यम्; वपोद्देशेनैव पञ्चत्वविशिष्टावदानान्तरं विधीयताम्, तथापि हृदयादिष्वपि पञ्चावत्तत्वमप्रत्यूहम्, उद्देश्यसमर्पकवपापदस्य पाशुकहविर्मात्रोपलक्षणत्वात्। वपामात्रपरत्वे "एकादश वै पशोरवदानानि तानि द्विर्द्विरवद्यति" इति वचनानर्थक्यप्रसङ्गात् प्रकृतित एव द्व्यवदानस्य प्राप्तत्वात्। पञ्चावत्तत्वस्य पाशुकहविर्मात्रविषयत्वे तु हृदयादिष्ववदानपञ्चत्वसम्पत्तयेऽवदाने प्राप्ते द्व्यवदानवचनमर्थवत्। तस्मादिह वपापदं पाशुकहविर्मात्रोपलक्षणमित्यभ्युपगन्तव्यमिति हृदयादिष्वपि पञ्चावत्तत्वम्। न च वपापदं वपापरमेवास्तु, "तानि द्विरवद्यति" इत्यनुवादोऽस्त्विति वाच्यम्, कृत्स्नवाक्यस्यानर्थक्याश्रयणापेक्षया वपापदमात्रस्योपलक्षणत्वाश्रयणस्योचितत्वात्। न च यदि हृदयादीनां द्विरेवावदानम्, तर्हि उपस्तरणाभिघारणाभ्यां चतुरवत्तत्वमेव स्यात्, न तु पञ्चावत्तत्वमिति वाच्यम्, उपस्तरणविवृध्या अभिघारणविवृध्या वा पञ्चावत्तत्वसम्भवात्। तस्मात् हृदयादिष्वपि पञ्चावत्तत्वम्। तन्त्ररत्ने तु "उपस्तीर्य हिरण्यशकलमवदाय कृत्स्नां वपामवदाय हिरण्यशकलमुपरिष्टात् कृत्वाभिघारयति सा पञ्चावत्ता भवति" इति वपायामिव हिरण्यशकलेन पञ्चावत्तत्वं हृदयादिहविषामिति स्थितम्। वस्तुतस्तु—अत्र वपापदस्य पाशुकहविर्मात्रोप[लक्षकत्वा]भावेऽपि हृदयादिषु "जमदग्नीनां पञ्चावत्तम्" इति जामदग्न्यविषये प्रसक्तपञ्चावत्तत्वस्य साधनाय "तानि द्विरवद्यति" इत्यस्योपपत्तेर्न तद्वचनं वपाग्रहणस्य पाशुकहविर्मात्रलक्षकत्वे लिङ्गं भवितुमर्हति। न चैवं सति कथं हृदयादिषु पञ्चावत्तत्वमिति वाच्यम्। "पञ्चावत्तैव वपा कार्या" इति हि वपोद्देशेनैव पञ्चत्वविशिष्टावदानविधिः। अवदानोद्देशेन तद्विधावेकप्रसरत्व-

भङ्गप्रसङ्गात्। इदमेव च पञ्चत्वविशिष्टावदानमुपस्थितत्वात् "हृदयस्यावद्यति" इत्यादिवाक्येषु हृदयाद्युद्देशेन विधीयते। अतस्सम्भवत्येव हृदयादिष्वपि पञ्चावत्तत्वमित्यास्तां तावत्॥

इति विंशं पशौ पञ्चावदानतायास्सर्वाङ्गसाधारण्याधिकरणम्॥ २०॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसा
कुतूहलवृत्तौ दशमाध्यायस्य सप्तमः पादः॥

—:ꕥ:—

# अथाष्टमः पादः

**निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः।**
**धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये॥**

१

तदेवमर्थलोपनिबन्धनः प्रत्याम्नाननिबन्धनश्च बाधस्सप्तभिः पादैर्विचारितः। अथास्मिन्नष्टमे पादे वाचनिको बाधो विचार्यते। दर्शपूर्णमासयोः श्रुतम्—"आर्षेयं वृणीते" इति। सामिधेन्यनन्तरम् "अग्ने महाँ असि ब्राह्मण भारत भार्गव च्यावनाप्नवानौर्वजामदग्न्य" इत्येवमाहवनीयस्याग्नेः यजमानेनाधानोत्पादितस्य भृग्वादियजमानगोत्रर्षिजातत्वेन सम्बोधनमार्षेयवरणम्। तदिदञ्चातुर्मास्येषु महापित्र्येष्टावतिदेशेन प्राप्तम्। तत्र श्रूयते—"नार्षेयं वृणीते" इति। तथानारभ्य श्रूयते—"यजतिषु येयजामहं करोति नानूयाजेषु येयजामहं करोति" इति। येयजामहे इत्येकारान्तशब्दस्य येयजामहमित्यनुकरणम्। किमिह महापितृयज्ञे आर्षेयन्न वृणीते, अनूयाजेषु येयजामहन्न कुर्यादिति प्रतिषेधः? उत आर्षेयवरणभिन्नमङ्गजातमिह पितृयज्ञे प्रकृतिवत् भवति, अनूयाजभिन्नयजतिषु येयजामहमिति पर्युदासः? इति संशयः। प्रतिषेधोऽत्यन्ताभावः, पर्युदासस्तु भेदापरपर्यायोऽन्योन्याभाव इति भेदः। तत्र पूर्वपक्षयति—

**प्रतिषेधः प्रदेशेऽनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वाद्**
**विकल्पस्स्यात्॥ १॥**

आर्षेयवरणस्य महापितृयज्ञे प्रदेशे-अतिदेशे सति यद्वाक्यं प्रवृत्तं "नार्षेयं वृणीते" इति, यच्च "यजतिषु येयजामहं करोति" इत्यनारभ्य विधाने श्रुतम् "नानूयाजेषु" इति तत्र[नञा]प्रतिषेधः प्रत्येतव्यः, न तु पर्युदासः। तथाहि सति आर्षेयवरणभिन्नमङ्गजातं प्रकृतिवद् भवति। अनूयाजभिन्नयजतिषु येयजामहं करोतीत्येवं वचनव्यक्तिस्स्यात्। ततश्च यथा—अब्राह्मणमानयेत्यत्र नञ्ब्राह्मणशब्दाभ्यां ब्राह्मणभिन्नो लक्ष्यते, तथा आर्षेयशब्दनञ्वरणधातुभिरार्षेयवरणव्यति-

रिक्ताङ्गजातं लक्षणीयं स्यात्। नञनूयाजपदाभ्याञ्चानूयाजभिन्ना यागा लक्षणीयाः स्युः। प्रतिषेधपक्षे तु सर्वाणि पदानि श्रुतिवृत्तानि भवन्ति। तस्मात् प्रतिषेध एवात्र नञा प्रत्येतव्यः। ततश्च महापितृयज्ञे आर्षेयवरणस्य विकल्पस्स्यात्। कुतः? प्राप्त-प्रतिषिद्धत्वात्—चोदकेन विहितत्वात्, नार्षेयमिति प्रतिषिद्धत्वाच्च। तथा दर्शपूर्ण-मासादावनूयाजेषु च येयजामहस्य विकल्पः, "यजतिषु येयजामहं करोति" इत्यनारभ्य विहितत्वात् "नानूयाजेषु" इति प्रतिषिद्धत्वाच्च। विधिप्रतिषेधयोश्च सतोर्ग्रहणाग्रहणवद्विकल्पावश्यम्भावात्॥

अत्राशङ्क्य निराकरोति—

**अर्थप्राप्तवदिति चेन्न तुल्यहेतुत्वादुभयं शब्दलक्षणम्॥ २॥**

ननु "न कलञ्जं भक्षयेत्" "न सुरां पिबेत्" "न संसृष्टं क्षीरं पिबेत्" इत्यादावर्थप्राप्तेः रागप्राप्तकलञ्जभक्षणादौ प्रतिषेधो यथा नित्यस्तथात्राप्यार्षेय-वरणादिप्रतिषेधो नित्य एव स्यादिति चेत्तन्न; कुतः? तुल्यहेतुत्वात्—प्रवृत्ति-प्रतिषेधयोरिह तुल्यबलप्रमाणकत्वात्। तत्कुतः? यतः प्राप्तिः प्रतिषेधश्चेत्युभयमपि शब्दलक्षणम्—शब्दप्रमाणकं वेदैकसमधिगम्यम्। तत्र नान्यतरशास्त्रस्य बाधः सम्भवति। इह तु कलञ्जभक्षणादिकं लोकेनैव प्राप्तमिति तद्बाधो युज्यते।

नन्विहापि प्राप्तिप्रतिषेधयोस्तुल्यबलत्वमसिद्धम्, विकृतावार्षेयवरणस्यानु-मानिकचोदकवचनमूलकत्वात्, तत्र तत्प्रतिषेधस्य च प्रत्यक्षवचनगम्यत्वात्। तथा दर्शपूर्णमासयोः येयजामहप्राप्तेः "यजतिषु येयजामहं करोति" इति सामान्य-शास्त्रमूलकत्वात्, अनूयाजेषु तत्प्रतिषेधस्य विशेषशास्त्रगम्यत्वात्। ततश्चातुल्य-बलत्वान्न विकल्पः। किन्तु प्रबलेन प्रतिषेधेन बाध एव युक्त इत्यत्राप्येतदेवोत्तरम्—उभयं शब्दलक्षणमिति। तुल्यबलप्रमाणकमित्यर्थः। यद्धि प्रत्यक्षशास्त्रं विशेष-शास्त्रञ्च चोदकवचनं सामान्यवचनं चानपेक्ष्यैवात्मानं लभते तदेव प्रत्यक्षशास्त्रं विशेषशास्त्रञ्च चोदकस्य सामान्यवचनस्य च बाधनक्षमम्। यथा "शरमयं बर्हिर्भवति" इति शरशास्त्रम्। तद्धि चोदकतः कुशप्राप्तिं नापेक्षते, किन्तु तत्कार्यं स्तरणमेवापेक्षते। न च शरवाक्यस्यापि चोदकप्राप्त[प्रा]कृतकार्ये शरविधायकत्वाच्चो-दकाधीन एवात्मलाभ इति तत्र कुशबाधो न स्यादिति वाच्यम्, कार्यप्राप्त्यंशे चोदकापेक्षायामपि कुशप्राप्त्यंशे तदपेक्षाभावात्। शरविधौ बर्हिश्शब्दो बर्हिः

कार्यं स्तरणं स्तरणत्वेनैव लक्षयति। तावतैव शरविधेः प्रवृत्ति[प्रयोजन]सम्भवात्। तथा सोमक्रयण्याः "पदे जुहोति" इति पदविधिरपि स्वप्रवृत्तौ होमत्वेनैव होममपेक्षते न त्वाहवनीयहोमत्वेन। ततश्च प्रत्यक्षशास्त्रेण झटिति प्रापिताश्शराः पश्चान्मन्दप्रवृत्तिकानुमानिकं चोदकं कुशविषयं निवारयतीति युक्तश्शरैः कुशबाधः। तथा "पदे जुहोति" इति विशेषविधिना झटिति प्रवृत्तिकेन प्रापितं पदं पश्चात् सामान्यद्वारा मन्दप्रवृत्तिकाहवनीयशास्त्रप्राप्यमाणमाहवनीयं निवारयतीति युक्तः पदेनाहवनीयबाधः। इह त्वप्रवृत्तस्य प्रतिषेधासम्भवेन प्रतिषेधस्य प्राप्त्यपेक्षतया प्रतिषेधशास्त्रेणैव प्रतिषेध्यवरणयेयजामहयोर्महापितृयज्ञे अनूयाजेषु च प्राप्तिः प्रतीक्षितव्या। सा च निर्दोषवेदकारितत्वान्न भवितुमर्हतीति विकल्पो युक्तः। न चात्र न कलञ्जं भक्षयेदित्यादाविव प्रतिषेधप्राप्तिर्नित्या भवितुमर्हति, कलञ्जभक्षणादिप्राप्तिस्तु रागत एव, न तु शास्त्रतः, तत्र प्रतिषेधशास्त्रसङ्कोचाय प्राप्तिर्नित्या बाध्यत इति युक्तम्। इह तु तथात्वे प्रापकशास्त्रस्यात्यन्तमप्रामाण्यापत्तेर्न नित्यं बाधः। किञ्च रागप्राप्तप्रतिषेधस्थले प्रतिषेधशास्त्रस्य न प्रतिषेधप्रापणमात्रे तात्पर्यम्, रागात् कदाचित् कलञ्जभक्षणादिवत् रागाभावे तन्निषेधस्यापि कदाचित् प्राप्तिसम्भवात्। किन्तु पक्षतः प्राप्तस्य प्रतिषेधस्य नियमने तात्पर्यमिति तत्र नित्यबाधो युज्यते। इह तु शास्त्रप्राप्तप्रतिषेधस्थले प्रतिषेधस्य सर्वथाप्राप्तत्वेन प्रतिषेधप्रापण एव शास्त्रस्य तात्पर्यं वक्तव्यम्, न तु तन्नियमन इति नित्यं बाधः। तस्माद्विकल्पः॥

अथ सिद्धान्तयति—

## अपि तु वाक्यशेषस्स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशस्स्यात्॥ ३॥

अपि तु इत्यवधारणे। आर्षेयवरणव्यतिरिक्तमङ्गजातं प्रकृतिवद् भवेत्, अनूयाजव्यतिरिक्तयजतिषु येयजामहं कुर्यादित्येवं पर्युदासमेवाश्रित्य नार्षेयमिति नानूयाजेष्विति च वाक्यद्वयं 'प्रकृतिवत्कुर्यात्' "यजतिषु येयजामहङ्करोति" इति वाक्ययोः शेषः–एकदेशः स्यात्। पर्युदास एवाश्रयणीय इति यावत्। कुतः? विकल्पस्यान्याय्यत्वात्—प्रतिषेधाश्रयणे हि विकल्पस्स्यात्। स च न न्याय्यः, अष्टदोषदुष्टत्वात्।

ननु सत्येकवाक्यत्वे पर्युदासोऽवकल्पते। इह 'प्रकृतिवत् कुर्यात्' "नार्षेयं वृणीते" इत्यनयोः "यजतिषु येयजामहं करोति" "नानूयाजेषु" इत्यनयोश्च परिपूर्णत्वान्नैकवाक्यत्वम्। अतः कथं पर्युदास इत्यत आह—विधीनामेकदेश-स्स्यादिति। नार्षेयमिति नानूयाजेष्वित्येवञ्जातीयकं वाक्यं प्रकृतिवदङ्गजातं महापितृयज्ञे कुर्यात्, यजतिषु येयजामहं करोतीत्येवञ्जातीयकानामेकदेश-स्स्यात्—परिपूर्णत्वेऽपि वाक्यैकवाक्यत्वं भवेदित्यर्थः। न चैवमपि प्रमाणानु-सारित्वात् प्रयोजनकल्पनाया लक्षणाभि[या] प्रथमं प्रतिषेधार्थकत्वे सिद्धे पश्चाद् विकल्पोऽपि न दोषः, प्रामाणिकत्वादिति वाच्यम्, प्रतिषेधे सत्यष्टदोषदुष्टवि-कल्पाश्रयणापेक्षया लक्षणाश्रयणेन पर्युदासाश्रयणस्यैव ज्यायस्त्वात्। न च पर्युदासेऽपि स दोषस्तुल्य इति शङ्क्यम्, प्रकृतिवत् कुर्यादित्यानुमानिकं हि चोदकवाक्यमार्षेयवरणं तदितराङ्गाणि च यावद् ग्रहीतुमुद्युङ्क्ते, ततः प्रागेव प्रवृत्तेन प्रत्यक्षेण नार्षेयमित्यनेन आर्षेयवरणव्यतिरिक्ताङ्गविशेष [समर्प] केण विशेषितं सद् आर्षेयवरणव्यतिरिक्तमेवाङ्गजातं विदधातीति महापितृयज्ञे आर्षेय-वरणस्य न विधिरस्ति, येन विहितप्रतिषिद्धत्वाद्विकल्पस्स्यात्। तथा "यजतिषु येयजामहम्" इति सामान्यवाक्यमपि यागसामान्यद्वारा अनूयाजान् तदित-रांश्च यागान् [ग्रहीतुं] यावदुद्युङ्क्ते ततः प्रागेव प्रवृत्तेनानूयाजव्यतिरिक्तयाग-विशेषसमर्पकेण "नानूयाजेषु" इति विशेषवचनेन विशेषितं सद् अनूयाजव्यति-रिक्तेष्वेव येयजामहं विदधातीति नानूयाजेषु येयजामहस्य विधिरस्ति; येन विहि-तप्रतिषिद्धत्वाद्विकल्पस्स्यात्। एवञ्च पर्युदासाश्रयणे सति न विकल्पप्रसक्तिः।

नन्वनूयाजभिन्नेष्विति पर्युदासाश्रयणेऽनूयाजशब्देन नञस्समासस्स्यात्, 'नञ्' इति सूत्रेण नञा सुबन्तेन समस्यत इत्यर्थकेन तस्य समासविधानात्। ततश्च 'नलोपो नञः' इति नशब्दे आद्यवर्णस्य नकारस्य लोपे परिशिष्टादकारात् 'तस्मान्नुडचि' इति नुडागमे सति अनश्व इत्यादिवदननूयाजेष्विति स्यात्। न च पाणिनिना सूत्रकृता विभाषेत्यधिकृत्य तद्विधानात् समासाभावपक्षे नानू-याजेष्विति न दुष्यतीति वाच्यम्, कात्यायनेन तद्वार्तिककृता 'वावच-नानर्थक्यं स्वभावसिद्धत्वात्' इति विभाषाधिकारस्य प्रत्याख्यातत्वात्, विग्रह-वाक्यसमासयोर्भिन्नार्थकतया तत्तदर्थप्रतिपादनाय तदुभयोः स्वभाव-सिद्धत्वाद्विभाषाधिकारो व्यर्थ इति तदर्थः। वावचनपर्यायात्मकं विभाषा-

वचनं हि समासेन विग्रहवाक्यस्य निवृत्तिर्मा भूदित्येवमर्थं पाणिना कृतम्। विग्रहवाक्यस्य समासेन निवृत्तिश्च तयोरेकार्थत्वे प्रसज्येत। व्यास-समासयोर्भिन्नर्थत्वे तु स्वार्थप्रतिपादनाय व्यासवाक्यप्रयोगावश्यम्भावात् तन्निवृत्तिस्समासेन सम्भाव्यते। ततश्च व्याससमासयोरेकार्थत्वे सति समासेन व्यासवाक्यस्य निवृत्तौ प्रसक्तायां वावचनं कर्तव्यं स्यात्। तदानर्थक्यवचनात्तु कात्यायनस्यैकार्थत्वं व्याससमासयोरनिष्टमवगम्यते। सति च तयोर्भिन्नार्थत्वे तत्तदर्थप्रतिपादनाय व्याससमासयोः स्वभावसिद्धत्वाद्विभाषावचनं न कर्तव्य-मित्युपपन्नम्। अतएव ऋद्धस्य राज्ञः पुरुष इति समासो न प्रयुज्यते, भिन्नार्थ-त्वात्। विग्रहवाक्ये हि राजपदमृद्धपदान्वयसहिष्णु, समासवाक्ये तु न। ततश्च पदान्तरसहिष्णुत्वासहिष्णुत्वप्रयोजकं वैजात्यं तत्रानुभवसिद्धमित्यस्ति व्याससमासयोर्भिन्नार्थत्वम्। अत एव च राजपुरुष इत्यत्र राज्ञः पुरुष इति वा राज्ञां पुरुष इति वा द्वित्वबहुत्वयोरप्रतीतिः, वृत्तावेकत्वमौत्सर्गिकमित्य-प्युपपन्नम्। न च नानूयाजेष्वित्यत्र समासाभावेऽपि पर्युदासः कुतो न प्रतीयत इति वाच्यम्, अब्राह्मण इत्यादौ हि समासे पर्युदासो गम्यते इत्यविवादम्। यच्च समासगम्यं तत्तदेकलभ्यमित्यभ्युपेयम्। अन्यथा वाक्येनापि समास-गम्यार्थप्रतीतौ तयोर्भिन्नार्थत्वानुपपत्तेः। अतः पर्युदासपक्षे समासप्रसङ्गादन-नूयाजेष्विति स्यात्। अतोऽत्र नञः प्रतिषेधार्थकत्वमेव युक्तमिति चेन्नैष दोषः; नञः पर्युदासार्थकत्वेऽपि बाधकाभावात्। न च नञः समासापत्तिः, तस्य विकल्पितत्वात्। पाणिनिना विभाषेत्यधिकृत्य तद्विधानात्। वावचनानर्थक्य-मिति कात्यायनवचनन्तु न्यायविरोधादुपेक्ष्यम्। अस्त्येव हि व्याससमासयो-रैकार्थ्यम्। न चैवं सति ऋद्धस्य राज्ञः पुरुष इति विग्रहवाक्य इव समासेऽपि राज्ञः ऋद्धत्वविशेषणासहिष्णुत्वं स्यात्, तथा च ऋद्धस्य राज्ञः पुरुष इत्यपि स्यादिति वाच्यम्। न ह्येतावता व्याससमासयोर्भिन्नार्थत्वमायाति, प्रतिपाद्य-भेदाभावात्। उभयत्रापि राजसम्बन्धिपुरुषस्य प्रतिपाद्यस्यानपायात्। न हि वाक्यत्वसमासत्वाभ्यां प्रतिपाद्यभेदोऽस्ति। यथा ब्राह्मणाश्शतं ब्राह्मणानां शतं भोज्यन्तामित्यभिधानप्रकारभेदेऽपि शतसङ्ख्याकब्राह्मणभोजनलक्षणप्रतिपाद्य-भेदादर्शनात्। यदि वा राज्ञः पुरुषो राजपुरुष इत्यादौ व्याससमासयोः प्रति-पाद्यभेदाभावेऽपि राजादिपदस्य ऋद्धपदादिविशेषणसहिष्णुत्वतदसहिष्णुत्व-

कृतवैजात्यकल्पनामात्रेण वैलक्षण्यमाश्रित्य तादृशवैजात्यावच्छिन्नस्वस्वार्थप्रतिपादनाय वाक्यसमासयोस्स्वभावसिद्धत्वात् समासेन वाक्यनिवृत्तेरप्रसक्तत्वान्निवृत्त्यर्थो विभाषाधिकारः प्रत्याख्यायेत, तर्हि विभाषाधिकारात् प्राग्विहितेनापि समासेन वाक्यनिवृत्तिर्न स्यात्। 'अव्ययं विभक्ती'त्यादिसूत्रपञ्चकानन्तरं हि विभाषाधिकारः क्रियते। ततश्चाव्ययं विभक्तीत्यादिभिः विधीयमानेषु अधिहरि उपकुम्भमपश्लोकमित्यादिसमासैर्वाक्यनिवृत्तिर्न स्यात्। इष्यते च तत्र वाक्यनिवृत्तिः कात्यायनपतञ्जलिभ्याम्। तथा विभाषाधिकारस्य पश्चात् 'नित्यं क्रीडाजीविकयोः' इत्यतो नित्यग्रहणानुवृत्तौ 'उपपदमतिङ्' इति विहितो[पकुम्भ]कार इत्यादिसमासेनापि वाक्यनिवृत्तिर्न स्यात्। कात्यायनमते विभाषाधिकारवन्नित्यग्रहणस्यापि प्रत्याख्येयतया तेन वाक्यनिवृत्तेरसम्भवात्। अतो विभाषाधिकारप्रत्याख्यानमन्याय्यमित्यसमासपक्षमाश्रित्य नानूयाजेष्विति पर्युदासाश्रयणं युज्यते। अस्तु वा विभाषाधिकारप्रत्याख्यानम्, तथापि न दोषः। कात्यायनेन हि समासे विशेषान्तरासहिष्णु विशिष्टशक्त्यात्मकमेकार्थभावलक्षणं सामर्थ्यम्, असमासे च तत्सहिष्णु परस्परान्वितावयवपदशक्त्यात्मव्यपेक्षालक्षणं सामर्थ्यमाश्रित्याविशिष्टार्थविवक्षायां समासः, अन्यथा तु वाक्यमित्यास्थितम्, पतञ्जलिनैवमेव व्याख्यातत्वात्। अत एव ऋद्धस्य राज्ञः पुरुष इत्यर्थे ऋद्धस्य राजपुरुषो न भवति, समासस्य विशिष्टैकार्थप्रतिपादकतया तदेकदेशेन राजपदेन ऋद्धपदस्यान्वयासम्भवात्, 'पदार्थः पदार्थेनान्वेति न तु तदेकदेशेन' इति न्यायात्। अत एव राज्ञः पुरुषो देवदत्तस्य चेत्यर्थेऽपि न राजपुरुष इति समासः। अत एव राज्ञो विराजते पुरुष इत्यादौ समस्यमानपदयोः पदान्तरव्यवधानेऽपि न समासः। एवञ्जातीयकस्थले विशिष्टैकार्थप्रतिपादनाशक्तेस्स्वभावसिद्धत्वात्। उपकुम्भमित्यादौ तु नित्य एव समासः। तत्र वाक्यतो विशिष्टैकार्थप्रतीत्यभावस्य स्वभावसिद्धत्वात्। अतः क्वचित् समासविधौ नित्यग्रहणमपि न कर्तव्यमित्यादिमहाभाष्यकैय्यटादौ स्पष्टम्। एवञ्च यथा—एकार्थीभावलक्षणसामर्थ्ये सति राजपुरुष इति समासः, व्यपेक्षालक्षणसामर्थ्येन तु राज्ञः पुरुष इति वाक्यमेव, तथा नानूयाजेष्वित्यत्रापि व्यपेक्षायां वाक्यमेवास्तु। न चैवं सति पर्युदासो न गम्येतेति वाच्यम्। न हि वाक्ये नञः पर्युदासार्थत्वं नास्ति,

इह पटो नेत्यत्र व्यभिचारात्। भूतले पटो नास्तीतिवत् प्रतिषेधार्थकत्वाश्रयणे तूक्तरीत्या अष्टदोषदुष्टविकल्पापत्तिः। तस्मादिह पर्युदास एवाश्रयणीयः। तत्र च नञ् भेदवाची लक्षणया भेदवति वर्तते, अनूयाजानान्तु भेदे प्रतियोगित्वेनान्वयः। भेदप्रतियोगितयाधारत्वविवक्षया सप्तमी। तथा चानुयाजनिष्ठप्रतियोगिताकभेदवत्सु यजतिषु येयजामहं कुर्यादिति वचनस्य व्यक्तिः। "नार्षेयं वृणीते" इत्यत्रापि नञ् लक्षणया भेदवति वर्तते—आर्षेयवरणभिन्नमङ्गजातं प्रकृतिवन्महापितृयज्ञे भवतीति फलति। वृणीत इत्याख्यातप्रत्ययस्तु साधुत्वार्थः, वृञ् धातोः केवलस्य प्रयोगानर्हत्वात्। तथा नानूयाजेष्वित्यत्रापि येयजामहं करोतीत्यनुवादमात्रम्। नन्वेवं सति घटः पटो न भवतीत्यनुपपन्नम्। तत्र हि नञ् भेदे, तत्र च घट आधारत्वेनान्वेति, पटस्तु प्रतियोगितया। तथा च पटे घटस्य नेति स्यादिति चेन्न; तत्र हि नञ् भेदवति वर्तते पटपदं पटप्रतियोगिके, ततश्च पटप्रतियोगिकभेदवान् घट इति बोध इति नोक्तदोषः। ननु तथापि अब्राह्मण इति समासेऽपि ब्राह्मणभिन्न इत्यर्थस्स्यात्। तथा चोत्तरपदप्राधान्यं तत्पुरुषस्य भज्येत। तथा च अस इत्यत्र 'त्यदादीनामः' इत्यत्वं न स्यात्। अतस्मिन् इत्यत्र 'ङसिङ्योः स्मात्स्मिनौ'इत्यादिसर्वनामकार्यं न स्यात्। संज्ञोपसर्जनीभूतास्तु सर्वादयः, अतस्सर्वनामकार्यमन्तर्गणकार्यञ्च तेषां तेषां न भवतीति वैयाकरणसिद्धान्तात्। तथा अनेकमिति न स्यात्, एकभिन्नत्वस्य द्विबहुत्वनियतत्वेनैकवचनानुपपत्तिरिति चेन्न; असत्युत्तरपदार्थप्राधान्ये 'एतत्तदोस्सुलोपोऽकोरनञ् समासे हलि' इत्यनञ्समासग्रहणं ज्ञापकमाश्रित्योत्तरपदार्थप्राधान्यप्रयुक्तत्यदाद्यत्वादिकार्योपपादनसम्भवात्, 'अनेकमन्यपदार्थे' इति निर्देशेन ज्ञापकेनापि तथावगमाच्चेत्यलमतिविस्तरेण॥

## इति प्रथमं पर्युदासाधिकरणम्॥ १ ॥

## २

दर्शपूर्णमासयोः "आज्यभागौ यजति" इति प्रकृत्य श्रूयते—"न तौ पशौ करोति न सोमे" ( करोति ) इति। तत्र "न सोमे" इति प्रतिषेधो वा ? पर्युदासो वा ? अर्थवादो वा ? इति संशयः। तत्र विकल्पावहत्वात् प्रतिषेधं पूर्वाधिकरणे निराकृत्य पर्युदास इति निर्णीतम्। इहापि तथा प्राप्ते, सिद्धान्तयति—

## अपूर्वे चार्थवादस्स्यात् ॥ ४ ॥

अपूर्वे-प्रकृतिरहिते सोमे विषये श्रूयमाणं "न सोमे" इति वाक्यं "न तौ पशौ" इत्यस्यार्थवादस्स्यात्, न तु पर्युदासः, सोमस्यापूर्वत्वेन तत्रैष्टिकाङ्गानामप्रसक्तत्वेन तत्पर्युदासासम्भवात्, पर्युदासस्य प्रतिषेधवत् प्राप्त्युपजीव्यत्वाभावेऽपि यजतिषु येयजामहं करोति नानूयाजेष्विवतिवत् साधारण्येन सम्भवात् प्राप्तिस्थल एव पर्युदासप्रवृत्तेर्वाच्यत्वात्। सर्वथा प्रसक्त्यभावे तत्पर्युदासवैय्यर्थ्यात्। न च सौमिकेषु दीक्षणीयादिष्वतिदेशेन तदाज्यभागप्रसक्तिरिति वाच्यम्। किं सोमशब्देन सौमिकदीक्षणीयादीनि लक्षयित्वा तद्भिन्नेष्वित्येवं पर्युदासोऽभिमतः? उत लक्षणां विनैवानर्थक्यतदङ्गन्यायेनेति? नाद्यः; सोमशब्दस्य दीक्षणीयादिषु लक्षणिकत्वापत्तेः। न द्वितीयः; "सप्तदशारत्निर्वाजपेयस्य यूपः" इत्यत्र हि वाजपेयस्य सोमयागतया तस्य यूपाभावात्तदङ्गपशुद्वारा तत्र सप्तदशारत्नित्वं निविशत इति युक्तम्, तत्र वाजपेयस्येति षष्ठ्या सम्बन्धमात्रवाचिन्या उपपत्तेः। इह तु सोम इति सप्तमी, साक्षात्सम्बन्धेनैवाधारत्वप्रतीतेः। भूतले घटोऽस्तीत्यादौ तथैव प्रतीतेः। स च साक्षात्सम्बन्धोऽङ्गाङ्गित्वादन्यः कर्मणो न सम्भवतीति सप्तमीनिर्देशोऽयमङ्गाङ्गित्वपर एवावतिष्ठते। न च सोमे आज्यभागयोस्साक्षादङ्गतया प्रसक्तिरस्ति, येन पर्युदासस्स्यात्। किञ्च यदि न सोम इति सौमिकेषु दीक्षणीयादिषु तौ पर्युदस्येयाताम्, तर्हि तत एव सौमिकाग्नीषोमीयपशावपि तन्निवृत्तिसिद्धेर्न पशाविति वाक्यं व्यर्थं स्यात्। न च विकृतिभूतनिरूढपशुविषयं न पशाविति वचनमिति वाच्यम्, प्रकृतिभूतपशावेव "न सोम" इत्याज्यभागयोर्निवृत्तौ सत्यां तद्विकृतिपशुषु तयोर्गगनकुसुमायमानतया न तौ पशावित्यस्य तद्विषयस्याप्यसम्भवात्। अतो न तौ पशावित्यस्यायमर्थवाद एव। यथा सोमस्य नैष्टिकावाज्यभागौ तथा पशावपीति स्तुतिरुन्नेया॥

इति द्वितीयं न सोम इत्यस्यार्थवादताधिकरणम्॥ २ ॥

३

## अपूर्वे चार्थवादस्स्यात् ॥ ४ ॥

'अपूर्वे च' इति चकारोऽनुक्तमधिकरणान्तरं समुच्चिनोति। तद्यथा—"न तौ पशौ करोति" इत्यत्र विधेयान्तराभावादर्थवादत्वासम्भवात् पूर्वतराधिकरणन्यायेन नानूयाजेष्वित्यादिवद् विकल्पावहप्रतिषेधसम्भवाच्च पर्युदासे प्राप्ते,

ब्रूमः—किमिह नञः पशावन्वयमभ्युपगम्य पशुव्यतिरिक्ते कर्मण्याज्यभागौ कर्तव्यावित्येवमाज्यभागविधिशेषः पर्युदास इत्यभिमतम्? उत नञाज्यभागयोरन्वयमङ्गीकृत्याज्यभागव्यतिरिक्तमङ्गजातं पशौ प्रकृतिवदित्येवं पाशुकप्रकृतिवच्छब्दशेषः? इति। न तावदाद्यः; यदि हि प्रकृतौ पशुसाधारणाज्यभागविधिस्स्यात्, तदा पशुव्यतिरिक्तकर्मण्याज्यभागौ कुर्यादित्येवं विधिस्स्यात्। न त्वेवमस्ति, तस्य प्रकरणवशेन दर्शपूर्णमासविषयत्वात्। न द्वितीयः; "न तौ पशौ" इत्यस्य दर्शपूर्णमासप्रकरणस्थत्वेन तत्र पाशुकविधिप्रधानविधिप्रदेशे कल्पनीयस्य चोदकस्य सन्निधानाभावात्, पर्युदासस्थले चैकवाक्यतार्थं सन्निधानावश्यम्भावात्। न च पशुशब्दादेव कथञ्चित् पशुयागोपस्थितिद्वारा तच्चोदकस्यापि सन्निधानमस्त्विवति वाच्यम्, एवं सति न सोम इत्यस्य पूर्वाधिकरणसिद्धार्थवादत्वानुपपत्तिप्रसङ्गात्। तस्य ह्यर्थवादत्वाद्यथा सोमेऽनाज्यभागता, एवंपरावित्येवं प्रतिवस्तूपमाविधया वाच्यम्। प्रतिवस्तूपमा च 'न पशौ न सोम' इति वाक्यद्वयसाधारणधर्मैक्ये भवति। ततश्च यदि न पशाविति पर्युदासः, न सोम इति च, तदैवोभयत्राप्येकधर्मवत्तया स्तुतिर्भवेत्। न चैतत् सम्भवति—सोमस्याज्यभागव्यतिरिक्तमङ्गमिष्टिवदिति, सोमस्यापूर्वत्वेन तत्रैष्टिकाङ्गातिदेशासम्भवात्। अतः पर्युदासपक्षे स्तुतिर्नावकल्पते। वाक्यद्वयेऽपि प्रतिषेधाश्रयणे तु सम्भवति स्तुतिः—यथा सोमस्य नाज्यभागौ स्तः, तथा पशाविति। तस्मान्न पशाविति प्रतिषेध एवेति पशावाज्यभागयोर्विकल्प एव॥

### इति तृतीयं न पशावित्यस्य प्रतिषेधताधिकरणम्॥ ३॥

### ४

नन्वेवमपि "अतिरात्रे षोडशिनं गृह्णाति" "नातिरात्रे षोडशिनं गृह्णाति" इत्यत्र नानुयाजेष्विवतिवन्नातिरात्र इति पर्युदासस्सम्भवति, अतिरात्रव्यतिरिक्ते षोडशिनमिति वा, षोडशिव्यतिरिक्तमङ्गजातमतिरात्रे भवतीति वा पर्युदासे सत्यतिरात्रे षोडशिनमिति तत्र षोडशिविधिवैयर्थ्यात्। नापि "न सोम" इतिवदर्थवादस्सम्भवति, अप्राप्तविषयत्वाभावात्, विध्यन्तरशेषत्वाभावाच्च। नापि प्रतिषेधः, तथा[सति]विधिप्रतिषेधयोरेकविषये परस्परोपमर्दकत्वं विना परस्परस्यात्मलाभाभावेन उभयोरप्रामाण्यापातादिति मन्दाशङ्कां निराकरोति—

## शिष्ट्वा तु प्रतिषेधस्स्यात् ॥ ५ ॥

सास्तु नानूयाजेष्वितिवत्पर्युदासः, न सोम इतिवच्चार्थवादः। यत्र त्वेकमर्थं शिष्ट्वा-विधाय तद्विषय एव नञ् श्रूयते "अतिरात्रे षोडशिनं गृह्णाति" "नातिरात्रे षोडशिनम्" इति, तत्र प्रतिषेध एव प्रत्येतव्यः, अर्थवादत्वासम्भवात् पर्युदासार्थत्वासम्भवाच्चागत्या नञः प्रतिषेधार्थकत्वेऽवश्यवाच्ये सति अगतिकत्वेन विकल्पमप्याश्रित्य शास्त्रद्वयस्यापि पक्षे प्रामाण्यमुत्पाद्यमिति ग्रहणाग्रहणयोर्विकल्पः। न चै[वम] ग्रहणेऽप्यवैगुण्यात् क्लेशात्मककरणं कदापि न स्यादिति वाच्यम्, अत एव ग्रहणे फलभूयस्त्वकल्पनात् ॥

इति चतुर्थमतिरात्रे षोडशिग्रहस्य विकल्पाधिकरणम् ॥ ४ ॥

५

अग्निहोत्रे श्रूयते-"यद् ग्राम्याणां पशूनां पयसा जुहुयात् ग्राम्यान् पशून् शुचार्पयेद् यदारण्यानामारण्यान्, जर्त्तिलयवाग्वा वा जुहुयात् गवेधुकयवाग्वा वा न ग्राम्यान् पशून् हिनस्ति नारण्यान्, अथो खल्वाहुरनाहुतिर्वै जर्त्तिलाश्च गवेधुकाश्च पयसाग्निहोत्रं जुहुयात्" इति। जर्त्तिलाः कृष्णतिलाः गवेधुकास्तृणतण्डुला इति भट्टभास्करः। जर्त्तिला आरण्यतिलाः, गवेधुका आरण्यगोधूमा इति केचित्। किमिह जर्त्तिलयवाग्वा वा जुहुयात्, गवेधुकयवाग्वा वेति विधिः, "अनाहुतिर्वै जर्त्तिलाश्च गवेधुकाश्च" इति प्रतिषेधः? उत "पयसाग्निहोत्रं जुहुयात्" इति विधेरेव सर्वोऽयमर्थवाद इति संशयः। जर्त्तिलयवाग्वा वा जुहुयात्, गवेधुकयवाग्वा वेति निन्दा, जर्त्तिलगवेधुकानां स्फुटविहितत्वात्—"अनाहुतिर्वै जर्त्तिलाश्च गवेधुकाश्च" इति प्रतिषेधाच्च विहितप्रतिषिद्धत्वात् 'शिष्ट्वा तु प्रतिषेधस्स्यात्' इति पूर्वाधिकरणन्यायेन ग्रहणाग्रहणवद्विकल्प इति प्राप्ते, सिद्धान्तयति—

## न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादस्स्यादानर्थक्यात् परसामर्थ्याच्च ॥ ६ ॥

चेदिति यद्यर्थे। यदि "पयसाग्निहोत्रं जुहुयात्" इत्यन्यम्—द्रव्यशेषं न प्रकल्पयेत् न विदध्यात्, अन्यो विधिर्न स्यादिति यावत्। तदा "अनाहुतिर्वै जर्त्तिलाश्च गवेधुकाश्च" इति प्रतिषेधस्स्यात्। सत्यान्तु पयसाग्निहोत्रमिति विधेः प्रक्लृप्तौ

"अनाहुतिर्वै जर्त्तिलाश्च गवेधुकाश्च" इत्यर्थवाद एव स्यात्। कुतः ? आनर्थक्यात्- प्रतिषेधस्य हि फलं विकल्पः। स च पयोविधिबलेनैव व्रीहियववत् सिद्ध इति प्रतिषेधस्यानर्थक्यम्। न चार्थवादस्याप्यनर्थकप्रायत्वाद् विनिगमनाविरह इति वाच्यम्। अनाहुतिर्वा इत्यादिवाक्यस्याख्यातरहितत्वेन वैशब्दोपबन्धेन च पृथङ्निषेधकत्वानुपपत्या स्तुत्यर्थस्यैवाश्रयितुमुचितत्वाज् जर्तिलगवेधुका अनाहुतिः—आहुतौ प्रशस्ता न भवन्ति, अतः पयोहोमः प्रशस्त इति स्तुतिर्नेया, न तु जर्त्तिलगवेधुकानां निन्दा। स्फुटविहितत्वात् कथं तन्निन्दा ? तत्राह—परसामर्थ्याच्चेति। "जर्तिलयवाग्वा वा जुहुयात् गवेधुकयवाग्वा वा" इत्यस्यापि परतश्श्रूयमाणेन पयोविधिना सामर्थ्यात्। समित्येकीभावे। एकार्थकत्वात्। स्तुत्यैकवाक्यत्वादिति यावत्। पशुहिंसकत्वाभावाज्जर्त्तिलगवेधुकयवाग्वौ प्रशस्ते, प्रशस्तयोरप्यनयोः पयोपेक्षया अनाहुतित्वात् पयः प्रशस्तमित्येवं स्तुतिरुन्नेया। एवं सम्भवत्येकवाक्यत्वे वाक्यान्तरत्वाश्रयणमन्याय्यम्। लिङ्प्रत्ययस्य तु जर्त्तिलगवेधुकनिन्दार्थं तद्विधिप्रसक्तौ तात्पर्यम्। 'सम्भावनेऽलमिति चेत् सिद्धाप्रयोग' इति सम्भावनायां[वा लिङ्] भविष्यति। वा शब्दाभ्यां विधिशक्तिप्रतिबन्धाच्च। न ह्यत्र वाशब्दौ विकल्पविधिपरौ, विकल्पस्य व्रीहियववत् सिद्धेः। अपितु 'विषमपि वा भुङ्क्ष्व न तु परान्नं भुञ्जीथाः' इतिवदन्यविधितात्पर्यकावेव। अतस्सर्वोऽयं स्तुतिलक्षणया पयोविध्येकवाक्यतापन्न इति स्थितम्। वस्तुतस्तु—जर्त्तिलविकल्पेन यवागूद्रव्यविधिः, वाशब्दौ त्वनुवादौ। बैल्वो वा खादिरो वा पालाशो वा यूप इत्यादिवत्। "यद् ग्राम्याणां पशूनां पयसा जुहुयात् ग्राम्यान् पशून् शुचार्पयेत् यदारण्यान्"इति पूर्ववाक्यम्, "न ग्राम्यान् पशून् हिनस्ति नारण्यान्" इत्युत्तरवाक्यञ्च यवागूस्तुतिपरम्। ततः "अथो खल्वाहुः" इति प्रक्रम्य प्रवृत्तम् "अनाहुतिर्वै जर्त्तिलाश्च गवेधुकाश्च"इति वाक्यं न हि निन्दान्यायेन () पयोविधेरर्थवाद इति युक्तम्, "अथो खल्वाहुः" इति व्यवच्छेदेन वाक्यान्तरत्वस्य स्पष्टमवगतत्वात्। अधिकरणन्तु यस्यां शाखायाम् अथो खल्वाहुरिति व्यवच्छेदो नास्ति तद्विषयमिति दिक्॥

## इति पञ्चमं जर्त्तिलयवाग्वधिकरणम्॥ ५॥

६

आधाने पूर्णाहुतिविधेः प्राक् श्रूयते—"होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः, यद्यजुषा जुहुयादयथापूर्वमाहुतीर्जुहुयाद्यन्न जुहुयादग्निः पराभवेत् तूष्णीमेव होतव्यं यथापूर्वमाहुतीर्जुहोति नाग्निः पराभवति" इति। अत्रोपक्रमे श्रुतमग्निहोत्रमिति पदं "यद्यजुषा जुहुयात्" इत्यादा [ वन्वेति। ] अग्निहोत्रं तावत् सायमुपक्रममनुष्ठीयते। तदयमर्थः—आधाने अग्निहोत्रं होतव्यं वा न होतव्यं वेति संशये जाते ब्रह्मवादिनः मीमांसन्ते—प्रसिद्धाग्निहोत्रं तावत् सायमुपक्रमं प्रातरपवर्गम्। तत्र "अग्निर्ज्योतिः" इति सायं पूर्वाहुतिः। प्रातस्तु 'सूर्यो ज्योतिः" इति पूर्वाहुतिः। उभयत्रापि तूष्णीमुत्तराहुतिरिति स्थितिरिति। तत्र चोदिते सूर्ये आहवनीयाधाने कृते प्रातः पूर्णाहुतेः प्राक् प्रक्रान्तमग्निहोत्रं यदि "अग्निर्ज्योतिः" इति जुहुयात् तदा प्रसिद्धाग्निहोत्रत्वं न स्यात्, तत्र "अग्निर्ज्योतिः" इति मन्त्रस्य सायमग्निहोत्र एव प्रयुज्यमानत्वात्। यदि तु "सूर्यो ज्योतिः" इति जुहुयात्, तदा प्रसिद्धाग्निहोत्रवैलक्षण्यं स्यात्। तत्र "सूर्यो ज्योतिः" इति मन्त्रस्य सायमग्निहोत्रोत्तरभाविप्रातर्होम एव प्रयुज्यमानत्वात्। तस्मात् यजुषाग्निहोत्रहोमानुष्ठाने उभयथापि अयथापूर्वे प्रसिद्धाग्निहोत्रविलक्षणमेव अहुती स्याताम्। एतद्दोषभयाद्यदि न जुहुयादग्निहोत्रम्, तदा अग्निः पराभवेन्नश्येत्। अतो दोषद्वयपरिहारार्थं तूष्णीमेवाग्निहोत्रं होतव्यम्। तथा च तूष्णींहोमस्य कृताकृतप्रायत्वात् नायथापूर्वत्वं नाप्यग्निविनाश इति। तथा चातुर्मास्येषु त्र्यम्बकान् पुरोडाशान् प्रकृत्य श्रूयते—"अभिघार्या नाभिघार्या इति मीमांसन्ते, यदभिघारयेत् रुद्रायास्ये पशूनभिदध्यात् यन्नाभिघारयेत् न रुद्रायास्ये पशूनभिद ध्यादथो खल्वाहुरभिघार्या एव" इति। किमिह वाक्यादावेव होतव्यमित्यभिघार्या इति च विधिः, न होतव्यमिति नाभिघार्या इति च प्रतिषेधः ? उत पूर्वाधिकरणरीत्या वाक्यान्तर एव होतव्यमिति अभिघार्या इति च विधिः ? उत सर्वोऽप्यर्थवादः ? इति संशयः। तत्र प्राथमिकत्वादादावेव विधिः, प्रतिषेधाच्च विकल्पः। विकल्पे च सति प्रयोगदशायामन्यतरनिर्द्धारणाय विचारस्सम्भाव्यत इति तदभिप्रायो मीमांसाशब्दः। "तूष्णीमेव होतव्यम्" इतितु होमपक्षे तूष्णीम्भावगुणविधिः, "यद्यजुषा जुहुयात्" इति निन्दायास्तत्प्रशंसा-

त्वात्। ततश्च प्रथमश्रवणस्य न जर्त्तिलादिवाक्यवदन्यशेषत्वसम्भवः। तथा "यदभिघारयेत्" इति निन्दा प्रतिषेधप्रशंसार्था। "यन्नाभिघारयेत्" इति निन्दा-त्वभिघारणविधिप्रशंसार्था। वाक्यान्ते अभिघार्या इति तु पाक्षिकानुवादः। न चात एव दोषाद् गुणाश्रवणाच्च वाक्यान्ते अभिघार्या इत्येव विधिः इतर-स्सर्वोऽपि तदर्थवाद इति युक्तम्। एवं सति यदभिघारयेदिति निन्दाया अनुपपत्तेः। न ह्य[ न ]भिघारणम् अभिघारणस्य स्तुतिस्सम्भवति। अत उपक्रमे नाभिघार्या इत्यस्य निषेधकत्वमङ्गीकृत्य तच्छेषतया "यदभिघारयेत्" इति निन्दा उपपाद्या। एवञ्च विधिनिषेधयोरवश्यम्भावे प्राथमिकत्वाद्वाक्यादावे-वाभिघारणस्य विधिरपि युक्तः। एवञ्च जर्तिलादिवाक्यस्य चरमश्रुतपयोविधि-शेषत्वसम्भवेऽपि इहोत्तरत्र विध्यभावान्न तच्छेषत्वसम्भव इति वाक्यादावेव तद्विधिः। ततश्च विहितप्रतिषिद्धत्वादभिघारणस्य विकल्प इति प्राप्ते, सिद्धान्तयति—

## पूर्वैश्च तुल्यकालत्वात् ॥ ७ ॥

अर्थवादस्स्यादित्यनुवर्तते। जर्त्तिलादिवाक्येषु यथा अन्ते पयोविधिः, इतरस्सर्वोऽर्थवादः[तथा प्रकृतेऽपि]कुतः? पूर्वैः—पूर्वोदाहृतजर्त्तिलाद्युदाहरणैः तुल्यकालत्वात्–तुल्यव्यापारत्वात्। अन्यशेषत्वादिति यावत्। अयमाशयः— उपक्रमे "होतव्यमग्निहोत्रन्न होतव्यम्" इति "अभिघार्या नाभिघार्या" इति च विधिपरम्, "मीमांसन्ते" इति मीमांसावशीकृतत्वात्। वाक्यान्ते तु "तूष्णीमेव होतव्यम्" इति "अभिघार्या" इति च नान्यवशीकृतम्, किन्तु स्वप्रधानमेव। अतस्तदेव विध्यर्थम्। प्राथमिकश्रवणन्तु मीमांसाद्वारा तस्यैवार्थवादः। न च "यदभिघारयेत्" इत्यभिघारनिन्दा कथमभिघारविधिशेषस्स्यादिति वाच्यम्, अभिघारणमिदमतिप्रशस्तं यदीदृशमपि दोषमनादृत्य कर्तव्यमित्येवं निन्दाया अप्यभिघारणस्तुतौ पर्यवसानोपपत्तेः। तथा तूष्णीं होमः प्रशस्तः यदस्मिन् क्रियमाणे उभावपि दोषौ परिहृतौ भवत इति तु स्तुतिः स्पष्टैव। न च तूष्णीम्भा-वस्य होमस्य च विधौ वाक्यभेदश्शङ्क्यः, "आग्नेयोऽष्टाकपालः" इतिवद्विशिष्ट-विधानात्। अतो नियते एव होमाभिघारणे। ननु "अग्निर्ज्योतिः" "सूर्यो ज्योतिः" इति मन्त्रयोः प्रसिद्धाग्निहोत्रक्लृप्ताङ्गात्मकमयथापूर्वत्वं यदुक्तं तदनुपपन्नम्,

वाक्यान्ते तूष्णीं होमविधावग्निहोत्रशब्दाभावात्। अर्थवादगतस्य तु न ना[मा]-तिदेशकत्वम्, तस्य स्तुत्युपक्षीणत्वात्। अन्यथा "एष वै दर्शपूर्णमासयोरवभृथः" इति प्रणीतानामपां व्युत्सेकेऽवभृथशब्दस्यापि[नामा]तिदेशकत्वापत्तेरिति चेन्न; उपक्रमे श्रूयमाणस्याग्निहोत्रमित्यस्य तूष्णीमेव होतव्यमित्यत्रानुषङ्गेण श्रुतत्वानपायात्। यथा—"आग्नेयमष्टाकपालन्निर्वपति सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुम्" इत्यादौ तद्वदित्यास्तां तावत्॥

इति षष्ठं त्र्यम्बकादावभिघारणानभिघारणादीनामर्थवादताधिकरणम्॥६॥

७

अग्न्याधेये "गार्हपत्य आधीयमाने रथन्तरं गायति, आहवनीय आधीयमाने बृहद् गायति, वारवन्तीयं श्वैतञ्च" इत्यादिना सामगानं विधायाम्नातम्—"उपवीता वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामानि गायति" इति। उपशब्दस्सामीप्ये। वीधातुर्गतौ। 'गत्यर्थाकर्मक' इति कर्तरि क्तः। यस्य यजमानस्याग्न्याधेये ब्रह्मा सामानि गायति तस्याग्नयः उपवीताः अविलम्बेनैव गताः अपक्रान्ता भवन्तीत्यर्थः। किमिहाग्न्याधेये सामगानं नित्यं भवति? उत विकल्पेन? इति संशये, सिद्धान्तेनोपक्रमते—

## उपवादश्च तद्वत्॥ ८॥

उपेति प्रक्रम्य वादः—वचनम् उपपाद्यः। उपवीता इति निन्दावादः। सोऽपि तद्वत्—ग्रहाणां विधानाय श्रूयमाणग्रहणप्रतिषेधवाक्यवत्। अत्रापि निन्दया प्रतिषेधोन्नयनात्॥

ननु सामगानमुद्गातुरेव प्राप्तम् "सामवेदेनोद्गाता" इति वचनात्, बोधायनादिभि[राधाने]उद्गातृवरणस्योपदिष्टत्वाच्च। ततश्च ब्रह्मणस्सामगानप्राप्त्यभावात्तस्य तत्प्रतिषेधो "नान्तरिक्षे न दिव्यग्निश्चेतव्यः" इत्यादिवन्नित्यानुवाद एव। अतो नित्यमेवाधाने उद्गातृकर्तृकं सामगानमिति पूर्वपक्षिणं प्रत्यवतिष्ठमानं निराचष्टे—

## प्रतिषेधादकर्मेति चेन्न शब्दपूर्वत्वात् ॥ ९ ॥

ब्रह्मणस्सामगाने प्राप्ते प्रतिषेधात्—अभावात् प्राप्तस्यैव च प्रतिषेधात्, तस्य अकर्म–सामगानाभावः। नित्यानुवाद इति चेत्तन्न; कुतः? शब्दपूर्वत्वात्—सामगानस्य विधिप्रमाणकत्वात्। ब्रह्मणोऽन्यस्यैव हि उद्गातुस्सामगानं प्राप्तम्, तदेव "उपवीता" इत्यादिवाक्ये प्रतिषिध्यते। विहितप्रतिषिद्धत्वाच्च विकल्पः, ब्रह्मशब्दस्तु ब्राह्मणपरो नित्यानुवादः, कृत्स्नवाक्यस्यानुवादत्वाश्रयणापेक्षया ब्रह्मशब्दमात्रस्यानुवादत्वाश्रयणं ज्यायः। यद्वा—अध्वर्युवेदविहितमपि सामगानमध्वर्योर्न सम्भवति विरोधात्। आधीयमाने ह्यग्नौ सामगानं विहितम्। आधानकर्म चाध्वर्युकर्तृकम्, तस्य तत्र व्याप्रियमाणत्वात्। तदन्यस्य सामगानं प्राप्तम्। तच्च ब्रह्मण एव भवति, "सर्वैर्वेदैः ब्रह्मा" इति ब्रह्मत्वस्य वेदत्रयविहितत्वावगमात्। आह च कात्यायनः—'ब्रह्मा चेदसंयोगाद्युक्तत्वाच्चाध्वर्योः' इति। ततश्च ब्रह्मणस्सामगानं प्राप्तम्। न ब्रह्मा गायतीति प्रतिषेध्यत्वे विहितप्रतिषिद्धत्वाच्च विकल्पः। तथा च ब्रह्मशब्दस्यापि ब्राह्मणपरत्वमाश्रित्य नित्यानुवादत्वं नाश्रयणीयम्। 'न शब्दपूर्वत्वात्' इत्यस्य च ब्रह्मणस्सामगानस्य विधिपूर्वकत्वात् नाप्रसक्तत्वम्। अतो ब्रह्मणस्सामगानप्रतिषेधे सति विहितप्रतिषिद्धत्वाद्विकल्प इत्यर्थः॥

इति सप्तममुपवादाधिकरणम्॥ ७ ॥

८

ज्योतिष्टोमे श्रूयते—"दीक्षितो न ददाति न जुहोति न पचति" इति। किमिह "हिरण्यदा अमृतत्वं भजन्ते" "अग्निहोत्रं जुहुयात् स्वर्गकामः" "पुत्रकामो ब्रह्मौदनं पचेत्" "वैश्वदेवार्थमन्नं पचेत्" इत्यादिना पुरुषार्थत्वेन विहितानां दानहोमपाकानाम्, तथा ज्योतिष्टोमप्रकरणे अंशौ "प्रथमगर्भाः पष्ठौहीर्ददाति" "दीक्षाहुतीर्जुहोति" "व्रतं श्रपयति" "महावीरान् पचति" इत्यादिना प्रत्यक्षोपदिष्टानां दानहोमपाकानाम्, तथा "आज्ये स्कन्ने वरं दद्यात्" "नारिष्ठान् जुहोति" "पुरोडाशं श्रपयति" इत्यादिप्राकृतदानहोमपाकानां दीक्षणीयादिष्वतिदिष्टानाञ्चेत्येवं सर्वेषां दानहोमपाकानामिह प्रतिषेधः? उत पुरुषार्थानां दानहोमपाकानाम् तथा क्रत्वर्थेषु मध्येऽतिदिष्टानामेव च दानहोमपाकानां न तु क्रतौ प्रत्यक्षोपदिष्टानाम्?

अथ वा पुरुषार्थानामेव दानहोमपाकानां न तु क्रत्वर्थानामुपदिष्टातिदिष्टानाम् ? इति त्रेधा संशयः । तत्र प्रथमपक्षयति—

**दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात्सर्वदान-**
**होमपाकप्रतिषेधस्स्यात् ॥१०॥**

दीक्षितस्य योऽयं दानादिप्रतिषेधः सः अविशेषात्—पुरुषार्थानां क्रत्वर्थानाञ्चोपदिष्टातिदिष्टानां सर्वेषां दानहोमपाकानां प्रतिषेधः ॥

अथ तृतीयपक्षमवलम्ब्य सिद्धान्तयति—

**अक्रतुयुक्तानां वा धर्मस्स्यात् क्रतोः प्रत्यक्षशिष्टत्वात् ॥ ११॥**

वा शब्दोऽवधारणे । अक्रतुयुक्तानां पुरुषार्थानामेव दानादीनां प्रतिषेधः क्रतोः धर्मस्स्यात् , नतु क्रत्वर्थानामपि । कुतः ? प्रत्यक्षशिष्टत्वात्—क्रतौ तेषामाहत्य प्रत्यक्षविहितत्वात् ॥

नन्वस्तु क्रतौ विशिष्य प्रत्यक्षविहितानां दानादीनामप्रतिषेधः, अतिदिष्टानान्तु तेषां तत्र पुरुषार्थवत् प्रतिषेधस्स्यादेवेति द्वितीयपक्षी प्रत्यवतिष्ठते—

**तस्य वाप्यानुमानिकमविशेषात् ॥१२॥**

वा शब्दः प्रत्यवस्थाने । तस्य-सोमक्रतोः यदङ्गभूतमानुमानिकं चोदकतः प्राप्तं दानादि तदपि पुरुषार्थवत् प्रतिषेधमर्हति । कुतः ? अविशेषात्—तस्य सामान्यतश्चोदकतः प्राप्तस्याहत्य प्रत्यक्षविहितत्वलक्षणविशेषाभावे च ददातीत्यादिवचनबाध्यताया युक्तत्वात् ॥

अथ सिद्धान्ती निराचष्टे—

**अपि तु वाक्यशेषत्वादितरपर्युदासस्स्यात् प्रतिषेधे**
**विकल्पस्स्यात् ॥ १३ ॥**

अपि [ त्विति ] समुदाय उक्तपक्षस्य निवृत्तौ । क्रत्वर्थातिदिष्टाना दानहोमपाकानामिह प्रतिषेधे सति तस्य "न तौ पशौ करोति" इत्यादिवच्छास्त्रतः [ प्राप्त्युपजीवित्वाद् ] विकल्पस्स्यात् । सति च गत्यन्तरे तदाश्रयणमन्याय्यम् । तस्मात् पुरुषार्थानामेव दानहोमपाकानामिह प्रतिषेधः । ननु तत्प्रतिषेधस्यापि

शास्त्रकृतप्राप्त्युपजीवित्वाद्विकल्पो दुर्वार इत्यत आह—वाक्यशेषत्वादितर-पर्युदासस्स्यादिति। वाक्यशेषत्वादिति ल्यब् लोपे पञ्चमी। 'अपि तु वाक्यशेष-स्स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशस्स्यात्' इत्येतत्पादाद्याधिकरणन्यायेन "नार्षेयं वृणीते" इत्यादिवद् अदीक्षितः पुरुषार्थदानहोमपाकान् कुर्यादित्येवं पुरुषार्थदानहोमपाकविधिशेषत्वमवलम्ब्य पर्युदास एव "दीक्षितो न ददाति" इत्यादिः। अतो न विकल्पावकाश इत्येवं सूत्रभाष्याक्षरच्छायामानुसृत्य प्राभाकरैर्व्याख्यातम्। तदिदमनुपपन्नम्; पर्युदासाश्रयणे हि नशब्दो दीक्षित-शब्दश्चेत्युभयमपि दीक्षितभिन्ने लाक्षणिकं स्यात्, पुरुषार्थदानहोमपाकविधि-शेषत्वात् प्रकरणबाधश्च। किञ्च यदि प्रतिषेधे विकल्पवशाद् दीक्षितः पुरुषार्थ-दानहोमपाकान् कुर्यादिति पर्युदास आश्रीयेत, तदा यद्यपि क्रतौ विशिष्य प्रत्यक्षोपदिष्टानान्न सम्भवति पर्युदासः, तत्र प्रत्यक्षतदुपदेशस्यानर्थक्यापातात्, तथापि सामान्यतोऽतिदेशेन प्राप्तानामाज्यस्कन्दनादिनिमित्तकवरादिदान-चतुरवत्तहोमनारिष्ठादिहोमपुरोडाशादिपाकानां पर्युदासो दुर्निवारस्स्यात्। तस्माद् "दीक्षितो न ददाति" इत्यादिना पुरुषार्थानामेव दानादीनां प्रतिषेध इत्येव युक्तम्। न च विकल्पश्शङ्क्यः, पुरुषार्थानां दानादीनां क्रत्वर्थतत्प्रतिषेधस्य च भिन्नार्थत्वात्।

ननु पुरुषार्थानां प्रतिषेधेऽपि प्रतिषेधस्यापि पुरुषार्थत्वमायाति। न ह्यन्या-[ र्था ]यां प्रवृत्तावन्यार्थः प्रतिषेधो घटते। अत एव कर्त्रधिकरणे दर्शपूर्णमास-प्रकरणे "नानृतं वदेत्" इति क्रत्वर्थमेवानृतवादो निषिध्यते, न तु पुरुषार्थमपि। ततश्च दर्शपूर्णमासप्रयोगमध्ये कदाचित् पुरुषार्थतयाऽनृतवदने प्रसक्तेऽपि—

'यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत्।
न क्रतोस्तस्य वैगुण्यं यथाचोदितसिद्धतः॥'

इति न्यायात् क्रतोर्न वैगुण्यम्, पुरुष एव परं प्रत्यवैतीति प्रतिषेध्य-प्रतिषेधयोरैक्यार्थ्यमास्थितम्। तस्मादिहापि पुरुषार्थदानादीनां प्रतिषेधे प्रतिषेधस्यापि पुरुषार्थत्वापत्त्या एकार्थत्वाद्विकल्पस्स्यादेवेति चेत्—सत्यम्; पुरुषार्थानामपि दानानां स्यात्क्रत्वर्थप्रतिषेधः। न च पुरुषे प्रसक्तानां तेषां कथं क्रतौ प्रतिषेधः, क्रतौ तेषामप्रसक्तत्वादिति वाच्यम्। यद्यपि क्रत्वर्थतया दाना-

दीनामिह न प्राप्तिः, तथापि पुरुषार्थतया विधिबलादेव क्रतुकाले तदनुष्ठान-प्रसक्त्या एककालतामात्रेण प्राप्तिमादाय तत्प्रतिषेध उपपद्येत। अन्यथा क्रतुप्रकरणे 'न स्त्रियमुपेयात्' इति निषेधोऽपि क्रत्वर्थो न भवेत्, स्त्र्युपगमन [ स्य ] क्रत्वर्थ-तया प्राप्त्यभावात्। कर्त्रधिकरणे प्रतिषेध्यप्रतिषेधयोरैकार्थ्याश्रयणन्तु यत्र प्रतिषेध्यप्रतिषेधयोरुभयोरपि क्रत्वर्थतया आम्नानं नास्ति, तद्विषयम्। तस्मा-दिह पुरुषार्थदानादीनां प्रतिषेध एव, भिन्नार्थत्वाच्च न विकल्प इत्यास्तां तावत्।

सूत्रन्त्वेवं योज्यम्—तुरवधारणे। अपिशब्दो भिन्नक्रमः। वाक्यशेषत्वा-दिति ल्यब्लोपे पञ्चमी। असन्निहितपुरुषार्थदानादिविधिशेषत्वमवलम्ब्य पर्युदासो नाश्रयणीयस्स्यात् यतः प्रतिषेधेऽपि विकल्पस्स्यात्, भिन्नार्थत्वाद्विकल्पो न प्रसज्यत इति॥

इत्यष्टमं दीक्षितदाननिषेधस्य पर्युदासताधिकरणम्॥ ८॥

९

तदेवं नञ्‌ विचारं समाप्य [ बाध ] प्रसङ्गात् सामान्यविशेषयोर्बाध्य-बाधकभावश्चिन्त्यते। अस्ति "यदाहवनीये जुहोति" इत्यनारभ्यविधिः। अस्ति च सोमक्रयणस्य गोः "पदे जुहोति" इति विशेषविधिः। किमिह विशेषविहितेन पदेन आहवनीयस्य विकल्पः? उत न? इति संशयः। तुल्यबलत्वाद्विकल्प इत्युचितम्। तथा हि—श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यासु पूर्वप्रमाणेनो-त्तरोत्तरस्य लिङ्गादिकल्प्यस्य शास्त्रस्य कल्पनातिरोधानेनालब्धात्मकस्य बाधः। तथा "शरमयं बर्हिः" इत्यादिप्रत्याम्नानार्थलोपे सत्यपि चोदकात्मके शास्त्रे तस्यानुमानिकत्वेन दुर्बलतया प्रत्यक्षवचनेन बाधः। सामान्यविशेषशास्त्रयोस्तू-भयोरपि लब्धात्मकत्वात् प्रत्यक्षत्वाच्च तुल्यबलत्वात्ततश्च होमसामान्ये आहव-नीयस्याधारत्वेनान्वयायोग्यत्वात्। सामान्यद्वारा विशेषेषु प्रवर्तमानविशेषशास्त्रस्य विशेषविषयेऽप्यप्रतिबन्धान्न बाध इति विकल्प एव न्याय्य इति प्राप्ते, सिद्धान्तयति—

**अविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य तत्सन्दिग्धमाराद्विशेषशिष्टं स्यात् ॥ १४ ॥**

अविशेषेण-सामान्येन यच्छास्त्रम् "यदाहवनीये जुहोति" इति तद् आराद्दूरे विशेषशिष्टं-विशेषविहितम्। विशेषविहितेनासम्बद्धमिति यावत्। विशेषविषये सामान्यशास्त्रं न प्रवर्तत इति यावत्। कुतः ? यतः सामान्यशास्त्रं सन्दिग्धम्-यावद्विशेषविषयं वा कतिपयविशेषविषयकं वेति। एवं सन्दिग्धत्वेन विलम्बितप्रवृत्तिकम्। आवहनीयशास्त्रस्थजुहोतेर्हि होमसामान्यमर्थः। विशेषस्तु सामान्यद्वारा लक्षणीयः। पदवाक्ये तु होमविशेषोऽवान्तरप्रकरणादवगम्यते। ततश्च सामान्यशास्त्रस्य विशेषे प्रवृत्तिर्विलम्बिता। पदशास्त्रन्तु झटिति प्रवृत्तिकम्, निरवकाशञ्च। एवञ्च "पदे जुहोति" इति विशेषविधिः झटिति पदलक्षणाधारप्रापणेन तं होमविशेषं निराकाङ्क्षीकुर्वन् तस्मिन् होमविशेषे आवहनीयलक्षणाधारान्वयं प्रतिबध्नातीति सामान्यशास्त्रं विशेषशास्त्रविषयातिरिक्तहोमेष्वेवाधारविशेषाकाङ्क्षेष्ववतिष्ठत इति सामान्यशास्त्रस्य तत्राप्रवृत्या युक्तो बाधः। ननु पदशास्त्रेऽपि जुहोतिना प्रकरणाद्धोमविशेषस्य मन्दोपस्थिकत्वं तुल्यम्। नापि पदवाक्यस्य [निरव]काशत्वम्, विकल्पे सति पक्षे सावकाशत्वादित्यस्वरसादाह-विकल्पस्यान्याय्यत्वादिति। सामान्यशास्त्रं हि विशेषविषये प्रवृत्तावष्टदोषदुष्टविकल्पं पर्यालोच्य तद्व्यतिरिक्तविषय एव प्रवर्तत इति विशेषविषये सामान्यशास्त्रस्याप्रवृत्त्या[बाध्यत्वं]फलति।

वस्तुतस्तु—"पदे जुहोति" इति नोदाहरणम्। न ह्यत्र वाक्यान्तरविहिते होमे पदविधिः, तथाविधहोमोत्पत्तिवाक्यानुपलम्भात्। किन्तु यदाहवनीयादिवाक्यवत् पदविशिष्टहोमविधिः, ततश्च पदस्योत्पत्तिशिष्टत्वेनोत्पन्नशिष्टाहवनीयबाधस्य सिद्धत्वेन पूर्वपक्षानुन्मेषः। अत एवास्वरसाद् भाष्ये "गार्हपत्ये पत्नीसंयाजान्जुहोति" इति वाक्यान्तरमुदाहृतम्। तत्र पत्नीसंयाजशब्देन होमविशेषाः श्रुत्यैवावगता इति तच्छास्त्रं झटिति प्रवृत्तिकमिति निर्बाधम्। नापि तत्र गार्हपत्य उत्पत्तिशिष्टः। न हि 'गार्हपत्ये पत्नीसंयाजान् जुहोति" इत्युत्पत्तिवाक्यम्, येः विशिष्टविधानाद् गार्हपत्य उत्पत्तिशिष्टस्स्यात्। किन्तु "पत्नीसंयाजान् जुहोति"

इत्युत्पन्नहोमान् पत्नीसंयाजपदेनानूद्य गार्हपत्यलक्षणगुणविधिरिति भवतीदमुदाहरणम्। एवं यत्र वाक्यान्तरविहितहोमे गुणमात्रविधिः, तत्सर्वमुदाहरणम्॥

इति नवमं सामान्यविशेषशास्त्रयोर्बाध्यबाधकभावाधिकरणम्॥९॥

१०

"सप्तदश सामिधेनीरन्वाह" इत्यानारभ्य श्रुतम्। तथा दर्शपूर्णमासविकृतिषु क्वचित् मित्रविन्दाग्रयणवैमृधादिषु "सप्तदश सामिधेनीरनुब्रूयात्" इति श्रुतम्। इमाः श्रुतसाप्तदश्या विकृतयः किमपूर्वाः? उत दर्शपूर्णमासविध्यन्तग्राहिण्यः? इति संशये, पूर्वपक्षयति—

**अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृतमाज्यभागवत् प्राकृतप्रतिषेधार्थम्॥१५॥**

अप्रकरणे-अनारभ्याम्नातं यच्छास्त्रम् अथ च विकृतिविशेषे अविकृतमेव पुनः श्रूयते तत् पुनःश्रूयमाणा गृहमेधीयाज्यभागपुनःश्रवणवत् प्राकृतधर्मप्रापकचोदकलोपार्थम्। तु शब्दो वैषम्ये। अस्त्वनारभ्याधीताहवनीयशास्त्रस्य पदहोमादिव्यतिरिक्तविषये सङ्कोचः, साप्तदश्यवाक्यस्य त्वनारभ्याधीतस्य न श्रुतसाप्तदश्यमित्रविन्दादिविकृतिविषये सङ्कोचस्सम्भवति, पुनःश्रवणस्य गृहमेधीयाज्यभागन्यायेन चोदकलोपार्थत्वोपपत्तेरिति॥

ननु विषमोऽयं दृष्टान्तः, गृहमेधीयेऽप्याज्यभागपुनःश्रवणमनन्यार्थत्वाच्चोदकलोपार्थमिति युक्तम्। विकृतिविशेषेषु साप्तदश्यवाक्यन्त्वन्यार्थमेव। तथाहि—दर्शपूर्णमासप्रकरणे श्रुतम्—"पञ्चदश सामिधेनीरनुब्रूयात्" इति पाञ्चदश्यं प्रकरणात् क्रत्वर्थत्वेनावगतम्। "सप्तदश सामिधेनीरनुब्रूयत्" इत्यनारभ्यविहितसाप्तदश्य[ स्य तु ]क्रतुसम्बन्धो न प्रकरणगम्यः। किन्तु क्रत्वव्यभिचरितसामिधेनीसम्बन्धादतिदूरस्थितक्रतुसम्बन्धो हृदयमागमयितव्यः। ततश्च प्राकृतपाञ्चदश्येन बाधितमनारभ्यविहितं साप्तदश्यं सर्वासु विकृतिषु प्राप्तम्। तथा पाञ्चदश्यमपि तासु प्राप्तमिति मित्रविन्दादिष्वपि साप्तदश्यपाञ्चदश्ययोर्विकल्पे प्राप्ते साप्तदश्यनियमार्थन्तत् पुनःश्रवणमिति तस्यान्यर्थत्वात् कथं चोदकलोपकतेत्यत आह—

## विकारे तु तदर्थं स्यात् ॥१६॥

विकृतिष्वतिदिष्टपाञ्चदश्येनानारभ्य विहितसाप्तदश्यस्य विकारे तु—विकल्पे प्राप्ते सति किल विकृतिषु क्वचित् साप्तदश्यपुनःश्रवणं साप्तदश्यनियमसिध्यर्थं स्यात्। नैवमस्ति; अनारभ्यवाक्यस्य विकृतिविषयत्वेन तस्य तत्रोपदेशात्मकतया प्राबल्याच्चोदको नैव पाञ्चदश्यं प्रापयितुमीष्ट इति विकृतिषु नैव पाञ्चदश्यप्रसक्तिः। ततश्च साप्तदश्यस्यानारभ्यवाक्येन सर्वविकृतिषु नित्यतयैव विधानान्मित्रविन्दादिष्वपि तत एव साप्तदश्यनियमसिद्धेस्तत्र "सप्तदश सामिधेनीरनुब्रूयात्" इति न साप्तदश्यविधिरिति सामिधेन्य एव विधीयन्ते चोदकलोपार्थम्। सप्तदशेत्यनुवादः॥

अथ सिद्धान्तयति—

## वाक्यशेषो वा क्रतुना ग्रहणात् स्यादनारभ्यविधानस्य ॥१७॥

"सप्तदश सामिधेनीरनुब्रूयात्" इत्यनारभ्य विधेः विकृतिषु पुनस्तथाविधमेव श्रूयमाणं वाक्यजातं वाक्यशेषः। सप्तदश सामिधेनीरनुब्रूयान्मित्रविन्दादिविकृतिष्विति यद्यपि [परि] पूर्णत्वान्न पदैकवाक्यता, तथापि वाक्यैकवाक्यता सम्भवत्येव तत्सूचनायैव वाक्येति। कुतोऽनारभ्य विधेर्मित्रविन्दादिपूपसंहारः? क्रतुना ग्रहणात्। अग्रहणादित्यपि छेदः। विकृतिगतसाप्तदश्यवाक्येषु साप्तदश्यस्य क्रतुना सम्बन्धस्य झटित्युपस्थितेः। अनारभ्य वाक्ये च झटिति तदनुपस्थितेरित्यर्थः। साप्तदश्यस्य हि सामिधेनीस्वरूपार्थत्वे आनर्थक्यात् सामिधेनीद्वारा क्रतुसम्बन्धो वाच्यः। अनारभ्यवाक्ये च क्रतुर्न सन्निहितः, किन्तु अव्यभिचरितसामिधेनीद्वारा कथञ्चिद्धृदयमागमयितव्यः। ततश्चानारभ्यवाक्यं सामिधेनीद्वारा क्रतुसम्बन्धं यावद् बोधयितुमुद्युङ्क्ते, ततः प्रागेव मित्रविन्दादिगतं साप्तदश्यवाक्यं क्रतुसम्बन्धं बोधयति। ततश्च विकृतिगतसाप्तदश्यवाक्यप्रवृत्तेः प्राक् सर्वविकृतिसाधारण्येन साप्तदश्यस्यानारभ्य वाक्यगतस्य प्राप्त्यभावान्न तत्प्राप्तसाप्तदश्यस्य विकृतिगतसाप्तदश्यवाक्यमनुवादः। किन्तु स्वयं झटिति क्रतुसम्बन्धबोधकं सद् अनारभ्यवाक्येऽविशेषेण सर्वविकृतिसम्बन्धकल्पनान्निरुन्धत् तदुपसंहारार्थं सम्पद्यत इति तत्पुनर्विध्यभावान्न चोदकलोपः। एवञ्चानारभ्य वाक्यतस्साप्तदश्यस्य सामिधेनीसम्बन्धो गम्यते, विकृतिगतवाक्यतस्तु

क्रतुसम्बन्ध इति न पौनरुक्त्यमनारभ्यवादस्य। न चैवं क्रतुसम्बन्धवत् सामिधेनीसम्बन्धस्यापि विकृतिगतसाप्तदश्यवाक्य एव लाभसम्भवादनारभ्यवाक्यवैय्यर्थ्यमिति वाच्यम्, वाक्यद्वयाम्नानबलादेव हि अनारभ्य वाक्यात् सामिधेनीसम्बन्धस्य विकृतिगतवाक्यतः क्रतुसम्बन्धस्य च[ज्ञान]मभ्युदयकारीति विज्ञायत इति तन्त्ररत्ने स्थितम्। विधिरसायने तु-यद्यप्यनारभ्याधीतसाप्तदश्यं प्रकृतौ पाञ्चदश्येन बाधितं विकृतिविषयमिति विकृतिपूपदेशात्मकमेव, तथापि पाञ्चदश्येन साप्तदश्यं तासु विकल्प्येत। यदि ह्यनारभ्यवाक्यं विकृतिचोदकप्राप्तपाञ्चदश्यबाधेन साप्तदश्यं नित्यमेव विदध्यात्, तदा सौर्यादीष्टाविव मित्रविन्दादिष्वपि साप्तदश्यनियमसिद्धेस्तासु पुनस्साप्तदश्यश्रवणमनर्थकं स्यात्। एवमनारभ्यवाक्यं स्वस्य मित्रविन्दादिविषये वैय्यर्थ्यमालोच्य तथा सौर्यादिषु पाञ्चदश्यबाधे सति विकृतिगतसाप्तदश्यवैयर्थ्यञ्चालोच्य सौर्यादिषु पाञ्चदश्यस्यातिदेशं सोढ्वा विकल्पितं साप्तदश्यं विधत्ते। यथा "न तौ पशौ करोति" इति पशावाज्यभागप्रतिषेधः। पशौ चोदकत आज्यभागाप्राप्तौ अप्रसक्तप्रतिषेधतया तस्य वैयर्थ्यम्, चोदकप्राप्ताज्यभागयोस्सर्वथा बाधे चोदकाप्रामाण्यञ्चालोच्याज्यभागातिदेशं सोढ्वा विकल्पितमेव प्रतिषेधं बोधयति, तद्वदित्युक्तम्। तदपरे न मन्यन्ते; अनारभ्याधीतं हि साप्तदश्यं सामिधेनीद्वारा विकृतिषु निविशते। सामिधेन्यश्च विकृतिषु चोदकलभ्याः। ताश्च चोदकेन पाञ्चदश्यसहिता एव प्राप्यन्त इति विकृतिष्वपि पाञ्चदश्यावरोधाविशेषान्न झटिति सर्वविकृतिषु साप्तदश्यं प्राप्तुमर्हति, किन्तु यत्र विकृतौ प्राकरणिकवचनविहितसाप्तदश्यावरोधात् पाञ्चदश्यस्य न प्राप्तिस्तामेव मित्रविन्दादिकां विकृतिमनारभ्य विहितं साप्तदश्यं गच्छति, तत्र पाञ्चदश्यावरोधाभावात्। अतस्तदितरसौर्यादिविकृतिषु [साप्त]दश्यस्याप्रसक्तेर्न विकल्पप्रसक्तिः। किञ्च यदि वाक्यद्वयसार्थक्याय प्रबलदुर्बलप्रमाणयोरप्यैकमत्याश्रय[णेन] विकल्पस्याभ्युपगन्तुं शक्यत्वात् किमित्यनारभ्याधीतवाक्यस्योक्तरीत्या दुर्बलस्य प्राबल्याश्रयणेन सौर्यादौ विकल्पवर्णनमिति सोमनाथदीक्षिताः। वस्तुतस्तु-अनारभ्यवाक्यस्य मित्रविन्दादिगतवाक्येषूपसंहारेऽपि न वैय्यर्थ्यम्, शाखान्तरीयत्वात्। तैत्तिरीयशाखायां हि अनारभ्य साप्तदश्यविधिर्न दृश्यते। दर्शपूर्णमासविकृतिषु मित्रविन्दादिष्वेव च कासुचित् पुनस्साप्तदश्यविधिर्दृश्यते। एवं वाजसनेयकेऽप्यनारभ्यसाप्तदश्यविधिर्न दृश्यते,

मित्रविन्दादिष्वेव कासुचिद्विकृतिषु पुनस्साप्तदश्यविधिर्दृश्यते। ततश्च तेषु विकृतिगतसाप्तदश्यविधिष्वनारभ्यवाक्यस्य शाखान्तरीयत्वादुपसंहारेऽपि न पौनरुक्त्यम्, अन्यथा नानाशाखागताग्निहोत्रादिविधिषु का गतिरित्यलं बहुना॥

## इति दशमं विकृतिषु साप्तदश्यस्योपसंहाराधिकरणम्॥१०॥

११

इदमनारभ्य श्रूयते—"स्वाहाकारेण वषट्कारेण वा देवेभ्यो हविः प्रदीयते" इति। सन्ति च श्रुतस्वाहाकारमन्त्रविशिष्टदर्विहोमविशेषविधयः—"पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहेति जुहोति" "अग्नये स्वाहा सोमाय स्वाहेति पूर्वदीक्षां जुहोति" "अयनाय स्वाहा प्रायणीयाय स्वाहेत्युद्रावां जुहोति" इत्यादयः। तत्र च स्वाहाशब्दाम्नानवलात् स्वाहाकारशिरस्कैर्मन्त्रैर्जुहुयादित्येवं स्वाहाशब्दविधावपि तात्पर्यमिति स्थितिः। तदिदमनारभ्य वादप्राप्तस्य स्वाहाकारस्य [दर्विहोमविशेषेषु] पुनः श्रवणं साप्तदश्यवत् पूर्वाधिकरणन्यायेनोपसंहारार्थम्। एवञ्च यत्र मन्त्रेषु स्वाहाकारो न श्रुतः "भुवस्सुवरिति जुहोति" इत्यादौ तत्र न स्वाहाकार इति प्राप्ते, सिद्धान्तयति—

## मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात् स्यात्॥१८॥

मन्त्रेषु-स्वस्वाधिकारशिरस्कमन्त्रविधिषु अनारभ्यवाक्य[स्यावाक्यशेषत्वं] स्यात्। न तत्रोपसंहार इति यावत्। कुतः? गुणोपदेशात्—मन्त्रविधयो हि ते स्वाहाकारांशविधिपरा न भवन्ति, येन तेष्वनारभ्य स्वाहाकारविधेरुपसंहारस्स्यात्, अनारभ्यवादेनैव स्वाहाकारांशस्य प्राप्तत्वात्। किन्तु तदितरेषां पृथिव्यै अन्तरिक्षायै इत्याद्यंशानां विधिपराः। एवञ्च एवंविधगुणविधिपरत्वात्, स्वाहाशब्दविधिपरत्वाभावान्न तेष्वनारभ्यस्वाहावादस्योपसंहारः। न चैवमप्यनारभ्य वादतः प्राप्ते स्वाहाशब्दे स्वाहाशब्दपुनःश्रवणार्थवत्त्वाय मन्त्रविधीनामुपसंहारार्थत्वे तात्पर्यमावश्यकमिति शङ्क्यम्, पुनः स्वाहाकारश्रवणस्य वषट्कारनिवृत्तिफलकस्वाहाकारनियमार्थत्वसम्भवेन तदुपसंहारासम्भवात्। ततश्च यत्र मन्त्रेषु स्वाहाकारश्रवणं नास्ति तत्र दर्विहोमेषु स्वाहाकारो वा वषट्कारो वेति फलितमिति प्राञ्चः। खण्डदेवस्तु "याज्याया अधि वषट् करोति" इति वषट्कारस्य

याज्योत्तरत्वविधानाद्याज्याकरणकयागेषु वषट्कार एव, याज्याभिन्नमन्त्रकेषु तु दर्विहोमेषु परिशेषात् स्वाहाकार एवेति व्यवस्थित एव विकल्पः स्वाहावषट्कारयोः। अतः क्वचिद्दर्विहोममन्त्रेषु स्वाहाकारश्रवणस्य वषट्कारनिवृत्त्यर्थकनियमार्थत्वमित्यनुपपन्नम्। सूत्रन्त्वेवं योज्यम्—क्वचिन्मन्त्रेषु पुनः स्वाहाकारपाठस्य मन्त्रत्वसिद्धिलक्षणगुणार्थत्वान्नोपसंहारार्थत्वमिति। क्वचिन्मन्त्रेषु स्वाहाकारस्य पाठो हि मन्त्रत्वसिध्यर्थः। अत एव यत्र स्वाहाकारो नास्ति तत्रोक्तानारभ्य वाक्यतस्स्वाहाकारस्य विधानेऽपि न तस्य मन्त्रत्वम्। एवञ्च तद्भ्रेषप्रायश्चित्तं तत्र न भवतीत्याह॥

इतोऽप्यनारभ्य स्वाहाकारविधेर्न श्रुतस्वाहाकारमात्रविधिपूपसंहार इत्याह—

## अनाम्नाते च दर्शनात् ॥१९॥

"घृतेन द्यावापृथिवी आप्रृणेथामित्यौदुम्बर्या विशाखे जुहोति" इत्यत्र क्वचिदनाम्नातेऽपि स्वाहाकारे स्वाहाकारानुवादो दृश्यते। "आन्तादवस्रावयति भूमिगते आज्ये स्वाहाकरोति" इति, तदिदमनारभ्यस्वाहाकारविधेः श्रुतस्वाहाकारमन्त्रविधिपूपसंहारेऽनुपपन्नं स्यात्। अतोऽपि नोपसंहारः॥

इतोऽप्येवमित्याह—

## प्रतिषेधाच्च ॥२०॥

क्वचिच्च पूर्वाघारहोमे स्वाहाकारः प्रतिषिध्यते "न स्वाहाकरोति" इति। तदिदमनारभ्य स्वाहाकारविधेः यत्र स्वाहाकारस्तत्रैवोपसंहारेऽनुपपन्नं स्यात्, प्रतिषेधस्य प्रसक्तिपूर्वकत्वात्। अतोऽपि नोपसंहारः॥

इत्येकादशमविहितस्वाहाकारेषु कर्मसु स्वाहाकारनियमनाधिकरणम् ॥११॥

१२

अस्त्यग्निर्नाम स्थण्डिलविशेषः—"य एवं विद्वानग्निश्चिनुते" इत्यनारभ्य विहितः। स च "दीक्षित उख्यं विभज्यानूपसदमग्निं चिनोति" इत्येवं सोमाङ्गसंवलनात् सोमाङ्गमेव, न तु दर्शपूर्णमासाङ्गमिति स्थितिः। सोऽयमग्निष्षोडशिनि वाजपेये चातिदेशतो भवति न वेति संशयः। सन्ति च ज्योतिष्टोमेऽतिग्राह्या नाम ग्रहविशेषाः—'उपस्तम्भनं वा एतद्यज्ञस्य यदतिग्राह्याः" इति। [ते] षोडश्यतिरात्रादिषु विकृतिषु भवन्ति न वेति संशयः तत्र पूर्वपक्षयति—

## अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिस्स्यात् ॥२१॥

अग्निश्चातिग्राह्याश्च अग्न्यतिग्राह्यम्, तस्योदाहृतासु विकृतिषु न प्रवृत्तिस्स्यात्। कुतः? विकृतावुपदेशात्-विकृताविति सामान्याभिप्रायमेकवचनम्। क्वचिद्विकृतिषु प्रकृतौ च अग्न्यतिग्राह्यस्य प्रत्यक्षोपदेशात्। श्रूयते हि—"य एवं विद्वानग्निश्चिनुते" इति प्रकृत्य "अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन तमतिरात्रेण तं द्विरात्रेण तं त्रिरात्रेण तं चतूरात्रेण तं पञ्चरात्रेण तं षड्रात्रेण तं सप्तरात्रेण तमष्टरात्रेण तं नवरात्रेण तं दशरात्रेण तमेकादशरात्रेण तं द्वादशरात्रेण" इति। तथा "उपस्तम्भनं वा एतद्यज्ञस्य यदतिग्राह्याः" इति प्राकृतविधिसन्निधौ श्रुतम्। पृष्ठ्यषडहस्य पूर्वेषु त्रिष्वहस्सु "अतिग्राह्यान् गृह्णाति" इति "विश्वजिति ग्रहीतव्याः" इति च। यदा चोदकतो विकृतिषु सर्वासु प्राप्तिः स्यात्, तदा क्वचिद्विकृतिषु तेषां प्रत्यक्षोपदेशोऽनर्थकस्स्यात्। न च गृहमेधीयाज्यभागन्यायेन क्वचित्पुनः श्रवणस्यापूर्वार्थत्वमस्त्विति वाच्यम्। गृहमेधीये हि यावच्चोदकः प्रवर्तते, ततः प्रागेवाज्यभागौ प्रकृतौ क्लृप्तोपकारौ प्रत्यक्षवचनतः प्राप्नुत इति तत एव प्राकृतोपकाराकाङ्क्षा शान्तेति चोदकस्यानुन्मेषादपूर्वत्वमिति युक्तम्। अत्र तु प्राकृतैरेव वाक्यैरुदाहृतैर्यस्यां वेलायां प्रकृतौ अग्न्यतिग्राह्यं विधीयते, तस्यामेव वेलायामुदाहृतविकृतिषु विधीयमानस्य तस्य प्रकृतिक्लृप्तोपकारत्वाभावेनाज्यभागवदपूर्वतापादकत्वं न सम्भवतीति वैषम्यम्। ततश्च क्वचिद्विकृतिषु परिगणितस्याग्न्यतिग्राह्यस्य प्रत्यक्षोपदेशो विकृत्यन्तरेषु तदतिदेशाभावार्थ एव॥

इतोऽप्येवमित्याह—

## मासिग्रहणश्च तद्वत् ॥२२॥

गवामयने "मासि मास्यतिग्राह्या गृह्यन्ते" इति पुनरतिग्राह्यग्रहणविधानमपि तद्वत्-पूर्वोदाहृतविकृतिषु पुनरुपदेशवदितरविकृतिषु तदतिदेशाभावं गमयति॥

अथ सिद्धान्तयति—

## ग्रहणं वा तुल्यत्वात् ॥२३॥

वा शब्दोऽवधारणे। उपदिष्टानुपदिष्टाग्न्यतिग्राह्यासु सर्वास्वेव विकृतिषु अग्न्यतिग्राह्यस्य चोदकेन ग्रहणं भवतु। एवं सर्वास्वेव विकृतिषु चोदकोऽग्न्यति-

ग्राह्यं प्रापयतीति यावत् । कुतः? तुल्यत्वात्-चोदकस्याङ्गान्तरप्रापकत्ववद् अग्न्यतिग्राह्यप्रापकत्वस्याप्यविशिष्टत्वात् । चोदकस्य सर्वाङ्गसाधारण्येन प्रवर्तमानस्याग्न्यतिग्राह्यव्यतिरिक्तविषये सङ्कोचकप्रमाणाभावात् ॥

इतोऽप्येवमित्याह—

## लिङ्गदर्शनाच्च ॥२४॥

अनुपदिष्टेष्टकायां क्वचिद्विकृतावग्निं सिद्धवत्कृत्य तत्र गुणविधिः क्वचिच्छाखायां श्रूयते—"कङ्कचितं चिन्वीत" "शीर्षचितं चिन्वीत यः कामयेत शीर्षण्वानमुष्मिन् लोके स्याम्" इत्यादि । तथा वाजपेये अनुपदिष्टातिग्राह्येऽतिग्राह्यान् सिद्धवद्द्विगुणविधिः श्रूयते-"पञ्चैतानतिग्राह्यान् गृह्णाति" इति । अतोऽपि[चोदकः] सर्वासु विकृतिष्वग्न्यतिग्राह्यं प्रापयतीति मन्यामहे ॥

ननु तर्हि क्वचिद्विकृतिषु पुनरग्न्यतिग्राह्यविधानं किमर्थमित्यत आह—

## ग्रहणं समानविधानं स्यात् ॥२५॥

क्वचिद्विकृतिषु पुनरग्न्यतिग्राह्यश्रवणम् उपदेशतया एकजातीयविधिविधेयत्वसिध्यर्थम् । तथा च प्रकृतिवद्गुणकामप्राप्तिफलकसन्निहिताग्न्याश्रिता गुणकामाः—"श्येनचितं चिन्वीत सुवर्गकामः" इत्यादयः । अतिग्राह्याश्रिताश्च गुणकामाः क्वचिच्छाखायामन्वेषणीयाः । गुणकामाश्च ते प्रकृतमग्न्यतिग्राह्यमाश्रित्य प्रवर्तन्ते । यासु तु विकृतिषु नाग्न्यतिग्राह्यमुपदिश्यते, न तासु तद्गुणकामाः प्रवर्तन्ते, तत्र तस्याग्न्यतिग्राह्यस्य प्राकृतत्वेनाश्रयत्वालाभात् । अतः कतिपयविकृतिषु गुणकामप्राप्त्यर्थमग्न्यतिग्राह्यस्य पुनःश्रवणम् । न चैवमपि "गोदोहनेन पशुकामस्य" इत्यादौ प्रकृत्यपूर्वसाधनस्यैवाश्रयत्वात् कथमिह वैकृतस्याग्न्यतिग्राह्यस्याश्रयत्वमिति वाच्यम्, सन्निहितत्वमेव ह्याश्रयत्वे तन्त्रम्, न तु प्रकृत्यपूर्वसाधनत्वमपि, मानाभावात् । न चैवमपि यासु विकृतिषु न पुनरग्न्यतिग्राह्यस्य श्रवणं तास्वप्यतिदिष्टस्याग्न्यतिग्राह्यस्याश्रयभूतस्य सत्वाद् गुणकामप्राप्तिः किं न स्यादिति वाच्यम् । औपदेशिकस्य हि झटित्युपस्थितत्वेन प्रथमसमाश्रयत्वेनान्वये सति पश्चादातिदेशिकस्य नाश्रयत्वान्वयस्सम्भवति, शब्दस्य विरम्यव्यापाराभावात् । न च यासु विकृतिष्वग्न्यतिग्राह्यं नोपदिष्टं तासु तद्गुण-

कामानामुपदेशप्राप्त्यभावेऽपि तेषां प्राकृतानां चोदकतः प्राप्तिः किं न स्यादिति वाच्यम्। 'गुणकामेष्वाश्रितत्वात् प्रवृत्तिर्न स्यात्' 'निवृत्तिर्वा कर्मभेदात्' इत्याष्टमिकाधिकरणन्यायेन () गुणकामानामतिदेशाभावस्य सिद्धान्तितत्वात्। एतेन कतिपयविकृतिष्वग्न्यतिग्राह्यपुनःश्रवणं गृहमेधीयाज्यभागन्यायेन चोदकलोपार्थमित्यपि निरस्तम्, उक्तरीत्या अग्न्यतिग्राह्यपुनःश्रवणस्य गुणकामप्राप्त्यर्थतया अन्यार्थत्वेन चोदकलोपार्थत्वासम्भवात्। एवञ्चाग्न्यतिग्राह्यस्य क्वचिद्विकृतिषु पुनःश्रवणबलादितरासु विकृतिष्वतिदेशाभावो न शक्यते कल्पयितुम्। तस्मादस्मिन् वाजपेये षोडश्यादिसाधारण्येन सर्वासु विकृतिष्वग्न्यतिग्राह्यस्यातिदेशः।

विधिरसायने तु "श्येनचितं चिन्वीत स्वर्गकामः" इत्यादिगुणकामवाक्येषु "य एवं विद्वानग्निं चिनुते" इत्युत्पन्नश्शुद्ध एवाग्निराश्रयत्वेनान्वेति, न तु क्रत्वन्वयित्वेन प्रथमं बुध्युपारूढः। औपदेशिक एव वाग्नावाश्रयत्वेनान्विते जघन्यप्रतीतातिदेशिकस्यापि तस्य तदाश्रयत्वसिध्यर्थमग्न्यतिग्राह्यादिवाक्येषु विकृतिपुनःश्रवणमर्थवत् स्यात्। नैवमस्ति; न हि गुणकामवाक्येषु क्रत्वन्वित एवाग्निराश्रयः, "अथातोऽग्निम्" इत्यादिवाक्यैः क्रत्वन्वयकरणात् प्रागेव "य एवं विद्वानग्निं चिनुते" इत्युत्पन्नस्य शुद्धस्याग्नेरेव गुणकामाश्रयत्वसम्भवेन क्रत्वन्वयिन एवाग्नेस्तदाश्रयत्वे प्रमाणाभावात्। ततश्च शुद्धस्याग्नेराश्रयत्वेनान्वयानन्तरमग्नेः क्रतुसम्बन्धे सत्यर्थात् क्रत्वन्वितोऽग्निराश्रय इत्येव पर्यवस्यति। आर्थिकञ्चापूर्वीयस्याग्नेराश्रयत्वम्। येष्वग्नेरौपदेशिकमपूर्वीयत्वम्, येषु चातिदेशाधीनं तेषु सर्वेष्वविशेषेण सिध्यति। अतो न गुणकामप्राप्त्यर्थं पुनःश्रवणमित्यास्थितम्।

सोमनाथदीक्षितास्तु-शुद्धस्याग्नेस्सिद्धरूपत्वेन क्रिया[नु]प्रवेशं विना आश्रयत्वं न सम्भवति। उक्तं हि चतुर्थे तन्त्ररत्ने 'औदासीन्यात् प्रच्यावकोऽस्याश्रयः क्रियैव तथा, न तु द्रव्यम्' इति। अग्नेश्च सिद्धरूपत्वं विधिरसायन एव "पशुकामश्चिन्वीत" इत्यादिना फलार्थत्वेनावगतस्याग्नेराश्रयत्वलाभार्थानि "अथातोऽग्निमग्निष्टोमेन" इत्यादिवाक्यानीति प्रतिपादनावसरे स्थितम्। ततश्च यथासिद्धरूपस्य स्वतः फलसाधनत्वासम्भवेन तदर्थमाश्रयापेक्षा, तथा सिद्धरूपस्याश्रयत्वासम्भवेन तदर्थं क्रत्वनुप्रवेशापेक्षायाम् "अथातोऽग्निमग्निष्टोमेन" इत्यादि-

वाक्यैः क्रत्वन्वितो योऽग्निस्स एवाश्रयत्वेन स्वीकर्तव्यः, न तु शुद्ध इति गुणकाम-प्राप्तिः पुनःश्रवणप्रयोजनमुपपद्यत इत्याहुः। ननु यथा प्रकृतौ प्राकरणिकेन पाञ्च-दश्येनानारभ्यविहितं साप्तदश्यं बाध्यते, तथाग्नेरप्यनारभ्याधीतस्य न क्रतौ निवेशस्सम्भवति, प्राकरणिकोत्तरवेदिविरोधात्। अप्राकृतश्चाग्निर्न विकृतिष्वति-देशमर्हति। ततश्चोपदेशेनैवाग्नेर्विकृतिषु प्राप्तिर्वक्तव्या। न च षोडशिवाजपेय-योरग्नेरुपदेशोऽस्ति [येन]तयोरग्निर्लभ्येत इति चेन्न; वैषम्यात्। साप्तदश्यस्य हि वाक्येन क्रतुसम्बन्धा[न]वगमात्तस्य प्रकृतौ न निवेश इति युक्तम्। अग्नेस्तु प्रकृतिसम्बन्धस्याथातोऽग्निमग्निष्टोमेनेति वाक्येनैवावगतत्वाद्युज्यते प्रकृतौ निवेशः, वाक्येन प्रकरणबाधस्य न्याय्यत्वात्। न च तत्राग्निष्टोमपदं विकृत्यग्निष्टो-माभिप्रायं भविष्यतीति वाच्यम्, प्रकरणानुसारेण वाक्यसङ्कोचस्यायुक्तत्वात्। प्राकरणिकोत्तरवेदेश्चात्यन्तबाधायोगादग्न्युत्तरवेद्योर्विकल्पः प्रकृतौ पर्यवस्यति। न च "उत्तरवेद्यामग्निश्चीयते" इति वचनात् समुच्चयश्शङ्क्यः, अग्निप्रकरणे "उत्तरवेदिमुपवपन्ति, उत्तरवेद्यां ह्यग्निश्चीयते स्वयमातृण्णायामग्निं प्रणयति" इत्यादिवचनेन सोमप्रकरणे केवलोत्तरवेदेरुत्तरवेदिसहिताग्नेश्च विकल्पावगमात्। न च "दशपदामुत्तरवेदिं सोमे करोति" इति दशपदपरिमितायामुत्तरवेद्यां

.............................................................................................. ()

सप्तपुरुषादिपरिमितस्याग्नेः कथं सन्निवेश इति वाच्यम्, अत एव विरोधाद् 'अर्थाद्वा कल्पनैकदेशत्वात्' इत्यधिकरणन्यायेन () उत्तरवेदेरग्निसमानपरिमाणत्वा-श्रयणात्। अत्राहुश्चापस्तम्बादयः कल्पकाराः "उत्तरवेदिमुपवपति यावानग्निः" इति। "दशपदामुत्तरवेदिम्" इति वचनन्त्वनग्निकसोमविषयं भविष्यति। न चैवं विकल्पितस्याग्नेः कासुचिद्विकृतिषु नियमार्थं पुनः श्रवणमस्त्विति न गुणकाम प्राप्तिस्तत्फलमिति वाच्यम्। द्विरात्रादितत्तद्विकृतिचोदकपर्यालोचनालभ्योत्तर-वेदिप्राप्त्यपेक्षाग्निनियमार्थत्वाश्रयणापेक्षया अग्निप्रकरणगततदाश्रित[गुणकाम]-प्राप्तेस्सन्निहिततया तस्या एव [प्रयो]जनत्वौचित्यादित्यास्तां तावत्॥

अथैवं सति "मासि मास्यतिग्राह्या गृह्यन्ते" इति व्यर्थमित्यत आह—

**मासिग्रहणमभ्यासप्रतिषेधार्थम्॥२६॥**

गवामयने प्रत्यहं प्रकृतिवदतिग्राह्येषु प्राप्तेषु तत्प्रतिषेधार्थमिदं वचनम्। प्रतिमासं कस्मिंश्चिदहन्यतिग्राह्या इति। तस्मात् सर्वासु विकृतिष्वग्न्यतिग्राह्याणां

निवेशः। क्वचित्तु () साद्यस्क्रादावशक्यत्वान्न निवेशः। अत्रातिग्राह्याश्रिता गुणकामाः, क्वचिच्छाखायामन्वेषणीया इति प्राचीनाः। वस्तुतस्तु यद्यप्यतिग्राह्याश्रिताः प्रातिस्विका गुणकामविधय इदानीं परिदृश्यमानासु शाखासु नोपलभ्यन्ते, तथापि "परिभूरग्निमिति प्रभूषन्नवेक्षते" इत्यादयो गुणकामाः .............................. .............................. भवन्तीत्यधिकरणप्रवृत्तिर्वर्णयितुं शक्यते ॥

इति द्वादशमग्न्यतिग्राह्यस्य विकृतावुपदेशाधिकरणम् ॥ १२ ॥

१३

दर्शपूर्णमासयोः श्रूयते "सकृदुपस्तृणाति द्विर्हविषोऽवद्यति सकृदभिघारयति चतुरवत्तं जुहोति" इति। तत्राग्नेयादिप्रधानद्रव्यस्यैव चतुरवदानम्? उपस्तृणाति द्विर्हविषोऽवद्यति अभिघारयतीत्येव चतुरवदानम्? इति संशये, पूर्वपक्षयति—

**उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगादधिकमाज्यमतुल्यत्वाल्लोकवदुत्पत्तेर्गुणभूतत्वात् ॥ २७ ॥**

प्रधानद्रव्यस्यैव चतुरवत्तम्—चतुरवदानं सम्पाद्यम्, न तूपस्तरणाज्येन नाभिधारणाज्येन सह। कुतः? होमसंयोगात्—द्वितीयासंयुक्तहोमसंयोगेन यद्धोतव्यं तच्चतुरवत्तं कुर्यादित्येवं होतव्यस्यैव द्रव्यस्य चतुरवदानप्रतीतेः। प्रधानद्रव्यमेव च होतव्यम्, न त्वाज्यमपि। कुतः? उत्पत्तितादर्थ्यात्—यदाग्नेयादिवाक्यतः पुरोडाशादिद्रव्यस्यैव होमसम्बन्धावगमात्। यदाग्नेयादिवाक्येषु च यागो विधीयते। स च होमात्मक इत्यभिमानः। उपस्तरणाज्यमभिधारणाज्यञ्च प्रधानद्रव्यचतुरवत्तापेक्षयाधिकमेव प्रत्येतव्यम्। अतो न तद्विधिवैय्यर्थ्यम्। नन्वेवं सति षडवत्तत्वप्रसङ्गाच्चतुरवत्तत्वव्याघात इत्यत्राह—अतुल्यत्वादिति। आज्यस्य प्रधानद्रव्यगुणत्वमित्यर्थः। तच्च कुतः? उत्पत्तेर्गुणभूतत्वात्—आज्यस्य व्यञ्जनताया एव लोके दृष्टत्वेनोपस्तरणाभिधारणविधेः पुरोडाशादिद्रव्यगुणभूताज्यविषयत्वावगमादित्यर्थः। प्रधानद्रव्यापेक्षमेव च चतुरवत्तत्वमिह विवक्षितमिति न विरोधः। लोकवत्—यथा लोके प्रस्थतण्डुलौदनमाज्यसूपशाका-

दिव्यञ्जनैर्भुञ्जानेऽपि देवदत्ते प्रस्थभुग् देवदत्त इति गुणभूतव्यञ्जनान्यपेक्ष्यैव प्रयुज्यते, तद्वत् ॥

इतोऽप्येवमित्याह—

**तत्संस्कारश्रुतेश्च ॥ २८ ॥**

"यदुपस्तृणात्यभिघारयत्यमृताहुतिमेवैनां करोति" इति पुरोडाशादिद्रव्यस्वादुकरणार्थत्वं श्रुतम्। अतोऽपि गुणभूतमेवाज्यम्। अतश्चतुरवत्तत्वं प्रधानद्रव्यविषयमेवेत्याज्या[ न्वयेऽ ]पि न विरोधः। न च प्रधानद्रव्यत एव चतुरवत्तसम्पत्तौ "द्विर्हविषोऽवद्यति" इति विरोध इति वाच्यम्, अत एव विकल्पोपपत्तेः।

अथ सिद्धान्तयति—

**ताभ्यां वा सह स्विष्टकृतस्सकृत्त्वे द्विरभिघारणेन तदाप्तिवचनात् ॥ २९ ॥**

वाशब्द एवार्थे। ताभ्याम्—उपस्तरणाभिघारणाभ्यां सह द्विरेव प्रधानहविषोऽवदाय चतुरवत्तत्वं सम्पाद्यं स्विष्टकृतः। उपस्तरणाभिघारणाभ्याञ्चतुरवत्तत्वसम्पूर्तिं सिद्धवत्कृत्य "उपस्तृणाति, सकृद्धविषोऽवद्यति, द्विरभिघारयति, चतुरवत्तस्याप्त्यै" इति स्विष्टकृत्प्रचारे सकृदुपस्तीर्य हविषस्सकृदवदानं [ कृत्वा ] द्विरभिघारणावृत्तौ चतुरवत्तत्वाप्तिहेतूपन्यासेन लिङ्गेनोपस्तरणाभिघारणयोरेव चतुष्ट्वसङ्ख्यापूरणावगमात्। अस्मादेव लिङ्गदर्शनोपन्यासादुक्तन्यायोऽप्युपन्यस्त इति सूचितम्। तथाहि—यद्धोतव्यं तच्चतुरवत्तमित्येवं होमानुवादेन चतुरवत्तविधिरिति न सङ्गच्छते, होमस्याप्राप्तत्वेनानुवादायोगात्। आग्नेयादिवाक्येषु देवतोद्देश्यकद्रव्यत्यागमात्रस्यैव देवतातद्धितात् प्रतीतेः। न च यागस्य होमाविनाभूतत्वात्तत्र होमविधिरर्थसिद्ध इति वाच्यम्, होमाभावेऽपि पर्यग्निकृतोत्सर्ग इव यागोपपत्तेः। ततश्चोपस्तृणाति द्विर्हविषोऽवद्यति अभिघारयतीति प्राप्तं चतुरवत्तमनूद्य होमस्तत्संस्कारतया विधीयते—उपस्तृणातीत्यादिवाक्यप्राप्तं यच्चतुरवत्तं तत् होमेन प्रतिपादयेदिति। होमश्च देवतोद्देशेन त्यज्यमानस्य हविषः प्रक्षेपात्मकः। तत्र देवतोद्देश्यकत्यागात्मको यागांशः यदाग्नेयादिवाक्यप्राप्तोऽनूद्यते। अतः प्राप्ताप्राप्तविवेकेन प्रक्षेपांश एव चतुरवत्तस्य

त्यज्यमानस्य प्रतिपत्त्यात्मा विधीयते। [ अत एव ] उपयुज्यमानसंस्कार इति सर्वप्रदानाधिकरणे प्रपञ्चितम्। तस्मादुपस्तरणाभिघारणाभ्यां हविषो द्विरवदानेन चतुरवदानसम्पूर्तिः, न तु हविष एव चतुरवदानमिति। एवञ्च द्विर्हविषोऽवद्यतीत्यनेनाष्टदोषदुष्टो विकल्पोऽपि नाश्रयणीयो यदि हविषश्चतुरवदीयेत।

इतोऽप्येवमित्याह—

## तुल्यवच्चाभिधाय सर्वेषु भक्त्यनुक्रमणात् ॥ ३० ॥

अस्ति वाक्यशेषः—"चत्वार्येतानि दैवदधान्यवदानानि—यदुपस्तृणाति तदनुवाक्यायै, यत्पूर्वमवदानं तद्याज्यायै, यदुत्तरं तद्देवतायै, यदभिघारयति तद्वषट्काराय" इति। दधशब्दो भागधेयवचनः [ तद्यथा– ] कङ्कटकाय दधमिति भागधेयमिति गम्यते। अत्र दैवदधानि चत्वार्यवदानानि तुल्य (वदुपक्रम्य) तेषु सर्वेषु—उपस्तरणाभिघारणद्रव्यवदानेषु अनुवाक्यादिभागत्वभक्तिवादादप्युपस्तरणाभिघारणाभ्यां द्विरवदानेन चैव चतुरवत्तत्वं सम्पाद्यम् न तु हविष एव चतुरवदानमिति सिध्यतीति वार्तिकानुसारी पन्थाः। भाष्यकृतस्तु—उपस्तृणातीत्यादिवाक्यैरवदानानि विहितानि। तदाश्रिता तु चतुष्ट्वसङ्ख्या होमाङ्गतया विधीयते—यज्जुहोति तच्चतुरवत्तमिति। तत्रावदानानां प्राप्तत्वात् प्राप्ताप्राप्तविवेकेन होमे चतुष्ट्वविधिः पर्यवस्यति। चतुष्ट्वसङ्ख्यायाश्च साक्षात् होमसाधनत्वानुपपत्तेररुणाधिकरणन्यायेन होमसाधनद्रव्यावदानपरिच्छेदद्वारा अन्वयः। ततश्चाज्यस्यापि संस्कारद्वारेण होमसाधनत्वादुपस्तरणाभिघारणाभ्यां सहैव चतुरवत्तं सम्पद्यते। न च होमस्याप्राप्तत्वात् कथं तदनुवाद इति शङ्क्यम्, यदाग्नेयादिवाक्येषु हि तद्धितमहिम्ना यागोऽवगतः। स च देवतोद्देश्यकत्यज्यमानहविःप्रक्षेपलक्षणहोमात्मकः, न तु प्रक्षेपविनिर्मुक्तदेवतोद्देश्यकद्रव्यत्यागात्मकः। "न हि देवा अहुतमन्नमश्नन्ति" इत्यादिवाक्यशेषेण प्रक्षेपांशं विना यजेरपर्यवसानादिति मन्यन्त इत्यलं विस्तरेण।

### इति त्रयोदशं चतुरवदानाधिकरणम् ॥ १३ ॥

### १४

तदेवं वार्तिकमते चतुरवत्तार्थत्वेन होमविधिः, भाष्यमते तु होमार्थतया चतुरवत्तविधिरिति स्थितम्। यदा होमाङ्गतया चतुरवत्तविधिः; तदा दर्श-

पूर्णमासयोराज्यहविष्के उपांशुयाजहोमे चतुरवत्तं भवति न वेति संशये, पूर्वपक्षयति--

## साप्तदश्यवन्नियम्येत ॥३१॥

"चतुरवत्तं जुहोति" इति विहितं चतुरवत्तं कथं सम्पाद्यमित्यपेक्षाया-मुपस्तृणाति द्विर्हविषोऽवद्यति अभिघारयतीति प्रकारविशेषोपदेशश्चतुरवत्तविधे-श्शेषः। एवञ्चोपस्तृणाति द्विर्हविषोऽवद्यति अभिघारयतीति चतुरवत्तं जुहोतीत्ये-तत् सर्वमेकं वाक्यम्। तच्चोपस्तरणाभिघारणसंयुक्तम् यत्रोपस्तरणाभिघारणे स्तस्तत्रैव प्रवृत्तिमर्हति पुरोडाशसान्नाय्यहोमेषु, न त्वाज्यहोमेऽपि, तत्रोपस्तरणा-भिघारणयोरभावात्। उपस्तृणात्यभिघारयतिशब्दशक्तिस्वाभाव्येन तयोः पुरोडाश-सान्नाय्यलक्षणहविस्सम्बन्धिद्वयवदानसंस्कार्यत्वाध्यवसायात्, साप्तदश्यवत्। यथा "सप्तदश सामिधेनीः" इत्यविशेषप्रवृत्तं साप्तदश्यं पुनः श्रुतसाप्तदश्यासु मित्र-विन्दादिविकृतिष्वेवोपसंह्रियते, तथा चतुरवत्तवाक्यमपि तच्छेषोपस्तरणादि-वाक्यानुसारादाज्यव्यतिरिक्तपुरोडाशसान्नाय्यविषय एव विश्राम्यति। अविशेष-प्रसक्तस्योपसंहारमात्रदृष्टान्तस्साप्तदश्यवदिति। न ह्यत्र चतुरवत्तवाक्यस्योप-स्तरणादिवाक्यस्य च सामान्यविशेषभावेनैकवाक्यतास्ति॥

अथ सिद्धान्तयति—

## हविषो वा गुणत्वात्तथाभूतविवक्षा स्यात् ॥३२॥

वाशब्द एवार्थे। चतुरवत्तवाक्ये तावत् तथाभूतस्य-आज्यपुरोडाशसान्ना-य्यहोमसाधारणचतुरवत्तस्यैव विवक्षा, विधिरिति यावत्। न त्वाज्यव्यतिरिक्त-पुरोडाशसान्नाय्यहोममात्रविषयत्वम्। चतुरवत्तं ह्यविशेषविहितं सर्वहोमगतम्। उपस्तृणाति द्विर्हविषोऽवद्यति अभिघारयतीति च न चतुरवत्तविधेश्शेषः, सर्वहोम-साधारणचतुरवत्तविधिं प्रति पुरोडाशसान्नाय्यविषयकस्योपस्तरणादिवाक्यस्य प्रकारोपदेशात्मकशेषत्वासम्भवात्। न चैवं सत्युपस्तरणादिविधिवैय्यर्थ्यं शङ्क्यम्। कुतः? हविषो गुणत्वात्-पुरोडाशसान्नाय्यलक्षणहविस्संस्कारार्थतया तदतिशयाधानार्थत्वात्। न चोपस्तरणादिविधेश्चतुरवत्तविधिशेषत्वाभावे पुरो-डाशसान्नाय्यहोमेषु हविष एव चतुरवदानं स्यात्, न तूपस्तरणाभिघारणाभ्यां सहेति वाच्यम्, हविस्संस्कारार्थतया विहिताभ्यामेवोपस्तरणाभिघारणाभ्यां तत्र

चतुरवत्तसम्पत्तिसम्भवात्। आज्यहोमेऽपि उपस्तरणाभिघारयोरभावेन ताभ्यां चतुरवत्तसम्पत्त्यसम्भवादाज्यस्यैव चतुरवत्तम्। न चोपांशुयाजे क्वचिच्छाखायां "चतुर्गृहीतं जुहोति" इति प्रत्यक्षं श्रवणादेतदधिकरणप्रवृत्तिर्व्यर्थमिति तु न शङ्क्यम्, यत्र शाखायामेवंविधं वचनं नास्ति तद्विषये सार्थत्वात्॥

इति चतुर्दशमुपांशुयाजे चतुरवत्तस्यावश्यकताधिकरणम्॥ १४॥

१५

दर्शपूर्णमासयोः श्रूयते—"पुरोडाशाभ्यामेवासोमयाजिनं याजयेद्यावेतावाग्नेयश्चैन्द्राग्नश्च, सान्नाय्येन तु सोमयाजिनम्" इति। तत्र "पुरोडाशाभ्यामेव" इति किमयमधिकारवाक्यस्य शेषः—"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" असोमयाजी तु स्वर्गकाम आग्नेयैन्द्राग्नाभ्यां पुरोडाशाभ्याम् इति? उताधिकयोः कर्मान्तरयोरुपदेशः? किं वा आभ्यां पुरोडाशाभ्यामृत्विग् याजयेदित्यङ्गकर्तुरुपदेशः? आहोस्विदाभ्यां यजेतेति सोमयागात्प्राक्कालोपदेशः? अथवा ऐन्द्राग्नस्य विधिः, आग्नेयस्य चानुवादः? यद्वोभयोरनुवादः? इति संशयः। तत्र प्रथमपक्षयति—

**पुरोडाशाभ्यामित्यधिकृतानां पुरोडाशयोरुपदेशस्तच्छ्रुतित्वाद्वैश्यस्तोमवत्॥३३॥**

"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यधिकृतानां मध्ये असोमयाजिनस्स्वर्गकामस्य पुरोडाशयोरुपदेशः, पुरोडाशयोरसोमयाज्यधिकारोपदेश इति यावत्। कुतः? तच्छ्रुतित्वात्। कर्मणि क्तिच्। तस्य असोमयाजिन एव पुरोडाशयोः श्रुतत्वात्। यथा "वैश्यो वैश्यस्तोमेन स्वर्गकामो यजेत" इति वैश्यस्यैव श्रुतत्वात्तस्यैव वैश्यस्तोमेऽधिकारस्तद्वत्। एवञ्च एवशब्दस्य यथाश्रुतान्वये पुरोडाशयोरेवासोमयाज्यधिक्रियते, न तु सान्नाय्ये इति फलति। एव शब्दस्यासोमयाजिशब्देनान्वये त्वसोमयाजिन एव पुरोडाशयोरधिकारः, न तु सोमयाजिन इति फलति॥

तमिमं प्रथमपक्षं वचनव्यक्तिद्वयविश्रान्तं प्रतिक्षिप्य द्वितीयपक्षयति—

**न त्वनित्याधिकारोऽस्ति विधेर्नित्येन सम्बन्धस्तस्मा-दवाक्यशेषत्वम् ॥३४॥**

तुः पक्षान्तरोत्थितौ। दर्शपूर्णमासयोर्यदाग्नेयैन्द्राग्नौ स्वर्गफले नित्यवच्छ्रुतौ[तदनि]त्यविशेषणविनिर्मुक्तस्वर्गकाममात्रेण सम्बन्धो युक्तः, न त्वसोमयाजिना अनित्येन, नित्यानित्यसंयोगविरोधात्। न ह्येतत्सम्भवति दर्शपूर्णमासयोः पुरोडाशावेतौ नित्यौ, तौ चासोमयाजिन इति, असोमयाजिन एव ताविति वा, असोमयाजित्वस्यानित्यत्वात्। तस्मात् पुरोडाशाभ्यामिति वाक्यस्य न स्वर्गकामवाक्यशेषत्वम्, किन्तु भिन्नमेवेदं वाक्यं प्रकृतदर्शपूर्णमासतः कर्मान्तरविधिपरम्। एवशब्दस्तु पुनरित्यर्थे। यथा–अचिरपूर्वकाले क्षीरादिभि[र्भुक्त्वा] भूयश्च देवदत्तो भुङ्क्तैव इत्यत्रैवकारेण पुनरिति गम्यते, तथा दर्शपूर्णमासाभ्यां यजेत, असोमयाजी तु दर्शपूर्णमासाभ्यामिष्ट्वा आग्नेयैन्द्राग्नाभ्यामन्याभ्यां पुनर्यजेतेति॥

इतोऽपि नाधिकारवाक्यशेष इत्याह—

**सति च नैकदेशेन कर्तुः प्रधानभूतत्वात् ॥३५॥**

"दर्शपूर्णमासाभ्यां यजेत" इति षण्णामाग्नेयादियागानां समुदितानां फलसाधनत्वम्। ततश्च "पुरोडाशाभ्याम्" इत्यस्य तच्छेषत्वे पुरोडाशशब्दोनासोमयाजिनस्सम्बन्धो न युज्यते-पुरोडाशाभ्यामेवासोम[याजीति।] कुतः? कर्तुः प्रधानभूतत्वात्—स्वर्गकामवाक्यशेषत्वे सति पुरोडाशाभ्यामेव यष्टुः फलावश्यम्भावात् तस्य चोक्तरीत्यानुपपत्तेः। एवञ्च असोमयाज्येव पुरोडाशाभ्यां यजेत, न तु सोमयाजीति न सम्भवति, सोमयाजिनः पुरोडाशाभावे सति समुदितयागसाध्यफलानुपपत्तेः। न च वचनबलाद्विकल्पेन फलसाधनत्वसम्भव इति शङ्क्यम्, वचनस्य वक्ष्यमाणरीत्योपपत्तेः॥

वैश्यस्तोमवैषम्यमाह—

**कृत्स्नत्वात्तु तथा स्तोमे ॥ ३६ ॥**

"वैश्यो वैश्यस्तोमेन" इत्यस्य "वैश्यस्तोमेन स्वर्गकामस्य" इत्यधिकारवाक्यशेषत्वं युज्यते। कुतः? कृत्स्नत्वात्—कृत्स्नो हि वैश्य [स्तोमो वि]-

धीयते। तस्मिन्नेव च कृत्स्ने वैश्योऽधिक्रियते, न तु तदेकदेशे। अतस्तत्र फलभागित्वेन निर्दिश्यते। [ तस्माद् ] दर्शपूर्णमासैकदेशभूतपुरोडाशयागाभ्यां फलं न सम्भवतीति वैषम्यम्। तस्मात् कर्मान्तरविधिः॥

अथ तृतीयपक्षमुद्भाव्य निराचष्टे—

**कर्तुस्स्यादिति चेन्न गुणार्थत्वात् प्राप्ते च नोपदेशार्थः॥ ३७॥**

"यावेतौ" इत्यभेदप्रत्यभिज्ञानविरोधादितरव्यावृत्त्यर्थकैवकारविरोधाच्च न कर्मान्तरविधिः। अतः असोमयाजी पुरोडाशाभ्यां याजयितव्य इति कर्तुरुपदेशोऽयं भवत्विति चेत्तन्न; कुतः? गुणार्थत्वात्—'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्' इत्यधिकरणे 'अन्यो वा स्यात् परिक्रयाम्नानाद्विप्रतिषेधात् प्रत्यगात्मनि' इति यजमानादन्यस्याङ्गानुष्ठानार्थत्वावगमात्। ततश्च पुरोडाशयागयोरप्यनयोरङ्गानुष्ठानकर्तरि यजमानादन्यस्मिन् प्राप्ते सति याजयेदिति विधिः न कर्तुरुपदेशार्थो भवितुमर्हति। न च नात्र परकीय [ कार्यकारि- ] तया याजयितृविधिः, येन वैय्यर्थ्यं स्यात्, किन्तु फलार्थमेव याजनविधिरस्त्विति वाच्यम्, फलाश्रवणात्। न च विश्वजिन्न्यायेन फलकल्पना शङ्क्या, याजयेदिति परस्मैपदेन याजनस्य परार्थत्वनिर्णयात्॥

अथ चतुर्थपक्षमुत्थापयति—

**कर्मणोस्तु प्रकरणे तन्न्यायत्वाद् गुणानां लिङ्गेन कालशास्त्रं स्यात्॥ ३८॥**

तुः पक्षान्तरोन्मेषे। कर्मणोः आग्नेयैन्द्राग्नपुरोडाशयागयोः, प्रकरणे—प्रकर्षेण करणेऽनुष्ठाने "असोमयाजिनम्" इत्येतत् कालशास्त्रं स्यात्—शास्त्रं शासनं सोमयागप्राक्कालविधानं स्यात्। कुतः? गुणानां तन्न्यायत्वात्—पुरोडाशाभ्यामेवेति परिसङ्ख्यानस्य च कर्मभेदस्य च कर्तुश्चेति त्रयाणामपि गुणानां विधेयत्वनिरासस्य चोक्तत्वात्, ते उक्ता न्याया एषाम्, विधेयत्वासम्भवे तत्तन्न्याया उक्ता इत्यर्थः। उक्तरीत्या विधेयान्तरालाभादिति यावत्। ननु सोमयागात् प्रागाग्नेयैन्द्राग्नाभ्यामित्यवचनात् कथं कालविधिलाभ इत्यत आह—लिङ्गेनेति। असोमयाजनमिति विशेषणेन "लोहितवसना ऋत्विजः" इत्यादिवत्, प्राप्ताप्राप्तविवेकेन विशेषणमात्रविधिसम्भवादिति भावः॥

तमिमं कालविधिपक्षं दूषयति—

**यदि तु सान्नाय्यं सोमयाजिनो न ताभ्यां समवायोऽस्ति विभक्तकालत्वात् ॥ ३९ ॥**

यदीत्यव्ययमपि वेत्यर्थे। 'पक्षान्तरे चेद्यदि च' इत्यमरः। तुरेवार्थे सोमयाजिन इत्युत्तरं द्रष्टव्यः। "ऐन्द्राग्नोऽमावास्यायामेकादशकपालो भवति, ऐन्द्रं दध्यमावास्यायाम्, ऐन्द्रं पयोऽमावास्यायाम्" इत्युत्पन्नान्तं व्यवस्था श्रुता "ऐन्द्राग्नोऽमावास्यायामसन्नयतः, सोमयज्येव सन्नयेत्" इति। अतः सोमयाजिन एव सान्नाय्यं भवति। तस्य च ताभ्याम् आग्नेयैन्द्राग्नाभ्यां समवायः—सन्निपातो न भवति। कुतः ? विभक्तकालत्वात्—[ विभि ]न्नकालत्वात्। ततश्च "पुरोडाशाभ्यामेवासोमयाजिनम्" इति नैन्द्राग्नस्य सोमयागप्राक्कालकर्तव्यविधिः, प्राप्तत्वात्। आग्नेयस्यापि यदाग्नेयादि[ वाक्य ]त एव सोमयागप्राक्कालोऽपि प्राप्तत्वान्न विधिः॥

अथ पञ्चमं पक्षमुद्भावयति—

**अपिवा विहितत्वाद् गुणार्थायां पुनः श्रुतौ सन्देहे श्रुतिर्द्विदेवतार्था स्याद्यथानभिप्रेतस्तथाग्नेयो दर्शनादेकदेवते ॥ ४० ॥**

अपि वेति पक्षान्तरे। अविहितत्वादित्यपि छेदः। पुरोडाशाभ्यां सोमयाजिनमिति गुणार्थायाम् गुणविध्यार्थायां श्रुतौ-चोदनायाम् उक्तरीत्या कालविधित्वस्याप्यसम्भवात् को गुणो विधेय इति सन्देहेऽस्ति याजयेदिति पुनः श्रुतिः द्विदेवतार्था असोमयाजिनः पौर्णमास्यामैन्द्राग्नविधानार्था स्यात्। कुतः ? अविहितत्वात्—ऐन्द्राग्नस्य पौर्णमास्यामप्राप्तत्वेन विधानौचित्यात्। आग्नेयस्तु "यदाग्नेयोऽष्टाकपालोऽमावास्यायाञ्च पौर्णमास्याञ्चाच्युतो भवति" इति पर्वद्वयेऽपि सोमयागात्प्रागूर्ध्वञ्च अनभिप्रेतः—अच्युतः साधारण्येन विहितत्वात्। अत आग्नेयस्य असोमयाजिनः पौर्णमास्यां विध्यसम्भवाद् अनुवाद एव। नन्वसोमयाजिनः पौर्णमास्यामैन्द्राग्नविधौ तत्सहोपात्ताग्नेयस्यापिं तथा—एवं विधानं सोमयाजि [ नः परि ] सङ्ख्यार्थं किं न स्यादित्यत्राह—दर्शनादेकदेवत इति। एकशब्दोऽत्र मुख्यत्वे। 'एके मुख्यान्यकेवलाः' इत्यमरः। मुख्याया एव

देवतायै सान्नाय्यं हूयते, न तु स्विष्टकृता सह, एकदेवतः साकंप्रस्थायीयः। तत्र हि सान्नाय्यस्य न स्विष्टकृ [ दिडमिति ] तृतीयस्य पञ्चमे व्यवस्थापितम्— 'साकं प्रस्थायीये स्विष्टकृदिडञ्च तद्वत्' इति। तस्मिन् साकंप्रस्थायीये दर्शस्य गुणविकारे आग्नेयस्य दर्शनमस्ति "आज्यभागाभ्यामाग्नेयेन च पुरोडाशेन प्रचर्याग्नीध्रे स्रुचौ प्रदाय सह सान्नाय्यकुम्भीभिरतिक्रामन्नाह" इत्यादि। तस्मादत्राग्नेयस्यानुवादः। ऐन्द्राग्नस्य त्वसोमयाजिनः पौर्णमास्यां विधिरिति ॥

तमिमं पञ्चमपक्षं दूषयति—

## विधिन्तु बादरायणः ॥ ४१ ॥

तुरेवार्थे। आग्नेयमनूद्यैन्द्राग्नस्य पौर्णमास्यां विधानं बादरायण आचार्यो न मन्यते। याजयेदिति विधिप्रत्यये युगपदाम्नातयोराग्नेयैन्द्राग्नयोः कस्य चिदनुवादः कस्यचिद्विधिरिति वैषम्याश्रयणस्यायुक्तत्वात्, किन्तु असोमयाजिन आग्नेयैन्द्राग्नावनूद्य सान्नाय्येन सोमयाजिनमिति सोमयाजिनस्सान्नाय्यनियमविधिमेवानुमन्यते ॥

नन्वेवं सति 'नासोमयाजी सन्नयेत्' इत्यसोमयाजिनस्सान्नाय्यनिषेधादेव सोमयाजिनस्सान्नाय्यनियमः सिद्धः, अन्यथा "ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायाम्" इति सान्नाय्योत्पत्तिवैय्यर्थ्यात्। अतोऽत्र "सान्नाय्येन तु सोमयाजिनम्" इति किमर्थमिदं विधानमित्यत आह—

## प्रतिषिद्धविज्ञानाद्वा ॥४२॥

क्वचिच्छाखायाम् "नासोमयाजी सन्नयेत्" इत्यसोमयाजिनस्सान्नाय्यं प्रतिषिद्धम्। शाखान्तरे तु "काममसोमयाजी सन्नयेत्" इत्यसोमयाजिनोऽपि विहितम्। ततश्चासोमयाजिनस्सान्नाय्यविकल्पः स्थितः। एवञ्च "ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायाम्" इति सान्नाय्योत्पत्तिस्तद्विषये चरितार्थत्वात् सोमयाजिनो न स्यादिति। तत्रापि सन्नाय्यप्राप्त्यर्थमिह "सान्नाय्येन तु सोमयाजिनम्" इति विधिः। "सोमयाजी समेव नयेत्" इति शाखान्तरीयमपि वचनमेतत्समानार्थकमेव। सन्नयेदेवेत्यर्थः। शाखान्तरत्वाच्च पुनरुक्तिः ॥

## तथाचान्यार्थदर्शनम् ॥४३॥

"चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायाम्" इति विधिशेषवाक्यस्य दर्शनमस्ति। पञ्च प्रयाजाः, त्रयोऽनूयाजाः, द्वावाज्यभागौ आग्नेयोपांशुयाजाग्नीषोमीयानि त्रीणि प्रधानानि, स्विष्टकृदिति च पौर्णमास्यामाहुतयः। दर्शे तूपांशुयाजं वर्जयित्वा त्रयोदशेत्यर्थः। आग्नेयैन्द्राग्नयोः कर्मान्तरत्वे पौर्णमास्यामैन्द्राग्नविधौ च तदिदं विरुध्येत। तस्मादाग्नेयैन्द्राग्नयोरिहानुवाद इत्येव युक्तम् ॥

इति सप्तदशं दर्शपूर्णमासयोराग्नेयैन्द्राग्नयोरनुवादताधिकरणम् ॥१७॥

१८

दर्शपूर्णमासयोः "उपांशुयाजमन्तरा यजति" इत्युपांशुयाजे किं यत्किञ्चिद् द्रव्यम्? उत ध्रौवाज्यम्? इति संशये, पूर्वपक्षयति—

## उपांशुयाजमन्तरा यजतीति हविर्लिङ्गाश्रुतित्वाद्यथाकामी प्रतीयेत ॥४४॥

"उपांशुयाजमन्तरा यजति" इत्युत्पन्ने उपांशुयाजे द्रव्यविषये यथाकामी प्रतीयेत। काममिच्छा तामनतिक्रम्य यथाकामम्। ततस्स्वार्थे ष्यञ्। न स्त्रीत्वं लोकात्। ञित्वात् दीर्घः। यत्किञ्चिद् द्रव्यमिति यावत्। कुतः? हविर्लिङ्गाश्रुतित्वात्-श्रुतीति कर्मणि क्तिच्। हविर्विशेषप्रापकप्रमाणस्याश्रुतत्वादित्यर्थः। "तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्" इति तु पुराकल्पोऽर्थवाद एव। तथा च तत्राज्यस्येत्यनियतप्राप्ताज्यानुवादः। "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्" इति च वैशब्दोपबन्धाद्वर्तमानापदेशाच्चार्थवाद एव ॥

अथ सिद्धान्तयति—

## ध्रौवाद्वा सर्वसंयोगात् ॥४५॥

वाशब्दोऽवधारणे। ध्रौवादाज्यादेवोपांशुयाजः कार्यः। कुतः? सर्वसंयोगात्—"सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्" इति ध्रौवाज्यस्याश्रुतद्रव्यकसर्वकार्यार्थत्वावगमात्। यद्यपि ध्रौवाज्यस्योपांशुयाजार्थत्वं विशिष्या-

नवगतम्, तथापि "चतुर्ध्रुवायां गृह्णाति" इति प्रयोजनविशेषासंयुक्तोत्पन्नध्रौवाज्यमाज्यापेक्षोपस्तरणाभिघारणाज्यभागेष्विवोपांशुयाजेऽपि निवेशं लभते। विस्पष्टतादर्थ्यचतुर्थीमहिम्ना अश्रुतद्रव्यकयागानां द्रव्यापेक्षावशाद् ध्रौवाज्यस्य प्रयोजनापेक्षावशाच्च "सर्वस्मै वा एतद्" इत्यस्य विधित्वेनाश्रिते वैशब्दोऽयमाग्नेयादिवाक्ये यच्छब्दवन्न विधिशक्तिप्रतिबन्धक इति लेडयं कल्पनीयः। तस्माद्ध्रौवाज्यादेवोपांशुयाजः॥

इत्यष्टादशमुपांशुयाजस्य ध्रौवाज्यद्रव्यताधिकरणम्॥ १८॥

१९

उपांशुयाजे किं या काचिद्देवतेत्यनियमः? उतास्ति नियमः? इति संशये, पूर्वपक्षयति—

## तद्वच्च देवतायां स्यात्॥४६॥

पूर्वाधिकरणपूर्वपक्षरीत्योपांशुयाजे द्रव्यवत् देवतायामप्यनियमस्स्यात्। यागस्य हि देवतां विनानुपपत्तेर्देवताविशेषस्य चाश्रवणाद्या काचिद्देवता आक्षेपाल्लभ्यते "तावब्रूताम्" इति तु पुराकल्पोऽर्थवाद एवानियमप्राप्तदेवतानुवादः। "विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्योऽजामित्वाय" इत्येवमेवानियमप्राप्तानुवादः। अतोऽत्र देवतायामनियमः।

अथ सिद्धान्तयति—

## तन्त्रीणां वा प्रकरणात्॥४७॥

वा शब्दोऽवधारणे। दर्शपूर्णमासतन्त्रे विहितानामग्न्यादिदेवतानामन्यतमैव देवतोपांशुयाजे स्यात्। कुतः? प्रकरणात्—प्रकृतत्वात्। यागस्तु देवतामन्तरेण न सम्भवति। या यत्रोद्देश्यतया शब्दविशेषेण विधीयते, सा तस्य देवतेति षष्ठे प्रतिनिधिपेटिकायां स्थितम्। न चैवं सति विधानाद्देवतात्वं देवतात्वे सति विधिरित्यन्योन्याश्रयश्शङ्क्यः। नहि देवतायास्सत्या विधानम्, किन्तु शब्दविशेषेणोद्देश्यतया विहिता या सा देवतात्वं प्रतिपद्यते। अतो द्रव्यवदाक्षेपतो देवतालाभस्यासम्भवाद् विधित एव देवता लभ्या। तत्रोपांशुयाजविधिरेव च

दर्शपूर्णमासतन्त्रमध्यस्थितस्सन्नग्न्यादिदेवताविशिष्टयागविधायकत्वेन कल्प्यत इति न विध्यभावः। एकयैव देवतया कृतार्थत्वादन्यतमैव देवता ॥

इत्येकोनविंशमुपांशुयाजस्य देवतानियमाधिकरणम् ॥ १९ ॥

२०

तदेवमुपांशुयाजे दर्शपूर्णमासतन्त्रगतानामग्न्यादीनामन्यतमा देवतेति स्थितम्। सोऽयमुपांशुयाजः किमुभयोरपि पर्वणोः पौर्णमास्यमावास्ययोर्भवति, प्रजापतिरेव च तत्र देवता? उतोभयपर्वसाधारणे तस्मिन्नग्निरेव देवता? उतामावास्यायामेवोपांशुयाजः, विष्णुरेव च तत्र देवता? किं वा उभयोरपि पर्वणोरुपांशुयाजः, तत्रामावास्यायां विष्णुः, पौर्णमास्यान्तु प्रजापतिरग्नीषोमौ वा? इति, उत पौर्णमास्यामेवोपांशुयाजः, तत्र विष्णुः प्रजापतिरग्नीषोमौ वेति देवता विकल्प्यन्ते? इति संशये, प्रथमपक्षयति—

**धर्माद्वा स्यात् प्रजापतिः ॥४८॥**

वा शब्दस्सम्भावनायाम्। उभयोरपि पर्वणोरुपांशुयाजोऽविशेषात्प्रजापतिरेव च तत्र देवता। कुतः? धर्मात्–"यत् सवितृप्रजापतिभ्यां यज्ञे क्रियते, उपांश्वेव तत् क्रियते" इति प्राजापत्यकर्मण उपांशुप्रयोज्यमन्त्रकत्वलक्षणोपांशुत्वधर्मोऽवगम्यते। उपांशुयाजस्य चास्योपांशुत्वं धर्मोऽस्ति। अतश्च धर्मैक्यादुपांशुयाजः प्राजापत्य इति विज्ञायते ॥

तमिमं प्रथमपक्षं दूषयन् द्वितीयपक्षयति—

**देवतायास्त्वनिर्वचनं तत्र शब्दस्येह मृदुत्वं तस्मादिहाधिकारेण ॥४९॥**

तुशब्दो वैषम्ये इहेत्यनन्तरं द्रष्टव्यः। प्रजापतिदेवतायाः अनिर्वचनम्–वाग्व्यापारनिवृत्तिलक्षणस्तूष्णीम्भावो विधीयते "प्रजापतिं मनसा ध्यायन्नाघारयति न वाचा" इति। तस्य विधेः शेषः—"यत् किञ्चित् प्राजापत्यं यज्ञे क्रियते उपांश्वेव तत् क्रियते" इत्यर्थवादः। स च विधेयं तूष्णीकत्वं स्तोतुं प्रवृत्तः। अतस्तत्रोपांशुपदं तूष्णीकत्वे लाक्षणिकम्। एवञ्च प्रजापत्यस्य तूष्णीकत्वं धर्मः। इह तु उपांशु-

याजे तु, तत्र शब्दस्य-तत्रत्यदेवताया विषये प्रकाशकशब्दस्योच्चारणे मृदुत्वकरणाद् 'न शब्दतः प्रयोग उपांशु' इति प्रातिशाख्यादिसिद्धलक्षणमुपांशुत्वं धर्मः। तस्माद्-धर्मैक्यहेतोर्विरुद्धत्वात् न प्रजापतिनियमः; किन्तु अधिकारेण[मुख्यत्व]हेतुना प्राकरणिकाग्न्यादीनां मध्येऽग्निरेव पर्वद्वयेऽप्युपांशुयाजदेवता स्यात् ॥

अथ तृतीयपक्षयति—

**विष्णुर्वा स्याद्धौत्राम्नानादमावास्याहविश्च स्याद्धौत्रस्य तत्र दर्शनात् ॥५०॥**

वाशब्दः पक्षान्तरे सम्भावनायाम्। उपांशुयाजेऽपि विष्णुर्देवता स्यात्। कुतः ? हौत्राम्नानात्-आग्नेयैन्द्राग्नयाज्यापुरोनुवाक्ययोर्युगलयोरन्तराले हौत्रस्य होतृप्रयोज्यस्य "इदं विष्णुः, प्रतद्विष्णुः" इति याज्यापुरोनुवाक्यायुगलस्य वैष्णवस्याम्नानात्। उपांशुयाजश्च पुरोडाशयोरन्तराले विहितः। ततः स्थानसाम्याद्वैष्णवमिदं मन्त्रद्वयमुपांशुयाजस्य विष्णुदेवत्यत्वमवगमयति। स चोपांशुयाजोऽमावास्याहविस्स्यात्-अमावास्यावर्तिहविष्कस्स्यात्। अमावास्याकालक एव स्यादिति यावत्। कुतः ? हौत्रस्य तत्र दर्शनात्—तत्र तस्याममावास्यायामेव हौत्रस्य होतृप्रयोज्यस्य वैष्णवमन्त्रद्वयस्य दर्शनात्। आग्नेयैन्द्राग्नयाज्यापुरोनुवाक्यायुगलयोरन्तराले हि वैष्णवमिदं मन्त्रद्वयमाम्नातम्। ऐन्द्राग्नश्चामावास्यायामेव भवति, न तु पौर्णमास्याम्, "ऐन्द्राग्न एकादशकपालोऽमावास्यायामसन्नयतः" इति वचनात्। ततश्च वैष्णवमन्त्रद्वययोरमावास्याकालकत्वावगमादविशेषविहितोऽप्युपांशुयाजो मन्त्रवशादमावास्याकालक इति निश्चीयते ॥

तमिमं तृतीयपक्षं सिद्धान्ती निराकुर्वन् पञ्चमपक्षयति—

**अपि वा पौर्णमास्यां स्यात्, प्रधानशब्दसंयोगाद् गुणत्वान्मन्त्रो यथाप्रधानं स्यात् ॥५१॥**

अपि वेत्यवधारणे। पौर्णमास्यामेवोपांशुयाजस्स्यात्, न त्वमावास्यायाम्। कुतः ? "उपांशु पौर्णमास्यां यजन्ति" इति प्रधानस्योपांशुयाजस्य पौर्णमासीशब्दसंयोगात्। यस्तु पुरोनुवाक्यात्मको याज्यात्मकश्च वैष्णवो मन्त्रः, स तावद् अमावस्यायामाग्नेयैन्द्राग्नयाज्यापुरोनुवाक्यायुगलयोर्मध्ये पठितोऽपि यथाप्रधानं

स्यात्-प्रधानानुसारि स्यात्, यत्रोपांशुयाजस्तद्गामी स्यात्। कुतः ? गुणत्वात्-उपांशुयाजं प्रति मन्त्रस्य गुणभूतत्वात्। तस्मात् पौर्णमास्यामेवोपांशुयाजः, न त्वमावास्यायाम् ॥

इतोऽप्येवमित्याह—

**आनन्तर्यञ्च सान्नाय्यस्य पुरोडाशेन दर्शयत्यमावास्याविकारे ॥५२॥**

दर्शगुणविकारे साकम्प्रस्थायीये सान्नाय्यस्य ह्याग्नेयपुरोडाशानन्तर्यं दृश्यते—"आज्यभागाभ्यामाग्नेयेन च पुरोडाशेन प्रचर्याग्नीध्रे स्रुचौ प्रदाय सह सान्न्याय्यकुम्भीभिरतिक्रामन्नाहेन्द्रायानुब्रूहि" इत्यादि। अतो[ना]मावास्याया-मुपांशुयाजः ॥

अथ चतुर्थपक्षी प्रत्यवतिष्ठते—

**अग्नीषोमविधानात्तु पौर्णमास्यामुभयत्र विधीयते ॥५३॥**

तुः प्रत्यवस्थाने। "उपांशुयाजमन्तरा यजत्यजामित्वाय" इत्यविशेषेणो-भयत्रापि पर्वणोरुपांशुयाजो विधीयते। "उपांशु पौर्णमास्यां यजन्" इति तु नोपांशुयाजे पौर्णमासीविधिः, येनामावास्या परिसङ्ख्यायेत। किन्तु पौर्णमास्या-मुपांशुयाजेऽग्नीषोमलक्षणदेवताविधिः। एवं हि श्रूयते—"तावब्रूतामग्नीषोमा-वाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्" इति। अत्र च 'नौ' इत्यग्नीषोमयोर्देवता-त्वमवगतम्। तैत्तिरीयशाखायान्तु "अग्निर्मूर्धा दिवः" "भुवो यज्ञस्य" "प्रजापते न त्वदेतत्" "स वेद पुत्रः" "अग्नीषोमा सदेवसा" "युवमेतानि" इत्येवं पौर्णमासिकाग्नी षोमीयमन्त्रद्वयस्याग्नेयमन्त्रद्वयस्य च मध्ये प्राजापत्ययाज्यापुरोनुवाक्यायुगल-माम्नातम्। अतः पौर्णमास्यामुपांशुयाजेऽग्नीषोमौ प्रजापतिर्वा देवता चतुर्थीमन्त्र-वर्णप्रापितत्वेन विषमशिष्टत्वेऽपि मन्त्रानर्थक्याद्विकल्पः। अमावास्यायामुपांशुयाजे शाखान्तरे "इदं विष्णुः" प्रतद्विष्णुः" इति मन्त्रद्वयादुक्तन्यायेन विष्णुर्देवता ॥

तमिमं चतुर्थपक्षं सिद्धान्ती पञ्चमपक्षी निराचष्टे—

**प्रतिषिध्य विधानाद्वा विष्णुस्समानदेशस्स्यात् ॥५४॥**

वाशब्दोऽवधारणे। विष्णुः अग्नीषोमाभ्यां प्रजापतिना च समानदेशः—समानस्थानक एव स्यात्। पौर्णमास्यामेवोपांशुयाजः। तत्रैव विष्णवादयस्तिस्रो

देवता विकल्प्यन्त इति यावत्। कुतः ? प्रतिषिध्य विधानात्—उपांशुयाजोत्पत्ति-वाक्येऽमावास्यां प्रतिषिध्य–विहाय पौर्णमास्या एव विधानावगमात्। पौर्णमासी-विधानेनामावस्यायाः परिसङ्ख्यावगमादिति यावत्। "तावब्रूतामग्नीषोमा-वाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्" इति प्रकृत्याभिसमाम्नायते—"जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजत्यजामित्वाय" इति। तत्रैवेदं वचनम्—"विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्योऽजामित्वाय" इति। अतः पौर्णमास्या-मेवोपांशुयाजः। तत्रैव विष्ण्वादयस्तिस्रो देवता विकल्प्यन्त इति गम्यत इति भाष्यम्। अयमाशयः—'नौ' इत्यस्य षष्ठ्यादिसाधारणत्वाद् देवताविधिर्नेति गम्यते, कालविध्यनुगुणसप्तमीश्रवणात् कालविधिरेव झटिति गम्यते, मन्त्रवर्णत एव देवताप्राप्त्या तद्विध्यानर्थक्याच्च। कालस्तु पुरोडाशान्तरालक्षणः पौर्ण-मास्यमावास्यासाधारण्येनैव प्राप्त इति तद्व्यावृत्त्यर्थतया कालविधिरर्थवान्। यद्यपि "उपांशु याजमन्तरा यजति" इत्युत्पत्तिविधौ पौर्णमासीशब्दो नास्ति, तथाप्युपक्रमे वाक्यशेषश्रुतपौर्णमासीशब्दानुसारेण विधौ श्रुतान्तराल-शब्दस्य पौर्णमासीपरत्वमवधार्यते। न च मन्त्रवर्णतः कालद्वयसाधारण्येन प्राप्तयोरग्नीषोमयोः पौर्णमासीकालविधिः किं न स्यादिति वाच्यम्, अग्नीषोम-देवताविशिष्टोपांशुयाजानुवादेन पौर्णमासीकालविधौ विशिष्टानुवाददोषप्रसङ्गात्। ततश्च पौर्णमासीकालकोपांशुयाजेन भावयेदित्येवोपांशुयाजोत्पत्तिः फलति। अग्नी-षोमग्रहणन्तु मान्त्रवर्णिकदेवतानामुपलक्षणम्। किञ्च यद्यत्र पौर्णमासीसंयुक्तो-पांशुयाजस्योत्पत्तिविधिर्न स्यात् पौर्णमासीकालकोपांशुयाजेऽग्नीषोमदेवताविधि-रेव स्यात्, तर्हि "य एवं विद्वान् पौर्णमासीं यजते" इति विद्वद्वाक्येन तस्य परिग्रहो न स्यात्, तत्र पौर्णमासीकालसंयुक्तोत्पन्नानामेव ग्रहणात्। ततश्च "दर्श-पूर्णमासाभ्यां स्वर्गकामः" इत्यधिकारवाक्ये पूर्णमासपदेन उपांशुयाजस्य फलसम्बन्धो न सिध्येत्, विद्वद्वाक्योपात्तस्यैवाधिकारवाक्ये ग्रहणात्। एवञ्च प्राधान्यमुपांशुयाजस्य न स्यात्, आज्यभागादिवदङ्गतैव स्यात्। तस्मात्पौर्ण-मास्यामेवोपांशुयाजः। तत्रैव विष्ण्वादयस्तिस्रो देवता विकल्प्यन्ते ॥

उक्तोऽर्थः श्रुतिसम्मत इत्याह—

**तथा चान्यार्थदर्शनम् ॥५५॥**

पौर्णमास्यामेवोपांशुयाज इत्यत्र यथा न्यायस्साधकः, तथैव "चतुर्दश पौर्णमास्यामाहुतयो ह्रूयन्ते त्रयोदशामावास्यायाम्" इत्यन्यार्थे वाक्यशेषेऽमावास्यायामाहुतित्रयोदशत्वदर्शनमपि तस्य साधकम्—पञ्च प्रयाजाः, द्वावाज्यभागौ, आग्नेयोपांशुयाजाग्नीषोमीयाणि त्रीणि प्रधानानि, स्विष्टकृत् त्रयोऽनूयाजा इति पौर्णमास्याम् चतुर्दशाहुतयः। अमावास्यायान्तु आग्नेयाहुतिस्सान्नाय्याहुतिश्चेति द्वे प्रधानाहुती, प्रयाजादय इति त्रयोदशेति तदर्थः। अमावास्यायामप्युपांशुयाजसत्वे तु तत्रापि प्रधानाहुतयस्तिस्रः प्रयाजादयश्चैकादशेति चतुर्दशैवाहुतयस्स्युः। तथा सति "त्रयोदशामावास्यायाम्" इत्यनुपपन्नं स्यात्। अतोऽपि नामावास्यायामुपांशुयाजः ॥

इतोऽप्येवमित्याह—

**न चानङ्गं सकृच्छ्रुतावुभयत्र विधीयेतासम्बन्धात् ॥५६॥**

"उपांशुयाजमन्तरा यजति" इति सकृच्छ्रुतावुभयत्र—उभयोः पर्वणोरुपांशुयाजो न विधानमर्हति। ननु सकृच्छ्रुतमपि प्रयाजादिकं यथोभयोः पर्वणो र्भवति, तथोपांशुयाजोऽप्युभयत्र प्रवर्त्ततामित्यत आह—अनङ्गमिति। नाङ्गमुपांशुयाजः, किन्तु प्रधानम्। प्रयाजादिकं चाङ्गमुभयोरपि पर्वणोः प्रवृत्तिमर्हति। "पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायाममवास्यया यजेत" इति वचनेनोभयोस्त्रिकयोः पर्वद्वयसम्बन्धावगमात्। उपांशुयाजस्य तु सकृच्छ्रुतस्य पर्वद्वयसम्बन्धो[न]केनचित् प्रमाणेनावगतः। अतोऽपि नोभयत्रोपांशुयाजः, किन्तु पौर्णमास्यामेव। यद्यपि कौषीतकब्राह्मणे "अग्निं प्रथमं देवतानां यजति, अथ पौर्णमास्यामग्नीषोमौ यजति तौ वा उपांश्वनिरुक्तौ भवतः" इत्युक्त्वा "अमावास्यायामिन्द्राग्नी यजति" "सन्नयन्नमावास्यायामिन्द्रं यजति, असन्नयन् पुरोडाशावन्तरेणोपांश्वाज्यस्य यजति, (?) असन्नयन् सान्नाय्यस्यान्तरेणोपांश्वाज्यस्य यजति" इति श्रुतम्, तथापि शाखान्तरविषयेऽधिकरणप्रवृत्तिः ॥

इति विंशमुपांशुयाजस्य पौर्णमास्यामनुष्ठेयताधिकरणम् ॥ २० ॥

२१

तदेवं पौर्णमास्यामेवोपांशुयाज इति स्थितम्। तत्र सोमादूर्ध्वं पौर्णमास्यामाग्नेयोऽग्नीषोमीयश्चेति द्वौ पुरोडाशौ, प्राक्तु सोमादग्नेय एवैकः पुरोडाशः, न त्वग्नीषोमीयः, "आग्नेयो वै ब्राह्मणो देवतया स सोमेनेष्ट्वाग्नीषोमीयो भवति" इति वचनादिति स्थितिः। तत्र सोमात् प्रागेकपुरोडाशायां पौर्णमास्यामुपांशुयाजोऽस्ति न वेति संशये, नेति पूर्वपक्षयति—

**द्विपुरोडाशायां स्यादन्तरार्थत्वात् ॥५७॥**

सोमादूर्ध्वं द्विपुरोडाशायामेव पौर्णमास्यामुपांशुयाजस्स्यात्, न सोमात् प्रागेकपुरोडाशायाम्। कुतः? अन्तरार्थत्वात्—पुरोडाशयागयोरन्तरालकालस्यैव "उपांशुयाजमन्तरा यजति" इत्यन्तराशब्दार्थत्वात्। "जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ" इत्युपक्रमे पुरोडाशयोः श्रुतत्वाद् एकपुरोडाशायाञ्च पुरोडाशद्वयान्तरालाभावात् ॥

इतोऽप्येवमित्याह—

**अजामिकरणार्थत्वाच्च ॥५८॥**

"जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजत्यजामित्वाय" इति श्रुतम्। अन्वञ्चाविति अव्यवहिताविर्थः। लोके हि मधुरपदार्थानामव्यवधानेन भक्षणावृत्तौ उत्तरोत्तरभक्षणे प्रवृत्तिमान्द्यं दृश्यते। तन्निवृत्तये च तदन्तराले तद्विजातीयकटूवाम्लादिरसान्तरसेवा दृश्यते, तद्वत् पुरोडाशयागयोरव्यवधानेन प्रयोगे जामिता स्यादिति तन्निवृत्तर्थ[माज्य] द्रव्यकोपांशुयाजस्तदन्तराले कर्तव्य इत्यवगतम्। एकपुरोडाशायान्तु जामितादोषस्यैवाप्रसक्तेस्तन्निवृत्यर्थं उपांशुयाजो न कर्तव्यः ॥

तमिमं पूर्वपक्षमनूद्य सिद्धान्ती निराचष्टे—

**तदर्थमिति चेन्न तत्प्रधानत्वात् ॥५९॥**

पुरोडाशद्वयान्तरालं तदर्थम्-उपांशुयाजार्थम् उपांशुयाजगुण इति यावत्। तस्य च गुणस्यैकपुरोडाशायामभावान्न तत्रोपांशुयाज इति चेन्मन्यसे तन्न युक्तम्;

कुतः ? तत्प्रधानत्वात्—"तावब्रूतां पौर्णमास्यां यजन्" इति विहितां पौर्णमासीं प्रत्येवोपांशुयाजस्य प्रधानत्वात् ॥

पौर्णमास्या एवोपांशुयाजगुणत्वम्, न तु पुरोडाशान्तरालस्येति यत् तत्कुत इत्यत आह—

**अशिष्टेन चासम्बन्धात् ॥६०॥**

अशिष्टेन—अविहितेन अन्तरालकालेनोपांशुयाजस्य गुणगुणिभावेन सम्बन्धानुपपत्तेरित्यर्थः। अन्तरालकालस्योपांशुयाजे गुणतया विध्यभावादिति यावत्। एवञ्चासत्यपि पुरोडाशद्वयान्तराले पौर्णमास्यामेकपुरोडाशायामपि भवतूपांशुयाजः ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**उत्पत्तेस्तु निवेशस्स्याद् गुणस्यानुपरोधेनार्थस्य विद्यमानत्वाद् विधानादन्तरार्थस्य नैमित्तिकत्वात्तदभावे श्रुतौ स्यात् ॥६१॥**

तुरेवार्थे। द्विपुरोडाशायामेवोपांशुयाजस्य निवेशस्स्यात्, न त्वेकपुरोडाशायाम्। कुतः ? नैमित्तिकत्वाद् उपांशुयाजस्य। पुरोडाशान्तरालकाललक्षणपरतन्त्रत्वादित्यर्थः। नन्वन्तरालकालस्याविहितत्वात्, कथमुपांशुयाज-[विधिस्स्यादित्यत्राह—] उत्पत्तेर्विधानादन्तरार्थस्येति। अन्तराशब्दार्थस्य पुरोडाशद्वयान्तरालकालः "उपांशुयाजमन्तरा यजति" इत्युत्पत्तिवाक्यत एव विधानादित्यर्थः। ततश्चैकपुरोडाशायां पौर्णमास्यां तदभावे-पुरोडाशद्वयान्तरालकालाभावे सति न भवत्युपांशुयाजः। नन्वेवं सत्युपांशुयाजविधेः[कथं]प्रवृत्तिरित्यत आह—श्रुतावर्थस्य विद्यमानत्वादिति। सोमयाजिनः पौर्णमास्यामग्नेयाग्नीषोमीयपुरोडाशयोः श्रवणे सति तत्रान्तराशब्दार्थस्य पुरोडाशद्वयान्तरालकालस्य विद्यमानत्वात् तत्रोपांशुयाजप्रवृत्तिरित्यर्थः। तस्मान्नास्त्येकपुरोडाशायामुपांशुयाज इति ॥

तमिमं पूर्वपक्षं सिद्धान्त्येकदेशी निराचष्टे—

**उभयोस्तु विधानात् ॥६२॥**

नैकपुरोडाशायामेव पौर्णमास्यामुपांशुयाजः किन्त्वेकपुरोडाशायां द्विपुरोडाशायाञ्चेत्युभयत्रापि भवति। कुतः? विधानात्—"उपांशु पौर्णमास्यां यजन्" इत्यविशेषश्रवणादित्यर्थः ॥

ननु [तर्ह्य]न्तरालविधिर्व्यर्थ इत्यत आह—

**गुणानाञ्च परार्थत्वादुपवेषवद्यदेति स्यात् ॥६४॥**

यदा पौर्णमास्यां द्विपुरोडाशस्तदा पुरोडाशद्वयान्तराले उपांशुयाज इत्येवमन्तरालविधिरर्थवान् भविष्यति। ननु "पौर्णमास्यां यजन्" इत्येतदप्यन्तरालवाक्यानुसाराद् द्विपुरोडाशपौर्णमासीविषयमेव किं न स्यादित्यत्राह—गुणानामिति। पौर्णमासी चान्तरालकालश्चोपांशुयाजं प्रति गुणौ। तयोश्च परस्परं सम्बन्धो न भवति, पौर्णमास्यवयवे पुरोडाशान्तरालकाले उपांशुयाज इति। 'गुणानाञ्च परार्थत्वादसम्बन्धः' इति न्यायादित्यर्थः। ततश्चैकपुरोडाशायां द्विपुरोडाशायाञ्च पौर्णमास्यामुपांशुयाजो भवति। तत्रैकपुरोडाशायामाग्नेयपुरोडाशतः प्रागूर्ध्वं वेत्यनियमः। द्विपुरोडाशायान्तु तदन्तरालकाल एवेत्येवमन्तरालविधिर्नेयः, उपवेषवत्। यथा "मूलतश्शाखां परिवास्योपवेषं करोति" इति सान्नाय्यार्थशाखानुनिष्पन्न उपवेषः "उपवेषेण कपालान्युपदधाति" इति दार्शिक एव कपालोपधाने विनियुज्यते, न तु पौर्णमासिके, तद्वत्।

वस्तुतस्तु नायं सिद्धान्तः। न हि "उपांशुयाजमन्तरा यजति" इति "पौर्णमास्यां यजन्" इति द्वौ विधी। एकद्विपुरोडाशायां पौर्णमास्यामन्तरालनियमः, इतरस्यान्तु तदनियम इति स्यात्। किन्तु "तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्" इति पुराकल्पार्थवादोऽयमुपांशुयाजविध्युपक्रमे स्थितः। ततश्चोपक्रमश्रुतपौर्णमासीशब्दानुसाराद् "उपांशुयाजमन्तरा यजति" इत्यन्तराशब्द उपक्रमाधिकरणन्यायेन पौर्णमास्यवयवे पुरोडाशद्वयान्तरालकाले पर्यवसानं लभते। एवञ्च पौर्णमास्यवयवस्य पुरोडाशद्वयान्तरालकालात्मकगुणस्योत्पत्तिशिष्टत्वाद्यत्रायं गुणो द्विपुरोडाशायाम्, तत्रैवायमुपांशुयाजः प्रवृत्तिमर्हति, न त्वेकपुरोडाशायाम्। न चोत्पत्तिशिष्टस्यापि पुरोडाशद्वयान्तरालस्य गुणस्य विशेष [ णत्वात्त ] दनुसारेण प्रधानस्योपांशुयाजस्य न सङ्कोचो युक्त इति

वाच्यम् , पुरोडाशद्वयान्तरालकालो हि नोपांशुविध्युपादेयः, पुरोडाशद्वयस्यान्यार्थतया तद्विधिप्रयोज्यत्वाभावेन तदन्तरालस्यापि तत्प्रयोज्यत्वानुपपत्तेः। ततश्च पुरोडाशद्वयान्तरालानुसारेण द्विपुरोडाशायामेव प्रधानस्योपांशुयाजस्य विधिरित्येकपुरोडाशायां विध्यभावान्न तदनुष्ठानप्रसक्तिः। अतः पुरोडाशद्वयान्तरालकालस्योपांशुयाजगुणत्वमभ्युपगम्य कथमेवं सिद्धान्तः प्रवर्तितः। तथा—उपवेषवदिति दृष्टान्तोऽप्यसिद्धः। पौर्णमास्यां सान्नाय्यार्थशाखाभावेऽपि "उपवेषोऽसि" इति मन्त्रेण वृक्षान्तरत उपवेषकरणस्य कपालोपधानाय चतुर्थस्य द्वितीये 'शाखायां तत्प्रधानत्वात्' इत्यत्राभ्युपगमात् 'सान्नाय्ये शाखासंयोगादुपधानाद्वोभयोः' इति पौर्णमास्यां कपालोपधानार्थमुपवेषोत्पादनस्य सिद्धान्तितत्वाच्च। अतोऽयमपसिद्धान्त एव। एतदेवाभिप्रेत्योक्तं शास्त्रदीपिकायाम्—'सिद्धान्तैकदेशी त्वाह' इति॥

अथान्तरालस्यागुणत्वेन विधानमनभ्युपगच्छन् पारमार्थिकं सिद्धान्तमाह—

## अनपायश्च कालस्य लक्षणं हि पुरोडाशौ ॥६५॥

पुरोडाशद्वयविशेषकस्तदन्तरालकाल उपांशुयाजस्य न गुणः, तथा सति पुरोडाशयोरपि तद्गुणत्वापत्तेः। न ह्यन्यार्थयोः पुरोडाशयोरुपांशुयाजे गुणत्वं सम्भवति। अतः पुरोडाशौ केवलमुपांशुयाजकालोपलक्षणतया उपादीयते-योऽयं कालः पुरोडाशयोरन्तरालताङ्गतः, तस्मिन् काले उपांशुयाज इति तदुपलक्षितकाल एव गुणः। स च कदाचिदुपलक्षणापायेऽप्यनपेत इत्येकपुरोडाशायामपि [ स्यात् ]। यथा शङ्खवेलायामागन्तव्यमित्युक्ते दैवादकृतेऽपि कदाचित् शङ्खध्वनौ तदुपलक्षितकालस्यानपायात्तदाप्यागम्यते तद्वत्॥

अथ यदुक्तमजामिकरणार्थत्वादिति तत्राह—

## प्रशंसार्थमजामित्वम् ॥६६॥

न तावदुपांशुयाजस्याजामित्वं फलम्, "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति तस्य फलान्तरार्थत्वावधारणात्। तत्र पूर्णमासशब्देन कालसंयुक्तोत्पन्नयागानां ग्रहणाद् अस्य चातथात्वात्। अतः "अजामित्वाय" इत्युपांशुयाजः प्रशस्यते। सा च प्रशंसा कदाचिद् अजामित्वमादायापि सम्भवति, अत एकपुरोडाशायामपि स्यादेवोपांशुयाजः॥

तदेवं लुप्तार्थं विकृतिषु निषिद्धं यदपि वा
तथा प्रत्याम्नातं त्रिविधमिह बाध्यं व्यवसितम् ।
अतस्त्वन्यस्याभ्युच्चयविधिरियत्तैवमुदिता -
प्रयोगेयत्तायास्तततउपरि चिन्तां प्रकुरुते ॥

इत्येकविंशमेकपुरोडाशायां पौर्णमास्यामुपांशुयाजास्तित्वाधिकरणम् ॥२१॥

इति श्रीमत्सन्ततसन्तन्यमानश्येनकूर्म-षोडशाररथचक्राकाराद्यनेकगुणविराजमानमहाग्निविलसितप्रौढापरिमितमहाध्वरस्य श्रीशाहजि-शरभजि-तुक्कोजि-भोसल-चोलमहीमहेन्द्रामात्यधुरन्धरस्य श्रीमत आनन्दराय-विद्वत्सार्वभौमस्य पञ्चपुरुषीपोष्येण तदध्वर्युणा बाल्य एव तद्दया-निर्वर्तितापरिमितमहाग्निविजृम्भितवाजपेयसर्वपृष्ठाप्तोर्यामा-दिवरिष्ठसोममखसन्तर्पितशतमखप्रमुखबर्हिर्मुखेन श्रीमहा-देववाजपेययाजिसुतेन अन्नपूर्णागर्भजातेनापारपदवाक्य-प्रमाणपारावारपारीणाग्रजन्मविश्वेश्वरवाजपेययाजितो लब्धविद्यावैशद्येन वासुदेवदीक्षितविदुषा विरचितायां जैमिनिसूत्रव्याख्यायाम् अध्वर मीमांसाकुतूहलवृत्तौ दशमाध्यायस्याष्टमः पादः

समाप्तश्चाध्यायः ॥

॥ श्रीः ॥

अध्वरमीमांसा-

# कुतूहलवृत्तौ

## एकादशाध्यायस्य प्रथमः पादः

निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

दशमाध्याये बाधविचारो वृत्तः । एकादशाध्याये तन्त्रावापविचारः प्रस्तूयते ।

[1]यत्सकृत्कृतं बहूनामुपकरोति तत्तन्त्रम् । यथा बहूनां ब्राह्मणानां मध्ये कृतः प्रदीपः । यस्त्वावृत्त्या बहूनामुपकरोति स आवापः । यथा बहूनां ब्राह्मणानामनुलेपनादि । तदिहैकप्रयोगवचनचोदितानामेकफलानां संहत्यकारिणां बहूनां प्रधानानां किमङ्गानुष्ठानं तन्त्रेण भवति ? उतावृत्त्या ? इति विचारयिष्यते । तत्रोपोद्घातत्वेन संहत्यकारित्वं प्रतिपाद्यते—दर्शपूर्णमासयोराग्नेयादीनां षण्णामपि परस्परानपेक्षयैव स्वर्गसाधनत्वे हि तेषां कामिनः कर्तव्यत्वेन युगपदुपस्थित्यभावात् पृथक्पृथगेव स्वाङ्गसंयुक्ततया कर्तव्यता स्यादिति तन्त्रत्वं न सिद्ध्येत् । अतस्संहत्यकारित्वमादौ चिन्त्यते । सन्ति दर्शपूर्णमासयोराग्नेयादीनि षट्प्रधानानि । तेषां स्वर्गः फलं श्रूयते—"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति । तत्र किमाग्नेयादीनि प्रधानानि पृथक्-पृथक् स्वर्गं साधयन्ति ? उत संहत्य ? इति संशयः । पृथगेवेति ब्रूमः । आग्नेयादीनि प्रधानानि परस्परानपेक्षाभिश्चो-

---

१. यत्सकृत्सकृत्कृतं—क० ख० ।

दनाभिः पृथग्भूतान्येवोत्पन्नानि पृथगेव फलमाकाङ्क्षन्ति। [1]तत्र श्रूयमाणं फलं भेदनाकाङ्क्षितत्वाद् भेदेनैव सम्बध्यते। अतः प्रतिप्रधानं फलभेद इति प्राप्ते, सिद्धान्तयति—

**प्रयोजनाभिसम्बन्धात् पृथक् सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् ॥ १ ॥**

पृथक् सतां—पृथगुत्पन्नानामप्याग्नेयादीनां प्रधानानाम्, ततः-फलवाक्यादैककर्म्यम्—एकफलत्वं स्याद्—अवगतं भवेत्। क्रियत इति कर्म फलम्। एकं कर्म येषां तानि एककर्माणि। तेषां[2] भाव ऐककर्म्यम्, एकफलत्वमित्यर्थः। कुत एतत्? प्रयोजनाभिसम्बन्धात्-प्रयोजनं फलम्, तेन प्रधानानामभिसम्बन्धात्-संहत्यैव संयोगात्। ननु पृथगुत्पन्नानां पृथक् फलाकाङ्क्षत्वात् कथं समुदितानामेव फलसंयोगः? तत्राह—एकशब्दाभिसंयोगादिति। आग्नेयादीनां हि षण्णां समुदितानां प्रधानानामेको दर्शपूर्णमासशब्दो वाचकः। तेन च शब्देनात्र फलसम्बन्धः। अतो "दर्शपूर्णमासाभ्यां स्वर्गकामः" इति वाक्यम्।

ननु दर्शशब्दः पूर्णमासशब्दश्च प्रत्येकं त्रिकसमुदायवचनः। समुदायिवचनत्वे हि दर्शपूर्णमासाभ्यामिति द्विवचनानुपपत्तिः, बहुवचनापत्तिश्च। तथा च द्वयोः समुदाययोः फलसाधनत्वं स्यात्, न तु षण्णां समुदितानां प्रधानानाम्। किञ्च षण्णां प्रधानानां समुदितानामेकश्शब्दो वाचक इत्यप्यसङ्गतम्। [3]प्रत्येकत्रिकसमुदायवचनयोर्दर्शपूर्णमासशब्दयोर्द्वित्वादिति, नैष दोषः; दर्शपूर्णमासाभ्यामिति हीतरेतरयोगद्वन्द्वसमास एकश्शब्दः। मिलितानामेकक्रियान्वयित्वमितरेतरयोगः। तथा च दर्शपूर्णमासशब्दवाच्ययोः समुदाययोरेकफलान्वयित्वेऽवगते प्रधानषट्कस्यैकफलसाधनत्वमर्थात्सिध्यति। तदेतदभिप्रेत्योक्तं शास्त्रदिपिकायाम्—'द्वित्वावगतं दर्शशब्देन त्रिकस्य पूर्णमासशब्देन च त्रिकस्य तन्त्राभिधानावगतं साहित्यं मा बाधि' इत्यादि। ननु समुदायो न द्रव्यम्, न देवता, न क्रिया।

---

१. ततश्च० ग०

२. एतेषां० क०

३. प्रत्येकं—क०

किं तर्हि ? गुणोऽसौ । तस्य कथं क्रियारूपेण यागेन सामानाधिकरण्यं स्याद्दर्शपूर्णमासयाग इति ? ततश्च समुदायिवचनयजिसामानाधिकरण्याद्दर्शपूर्णमासशब्दः समुदायिवचन एवास्थेयः। तत्र दर्शशब्दः पूर्णमासशब्दश्च यागानामेव प्रत्येकं नामधेयम् । दर्शपूर्णमासत्वाभिप्रायमेकवचनम् । अतो[न]द्विवचनानुपपत्तिः । ततश्च कथं समुदायस्य फलसाधनत्वं स्यादित्याशङ्क्य 'एकशब्दाभिसंयोगात्' इत्येतदन्यथाव्याख्यातं वार्तिके। यथा भावयेत् , किम् ? स्वर्गम् , केन ? यागेन, कतरेण ? दर्शपूर्णमाससंज्ञकेनेत्येवमेकेनाख्यातशब्देन नामसामानाधिकरण्यलब्धविशेषावस्थेन तन्त्राभिहितानां फलेनैकेनाभिसंयोगादिति । अयमाशयः--"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यत्र यजेतेत्येक आख्यातशब्दः श्रुतः । तथा यजिरप्येकः श्रुतः । तेन च यजिना प्रकरणानुगृहीतेन विनिगमनाविरहात् षडपि प्रधानानि तन्त्रेण युगपदभिधीयन्ते । ततश्च षण्णामपि प्रधानानां संहतानां युगपदेव भावनायामन्वयः, न तु प्रत्येकशः । तथा सत्याग्नेयेन भावयेदुपांशुयाजेन भावयेदित्येवं षोढा वाक्यभेदः प्रसज्येत, तन्त्राभिधानमपि बाध्येत । सकृच्छ्रुतस्य शब्दस्य युगपदनेकार्थाभिधायकत्वमेव हि तन्त्राभिधानं नाम । न चैतत्क्रमिकबोधे युज्यते, ततश्च तन्त्राभिधानतः साहित्यावगमात् समुदितानामेव फलसाधनत्वमिति तन्त्राभिधानतश्च साहित्येऽवगते सति ग्रामकूपन्यायेन समुदितानामेव फलसम्बन्धः । ग्रामेण कूपः खेय[1] इत्युक्ते हि ग्रामशब्दसंयोगेन श्रुतः कूपो ग्रामशब्दस्य जनसमुदायवाचित्वात् समुदितैः पुरुषैरेक एव खन्यत इति गम्यते, एवमिहापि ।

ननु समुदायशब्देन विधीयमानकार्यस्य प्रत्येकमपि सम्बन्धो दृश्यते । तद्यथा गणाय माल्यं दीयतां गणायानुलेपनं दीयतामित्यादौ । नं ह्यत्र समुदितानां माल्यादीनां सम्बन्धोऽस्ति, असम्भवात् , किन्तु प्रत्येकशः । तद्वदिहापि प्रत्येकमपि फलसम्बन्धस्यादिति शङ्कते—

**शेषवद्वा प्रयोजनं प्रतिकर्म विभज्येत ॥ २ ॥**

वाशब्दश्शङ्कायाम् । शिष्यते संस्क्रियतेऽनेनेति शेषः, गन्धमाल्यादि[2] । तद्यथा प्रतिसंस्कारं भिद्यते तद्वत् प्रतिकर्म प्रतिप्रधानं प्रयोजनं स्वर्गादिफलं विभज्येत पृथक्सम्बन्ध्येत ॥

---

१. पेयः–ग०
२. मालादि क०

परिहरति—

## अविधानात्तु नैवं स्यात् ॥ ३ ॥

तुशब्दश्शङ्काव्यावृत्तौ। प्रतिप्रधानं फलभेद इत्येतन्न भवति। कुतः ? अविधानात् फलस्येति शेषः। न ह्यत्र यागोद्देशेन फलविधिः, दर्शपूर्णमाससंज्ञितैः[1] समुदितैर्यागैरिष्टं भावयेदिति यत्, स स्वर्ग इति, येन यागानामुद्देश्यत्वात्तद्गतस्य साहित्यस्याविवक्षितत्वात् पृथक्फलसम्बन्धः स्यात्। नैवमस्ति। यदि हि स्यात्तर्ह्याग्नेयेन यत्कुर्यात् स स्वर्गः, उपांशुयाजेन यत्कुर्यात् स स्वर्ग इत्येवं षोढा वाक्यभेदप्रसङ्गस्स्यात्। किन्तर्हि ? स्वर्गं कुर्यादिति यत् तद्यागैर्दर्शपूर्णमाससंज्ञकैः समुदितैरित्येवं फलोद्देशेन यागविधिः। ततश्चोपादेयभूतयागगतस्य साहित्यस्य विवक्षितत्वात् सहितानामेव प्रधानानां फलसाधनत्वम्।

ननु यदि यागा विधीयन्ते, तर्हि दर्शपूर्णमासविशेषणस्य न यागेष्वन्वयः स्यात्, कारकाणां भावनान्वयस्य नियतत्वेन परस्परं सम्बन्धायोगात् भावनान्वये च सति यागैर्भावयेत्, दर्शपूर्णमासाभ्यां भावयेदिति भवेद्वाक्यभेद इति। सत्यम्; भावनायामेव दर्शपूर्णमासाभ्यामित्यस्यान्वयः। यागेषु तदन्वयस्त्वरुणैक हायनीवदार्थः ()।

नन्वेवमपि दर्शपूर्णमासाभ्यामिति व्यर्थम्, यजेतेत्यनेनैव साहित्यप्रतीतेरुक्तत्वात्, प्रकरणबलादेव यागान्तरव्यवच्छेदसिद्धेश्चेति चेत्—तन्न; प्रकरणाविशेषेण प्रयाजादियागानामपि यजेतेत्यनेन प्रधानवदभिधाने सति तेषामपि फलसम्बन्धापत्तेः। तदेवं यजेतेति तन्त्राभिधानावगतसाहित्यस्योपादेययागगतस्य विवक्षितत्वात् समुदितानामेव प्रधानानां फलसाधनत्वमिति दिक्॥

यदुक्तं शेषवद्वा प्रयोजनमित्यादि तत्राह—

## शेषस्य हि परार्थत्वाद्विधानात् प्रतिप्रधानभावः स्यात् ॥ ४ ॥

शेषस्य गन्धमाल्यादिसंस्कारकद्रव्यस्य प्रतिप्रधानं प्रतिसंस्कार्यं भावोऽन्वयः स्यात्। कुतः ? परार्थत्वाद्विधानात्-पुरुषार्थतयाविधानात्। एवञ्च दानस्य दृष्टार्थता भवति। समुदायसम्बन्धे ह्यदृष्टार्थता स्यात्। न हि शतसहस्रादिसङ्ख्याकपुरुष-

---

१. संज्ञकैः ग०

समुदाये एकमाल्यादिदानतो दृष्टं किञ्चित्प्रयोजनमस्ति। अतस्तत्र गणशब्दो गणान्तर्गतान् पुरुषान् लक्षयतीति युक्तम्। तस्मादनुलेपनादि प्रतिप्रधानं भिद्यते। आग्नेयादीनान्तु प्रधानानां समुदितानामेकफलसाधकत्वमिति स्थितम्।

अत्रेदं वक्तव्यम्—अस्तु समुदितानां प्रधानानामेकफलसाधनत्वं तत्र, यत्र प्रधानानि यजेतेत्येकेनाख्यातशब्देन तन्त्रेणाभिधीयन्ते, यथा "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "चित्रया यजेत पशुकामः" "मित्रविन्दया श्रीकामो यजेत" इत्यादौ। यत्र तु प्रधानानां तन्त्रेणाभिधायको यजेतेत्याख्यातशब्दो न विद्यते, यथा—"अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं पशुकामः" "दधि मधु घृतमापो धाना भवन्ति" "पञ्चगृहीतं भवति" "प्राजापत्यं भवति" इत्यादौ तत्र सर्वत्र प्रत्येकमेव प्रधानानां फलसाधनत्वं स्यात्, न तु समुदितानाम्। न चेष्टापत्तिः; तथा सति द्वादशे 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् स्वधर्मत्वम्' इत्यधिकरणे वार्तिकादौ "अग्नये दात्रे" इत्यादिवाक्यमुदाहृत्य तत्र किं पूर्णमासतन्त्रता ? उत दर्शतन्त्रता ? इत्येवं करिष्यमाणस्य विचारस्यानुन्मेषप्रसङ्गात्, प्रत्येकमेव प्रधानानां तत्र फलसम्बन्धात् सम्भूयैकफलकारिणामेव हि प्रधानानामेकतन्त्रत्वम्, इतरेषान्तु भिन्नतन्त्रत्वमित्यनुपदमेव व्यवस्थापयिष्यते। अतः प्रधानानां सम्भूयफलकारित्वे यजेतेत्यख्यातशब्देन तन्त्राभिहितानां प्रधानानां फलसंयोगादित्येवंपरतया 'एकशब्दाभिसंयोगात्' इति सूत्रस्य वार्तिककारकृतं व्याख्यानमप्यसङ्गतमेव॥

अतोऽन्यथा वयं व्याख्यास्यामः—"दर्शपूर्णमासाभ्याम्" इति फलवाक्ये स्वर्गकामशब्दस्तावदेकः श्रुतः। तेन शब्देन समुदितानां [1]प्रधानानां फलसंयोगादिति। यदि हि प्रत्येकमेव फलसम्बन्धः स्यात्, तर्हि आग्नेयेन स्वर्गकामो यजेत, उपांशुयाजेन स्वर्गकामो यजेत, इत्येवं षोढा वाक्यभेदः प्रसज्येत। न च "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादौ यजेतेत्याख्यातशब्दात्तन्त्राभिधायकात् साहित्यप्रतीतावप्यग्नये दात्र [2]इत्याद्युदाहृतवाक्ये तदभावात् कथं साहित्यप्रतीतिरिति वाच्यम्, तदुपस्थापकशब्दाभावेऽपि समुदायस्य समुदाय्यविनाभूतत्वेनो-

---

१. प्रधानानां नास्ति. क.

२. इत्युदाहृत. क.

पस्थितिसम्भवात्। स्यादेतत्; समुदितानां प्रधानानामेकफलसाधनत्वमित्ययुक्तमेव। तथाहि—अमावास्यायामप्युपांशुयाजपक्षे दर्शपूर्णमासयोः सप्त प्रधानानि तत्र तदभावपक्षे षट्प्रधानानि। तत्र यदि "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति फलवाक्ये यजिना तन्त्राभिधानतः सप्तानामेव प्रधानानां युगपदुपस्थितिः स्यात्, तर्हि सप्तानामेव प्रधानानां समुदितानां फलसाधनत्वं स्यात्, न तु षडादीनाम्। यदि चतुर्णामेव तत्रोपस्थितिः स्यात्तर्हि पञ्चादीनां न स्यात्। एवं पञ्चानां षण्णामेव वा उपस्थितौ चतुरादीनां न स्यात्। न च यस्य यदा यावन्तो यागा विद्यन्ते, तस्य तदा तावतो यागान् यजिरभिदधातीति वाच्यम्। एवं सति यस्य यदा चत्वारो यागा विद्यन्ते, तदा तं प्रति यजेर्यागचतुष्टयवचनता, यस्य तु पञ्च षट् सप्त वा तं प्रति तदा पञ्चादिवचनतेत्येवं बहुधा वाक्यभेदप्रसङ्गात्। न हि वाक्यभेदं विना सकृच्छ्रुतो यजिः कञ्चित्प्रति कदाचिच्चतुरो यागान् कञ्चिच्च प्रति कदाचित् पञ्चादीन् बोधयितुमीष्टे। तथाच समस्तानां व्यस्तानां वा प्रधानानां फलसाधनत्वे वाक्यभेदो दोषस्तदवस्थ एवेति चेत्, अत्र ब्रूमः-प्रत्येकं प्रधानानां फलसाधनत्वपक्षे उपांशुयाजविकल्पतः षट् सप्त वा प्रधानानीति षोढा सप्तधा वा वाक्यभेदः प्रसज्यत इति गौरवम्। समुदितानां फलसाधनत्वे त्वसोमयाजिनो विषये समुदितेषु चतुर्षु षट्सु पञ्चसु वा फलान्वयात्, सोमयाजिनस्तु विषये षट्सु समुदितेषु सप्तसु वा फलान्वयात् चतुर्धा वाक्यभेदः प्रसज्यत इति लाघवम्। अतस्समुदितानामेव प्रधानानां फलसाधनत्वम्। किञ्च दर्शत्वेन पूर्णमासत्वेन च यागानां फलसाधनता शब्दमर्यादया गम्यते[1]। कस्यचित्पञ्चानां फलसाधनता, कस्यचित् षण्णामित्यादिव्यवस्था तु वाक्यान्तरादवगन्तव्येति न दोष इत्यास्तां तावत्॥

इति प्रथममाग्नेयादीनां समुदितानां फलसाधनत्वाधिकरणम्॥ १ ॥

२

अथ प्रयाजादीन्यङ्गानि प्रकृत्य चिन्त्यते। किं तेषामितरेतरनिरपेक्षाणां क्रतूपकारकत्वाद्-व्रीहियववद्विकल्पः? उतैकेन द्वाभ्यां त्रिचतुरादिभिर्वोपकार-

१, अवगम्यते क,

सिद्धिः; उपकारभूयस्त्वाच्च फलभूयस्त्वम्? आहोस्वित् समुच्चितानामेवोपकारकत्वम्? इति। तत्र [1]प्रथमं पक्षमुपक्षिपति—

**अङ्गानान्तु शब्दभेदात् क्रतुवत्स्यात् फलान्यत्वम् ॥ ५ ॥**

यथा पूर्वाधिकरणे प्रधानानां समुदितानामेव फलसाधनत्वमुक्तम्, नैवमङ्गानामिति वैधर्म्यद्योतनार्थस्तुशब्दः। अङ्गानामितरेतरनिरपेक्षाणां फलान्यत्वम्–फलभेदः स्यात्। कुतः? शब्दभेदात्–चोदनाभेदात्। अङ्गानि हि "प्रयाजान् यजति" "आज्यभागौ यजति" "अनूयाजान् यजति" इत्यादिभिः परस्परनिरपेक्षाभिश्चोदनाभिः पृथक्त्वेन चोदितान्यन्योन्यनिरपेक्षाण्येव क्रतूपकारार्थतया विनियुक्तानि विकल्पमर्हन्ति, न तु समुच्चयम्, क्रतुवत्। यथा "चित्रया यजेत पशुकामः" "उद्भिदा यजेत पशुकामः" इत्यादिविहितानां चित्रोद्भिदादीनां सत्यपि पशुफलत्वे पृथग्विधानादसमुच्चयः तद्वदङ्गानामपीति प्राप्ते, समुच्चितानामेवाङ्गानां क्रतूपकारकत्वमिति तृतीयपक्षेण सिद्धान्तयति—

**अर्थभेदस्तु तत्राथेहैकार्थ्यादैककर्म्यम् ॥ ६ ॥**

तत्र–चित्रोद्भिदादिषु अर्थभेदः–फलभेदः स्यात्, प्रतिवाक्यं कमिपदश्रवणात्। अथ इह इत्यव्ययद्वयम्। तत्राथशब्दो वाक्यालङ्कारे, तुशब्द इहशब्दात्परो योजनीयः। इह तु–अङ्गेषु तु नैवं पृथक्कमिपदश्रवणमस्ति। तस्मादैककर्म्यम्–क्रियत इति कर्म फलं क्रतूपकारलक्षणम्, एकं कर्म येषामङ्गानां तन्येककर्माणि। तेषां भाव ऐककर्म्यम्। समुच्चितानामङ्गानामेकं फलं भवतीति यावत्।

ननु "प्रयाजान् यजति" "आज्यभागौ यजति" "अनूयाजान् यजति" इत्यादिचोदनाभिः परस्परनिरपेक्षाभिः चोदितानामङ्गानामितरेतरनिरपेक्षतयैव फलवत्त्वं स्यात्तत्राह—ऐकार्थ्यादिति। एकः अर्थः कथम्भावः येषामङ्गानां तान्येकार्थानि। तेषां भाव ऐकार्थ्यम्। तस्मादैकार्थ्यात्। प्रधानस्य हि कथंभावापेक्षायामुत्पन्नायामङ्गानां तत्र सम्बन्धः। स च कथम्भावो यजेतेति सकृच्छ्रुताच्छब्दात् सकृदुत्पन्न एको यस्मिन्नेव क्षणे प्रयाजान् गृह्णाति, तस्मिन्नेव क्षणे इतराज्यभागानूयाजादीन्यपि गृह्णाति, युगपदुपनिपातात्। अतः प्रधानवदङ्गानां स्वफले समुच्चयः॥

---

१. प्रथमपक्षं क.

ननु प्रधानानां यजेतेत्येकेन शब्देन तन्त्रेणाभिहितानां फले समुच्चय इति युक्तम्। अङ्गानि तु नैव यजेतेत्यनेनाभिधीयन्ते "प्रयाजान् यजति" "आज्यभागौ यजति" इत्यादिभिः स्ववाक्यैरेव तेषां विधानात्। असति च विधानेऽङ्गत्वानुपपत्तेः। उक्तं हि 'न चाविहितमङ्गं भवति' इति। स्ववाक्यानि च परस्परनिरपेक्षमेकैकमेवाङ्गं विदधाति, न तु साहित्येन। अतश्चित्रोद्भिदादिवत् नैरपेक्ष्याद्विकल्पः स्यादित्याशङ्क्य परिहरति —

**शब्दभेदान्नेति चेत् कर्मार्थत्वात्प्रयोगे ताच्छब्द्यं स्यात्तदर्थत्वात् ॥ ७ ॥**

"प्रयाजान् यजति" इत्याद्यङ्गचोदनाभेदादङ्गानामुक्तरीत्या समुच्चयो न स्यादिति चेत्–तन्न; कुतः? यतो यजेतेति प्रधानानां प्रयोग उच्यमानेऽङ्गानामपि प्रयोगे ताच्छब्द्यं स्यात्–सः यजेतेति शब्दः यस्याङ्गानां प्रयोगस्य सः तच्छब्दः। तस्य भावः ताच्छब्द्यम्। प्रधानानामङ्गानामपि प्रयोगो यजेतेत्येकेनैव शब्देनाभिधीयत इत्यर्थः। कुत एतत्? कर्मार्थत्वात्–क्रियत इति कर्म फलं तदर्थत्वात् प्रधानानामिति शेषः। श्रूयते हि—"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति। तेषु च प्रधानेषु कथम्भावाकाङ्क्षा भवति। सा त्वङ्गप्रयोगेणेतिकर्तव्यतात्मना पूर्यते। कुतः? तदर्थत्वात्–प्रयाजादीनि ह्यङ्गानि [1]प्रधानेन फले जनयितव्ये उपकारार्थतयाम्नातानि। न चेतिकर्तव्यतामन्तरेण प्रधानचोदनार्थवती भवति। तस्माद्यजेतेति प्रधानविधिनैवाङ्गानामपि प्रयोगश्चोद्यत इत्यभ्युपेयम्। चित्रोद्भिदादौ तु प्रतिवाक्यं कमिश्रवणाद्युक्तं परस्परनैरपेक्ष्यम्, नेह तथास्ति। यद्यपि [2]प्रयाजादिष्वङ्गेषु प्रतिवाक्यं विधिश्रवणात् फलाकाङ्क्षास्ति, तथापि तत्र प्रतिवाक्यं फलस्याश्रवणात् फलाकाङ्क्षाणामङ्गानामित्थम्भावाकाङ्क्षिण्या प्रधानभावनया सह नष्टाश्वदग्धरथन्यायेन()सम्बन्धो भवति। प्रधानभावना च यजेतेति सकृदुपात्ता सर्वैरङ्गैरगृह्यमाणविशेषैर्विशिष्टा युगपत्प्रधानविधिना विधीयत इति सिद्धः समुच्चयः। यद्यप्यङ्गेषु प्रत्येकं विधिः श्रूयते, तथाप्यंशत्रयालाभादसावुदास्ते। भाव्यांशस्तु विध्यवगमबलादेव पुरुषार्थ-

---

१. प्रधानफले ग.

२. प्रयाजाद्यङ्गेषु क.

रूपोऽपेक्ष्यते। एतावानेव चाङ्गविधीनामुपयोगः—यद्विनियोगहेतुभूताकाङ्क्षोत्थापकत्वम्। तदभावे हि धात्वर्थ एव भाव्यांशे निपतेत्। सत्याञ्चाङ्गविधीनां फलापेक्षायां प्रकृतभावनया युगपत्सम्बन्धात्तस्याश्च सर्वाङ्गविशिष्टाया युगपत्प्रधानविधिना विधानादङ्गानामपि तत एवानुष्ठानसिद्धेस्तस्मिन्नंशेऽङ्गविधीनामनुवादकत्वम्। सर्वविशिष्टविधानाच्च समुच्चय इति ॥

ननु यजेतेति प्रधानविधेरेवाङ्गप्रयोगविधायकत्वे विध्यनुवादवैरूप्यापत्तिरिति शङ्कते—

**कर्तृविधेर्नानार्थत्वाद्गुणप्रधानेषु ॥ ८ ॥**

विध्यनुवादवैरूप्यं स्यादिति सूत्रशेषः। यदि प्रधानानामङ्गानाञ्च प्रयोगो यजेतेत्येकेन शब्देन विधीयेत, तर्हि गुणेषु–अङ्गेषु प्रधानेषु च कर्तृविधेः–यजेतेति शब्दस्य नानार्थत्वमापद्येत। फलार्थं हि प्रधानानां विधानम्, अङ्गानान्तु प्रधानार्थं विधानम्। तत्र फलं प्रति प्रधानानां विधेयता, अङ्गानि तु प्रत्यनुवाद्यता। न हि सकृच्छ्रुताच्छब्दात् प्रधानानामनुवाद्यत्वं विधेयत्वञ्चेत्युभयमपि लभ्यते। आवृत्तौ च वाक्यभेदप्रसङ्गात्[1] यागेन स्वर्गं कुर्यात्, अङ्गैर्यागमुपकुर्यादिति। ततश्च विध्यनुवादवैरूप्यप्रसङ्गाद्यजेतेति प्रधानविधेरङ्गप्रयोगविधायकत्वमनुपपन्नम् ॥

परिहरति—

**आरम्भस्य शब्दपूर्वत्वात् ॥ ९ ॥**

न यागसनूद्येतिकर्तव्यता यजेतेत्यत्र विधीयते, किन्तु भावनयैवेतिकर्तव्यता सम्बध्यते। कुतः? आरम्भस्य शब्दपूर्वत्वात्—आरम्भस्य–भावनायाः शब्दपूर्वत्वात्–भावनावाचिशब्देन पूर्वं प्रतीयमानत्वात्। तथाहि–यजेतेति भावनावचने उच्चरिते सति किं केन कथमिति तिस्र आकाङ्क्षा उत्पद्यन्ते, न तु केवलं यागशब्दे उच्चरिते। ततश्च भावनाया एवेतिकर्तव्यताकाङ्क्षा, न यागस्य। यस्य च यत्राकाङ्क्षा, तत्रैव तत्सम्बन्धो युक्तः। अतो भावनायामेवाङ्गसम्बन्धः।

नन्वंशत्रयापेक्षिण्यां भावनायामादौ पुरुषार्थत्वात् भाव्यमुपनिपतति, ततः करणम्, ततश्च कथमितीतिकर्तव्यता। ततः सा क्रिया विशेषरूपेण विमृश्यते।

---

१. प्रसङ्गः क.

यागेन कुर्यादित्यनेन ह्येतावद् ज्ञानम्-इयं यागविषया क्रियेति, क्रियाविशेषस्तु न ज्ञातः। ततोऽग्न्यन्वाधानादिका असौ क्रियेत्येवं क्रमेण विमृष्टाः सर्वेंऽशा भावनया सम्बध्यन्ते। ततश्च क्रमेण त्रिभिस्सम्बध्यमानस्य भावनावचनस्यावृत्तिः स्यादिति चेत्-उच्यते, त्रयोऽप्यंशा युगपदेव भावनया सम्बध्यन्ते, न तु क्रमेण। परन्तु तद्विमर्शः क्रमेण भवति। कुर्यादित्युक्ते हि प्रथमं किमिति विमृश्यते, ततस्तु केनेति साधनविमर्शः, ततश्च कथमिति [1]साधनविशेषक्रियाविमर्शः। तथा च "अरुणया क्रीणाति" इत्यत्र यस्मिन्नेव क्षणे एकहायनी क्रयेण सम्बध्यते, तस्मिन्नेव क्षणे आरुण्याद्यपि, न तु भेदेन। एवमिहापि त्रयाणामङ्गानां युगपदेव भावनायामन्वय इति न भावनावाचिशब्दस्यावृत्तिप्रसङ्गः।

नन्वङ्गानां भावनायामेवान्वये सतीतिकर्तव्यता प्रधानरूपकरणाङ्गं न स्यात्। किन्तु प्रधानवत्फलाङ्गमेव स्यात्। ततश्च "सौर्यं चरुं निर्वपेत्" इत्यत्राग्नेयविध्यन्तो न स्यात्, आग्नेयस्येतिकर्तव्यताभावादिति चेदत्रोच्यते-भावनया तावदितिकर्तव्यता सम्बध्यते। परन्तु सा तत्र न साक्षात्सम्बध्यते। करणभूतयागविषयव्यापारविशेषो हीतिकर्तव्यता। तत्रावघातावहननादिसंस्कृतेन द्रव्यदेवतेन स्वरूपनिष्पादनं यागस्य भवति। प्रयाजादिभिस्तूपकारवत्तासम्पादनम्। सोऽयमुभयविधोऽपि व्यापारो न साक्षात्फलं जनयति, किन्तु करणानुग्रहद्वारेणैव। यथा अरुणगुण एकहायनीपरिच्छेदद्वारेण क्रयेण सम्बध्यते, तद्वत्। तस्मादाग्नेयादीनां फलं साधयतामङ्गभूता इतिकर्तव्यता। ततश्च सौर्येऽपि चरौ करणानुग्रहेण भवितव्यमित्यदोषः। तस्मात्प्रधानविधिनैव विधानादङ्गानां समुच्चयः॥

अथ [2]द्वितीयं पूर्वपक्षमुपक्षिपति—

**एकेनापि समाप्येत कृतार्थत्वाद्यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत् स्यात् ॥ १० ॥**

एकेनाप्यङ्गेन क्रतूपकारो निष्पद्येत, तथा द्वाभ्यां त्रिचतुरादिभिरपि यथोत्साहं कृतैरङ्गैः। कुतः ? कृतार्थत्वात्-यजेतेति हि भावना कथमितीत्थम्भावम-

---

१. साधनविषय ग.

२. द्वितीयपक्षम् क.

पेक्षमाणा एकेनाप्यङ्गेन कृतार्था भवति, [1]तथा द्वाभ्यां त्रिचतुरादिभिरपि, सर्वेषामाम्नानसामर्थ्यात्। न च तेषां विकल्पो युज्यते, तस्याष्टदोषदुष्टत्वात्। न चैकेनैवोपकारसिद्धेरितरानुष्ठानवैयर्थ्यम्, फलभूयस्त्वकल्पनात्। यो हि यावन्त्यङ्गानि करोति, स तावन्तमुपकारं प्रधानेषु सम्पादयति। यथा क्रत्वन्तरेषु—सौर्यार्यमाणप्राजापत्यादिषु भिन्नभिन्नेषु क्रतुषु यो यावतः क्रतून् करोति स तावन्ति फलानि लभते, तद्वत्। ननु सन्निधानाविशेषात् सर्वाण्येवाङ्गानि प्राप्नुयुस्तत्राह—प्राप्तेषु चोत्तरावत्स्यादिति। प्राप्तेष्वपि सर्वेष्वङ्गेषु उत्तरावत् यथोत्साहं तेषामनुष्ठानं स्यात्। अनियतस्समुच्चय इति यावत्। "अन्वारभ्य वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागन्वारभ्योत्तरा दोहयति" इत्यत्र ह्युत्तराशब्दस्य त्रिचतुराद्यनियतबहुवाचित्वाद्यस्य यावत्यो गावः सम्भाव्यन्ते तिस्रश्चतस्रः पञ्च तदधिका[2] वा, तस्य तावतीनां दोहनमित्यनुपदमेव व्यवस्थापयिष्यते, तद्वदिहाप्यनियतः समुच्चयः स्यात्॥

ननु "स्वर्गकामो दर्शपूर्णमासाभ्यां यजेत" इत्युक्त्वा कृत्स्नस्याङ्गकलापस्याम्नातत्वेन कृत्स्नाङ्गकलापयुक्तस्यैव प्रधानस्य फलवत्त्वावगमात् कतिपयाङ्गानुष्ठाने फलाभावप्रसङ्गादङ्गानां समुच्चय एव स्यादित्याशङ्क्य[3] निराकरोति—

**फलाभावान्नेति चेन्न कर्मसंयोगात्प्रयोजनमशब्ददोषं स्यात्॥११॥**

अङ्गवैकल्ये फलाभाव इत्येतन्न सम्भवति[4]। कुतः? कर्मसंयोगात्–फलस्य कर्मणा प्रधानेनैव संयोगात्। "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यत्र हि दर्शपूर्णमासशब्दौ प्रधानत्रिकद्वयस्य वाचकौ, नाङ्गानामपि। नन्वेवं सत्यङ्गविधीनामानर्थक्यं स्यात्, तत्राह—प्रयोजनमशब्ददोषं स्यादिति। फलवाक्यगतप्रधानमात्रवाचकदर्शादिशब्दस्य दोषो विरोधो यस्मिन्न विद्यते तदशब्ददोषं प्रयोजनमुपकारलक्षणं फलमङ्गानां विद्यते। अङ्गानि हि प्रधानेन फले जनयितव्ये उपकारं जनयन्ति, न तु स्वतः फले व्याप्रियन्ते। ततश्च फलवाक्ये प्रधानवाचकशब्दस्य न विरोधः।

---

१. तथा च ग.
२. अधिकं ग.
३. आशङ्का क.
४. न भवति ग.

उपकाराकाङ्क्षा च व्यस्तैः समस्तैर्यथासम्भवं मिलितैश्चाङ्गैः पूर्यत इति न कृत्स्नाङ्गविरोधोऽपि । तस्मात्कतिपयाङ्गानुष्ठानेऽपि न फलाभावप्रसङ्गदोषः ॥

नन्वङ्गानां प्रधानानाञ्चैक एव विधायकश्शब्दो यजेतेति । अंशत्रयवती हि भावना तत्रोच्यते । तत्कथं प्रधानानामेव फलसम्बन्धो नाङ्गानामित्याशङ्क्य निराकरोति—

**ऐकशब्द्यान्नेति चेन्नार्थपृथक्त्वात् समत्वादगुणत्वम् ॥१२॥**

यद्यप्यङ्गप्रधानानामेकशब्दविहितत्वम्, तथाप्यङ्गानामपि फलसम्बन्ध इत्येतन्न भवति । कुतः ? अर्थपृथक्त्वात्—फलभेदात् । प्रधानानां फलं स्वर्गादि, अङ्गानान्तु प्रधानोपकारः । प्रधानानामेव हि फलं प्रति करणत्वं श्रुतम्-दर्शपूर्णमासाभ्यामिति, न त्वङ्गानाम् । तानि तु तत्रोपकाराकाङ्क्षया गृह्यन्ते । अतो नाङ्गानां फलेन संयोगः । यदि च स्यात्, तर्ह्यङ्गान्यपि प्रधानैः समानि स्युः । समत्वाच्च तेषां प्रधानं प्रत्यगुणत्वं स्यात् । अङ्गत्वमेव व्याहन्येतेति यावत् । अतो यथोत्साहमङ्गानां प्रयोगः ॥

तमिममङ्गानामनियतः समुच्चय इति द्वितीयपूर्वपक्षं दूषयन्नियतः समुच्चय इति सिद्धान्तयति—

**विधेस्तु एकश्रुतित्वादपर्यायविधानान्नित्यवच्छ्रुतभूताभिसंयोगादर्थेन युगपत्प्राप्तेर्यथाप्राप्तं स्वशब्दो निर्वीतवत् सर्वप्रयोगे प्रवृत्तिः स्यात् ॥ १३ ॥**

तु शब्दः पक्षान्तरनिवृत्तौ । नैतदेवमङ्गानामनियतः समुच्चय इति । किन्तु सर्वप्रयोगे-सर्वेषामङ्गानां समुच्चितानामेव प्रयोगे प्रवृत्तिः स्यात् । कुतः ? विधेरेकश्रुतित्वात्—विधीयत इति विधिरङ्गकलापः तस्यैकश्रुतित्वात् । सर्वेषामङ्गानामेक एव हि प्रयोगविधायकश्शब्दो यजेतेति । अंशत्रयवती हि भावना तत्रोच्यते । तत्र चेत्थम्भावाकाङ्क्षा सर्वेष्वङ्गेषु युगपद्भवति, न त्वेकैकस्मिन् पृथक् । कुतः ? अपर्यायविधानात्—अपाक्षिकतयाङ्गानां विधानात् । न हि कदाचित्प्रयाजान् यजति, कदाचिदाज्यभागौ यजतीत्येवमङ्गानि पाक्षिकत्वेन विहितानि, येन

---

१. गपुस्तके ग्रन्थपातः

पृथगाकाङ्क्षा स्यात्, किन्तु नित्यवत्-नित्यतयैव सर्वाण्यङ्गानि श्रुतानि, ततश्च तेषां श्रुतभूतानाम्—यथा श्रुतानि तथाभूतानामेवेत्थम्भावाकाङ्क्षया अभिसंयोगात्—सर्वेष्वङ्गेषु समुच्चितेष्वेव भवत्याकाङ्क्षा। ननु सत्यं नित्यवदाम्नातानि सर्वाण्यङ्गानि, तथापि तदेकदेशेऽप्याकाङ्क्षा कुतो न स्यात्, तावतापि तदाकाङ्क्षाशान्तेः। तत्राह—अर्थेन युगपत्प्राप्तेरिति। अर्थेन-कथम्भावेन खले कपोतवदङ्गानामगृह्यमाणविशेषाणां युगपदेव सन्निपातात्। न हि तत्र किञ्चिदङ्गमादौ प्राप्यते, किञ्चिदनन्तरमिति विशेषग्रहणमस्ति। ततश्च सर्वेष्वङ्गेषु युगपदेवाकाङ्क्षाप्राप्तिः। यथाप्राप्तम्—यथाङ्गेषु युगपदेवाकाङ्क्षा प्राप्यते, तथैव स शब्दस्स्यात्। अङ्गसम्बन्धप्रापको यजेतेति शब्दः समुच्चितानामेवाङ्गानां भावनासम्बन्धबोधकः स्यात्, निवीतवत्। तद्यथा—"निवीता ऋत्विजः प्रचरन्ति" इत्यत्राविशेषात् सर्वेषामृत्विजां निवीतत्वसम्बन्धस्तद्वत्। तस्मात्सर्वेषामङ्गानां प्रयोगे प्रवृत्तिः स्यात्।

अयमत्र निष्कर्षोऽर्थः—यद्यप्यङ्गानि पृथगेव प्रयोजनमपेक्षन्ते, तथा कथम्भावोऽप्येकेनाप्यङ्गेन शक्यते पूरयितुम्, तथापि सर्वेषामङ्गानां नियतस्समुच्चयः। यदि ह्यङ्गानि स्ववाक्यैर्विधीयेरन्, ततस्तेषामेकैकविषयत्वात् पर्यायेण विकल्पः स्यात्। नैवमस्ति, प्रधानविधिनैव ह्येषां युगपद्विधानम्। सर्वेषु ह्यङ्गेषु विधिवशादेव सामान्यतः किञ्चित्प्रयोजनसाधनतयावगम्यमानेषु फलविशेषाश्रवणात् साकाङ्क्षेषु सत्सु प्रधाने च कथमिति स्वव्यपारविशेषाकाङ्क्षे सति तेन सह सर्वेषामङ्गानामनपेक्षितपरस्पराणामवान्तरव्यापारभेदमाश्रित्य[1] सन्निकर्षविप्रकर्षावनादृत्यारुणादीनामिव क्रयेण विशेषणविशेष्यतयैकवाक्यत्वं युगपत्कल्प्यते—अग्न्यन्वाधानप्रयाजानूयाजादिप्राच्योदीच्याङ्गकलापविशिष्टो यागः फलसाधनमिति। तदेतत्पृथग् द्वारैस्सर्वैरङ्गैर्विशिष्टस्य यागस्य फलार्थता तावद्विशेषणेनोपकारजनने सति घटते, नान्यथेति विशेषणभूतानां समिदादीनामुपकारजनकता कल्प्यमाना सहैव कल्प्यते। न च विनियोगदशायामेव व्रीहियववद् वाक्यैरेककार्यत्वमवगतम्, यद्बलेन पर्यायेणैकवाक्यता स्यात्। तस्मात्सन्निध्यविशेषादङ्गानां नित्यवच्छ्रुतानामष्टदोषदुष्टविकल्पपरिजिहीर्षया युगपत्प्रयोगविधिरेषां प्रयोगं विधत्त इति तद्बलेन परमोपकारे सर्वेषां साहित्यलाभात् सिद्धस्समुच्चय इति ॥

---

१. अवान्तरभेदं. क.

किञ्च—

**तथा कर्मोपदेशः स्यात् ॥ १४ ॥**

तथा-सर्वेषामङ्गानां नियतस्समुच्चय इति कृत्वा कर्मोपदेशः—"चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते" "त्रयोदशामावास्यायाम्" इति कर्मणामाहुतीनां सङ्ख्योपदेश उपपन्नस्स्यात्, अन्यथा स पाक्षिकस्स्यात्। प्रयाजाहुतयः पञ्च, द्वे आज्यभागाहुती, तिस्रः प्रधानाहुतयः, एका स्विष्टकृदाहुतिः, तिस्रोऽनूयाजाहुतय इत्येवं पौर्णमास्यामाहुतिसङ्ख्या वेदितव्या। अमावास्यायान्तु-उपांशुयाजाभावात् द्वे प्रधानाहुती। अतस्तत्र त्रयोदशाहुतयः॥

अथ यदुक्तं यथाक्रत्वन्तरेष्विति, तत्राह—

**क्रत्वन्तरेषु पुनर्वचनम् ॥ १५ ॥**

"सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः" "अर्यम्णे चरुं निर्वपेत्स्वर्गकामः" "उद्भिदा यजेत पशुकामः" इत्यादिषु क्रतुषु भिन्नभिन्नेषु पुनर्वचनम्—पुनः पुनः कर्मिपदश्रवणं वर्तते। अतस्तेषां परस्परनिरपेक्षाणामेव फलसाधनत्वम्, न समुदितानाम्। नैवमङ्गेषु कर्मिपदश्रवणमस्तीति वैषम्यम्। अयञ्चार्थः 'अर्थभेदस्तु तत्र' इत्यादिसूत्रे प्रतिपादितः। तस्यैवायं प्रपञ्चः॥

अथ यदुक्तं प्राप्तेषु चोत्तरावत्स्यादिति, तत्राह—

**उत्तरास्वश्रुतित्वाद् विशेषाणां कृतार्थत्वाद् स्वदोहे यथाकामी प्रतीयेत ॥ १६ ॥**

उत्तरासु—"उत्तरा दोहयति" इत्यत्र स्वदोहे—यावत्यो यजमानस्य स्वाः गावः तावतीनां दोहे, यथाकामी—अनियमः प्रतीयेत। कुतः? अश्रुतित्वात् न ह्युत्तरा गावो दोहनं प्रति विधीयन्ते, [1]किन्त्वनूद्यन्ते। कुतः? विशेषाणां कृतार्थत्वात्—विशेषाणां [2]वाग्विसर्जनादीनां विधाने तस्य वाक्यस्य कृतार्थत्वात्। तासा-

---

१. किन्त्वनूद्यन्ते नास्ति. क.

२. विश्वजिदादीनां. क.

मपि विधाने वाक्यभेदापत्तेः। अनुवादश्च यथाप्राप्ति भवति। सर्वासाञ्च गवां पयसोऽत्राप्राप्तिः "नास्यैतां[1] रात्रिं कुमाराश्च पयो लभेरन्" इति पयस्साकल्यविधानाद् इत्यनुपदमेव व्यवस्थापयिष्यति। तद्वदङ्गानामपि नियतस्समुच्चयः। तदेवम् 'अङ्गानान्तु शब्दभेदात्' इत्यारभ्य 'उत्तरास्वश्रुतित्वात्' इत्यन्तानि द्वादश सूत्राण्यैकाधिकरण्यपरतया वार्तिकरीत्या योजितानि। पार्थसारथिस्तु पञ्चदश सूत्राणीत्याह—'शब्दभेदान्नेति चेत्' 'कर्मार्थत्वात् प्रयोगे ताच्छब्द्यं स्यात् तदर्थत्वात्' इति सूत्रद्वयम्, 'फलाभावान्नेति चेत्' 'न कर्मसंयोगात् प्रयोजनमशब्ददोषं स्यात्' इति च सूत्रद्वयम्, 'एकशब्द्यान्नेति चेत्' 'नार्थपृथक्त्वात् समत्वादगुणत्वम्' इति च सूत्रद्वयमिति तदाशयः। न चैवं युज्यते; चेदन्तस्य साकाङ्क्षतया पृथक्सूत्रत्वानुपपत्तेः। अतो द्वादश सूत्राणीत्येव युक्तम्।

भाष्ये तु—'अङ्गानान्तु शब्दभेदात्' इत्यारभ्य पञ्चभिः सूत्रैरेकमधिकरणम्, 'एकेनापि समाप्येत' इत्यादिभिः सप्तभिः सूत्रैरधिकरणान्तरं व्याख्यातम्। तत्र पूर्वाधिकरणेऽङ्गानां [2]कार्यभेदं पूर्वपक्षीकृत्यैककार्यत्वं सिद्धान्तितम्। उत्तराधिकरणे तु तस्मिन्नेकस्मिन्कार्ये विकल्पं पूर्वपक्षीकृत्य समुच्चयः सिद्धान्तितः। तत्रोच्चावचानि दूषणानि वार्तिके प्रपञ्चितानि तत एवानुसन्धेयानि॥

### इति द्वितीयमङ्गानामेककार्यकरत्वाधिकरणम्॥ २॥

३

सन्ति काम्यानि कर्माणि "ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः" इत्यादीनि। तानि किं सकृदेव कर्तव्यानि? उत भूयःफलमिच्छता भूयोऽभ्यसनीयानि? इति संशये, सिद्धान्तेनोपक्षिपति—

**कर्मण्यारम्भभाव्यत्वात् कृषिवत्प्रत्यारम्भं फलानि स्युः॥१७॥**

काम्ये कर्मणि प्रत्यारम्भम्-प्रतिप्रयोगं फलानि स्युः। कुतः? आरम्भभाव्यत्वात्-कर्मप्रयोगेण हि फलं भाव्यते। शक्यते च पुनः फलं निर्वर्तयितुम्, कृषिवत्। यथा कर्षणेन पुनः पुनर्धान्यमुद्भाव्यते तद्वत्॥

१. न ह्येतां. क.
२. कर्मभेदं. क.

किञ्च—

**अधिकारश्च सर्वेषां कार्यत्वादुपपद्यते विशेषः ॥१८॥**

सर्वेषाम्—काम्यकर्मणां पुनः पुनः कार्यत्वादेवाधिकारः द्वितीयादिप्रयोगानुवादः क्वचिदुपपद्यते "तेषामेव प्रथमं यजेरन्" "तेषां गौरतिरात्रो यो द्वितीयम्, तेषामायुः" इत्यादिना द्वितीयादिप्रयोगमधिकृत्यायुरादि विदधाति। तदेतत्काम्यकर्मणां पुनः पुनः प्रयोगे सति घटते। क्वचित्काम्यकर्मणि तथा वचनं सर्वेषां काम्यकर्मणां पुनः पुनः प्रयोगे दर्शनं भवति, यतः काम्यकर्मणां विशेषस्सः। यत्र द्वितीयादि प्रयोगमधिकृत्यायुरादिविधानमुक्तम् तदेतदुक्तम्–'तत्सामान्यादितरेषु तथात्वम्'इति॥

अत्र पूर्वपक्षमुद्भावयति—

**सकृत्तु स्यात्कृतार्थत्वादङ्गवत् ॥ १९ ॥**

तुशब्दश्शङ्कायाम्। सकृदेव काम्यं कर्म कर्तव्यम्। कुतः? कृतार्थत्वाच्चोदनायाः। सकृत्कृतेन हि चोदनार्थः कृतो भवति। यथा प्रधानस्याङ्गानि सकृदेव क्रियन्ते, नाभ्यस्यन्ते, तद्वत्। अयं भावः—[1]कालान्तरभाविनि स्वर्गादिफले द्वित्रिक्षणावस्थायिनामुत्पन्नविनष्टानां कर्मणां साधनत्वनिर्वाहाय तत्रादृष्टमपूर्वमेकं द्वारं परिकल्प्य तस्य कर्मजन्यत्वं फलहेतुत्वमाफलोत्पत्ति स्थायित्वञ्च कल्पनीयम्। ततो वरं कृतयागादात्मनः फलमिति कल्पनम्। आत्मनो हि सद्भावः स्थायित्वं कर्मसम्बन्धश्च क्लृप्तः। फलहेतुत्वमेवैकं कल्पनीयमिति कृतयागादेवात्मनः फलं भवतीत्यभ्युपेयम्। यजेतेत्यत्र हि कर्ता प्रधानभूतः, धात्वर्थभूता यजिक्रिया तु तदुपसर्जनभूता। अत एव पचति देवदत्त इत्यादावाख्यातस्य नामपदेन सामानाधिकरण्योपपत्तिः। तथाच "यजेत स्वर्गकामः" इति कृतयागस्य कर्तुः फलमुच्यते। सकृत्कृतेन यागेनासौ कृतयागस्सम्पन्नः, तत्र द्वितीयादिप्रयोगोऽनर्थको भवति। पुनरपि हि प्रयुञ्जानस्य [2]तस्य सैव कृतयागता। न हि तस्याः कश्चिदतिशयोऽस्ति। अतः सकृदेव काम्यकर्मणां प्रयोगः॥

अत्र दृष्टान्तमाह—

**शब्दार्थश्च तथा लोके ॥ २० ॥**

---

१. कालान्तरानुभाविनि. ग.

२. तस्यैव. ग.

यथा काम्यकर्मविधौ सकृदेव प्रयोगो भवति, तथा लोकेऽपि दृश्यते। घटमानयेत्युक्ते[1] सकृदेवानयति, न पुनः पुनः। ततश्च सकृदेव काम्यकर्मप्रयोग इति प्राप्त आह—

**अपि वा सम्प्रयोगे यथाकामी प्रतीयेताश्रुतत्वाद्विधिषु वचनानि स्युः ॥ २१ ॥**

अपिवेति निपातसमुदायः[2] पक्षान्तरव्यावृत्त्यर्थः। नैतदेवं काम्यानां कर्मणां सकृदेव प्रयोग इति। [3]किन्तर्हि ? सम्प्रयोगे—पुनः प्रयोगे, यथाकामी–ऐच्छिकत्वं प्रतीयेत। फलभूमार्थी बहुकृत्वः, सन्तुष्टस्तु सकृदिति। कुतः ? अश्रुतत्वात्—न हि यजेतेत्यत्र यष्टुः फलश्रवणमस्ति। भावनैव ह्याख्याते प्राधान्येन प्रतीयते। धात्वर्थः, कर्ता च तदुपसर्जनतया। अत एव यजेतेत्यत्र केन किमर्थं कथमित्याकाङ्क्षा भवति। कर्तृप्राधान्ये तु कथं तदाकाङ्क्षा। न हि कर्तृप्रधाने पाचकादिनामपदे तदाकाङ्क्षास्ति। स्मरन्ति च निरुक्तकाराः—"भावप्रधानमाख्यातम्" "सत्त्वप्रधानानि नामानि" इति। "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "उद्भिदा यजेत पशुकामः" इत्यादिविधयश्च तृतीयाश्रुत्या भावनाया एव फलसाधनत्वं बोधयन्ति, न तु कर्तुः। पुनः पुनश्च क्रियमाणा भावना पुनः पुनः फलमुद्भावयिष्यति।

अथ यदुक्तमाशुतरविनाशिनां कर्मणां फलसाधनत्वेऽपूर्वाख्यद्वारकल्पनागौरवात् कृतयागादात्मन एव फलमिति। तदेवं वदन् प्रष्टव्यः—किमात्मनः फलहेतुत्वमात्मत्वेनैव ? उत यागत्वेन ? नाद्यः कल्पः; तस्य कर्तुरपि फलावाप्तौ[4] कृतहानाकृताभ्यागमप्रसङ्गात्। द्वितीयेऽपि किं यागो विशेषणमुपलक्षणं वा ? नाद्यः; यागस्य तदानीमेव विनष्टत्वेन फलोत्पत्तिप्राक्कालेऽभावात्। द्वितीयेऽपि किं यागस्य यागत्वेनोपलक्षणता ? उतातीतयागत्वेन ? नाद्यः; तर्हि यागोत्पत्तेः प्रागपि भविष्यता यागेन यागवत्त्वस्य सत्त्वात् फलापत्तेः। न द्वितीयः; व्याघातात्। अतीतत्वं हि ध्वंसप्रतियोगित्वम्। अतीतयागवत्त्वञ्चा-

१. उक्ते हि. ग.
२. समुच्चयः. क.
३. किं पुनः. क.
४. फलापत्तौ. ग.

त्मनो ध्वस्तेन यागेन सम्बन्धः, न हीदं सम्भवति यागध्वंससमये यागेनात्मनः सम्बन्ध इति। अथ यागध्वंसवत्त्वेनात्मनः फलहेतुत्वमिति चेत्तर्हि, फलोत्पत्यनन्तरमपि तस्य सत्वात् पुनः पुनः फलोत्पत्यनुपरमप्रसङ्गः। अभावरूपस्य ध्वंसस्य कारणतावच्छेदकत्वे गौरवञ्च। ननु कर्मजन्यं कञ्चिदतिशयविशेषमाफलोत्पत्ति स्थायिनमभ्युपगम्य तद्वानात्मा फलहेतुरिति कल्प्यत इति चेत्तर्हि, तथाविधातिशयद्वारं कर्मण एव फलहेतुत्वमस्तु, न तु तद्वत आत्मनः, आत्मांशनिवेशे गौरवात्। कर्मजन्यमेव ह्यतिशयमपूर्वमित्याचक्ष्महे। तस्य चाफलोत्पत्ति स्थायिन एकस्मिन् फल उत्पन्ने विनष्टत्वात्फलभूमार्थिना पुनः पुनः प्रयोक्तव्यं काम्यं कर्म। यदि च काम्यं कर्म सकृदेव कर्तव्यं स्यात्, तर्हि "तेषां ये प्रथमं यजेरन्" इत्यादिना गवादिविधिषु "ये प्रथमम्" "ये द्वितीयम्" इत्यादीनि वचनानि विधायकानि स्युः, अप्राप्तार्थत्वेनानुवादासम्भवात्। तथाच सति द्वितीयं यजेरन्, तथा तु सति "आयुः" इति वाक्यभेदः प्रसज्येत ॥

अथ यदुक्तमङ्गवत्सकृदनुष्ठानं काम्यकर्मण इति, तत्राह—

### ऐकशब्द्यात्तथाङ्गेषु ॥ २२ ॥

अङ्गेषु तु तथा—सकृदेवानुष्ठानम्। कुतः? ऐकशब्द्यात्—एको ह्यङ्गानां प्रधानानाञ्चोपदेशकश्शब्दो यजेतेति। अंशत्रयविशिष्टा हि भावना तत्रोच्यते। सा च कथमित्याकाङ्क्षयाङ्गानि गृह्णाति। सा चाकाङ्क्षा सकृदेवाङ्गेषु भवन्ती सकृत्कृतैरेवाङ्गैश्शान्ता भवति। यजेतेति सकृच्छ्रताच्छब्दात्सकृदेवावगता भावना सकृदेवाङ्गानि कथमित्याकाङ्क्षति, न पुनः पुनः। अतोऽङ्गानि सकृदेव क्रियन्ते। काम्यन्तु कर्म फलार्थम्। फलाकाङ्क्षा च पुरुषस्य पुनः पुनर्भवति। अतस्तत्र पुनः पुनः प्रयोग इति वैषम्यम् ॥

यच्चोक्तं 'शब्दार्थश्च तथा लोके' इति, तत्राह—

### लोके कर्मार्थलक्षणम् ॥ २३ ॥

कार्याधीनं कर्म। तत्र बहुभिराहरणैः कर्तव्ये वृक्षसेचनादौ प्रकृते जलमाहरेति सकृदुक्तोऽप्यसकृदाहरति। सकृदाहरणसाध्ये जलपानादौ त्वसकृदुक्तोऽपि सकृदाहरति। कचिदाहरेत्युक्तोऽपि अलाभालस्यादिना नाहरति। इह

तु शब्दैकलक्षणे कर्मणि यथाशब्दं प्रवृत्तिर्नियता। अतः काम्यानां कर्मणां प्रयोगे याथाकाम्यमिति। यद्यप्याख्यातेन कर्तुर्वाच्यत्वं प्राधान्यञ्च प्रागेव निराकृतम्, तथापि तत्फलप्रतिपादनार्थोऽयं प्रपञ्चः ॥

इति तृतीयं काम्यकर्मणां कामनानुरोधेनाभ्यासाधिकरणम् ॥ ३ ॥

४

दर्शपूर्णमासयोः श्रुतम्—"व्रीहीनवहन्ति" इति। तत्र संशयः—किं मुसलस्योद्यमननिपतने सकृदेव कर्तव्ये? उत आतण्डुलनिर्वृत्तेरभ्यसनीये? इति। सकृदेवेति ब्रूमः, अभ्यासस्याश्रुतत्वात्। अवहन्तिर्हि मुसलोद्यमननिपतनमात्रे कर्मणि वर्तते, न तु तण्डुलफल एव तस्मिन्। विनापि हि तण्डुलैः प्रयोगो दृश्यते लोकवेदयोः। लोके तावत्कषायमवहन्ति, किट्टमवहन्ति, कार्पासबीजानवहन्तीति। वेदेऽपि "औदुम्बरं प्रादेशमात्रमुलूखलं सर्वौषधस्य पूरयित्वौदुम्बरेणारत्निमात्रेण मुसलेनावहन्ति" "तदुपदधाति" इति च। तथा चोद्यमननिपातनमात्रस्यावहन्त्यर्थत्वात्तन्मात्रमत्र विधीयते। विहितस्य च दृष्टमदृष्टं वा प्रयोजनं यथोचितं कल्पनीयम्। तत्र दृष्टस्यासम्भवाददृष्टमेव कल्प्यम्। तथाच सर्वौषधावहननवद् "व्रीहिनवहन्ति" इत्यत्रापि सकृदेवोद्यमननिपातने कार्ये। एवं "तण्डुलान् पिनष्टि" इत्यत्रापि सकृदेवोपलायाः प्रकर्षणापकर्षणे कार्ये। तथा "पिष्टानि संयौति" इत्यत्रापि मेक्षणेन घर्षणं सकृदेव कार्यमिति प्राप्ते, सिद्धान्तयति—

**क्रियाणामर्थशेषत्वात्प्रत्यक्षोऽतस्तन्निर्वर्त्यापवर्गस्स्यात् ॥२४॥**

क्रियाणाम्—अवहननादीनां कार्यभूतस्तण्डुलादिभावः प्रत्यक्षः। अतस्तासां दृष्टार्थता, न त्वदृष्टार्थता। कुतः? अर्थशेषत्वात्—साधनत्वात्। पुरोडाशादिकं हि हविर्योगसाधनं श्रुतम्। तच्च तण्डुलादिप्रणाडिकया निष्पाद्यम्। अतोऽवघातादिक्रियाणां तण्डुलभावादिरूपदृष्टार्थत्वं विज्ञायते। अतो हेतोः तन्निर्वर्त्या तण्डुलादिदृष्टप्रयोजननिष्पत्त्या अपवर्गः स्यात्—अवघातादिक्रियाणां समाप्तिस्स्यात्। आतण्डुलादिकार्यानिष्पत्तेरभ्यासः कार्य इति यावत्। यदि ह्युद्यमननिपतनादि सकृत्कृत्वोपरम्येत, तर्हि तण्डुलादिनिष्पत्त्यभावात् कथं पुरोडाशादिहविर्निष्पद्येत? तस्मादश्रुतोऽप्यभ्यासः कार्यः ॥

यदुक्तं सर्वौषधावहननवददृष्टार्थतेति तत्राह—

**धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गस्स्यात् ॥२५॥**

सर्वौषधावहननं धर्ममात्रम्—अदृष्टमात्रप्रयोजनकम् । न हि तण्डुलानिर्वृत्त्या तत्र प्रयोजनमस्ति, तण्डुलकार्यस्य पुरोडाशादिहविषस्तत्रादर्शनात् । अतस्तत्र शब्दार्थेन-सकृदुद्यमननिपतनमात्रेण अपवर्गस्स्यात्—समाप्तिस्स्यात्, न तु तदभ्यास इति वैषम्यम् ।

इति चतुर्थमवहननादिदृष्टार्थानामाफलोत्पत्त्यभ्यासाधिकरणम् ॥४॥

५

प्रयाजादीन्युङ्गान्युदाहृत्य चिन्त्यते—किमेकस्मिन् प्रयोगे पुनः पुनरङ्गादि प्रयुञ्जानस्य फलभूयस्त्वं [1]भवति ? उत न ? इति । तत्र पूर्वपक्षयति—

**क्रतुवद्वानुमानेनाभ्यासे फलभूमा स्यात् ॥२६॥**

वाशब्दश्शङ्कायाम् । फलभूमार्थिनाङ्गानि पुनः पुनः प्रयोज्यानि । कुतः ? अभ्यासे हि फलभूमा—फलबहुत्वं स्यात् । कथमेतज्ज्ञायते ? अनुमानेन—अङ्गानि भूयोऽभ्यस्तानि भूयः फलसाधकानि, कर्मत्वादित्यनुमानमुन्नेयम् । क्रतुवदिति दृष्टान्तावयवप्रदर्शनम् । काम्या हि क्रतवो भूयोऽभ्यस्ता भूयः फलं साधयन्तीति पूर्वाधिकरणे व्यवस्थापितम् ॥

सिद्धान्तयति—

**सकृद्वा कारणैकत्वात् ॥ २७ ॥**

वाशब्द एवार्थे । सकृदेवाङ्गानि कार्याणि, न पुनः पुनः । कुतः ? कारणैकत्वात्—कार्यते प्रवर्त्यते[2] पुरुषोऽनेनेति कारणं फलम्, तदेकत्वात् । अङ्गानां हि प्रधानेषु फलजननसामर्थ्योद्बोधनरूप उपकारः फलम् । सोऽयमुपकारस्सकृदङ्गप्रयोगेणोत्पन्नो न वा ? नाद्यः; तर्हि तेनैव प्रधानानि फलवन्ति जातानीति पुनः पुनः

---

१. भवति, नास्ति. क.

२. प्राप्यते. क.

प्रयोगानर्थक्यात्। न द्वितीयः, सकृत्प्रयोगादनुत्पन्नस्य हि तस्य प्रयोगान्तरेणोत्पत्तौ का दुराशा ? अतोऽङ्गानां सकृदेव प्रयोगः ॥

किञ्च—

**परिमाणञ्चानियमेन स्यात् ॥ २८ ॥**

सकृदसकृद्वा अङ्गानां प्रयोग इत्यनियमे सति "चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम्" इत्याहुतिपरिमाणानुवादो न स्यात्। प्रयाजाद्यङ्गाभ्यासे आहुतीनामाधिक्यप्रसङ्गात्। पाक्षिकत्वे च तत्परिमाणस्य नित्यवदनुवादविरोधः ॥

अथ यदुक्तं क्रतुवदिति, तत्राह—

**फलस्यारम्भनिर्वृत्तेः क्रतुषु स्यात्फलान्यत्वम् ॥ २९ ॥**

क्रतुषु—काम्यकर्मस्वभ्यासस्स्यात्। कुतः ? यतः फलान्यत्वम्। अन्यदन्यत्फलं तत्र विद्यते। फलभेद इति यावत्। "उद्भिदा यजेत पशुकामः" इत्यत्र हि पशुफलता कर्मणोऽवगता। अस्ति च पशुबहुत्वम्। तत्रारम्भेण पुनः पुनः—प्रयोगेण फलस्य पशुरूपस्य निर्वृत्तेः—भेदेन निष्पत्तेः सम्भवाद् युक्तस्तत्र पुनः प्रयोगः। अङ्गकृतस्य तु [१]प्रधानगतोपकारस्य फलजननसामर्थ्योद्बोधनरूपस्यैकस्य पुनःपुनरुत्पत्तेरनुपपत्तेः, सकृदेवाङ्गानां प्रयोग इति वैषम्यम्। तद्यथा—भोजनमेकस्मिन्नेव काले पुनः पुनः क्रियमाणमनर्थकं भवति, भुजिकार्यस्य तृप्तेरेकत्वात्, तद्वत्। तथाचाङ्गानां पुनः प्रयोगाभावस्य निश्चितत्वादुक्तानुमाने बाध एव दूषणमित्युक्तं भवति ॥

अत्र शङ्कते—

**अर्थवांस्तु नैकत्वादभ्यासस्स्यादनर्थको यथाभोजनमेकस्मिन्नर्थस्यापरिमाणत्वात्प्रधाने च क्रियार्थत्वादनियमस्स्यात् ॥३०॥**

तुशब्दश्शङ्कायाम्। यथा भोजनमेकस्मिन्नेव काले पुनः पुनः क्रियमाणमनर्थकं भवति, भोजनकार्यस्य तृप्तेरेकत्वात्। न हि तृप्तस्य तदानीमेव पुनस्तृप्ति-

१. प्रधानकृत. क.

रुत्पत्तुमर्हति, तथाङ्गकार्यस्योपकारस्याप्येकत्वादङ्गानामभ्यासोऽनर्थकस्स्यादिति यदुक्तं तन्न भवति, किन्त्वर्थवान् स्यादङ्गाभ्यासः। कुतः ? अर्थस्यापरिमाणत्वात् अर्थस्याङ्गकृतस्योपकारस्यापरिमाणत्वात्—न विद्यते परिमाणमस्योपकारस्य अपरिमाणस्तस्य भावः तत्त्वम्। तस्मादपरिमितत्वाद्बहुत्वादित्यर्थः। नन्वङ्गकृतोपकारस्य कथं बहुत्वम्? फलजननसामर्थ्याद्बोधनरूपस्य तस्यैकत्वात्, तत्राह—प्रधाने च क्रियार्थत्वादिति। प्रधाने-आधारे जनयितव्यस्योपकारस्य क्रियार्थत्वात्-क्रियत इति क्रिया, कर्मण्यण् फलम्, तदर्थत्वाद् बहुत्वमुपपद्यते। फलानि ह्यपरिमितानि, तज्जननसामर्थ्यमपि तद्भेदादेव भिद्यते। ततश्चाङ्गकृतोपकारस्य भूयस्त्वे भूयः फलं भविष्यति, अल्पत्वेऽल्पम्। तस्मादनियमस्स्यात्। फलभूमार्थी बहुकृत्वोऽङ्गानि करोति, सन्तुष्टस्तु सकृदिति ॥

अथ यदुक्तमङ्गाभ्यासे "चतुर्दश पौर्णमास्यामाहुतयः" इत्यादि विरुध्यत इति, तत्राह—

**पृथक्त्वाद्विधितः परिमाणं स्यात् ॥ ३१ ॥**

परिमाणम्-चतुर्दशत्वसङ्ख्यारूपम् विधितः—आहुतिविधायकवचनेभ्य उपपन्नं स्यात्। "आहुतयो हूयन्ते" इति पदद्वयमपि लक्षणयाहुतिविधायकानि वचनानि विद्यन्त इत्येवंपरमिति भावः। ननु सम्भति मुख्ये कुतो लक्षणाश्रयणम्? तत्राह—पृथक्त्वादिति। उक्तरीत्योपकारस्य पृथक्त्वादङ्गाभ्यासस्य न्यायप्राप्तत्वादत्र लक्षणाश्रयणं युज्यत इति भावः ॥

परिहरति—

**अनभ्यासो वा प्रयोगवचनैकत्वात् सर्वस्य युगपच्छास्त्राद-**
**फलत्वाच्च कर्मणः स्यात्क्रियार्थत्वात् ॥ ३२ ॥**

वाशब्द एवार्थे। अङ्गानामनभ्यास एव स्यात्। कुतः ? सर्वस्य युगपच्छास्त्रात्-सर्वस्याङ्गप्रधानस्य युगपच्छास्त्रात्-शासनात्, युगपद्विधानादित्यर्थः। कथं युगपद्विधानम्? प्रयोगवचनैकत्वात्—अङ्गानां प्रधानस्य चैक एव प्रयोगवचनशब्दः। यजेतेत्यंशत्रयवती हि भावना तत्रोच्यते। अतोऽङ्गानां प्रधानस्य च युगपद्विधानं भवति। युगपद्विहितेषु च तेषु प्रधानस्य सकृत्प्रयोगः, अङ्गानामभ्यास इति वैषम्यं न युज्यते। ननूपकारभूयस्त्वार्थमङ्गानामभ्यासस्स्यादिति,

तत्राह—अफलत्वाच्चेति। निष्फलं ह्यङ्गाभ्यासकृतमुपकारभूयस्त्वम्। कुतः? कर्मणः क्रियार्थत्वात्-प्रधानस्यैव फलार्थत्वात्। अयमाशयः—अङ्गाभ्यासकृतादुपकारभूयस्त्वात्फलभूयस्त्वमिति वदन् प्रष्टव्यः—किं प्रधानेन फलं जनयितव्ये तत्सामर्थ्योद्बोधनरूपातिशयोत्पादनेन सहकारित्वादङ्गानां प्रधानफलेन फलवत्ता? उत फलान्तरेण? इति। नाद्यः; तस्याङ्गाभ्यासस्य निष्फलत्वात्। प्रधानं हि सकृत्प्रयुज्यमानं सकृदेव फलं जनयति, तावतैव शास्त्रार्थस्य कृतत्वात्। तत्र किमङ्गाभ्यासकृतोपकारभूयस्त्वेन? न द्वितीयः; प्रधानस्येवाङ्गानामपि फलवत्त्वे ह्यङ्गप्रधानभावो दत्तजलाञ्जलिः स्यात्। तस्मान्नाङ्गानामभ्यासः॥

अत्र शङ्कते—

**अभ्यासो वा च्छेदनसम्मार्गावदानेषु वचनात्सकृत्त्वस्य ॥३३॥**

वाशब्दश्शङ्कायाम्। अभ्यासस्स्यादङ्गानाम्। कुतः? छेदनसम्मार्गावदानेषु सकृत्त्वस्य वचनात्। बर्हिश्छेदनं हि प्रकृत्य पितृयज्ञे श्रुतम्—"सकृदाच्छिन्नं बर्हिर्भवति" इति। तथा दर्शपूर्णमासयोरनूयाजेषु परिधीनां सम्मार्गे श्रुतम्—"सकृत्सकृत् परिधीन् सम्मार्ष्टि" इति। तथा तत्रैव सौविष्टकृतावदाने श्रुतम्—"सकृत्सकृदवद्यति" इति। ततश्च क्वचित् सकृत्त्ववचनादितरेषामङ्गानामभ्यासो विज्ञायते॥

परिहरति—

**अनभ्यासस्तु वाच्यत्वात् ॥ ३४ ॥**

तुशब्दश्शङ्कानिवृत्तौ। अङ्गानामनभ्यास एव स्यात्। कुतः? वाच्यत्वात्। अङ्गानामनभ्यासेऽपि च्छेदनादिषु सकृत्त्वस्य वक्तव्यत्वात्। तथाहि—दर्शपूर्णमासयोस्तावदसकृदाच्छेदनं बर्हिषो विहितम्—"अयुङ्गानयुङ्गान् मुष्टीन् लुनाति" इति। तत्पितृयज्ञे चोदकतः प्राप्तमिति तत्र सकृत्त्वं वाच्यम्। तथा प्रयाजप्राक्कालिके परिधिसम्मार्गे त्रित्वं विहितम्—"त्रिस्त्रिः सम्मार्ष्टि" इति। सोऽयमनूयाजेषु पुनरावर्तत इति तत्र त्रित्वे प्राप्ते सकृत्त्वं वाच्यम्। तथा "द्विर्हविषोऽवद्यति" इत्यविशेषवचनात् सौविष्टकृतावदानेऽपि द्वित्वे प्राप्ते सकृत्त्वं वाच्यम्। ततश्च छेदनादिषु सकृत्त्ववचनादितरत्राभ्यासो न विज्ञातुं शक्य इति। अत्रेदं [1]वक्तव्यम्—पितृयज्ञे

१. वाच्यं. ग.

बर्हिश्छेदनस्यासकृत्त्वे चोदकतः प्राप्ते सकृत्त्वविधिरित्यत्र किं पितृयज्ञशब्देन पिण्डपितृयज्ञो विवक्षितः ? उत महापितृयज्ञः ? नाद्यः; पिण्डपितृयज्ञस्य दर्वीहोमस्यापूर्ववत्त्वेन दर्शपूर्णमासप्रकृतिकत्वाभावात्। न द्वितीयः; "सकृदाच्छिन्नं बर्हिर्भवति" इति विधेः पिण्डपितृयज्ञ एव सत्त्वात्, महापितृयज्ञे चाभावात्। प्रत्युत महापितृयज्ञे श्रूयते—"आहवनीयमभ्यग्रं त्रिरपसव्यं बर्हिषा परिस्तृणान् पर्येति तूष्णीं प्रस्तरं न्यस्यति" इति। न ह्येतावत्कार्यं सकृदाच्छिन्नमात्रेण बर्हिषा भवति। अतश्छेदने उदाहरणान्तरमेवान्वेषणीयम्। यदपि प्राग्विहितः परिधिसम्मार्गः पुनरावर्तत इति त्रित्वे प्राप्ते सकृत्त्वविधिरिति, तच्चिन्त्यम्; स एवायं सम्मार्ग इत्यत्र प्रमाणाभावात्। अतस्सम्मार्गेऽप्युदाहरणान्तरमन्वेषणीयम् ॥

इति पञ्चमं प्रयाजाद्यङ्गानां फलभूयस्त्वार्थमसकृदननुष्ठानाधिकरणम् ॥५॥

## ६

"वसन्ताय कपिञ्जलानालभेत" इत्यत्र किं त्रिप्रभृतीनां परार्धपर्यन्तानां विकल्पेनालम्भः ? उत त्रयाणामेव ? इति संशये प्राप्ते, पूर्वपक्षयति—

**बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् ॥ ३५ ॥**

त्रयाणां वा चतुर्णां वेत्येवं परार्धपर्यन्तानां विकल्पस्स्यात्। कुतः ? बहुवचनेन सर्वप्राप्तेः—त्रिप्रभृतयः परार्धपर्यन्तास्सर्वे हि बहुवचनेन प्राप्यन्ते। सर्वेषां तेषां बहुवचनवाच्यत्वात्। तत्र 'सङ्ख्यासु तु विकल्पस्स्याच्छ्रुतिविप्रतिषेधात्' इति द्वादशिकाधिकरणन्यायेन सर्वेषां सङ्ख्याविशेषाणां युगपत्समावेशस्यासम्भवाद्विकल्पेन या काचित्सङ्ख्याश्रयणीया।

ननु त्रित्वमेव बहुवचनस्यार्थः, लाघवात्, न तु त्रिप्रभृतयः सङ्ख्याविशेषाः, एकस्य शब्दस्यानेकार्थत्वे गौरवात्। न चैवं सति चत्वार इत्यादौ कथं बहुवचनमिति वाच्यम्, चतुरादिष्वपि त्रित्वस्य सत्वात्तदुपपत्तेः। मैवम्; यदि हि त्रित्वमेव बहुवचनस्यार्थस्स्यात्तर्हि चत्वारो ब्राह्मणा इत्यादिसामानाधिकरण्यानुपपत्तिः। ब्राह्मणा इति बहुवचनस्य हि त्रित्वमर्थः। चत्वार इत्यस्य तु चतुष्ट्वमर्थः। न च सम्भवति चत्वारो ब्राह्मणास्त्रय इति। न च बहुवचनस्य त्रित्वे शक्तिः, त्रित्वयोगाच्चतुरादौ लक्षणा। ततश्च चत्वारो ब्राह्मणा इति सामानाधि-

करण्यमुपपद्यत इति वाच्यम्, सत्यां गतौ लक्षणाश्रयणायोगात् त्रिप्रभृतीनां बहुवचनार्थत्वे लक्षणां विनैव चत्वारो ब्राह्मणा इत्यादिसामानाधिकरण्योपपत्तेः। न चैवमप्येकस्य शब्दस्यानेकार्थत्वे गौरवमिति वाच्यम्, त्रिप्रभृतिपरार्धपर्यन्त-सङ्ख्यागतस्य बहुत्वस्यैव बहुवचनवाच्यत्वाभ्युपगमात्। एवञ्च सति बहुवचनमिति समाख्यान्वर्था भवति। 'बहुषु बहुवचनम्' इति पाणिनीयञ्च शासनमुपपन्नं भवति। यदि हि त्रित्वमेवास्यार्थस्स्यात्तर्हि लाघवादसन्देहाच्च त्रित्वे बहुवचनमित्येवं ब्रूयात्। ननु बहुत्वं नामाधिक्यम्। तच्च सापेक्षत्वाद् भिद्यते—द्वित्वादधिकं त्रित्वं त्रित्वादधिकं चतुष्ट्वमित्यादि। तथाचानेकार्थतादोषस्तदवस्थः। द्वित्वेऽप्ये-कत्वापेक्षयाधिक्यस्य सत्वाद् बहुवचनप्रसङ्ग इति, नैष दोषः; बहुशब्दो ह्ययं नियतापेक्षाद्द्वित्वादाधिक्ये वर्तते। यथा उत्तराः कुरव इत्यत्रोत्तरशब्दो[1] दक्षिणानेव कुरूनपेक्ष्य वर्तत इति तदुत्तरदेशीयानामपि तथा व्यवहारः, तथा दक्षिणेषु कुरुषु तद्दाक्षिणात्यानाञ्च तथा व्यवहारः, तथेहापि द्वित्वादेवाधिक्यं बहुशब्दो ब्रूते। तथाच न द्वित्वे बहुवचनावकाशः। न वा चत्वारो ब्राह्मणा इत्यादौ लक्षणाश्रय-णम्, नाप्येनकार्थतादोषः। किञ्च यदि त्रित्वमेव बहुवचनस्यार्थस्स्यात्तर्हि चत्वार इति बहुवचनं नोपपद्येत। सङ्ख्या हि प्रातिपदिकार्थगता वचनेनोच्यते, प्राति-पदिकार्थभूता वा। यथा ब्राह्मणा इति। यथा वा एको द्वौ बहव इति। न हि चत्वार इत्यत्र त्रित्वसङ्ख्याप्रातिपदिकार्थः, न वा प्रातिपदिकार्थगता। न च चतुरादिष्व-वयवभूतं त्रित्वमस्तीति स्यात्तत्र बहुवचनमिति शङ्क्यम्। एवं हि द्वित्वैकत्वयो-रपि तत्र सत्वादेकवचनद्विवचनयोरप्यत्रापत्तिः। अतो बहुत्वमेव बहुवचन-स्यार्थः। तथा च बहुत्वस्य त्रिप्रभृतिपरार्धपर्यन्तेषु सर्वत्र सत्वात् सर्वेषां विकल्पः।

ननु ब्राह्मणा इत्यादौ चतुराद्युपपदरहितात्केवलाद्बहुवचनात्त्रित्वं गम्यते। चतुष्ट्वादिसङ्ख्या तु चत्वारो ब्राह्मणा इत्यादौ सोपपदादेव प्रतीयते। ततश्च त्रित्वमेव बहुवचनस्यार्थः। चतुरादौ तु लक्षणेत्येवं युज्यते। मैवम्; त्रयो लोकास्त्रयो वेदा इत्यादौ सोपपदाद् बहुवचनात्त्रित्वस्य प्रतीतेः। न हि ब्राह्मणा इत्यादौ केवलादेव बहुवचनात्त्रित्वस्य प्रतीतिरस्ति। यदि स्यात्तर्हि "वसन्ताय कपिञ्जलान्" इन्यत्रापि त्रित्वस्यैव प्रतीतेः त्रयाणामेवालम्भस्य निश्चितत्वात्त्रि-

---

१. इत्युत्तरशब्दः. ग.

प्रभृतानामालम्भ इति कोऽप्यन्तरस्यानुत्थानात् त्रिप्रभृतीनामालम्भस्त्रयाणामेवेति विचार एव नोन्मिषेत्। यदि चाशब्दार्थस्यापि विचारस्स्यात् तर्हि "वसन्ताय कपिञ्जलान्" इत्यत्र किं कपिञ्जला आलब्धव्याः उत कपोतमयूरादय इत्यपि विचारस्स्यात् ॥

ननु चत्वारो ब्राह्मणा इत्यादौ बहुवचनस्य चतुरादावपि दर्शनात्, त्रिचतुरादीनां वा त्रयाणां वेति सम्भवति विचार इत्याशङ्क्य निराकरोति—

**दृष्टः प्रयोग इति चेत्तथेह ॥ ३६ ॥**

चत्वारो ब्राह्मणा इत्यादौ बहुवचनस्य प्रयोगो दृष्टः। ततोऽयं विचारः सम्भवतीति चेत्तर्हि इह—बुद्धौ विपरिवर्तमाने कपोतमयूरादावपि कपिञ्जलशब्दस्य तथा—चतुरादाविव बहुवचनस्य प्रयोगो दृष्ट इति कपोतादयः कपिञ्जला वेत्यपि विचारस्स्यात्। महान् हि कपोत उच्यते, कपिञ्जलोऽयं न कपोत इति। तथा अल्पो मयूर उच्यते, कपिञ्जलोऽयं न मयूर इति ॥

ननु महत्त्वादिगुणयोगात् कपिञ्जलशब्दः कपोतादिषु वर्तत इति गौणोऽयं प्रयोगः। ततश्च "कपिञ्जलानालभेत" इत्यत्र कपिञ्जलशब्दो न कपोतादीन् प्रत्याययेत्[1], किन्तु कपिञ्जलानेव, मुख्ये सम्भवति गौणाश्रयणायोगात्। तथाच कपोतादयः कपिञ्जला वेति न विचारसम्भव इत्याशङ्क्य निराकरोति—

**भक्त्येति चेत्तथेतरस्मिन् ॥ ३७ ॥**

भक्त्या—गौण्या वृत्त्या कपिञ्जलशब्दः कपोतादौ प्रयुज्यत इति चेत्तर्हि-इतरस्मिन्—चत्वारो ब्राह्मणा इत्यादावपि तथा—लक्षणया बहुवचनप्रयोग इति त्रिप्रभृतीनां सर्वेषामालम्भस्त्रयाणामेव वेति विचारोऽपि नोन्मिषेत्, कपिञ्जलानिति बहुवचनेन त्रित्वस्यैव प्रतीतेः। ततश्च बहुत्वमेव बहुवचनस्यार्थः। तथाच त्रिप्रभृतीनां सर्वेषां च विकल्प इति पूर्वः पक्षः।

अत्रेदं वक्तव्यम्—बहुवचनेन 'सर्वप्राप्तेर्विकल्पस्स्यात्' इति सूत्रेण कपिञ्जलानिति बहुवचनस्य बहुत्ववाचित्वात् त्रिप्रभृतिपरार्धपर्यन्तानां विकल्प इति पूर्वपक्षे उपक्षिप्ते तदुत्तरगुणसूत्रयोः 'दृष्टः प्रयोग इति चेत्तथेह' 'भक्त्येति चेत्तथेतरस्मिन्' इत्यनयोस्तच्छङ्कापरिहारपरत्वेन व्याख्यानमुचितम्। 'भाष्ये तु यदि

---

१. प्रत्याययति. ग.

त्रित्वमेव बहुवचनस्यार्थस्स्यात्तर्हि त्रिप्रभृतीनामिति कोऽन्यन्तरस्यानुत्थानाद्विचार एवायं नोन्मिषेदित्युपक्षिप्य तत्राशङ्कातत्परिहारपरत्वेन गुणसूत्रद्वयमिदं योजितमुक्तरीत्या। तदिदमनुपपन्नम्; त्रित्वमेव बहुवचनस्यार्थ इत्याशङ्कमानं सिद्धान्तिनं प्रति हि तर्हि त्रिप्रभृतीनामिति कोऽन्यान्तरस्यानुत्थानाद्विचारो न स्यादित्यापादनं पूर्वपक्षिणः। न चैतदुपपद्यते; अनिष्टं ह्यापादनीयम्। त्रिप्रभृतीनामिति कोऽन्यन्तरस्य पूर्वपक्ष्यभिमतस्यानुन्मेषश्च। सिद्धान्तिनस्तावदिष्ट एव। तदापादने च सिद्धान्तिनः सिद्धं समीहितं स्यात्। तस्मादसङ्गतमेतत्। अतो गुणसूत्रद्वयमिदमन्यथा योजयामः—

ननु बहुत्वस्य बहुवचनवाच्यत्वात् तस्य त्रिप्रभृतिपरार्धपर्यन्तेषु सत्वात् कपिञ्जलानालभत इत्यत्र सर्वेषां विकल्प इत्युपक्षिप्तम्। बहुवचनेन सर्वप्राप्तेर्विकल्पस्स्यादिति सूत्रेण। तदिदं नोपपद्यते; बहुवचनस्य हि बहुत्ववाचकत्वं[१] चत्वारो-ब्राह्मणा इत्यादिप्रयोगादध्यवसीयते। एकत्वद्वित्वयोरपि बहुवचनस्य प्रयोगो दृष्टः एको हि देवदत्तो ब्रवीति वयं ब्रूम इति। तथा द्वावपि ब्रूतो वयं ब्रूम इति। तथा घटाः पटा इत्यादिजातिप्रधानशब्देषु बहुवचनप्रयोगो दृश्यते। अनुशास्ति च पाणिनिः—'अस्मदो द्वयोश्च' इति, 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' इति च। तथाच कपिञ्जलानित्यत्रैकस्य द्वयोरप्यालम्भः स्यादित्याशङ्क्य परिहरति—

**दृष्टः प्रयोग इति चेत्तथेह ॥**

एकत्वद्वित्वयोरपि बहुवचनस्य प्रयोगो दृष्ट इत्येकस्य द्वयोरप्यालम्भप्रसङ्गः॥

ननु कपोतादिषु कपिञ्जलशब्दस्य गौणः प्रयोग इत्याशङ्क्य एकत्वद्वित्वयोरपि बहुवचनस्य लाक्षणिक एव प्रयोग इति तुल्यमिति परिहरति—

**भक्त्येति चेत्तथेतरस्मिन् ॥**

स्पष्टोऽर्थः। जात्याख्यायामित्याद्यनुशासनन्तु लाक्षणिकार्थस्यैवेति भावः॥

सिद्धान्तयति—

**प्रथमं वा नियम्येत कारणादतिक्रमस्स्यात् ॥ ३८ ॥**

यद्यपि त्रिप्रभृति परार्धपर्यन्तसङ्ख्यागतं बहुत्वं बहुवचनस्यार्थः, तथापि कपिञ्जलानित्यत्र प्रथमं त्रित्वमेव नियम्येत-प्रतीयेत, न तु चतुष्ट्वादि। प्रथममिति हेतुगर्भं विशेषणम्, प्राथम्यादित्युक्तं भवति। ननु "एका देया, षड् देयाः, द्वादश देयाः,

---

१. वाचित्वं. क.

चतुर्विंशतिर्देयाः" इत्यत्रेव फलभूयस्त्वमधिकसङ्ख्योपादाने स्यात्तत्राह—कारणादतिक्रमस्स्यादिति । तत्र सङ्ख्याविशेषाणां पृथक्शास्त्रविहितत्वादस्ति फलतारतम्यं कारणं न्यूनाधिकसङ्ख्योपादाने । ततश्च तत्र प्रथमसङ्ख्यातिक्रमस्स्यात्, नेह चतुराद्युपादाने फलभूयस्त्वसम्भवः । यो हि चतुरादीनालभते, यश्च त्रीनालभते, उभाभ्यामपि ताभ्यां कपिञ्जलानालभत इत्येक एव शास्त्रार्थः कृतो भवतीति कथं तत्र फलतारतम्यं स्यात् । यद्यपि चतुराद्यालम्भे प्रयासगौरवमस्ति, तथापि तत् फलभूयस्त्वं नार्हत्याधातुम्, अशास्त्रीयत्वात् प्रयासगौरवस्य । बह्वालम्भस्यैव शास्त्रार्थत्वात् बहुत्वस्य च प्रथमावगतत्रित्वमादायैवोपपत्तेः । नाप्यनालभ्य त्रीन् चतुरादीनालब्धुं शक्नोति । यदा हि चतुरादीनालभते, तदा त्रीनालभ्यैव चतुर्थादीनामालम्भेन भवितव्यम् । कृते च[1] त्रयाणामालम्भे बहुवचनार्थस्य बहुत्वस्य सम्पन्नत्वाच्चतुर्थाद्यालम्भोऽनर्थक एव भवति । तस्मात्त्रयाणामेवालम्भः । यदि च त्रीनुपादाय कृतेऽपि शास्त्रार्थे पुनश्चतुरादीनालभेत, तर्ह्यशास्त्रीयत्वाद्धिंसादोषः प्रसज्येत । तस्मात् त्रयाणामेवालम्भः ॥

त्रित्वस्यैवोपादाने लिङ्गमप्यस्तीत्याह--

**तथाचान्यार्थदर्शनम् ॥ ३९ ॥**

"कृष्णा याम्या अवलिप्ता रौद्रा नभोरूपाः पार्जन्यास्तेषामैन्द्राग्नो दशमः" इत्यन्यपरे वाक्ये "कृष्णा अवलिप्ता नभोरूपाः" इति त्रिभिर्बहुवचनैस्त्रयाणां त्रिकानां प्रत्यायकस्य दशमपदस्य दर्शनं विद्यते । यदि हि चतुरादयस्तत्र बहुवचनैः प्रतीयेरन्, तर्हि दशम इति नित्यवदनुवादो नोपपद्येत ॥

किञ्च—

**प्रकृत्या च पूर्ववत्तदासत्तेः ॥ ४० ॥**

प्रकृत्या–अग्नीषोमीयेण, पूर्ववत्–स्वार्थे वतिः । पूर्वं सर्वसङ्ख्यापेक्षया आद्यमेकत्वमिति यावत् । इह चोदकतः प्राप्त इति शेषः । तस्यैकत्वस्यासत्तेः— आसत्तिः सन्निधिः त्रित्वे उपादीयमाने भविष्यति । चतुष्ट्वादौ तु तद्विप्रकर्षस्स्यात् । अतोऽपि हेतोस्त्रयाणामेवालम्भः ॥

**इति षष्ठं कपिञ्जलाधिकरणम् ॥ ६ ॥**

---

१. वा. ग.

७

साम्नाय्यदोहमधिकृत्य श्रूयते—"अन्वारभ्य वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्योत्तरा दोहयति" इति। तत्र चिन्त्यते—किमुत्तरासां तिसृणामेव गवां दोहः? उत यावन्त्यो यजमानस्य गावस्तासां सर्वासां दोहः? इति। (तदर्थं चेत्थं चिन्त्यते—किमत्र "उत्तरा दोहयति" इति विधिः? उतानुवादः?) इति। तत्र पूर्वपक्षयति—

**उत्तरासु न यावत्स्वमपूर्वत्वात् ॥ ४१ ॥**

उत्तरासु—"उत्तरा दोहयति" इत्यत्र यावत्स्वम्—यावन्त्यो यजमानस्य स्वाः गावस्तावतीनां दोहो न भवति, किन्तु तिसृणामेव। कुतः? अपूर्वत्वात्—पूर्वशब्दः प्राप्तिलक्षकः, अप्राप्तत्वादित्यर्थः। दोह्यमानानां हि गवां साकल्यं न प्रमाणान्तरेणावगतम्। येनोत्तरा दोहयतीत्यनूद्य विसृष्टवाक्त्वादि विधीयेत। अतो विसृष्टवाक्त्वादिगुणविशिष्टमुत्तरासां दोहनमत्र विधीयते[1]। अतश्च[2] पूर्वाधिकरणन्यायेन उत्तरा इति बहुवचनतास्त्रित्वस्यैव [3]प्रतीतेस्तिसृणामेव दोहनमिति प्राप्ते, सिद्धान्तयति—

**यावत्स्वं वान्यविधानेनानुवादस्स्यात् साकल्यविधानात् ॥४२॥**

वाशब्द एवार्थे। यावत्यो यजमानस्य स्वा गावः तावतीनामेव दोहनं न तिसृणामेव। कुतः? यतोऽन्यविधानेनानुवादस्स्यात्-अन्यविधानेनेति फलस्य हेतुत्वात्तृतीया विसृष्टवाक्त्वादिगुणविधानार्थम्। "उत्तरा दोहयति" इत्यनुवादः स्यात्। उत्तरा दोहयतीति यत्, तद्विसृष्टवागनन्वारभ्येति वचनव्यक्तिः। यदि ह्युत्तरा दोहयतीत्यपि विधिस्स्यात्तर्हि उत्तरा दोहयति, ताश्च विसृष्टवागनन्वारभ्येति वाक्यभेदः प्रसज्येत। ननूत्तरासां दोहस्याप्राप्तत्वात् कथमनुवादस्स्यात्तत्राह—साकल्यविधानादिति। "नास्यैतां रात्रिं पयसाग्निहोत्रं जुहुयात्, कुमाराश्च न पयो

() क पुस्तके ग्रन्थपातः

१. विधेयं. क.

२. ततश्च. क.

३. प्रतीतिः. क.

लभेरन" इति सान्नाय्ये पयस्साकल्यं विधीयते। तत्र पयोमात्रजीवना अपि कुमाराः पयो न लभेरन्निति प्रतीयमानार्थः। यजमानस्य स्वभूतं कृत्स्नमेव पयस्सान्नाय्ये विनियोज्यमिति तात्पर्यार्थः। तथाच पयस्साकल्यमत्र सान्नाय्ये लक्षणया विधेयम्। न चेदं कुमाराणां तस्यां रात्रौ पयःप्रदानप्रतिषेधपरमेवास्त्विति वाच्यम्। न हि प्रतिषेधे दृष्टं किञ्चित्प्रयोजनमस्ति। न च '[1]दृष्टार्थत्वे सम्भवत्यदृष्टकल्पनं[2] न्याय्यम्। न च साकल्यविधानेऽपि लक्षणाश्रयणं दोष इति वाच्यम्, अदृष्टार्थत्वकल्पनापेक्षया लक्षणाश्रयणस्य दृष्टफलकस्य लघीयस्त्वात्। ततश्च पयस्साकल्यविधिरेवायम्। तच्च सर्वासामेव गवां दोहन उपपद्यते, नान्यथा। [3]तथाच प्राप्तार्थत्वादुत्तरा दोहयतीत्यनुवादः। अनुवादश्च यथाप्राप्ति भवति। सर्वासाञ्च गवां प्राप्तिः। अतस्तथैवानुवादो भवति। तस्मात्सर्वासामेव गवां दोहः॥

किञ्च—

## बह्वर्थत्वाच्च ॥ ४३ ॥

बहु–अपरिमितमधिकमिति पर्यायाः। वाक्यशेषे उत्तरासां दोहनस्यापरिमितपयःप्राप्त्यर्थकत्वदर्शनादित्यर्थः। वाग्यमान्वारम्भ[4]विशिष्टं तिसृणां गवां दोहनमाम्नाय हीदमाम्नायते—"अवाचंयमोऽनन्वारभ्योत्तरा अपरिमितत्वमेवावरुन्धे" इति। पूर्वासां तिसृणां गवां यद्दुग्धं पयस्तदपेक्षयाधिकपरिमाणं पयः उत्तरासां गवां दोहनतः प्राप्नोतीति तदर्थः। अपरिमितशब्दस्य च बहुत्वार्थकत्वं षष्ठे 'अपरिमाणे च शब्दस्य सङ्ख्याप्रतिषेधस्तच्छ्रुतित्वात्' इत्यधिकरणे निर्णीय तदुत्तराधिकरणे तस्य सन्निहितपरिमाणापेक्षयाधिकपरिमाणवाचित्वं व्यवस्थापितम् 'अधिकं वा स्याद् बह्वर्थत्वादितरैस्सन्निधानात्' इति। उत्तरासां गवां पयसि पूर्वदुग्धगोत्रयापेक्षयाधिक्यञ्चोत्तरासां गवां त्रित्वाधिकसङ्ख्याकत्व एव नित्यवदुपपद्यते, नान्यथा। एवञ्च सायंदोहाधिकारे "यत्सान्नाय्योखे भवतः" इत्युखाद्वयविधानमर्थवद्भवति। "अप्रस्रंसाय यज्ञस्योखे उपदधाम्यहम्" इति मन्त्रवर्णोऽप्यर्थवान् भवति, अन्यथादृष्टार्थताप्रसङ्गः। तस्मात् सर्वासामेव गवां दोहः॥

---

१. दृष्टार्थे. क.

२. कल्पना नाय्या. क.

३. ततश्च. क.

४. अन्वारम्भण. क.

यत्तु भाष्ये—'वहु दुग्धीन्द्राय देवेभ्यो हविः" इति मन्त्रस्य सर्वासु दुह्यमानासु अपाक्षिकत्वं भविष्यति वहुत्वञ्च शक्त्यपेक्षम्' इति व्याख्यातम्, तदापाततः; पूर्वासां तिसृणां दोहनमुक्त्वा ह्याम्नायते-"वहु दुग्धीन्द्राय देवेभ्यो हविरिति वाचं विसृजते" इति । तदनन्तरमिदमाम्नातम्-"अवाचंयमोऽनन्वारभ्योत्तराः" इति। तत्र हि पूर्वदुग्धास्तिस्रो गाः प्रत्युच्यते-वहु दुग्धीति। हे गौः, इन्द्राय देवेभ्यश्च हविः पयः आगामियागार्थं पुनः दुग्धि। तच्च हविः आप्यायताम्-वर्धतामिति। न च पूर्वासु तिसृषु गोषु दुग्धीत्येकवचनानुपपत्तिरिति वाच्यम्, प्रतिगोव्यक्ति मन्त्रावृत्या तदुपपत्तेः, "त्रिराह" इत्यावृत्तिश्रवणाच्च। ततश्च पूर्वदुग्धगोत्रिकपरोऽयं मन्त्रः कथमुत्तरासां गवां साकल्यविधाने लिङ्गं स्यात्? न च विधास्यमानोत्तरगवीपरत्वमस्य मन्त्रस्य युक्तम्, पुनश्शब्दविरोधात्। पुनश्शब्देन हि दुग्धत्वं गवामवगम्यते। न हि धोक्ष्यमाणायां गवि पुनर्दुग्धीति समञ्जसम्। अतो यत्किञ्चिदेतत् ॥

किञ्च—

## अग्निहोत्रे चाशेषवद्यवागूनियमः ॥ ४४ ॥

सान्नाय्याधिकारे—"नास्यैतां रात्रिं पयसाग्निहोत्रं जुहुयाद्यथान्यस्यै देवतायै प्रत्तमन्यस्यै दद्यात्, तादृक् तत्। तस्माद्यवाग्वा जुहुयात्" इत्यग्निहोत्रे पयसोऽविनियोगे सति शेषत्वापत्तिनिन्दया यवागूविधिरपि साकल्यमुत्तरासां गवां गमयति। अशेषवदिति स्वार्थे वतिः। भावप्रधानो निर्देशः। अशेषत्वं साकल्यमित्यर्थः ॥

किञ्च—

## तथा पयःप्रतिषेधः कुमाराणाम् ॥ ४५ ॥

सर्वस्यापि पयसस्सान्नाय्यार्थतामवगमयतीति शेषः। साकल्यविधानादित्यस्य प्रपञ्चोऽयम् ॥

किञ्च—

## सर्वप्रापिणापि लिङ्गेन संयुज्य देवताभिस्संयोगात् ॥४६॥

अस्ति वत्सापाकरणाधिकारे वाक्यशेषः "वत्सेभ्यश्च ह वा एताः पुरा मनुष्येभ्यश्चाप्यायन्त, देवेभ्य एवैना इन्द्रायाप्याययति" इति। पुरा-यागसम्बन्धात्

पूर्वमेताः—गावः वत्सान् मनुष्यांश्चाप्याययन्त—पयसा अतर्पयन् । इदानीं यागसम्बन्धे सति देवानिन्द्रं चैव एना गावः आप्याययन्ति पयसा तर्पयन्ति, न तु वत्समनुष्यानित्यर्थः। वत्सेभ्य इत्यादौ द्वितीयार्थे-चतुर्थी। एना इति प्रथमाविभक्तावप्येनादेशः । आप्याययतीति बहुत्वे एकवचनञ्च छान्दसम् । ततश्चात्र सर्वप्रापिणा सर्वेषां वत्समनुष्याणां प्रापयितृत्वेन लिङ्गेन-धर्मेण संयुज्यानूदितानां गवां देवतामात्रसम्बन्धप्रतिपादनात् सान्नाय्ये गवां साकल्यविधिरनुमीयत इत्यर्थः। यदि ह्युत्तरा दोहयतीत्यत्र तिस्र एव दुह्येरन् , तर्हि परिशिष्टानां गवां वत्समनुष्याप्याययितृत्वसम्भवेन तद्विरोधः स्पष्ट एव । अतस्सर्वासामेव गवां दोहः ॥

॥ इति सप्तममुत्तरादोहाधिकरणम् ॥ ७ ॥

८

अलमेवमुपोपद्धातप्रसक्तानुप्रसक्तम् । अथ प्रकृतं तन्त्रावापमध्यायार्थं विचारयामः । सन्ति दर्शपूर्णमासयोः षट् प्रधानानि, त्रीणि पौर्णमास्यां त्रीण्यमावास्यायामिति । तत्र चिन्त्यते—किं प्रतिप्रधानं भेदेनाङ्गानि कर्तव्यानि ? उत सकृदेव ? इति । तत्र पूर्वपक्षयति—

**प्रधानकर्मार्थत्वादङ्गानां तद्भेदात्कर्मभेदः प्रयोगे स्यात् ॥ ४७ ॥**

प्रयोगे—प्रधानानां समवाये सति, कर्मभेदः-प्रतिप्रधानमङ्गानां प्रयोगभेदः स्यात् । कुतः ? प्रधानकर्मार्थत्वात्—प्रधानकर्मार्थत्वेन ह्यङ्गान्युपदिश्यन्ते । तानि च प्रधानानि परस्परानपेक्षाभिश्चोदनाभिः पृथगेवोत्पन्नानि । पृथगेवाङ्गाकाङ्क्षाणि सन्निधिसमाम्नातान्यङ्गानि पृथगेव परिगृह्णन्ति । अङ्गसम्बन्धे च प्रधानानामुद्देश्यत्वात् सहत्वं न विवक्ष्यते, ततश्च विनियोगदशायामङ्गानां प्रतिप्रधानं भेदेनैवोपकारकतयावगमादेकैकं प्रधानं सर्वाङ्गयुक्तं परिसमाप्य प्रधानान्तरं सर्वाङ्गयुक्तं कर्तव्यम् ॥

किञ्च—

**क्रमकोपश्च यौगपद्ये स्यात् ॥ ४८ ॥**

आग्नेयादिभावनाः क्रमेणावगताः । ताश्चांशत्रयवत्यः । तत्र यौगपद्येऽङ्गानां सकृत्प्रयोगे सति क्रमकोपः—क्रमविरोधस्स्यात् । अङ्गानां तन्त्रत्वे ह्याज्यभागादि-

पूर्वतन्त्रं कृत्वा प्रधानानि क्रमेणानुष्ठाय स्विष्टकृदाद्युत्तरतन्त्रं कर्तव्यं स्यात् । ततश्चा-कृत्वाग्नेयं साङ्गमेकं प्रधानमितरस्याङ्गस्योपक्रमे सति साङ्गानां प्रधानानामवगतः क्रमो व्याकुप्येत । अतोऽप्यङ्गानां प्रतिप्रधानमावृत्तिस्स्यात् ॥

सिद्धान्तयति—

## तुल्यानान्तु यौगपद्यमेकशब्दोपदेशात् स्याद्विशेषाग्रहणात् ॥४९॥

तुशब्द एवार्थे । देशकालकर्तॄणां तन्त्रत्वादेकस्यामेव पौर्णमास्यामेकस्मिन्नेव देशेऽभिन्नैः कर्तृभिराग्नेयादीनि प्रधानानि कर्तव्यानीति प्रधानैककालदेशकर्तृकाण्ये-वाङ्गानीति चाग्रिमे पादे व्यवस्थापयिष्यते । तदेवं देशकालकर्तृतः तुल्यानां प्रधानानां प्रयोगेऽङ्गानां यौगपद्यम्—सकृत्प्रयोगस्स्यात् । कुतः ? एकशब्दोपदेशात्—एकेन हि यजेतेति शब्देन तन्त्राभिधानावगतसाहित्यानि प्रधानानि फलं प्रत्युपदिष्टानि । अतस्सम्भूयफलकारित्वं प्रधानानामित्यत्रैव पादे आद्याधिकरणे निर्णीतम् । अतस्सर्वेषु प्रधानेषु स्वर्गकामस्य युगपच्चिकीर्षा भवति । युगपच्चिकीर्षया च प्रधानेषु प्रक्रान्तेषु प्रयुयुक्षितानि प्रयाजाद्यङ्गानि सकृत्प्रयुक्तान्येव सर्वार्थानि भवितुमर्हन्ति । कुतः ? विशेषाग्रहणात्—न गृह्यते हि विशेषोऽस्य प्रधानस्यैतान्यङ्गानीति । यत्र तु प्रधानानां देशकालकर्तृभेदः, तत्र तत एव विशेषादङ्गभेद इत्यग्रिमे पादे व्यवस्था-पयिष्यते । तत्सूचनायैवात्र सूत्रे तुल्यानामित्युक्तम् ॥

अथ यदुक्तम्–'क्रमकोपश्च यौगपद्ये स्यात्' इति तत्राह—

## ऐकार्थ्यादव्यवायस्स्यात् ॥ ५० ॥

व्यवायः—व्यवधानं क्रमभङ्गः तस्याभावोऽव्यवायः स्यात् । कुतः ? ऐका-र्थ्यात्—समुदितानामेव प्रधानानामेकफलसाधनत्वात् । अङ्गानि हि प्रधानेषु समुदितेषु फलजननसामर्थ्योद्बोधनरूपमुपकारं युगपत्कुर्वन्ति, न त्वेकैकस्मिन् व्यस्ते क्रमेण, समुदितानामेकफलत्वात् । अङ्गाकाङ्क्षा हि समुदितानां फलवतां युगपदेव भवति, न त्वेकैकस्य क्रमेण । ततश्च प्रत्येकमङ्गानुष्ठाने प्रयोजनाभावात् कुतस्साङ्गानां प्रयोगे क्रमः, कुतश्च तद्व्याकोपः । किञ्च—उत्पत्तिवाक्येषु निरङ्गाना-मेव प्रधानानामवगमः, न तु साङ्गानाम् । तत्र निरंशाया एव भावनायाः प्रतीतेः । फलवाक्यादेव ह्यंशत्रयप्रतीतिरित्याकरे स्पष्टम् । ततश्चोत्पत्तिवाक्यतो न साङ्गानां क्रमावगमः ॥

अङ्गानां तन्त्रत्वे उक्तो न्यायः श्रुतिसम्मत इत्याह—

**तथाचान्यार्थदर्शनम् कामुकायनः ॥ ५१ ॥**

"चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम्" इति वाक्यशेषे चतुर्दशत्वाद्याहुतिपरिमाणं दृश्यते। तदेतदङ्गानां तन्त्रत्व एवोपपद्यते, अन्यथा तदाधिक्यापत्तेरिति कामुकायन आचार्यो मन्यते ॥

नन्वेवमारादुपकारकाणां प्रयाजादीनां तन्त्रत्वे तन्न्यायेन कपालाङ्गारापोहनपुरोडाशप्रथनादीनामपि तन्त्रत्वं स्यादित्याशङ्क्य परिहरति—

**तन्न्यायत्वादशक्तेरानुपूर्व्यं स्यात् संस्कारस्य तदर्थत्वात् ॥५२॥**

स आरादुपकारकेपूक्तो न्यायः यस्य सन्निपत्याङ्गजातस्य तत् तन्न्यायम्, तस्य भावस्तत्त्वम्, तस्मात्तन्न्यायत्वात्। सन्निपत्याङ्गानामङ्गारापोहनप्रथनादीनां तन्त्रत्वं न प्राप्नोतीति शेषः। किन्त्वानुपूर्व्यं प्रतिपुरोडाशं क्रमेण कपालाङ्गारापोहनादिसंस्कारस्स्यात्। कुतः ? अशक्तेः-सकृत्कृतस्य तस्य स्वकार्यजननेऽसामर्थ्यात्। कुतः ? संस्कारस्य तदर्थत्वात्-अङ्गारापोहनप्रथनादिसंस्कारस्य पुरोडाशनिष्पत्त्यर्थत्वात्। न ह्येकपुरोडाशीयकपालाङ्गारापोहनेन सर्वेषां पाकश्शक्यते कर्तुम्[१]। नाप्येकस्य प्रथनेन सर्वे पुरोडाशाः प्रथिता भवन्ति। अतः प्रत्यक्षोपकारिणामङ्गानामावृत्तिरेव, आरादुपकारकाणान्तु तन्त्रत्वमिति ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**असंसृष्टेऽपि तादर्थ्यात् ॥ ५३ ॥**

योऽयमङ्गविशेषः असंसृष्टः-आरादुपकारकः, सोऽपि प्रतिप्रधानमावर्तेत। कुतः ? तादर्थ्यात्—यस्य प्रधानस्य सन्निधौ यत्कृतमङ्गं तस्य तन्मात्रार्थत्वात्। ततश्चारादुपकारकाणां तन्त्रत्वे आज्यभागान्तानि प्राच्याङ्गानि आग्नेयस्य सन्निधौ कृतानि गृह्यमाणविशेषत्वात्तन्मात्रार्थानि। स्विष्टकृदादीनि तूदीच्याङ्गान्यग्नीषोमीयसन्निधौ कृतानि तन्मात्रार्थान्येव। ततश्च मध्यवर्तिन उपांशुयाजस्योभयविधान्यप्यङ्गानि पृथगेव कर्तव्यानि स्युः ॥

१. कर्तुं शक्यते. क.

अत्र सिद्धान्ती शङ्कते—

**विभवाद्वा प्रदीपवत् ॥५४॥**

वा शब्दश्शङ्कायाम्। यस्य सन्निधौ यत्कृतमङ्गं तत्तदर्थमेवेत्येतन्न भवति। कुतः? विभवात्-एकस्य सन्निधौ कृतानामप्यङ्गानां सर्वेषु प्रधानेषूपकारजनेन सामर्थ्यात्। प्रदीपवत्। यथैकस्मिन् देशे[१] भुञ्जानानां ब्राह्मणानामेकस्यापि सन्निधौ दीपः प्रज्वलित उपकरोति, तद्वत् ॥

अत्र पूर्वपक्षी विषमोऽयं दृष्टान्त इति परिहरति—

**अर्थात्तु लोके विधितः प्रतिप्रधानं स्यात् ॥ ५५ ॥**

तुशब्दो दृष्टान्तवैषम्यद्योतनार्थः। कुतो वैषम्यम्, यतो लोके अर्थादन्धकार-निवृत्तिरूपदृष्टप्रयोजनवशेन दीपस्य तन्त्रता। तत्र यद्येकस्मिन् प्रदेशे भुञ्जानानामेकः प्रज्वलितो दीपोऽन्धकारं निवर्तयति, तर्हि तन्त्रता। यदि त्वेको दीपोऽन्धकारं गाढं न निवर्तयितुं शक्नोति, तर्हि तस्य तस्य सन्निधौ पृथक्क्रियत एवेति प्रत्यक्ष-सिद्धम्। प्रकृते त्वङ्गानां प्रधानोपकारकत्वं न प्रत्यक्षतो गम्यम्। किन्तु विधितः— विधित एव गम्यम्। अङ्गविधयश्च साधारणाः। न हीदङ्गमस्यैवोपकरोति, न सर्वेषाम् इति [२]विशिष्योपदेशोऽस्ति। सन्निधानात्तु विशेषो गम्यते[३]। यत्सन्निधौ यत्प्रयुक्तं तत्तस्यैवोपकरोतीति। तस्मात्प्रतिप्रधानमङ्गानामावृत्तिस्स्यात् ॥

नन्वेवमपि प्रतिप्रधानमङ्गावृत्तौ "चतुर्दश पौर्णमास्याम्" इत्यनुवाद-विरोधः 'तथाचान्यार्थदर्शनं कामुकायनः' इति सूत्रेणोक्तः। तत्र कः परिहार इति सिद्धान्ती शङ्कते—

**सकृदिज्यां कामुकायनः परिमाणाविरोधात् ॥५६॥**

अङ्गानामनभ्यासे "चतुर्दश पौर्णमास्याम्" इति परिमाणानुवादस्याविरो-धात्तदभ्यासे च विरोधात् सकृदिज्याम्—सकृत्क्रियामेवाङ्गानां कामुकायन आचार्यो मन्यते किल, तत्र कः परिहार इति शेषः ॥

---

१. प्रदेशे. ग.

२. विशिष्ट. क.

३. अवगम्यते. क.

पूर्वपक्षी परिहरति—

**विधेस्त्वितरार्थत्वात्सकृदिज्याश्रुतिव्यतिक्रमः स्यात् ॥५७॥**

तुशब्दश्शङ्काव्यावृत्तौ। विधीयत इति विधिः अङ्गकलापः, तस्य इतरार्थत्वात्—सन्निधिवशेनैकैकार्थत्वात्। अभ्यासे निर्णीते सकृदिज्याश्रुतेः—अङ्गानां सकृत्क्रियाप्रापकवाक्यस्य "चतुर्दश पौर्णमास्याम्" इत्यस्य व्यतिक्रमः लक्षणयाहुतिविधिसङ्ख्यापरत्वं स्यात्। अतस्सकृत्क्रियाङ्गानाम् ॥

तदेवम् 'असंसृष्टोऽपि तादर्थ्यात्' इत्यादिभिः पञ्चभिः सूत्रैः सिद्धान्तिशङ्कोपमर्दपूर्वकं प्रतिप्रधानमङ्गावृत्तिरित्याक्षिप्तं पूर्वपक्षिणा। तत्सिद्धान्ती परिहरति—

**विधिवत्प्रकरणाविभागे प्रयोगं बादरायणः ॥५८॥**

अङ्गानां तन्त्रेण प्रयोगं बादरायण आचार्यो मन्यते। कुतः? प्रकरणाविभागे–अत्रासतीत्यध्याहार्यम्। निमित्तसप्तम्येषा, 'यस्य च भावेन भावलक्षणम्' इति विधानात्। प्रकरणाविभागादिति यावत्। प्रकरणमिह चिकीर्षा। सा तावत् सर्वेषां प्रधानानामविभक्ता। फलवत्स्वेव हि प्रधानेषु चिकीर्षा भवति। फलकारित्वञ्च सहितानामेवेत्युक्तं प्राक्। ततश्च प्रधानानां युगपच्चिकीर्षयैवाङ्गानामपि चिकीर्षितत्वात् सकृत्कृतान्येवाङ्गानि सर्वार्थानि भवन्ति। सन्निधिस्तु प्रकरणेन बाध्यते, विधिवत्-विधीयत इति विधिरङ्गकलापः, तद्वत्। यथा षट्सु भावनासु त्र्यंशविशिष्टासु विधित्सितासु साध्यसाधनांशप्रतिपादनेन च प्रकृतासु प्रक्रान्तासु तृतीयमंशं भेदेनैवापेक्षमाणास्वपि सकृदाम्नाता एवाङ्गविधयः षण्णामपि प्रत्येकमङ्गानि युगपदेवावगमयन्ति। सत्यपि च कस्यचिदङ्गस्य प्रधानोत्पत्तिविधिसन्निधौ प्रकरणवशेन सन्निधिर्बाध्यते, तद्वदत्रापि प्रधानेषु सम्भूय फलकारिषु युगपच्चिकीर्षितेषु प्रक्रान्तेषु सकृत्कृतान्येवाङ्गानि प्रधानीययुगपच्चिकीर्षयैव कृतत्वात्प्रकरणवशेन सन्निधिं बाधित्वा सर्वार्थानि भवन्ति। अतः सकृदेवाङ्गानां प्रयोगः। किञ्चाङ्गानां सर्वेषां सम्भूयकारित्वादवान्तरव्यापारद्वारेणाग्न्यन्वाधानादिब्राह्मणतर्पणान्तैः सर्वैरङ्गैरुपकारो जन्यत इति निर्णीतम् 'अर्थभेदस्तु तत्रार्थेह्यैकार्थ्यादैककर्म्यम्' इत्यत्र प्राक्। ततश्चोपकारजननवेलायां सर्वाणि प्रधानापूर्वाणि सन्निहितान्येव। अतस्सन्निधिरविशिष्टः। अतस्तन्त्रत्वमेवाङ्गानाम् ॥

नन्वङ्गानां तन्त्रत्वे "सहावहन्ति" "सह पिंषन्ति" इत्यादौ क्वचित्सहत्व-विधानमनर्थकं स्यात्। प्रतिप्रधानमङ्गावृत्तौ तु तद्विधानमर्थवत्। अतोऽङ्गानामभ्यास एव युक्त इत्याशङ्क्य निराकरोति—

**क्वचिद्विधानान्नेति चेन्न विधेश्चोदितत्वात् ॥ ५९ ॥**

क्वचित्सहत्वविधानादितरेषामङ्गानां तन्त्रत्वं न स्यात् इति चेत्तन्न; कुतः? विधेश्चोदितत्वात्–विधेः निर्वापस्य प्रतिप्रधानं भेदेन चोदितत्वात्। आग्नेयस्य निर्वापणमुक्त्वा ह्याम्नायते–"स एवमेवानुपूर्व्यं हवींषि निर्वपति" इति। भेदेन च निरुप्तानां भेदेनैवावहननपेषणयोः प्राप्तयोः सहत्वविधानमर्थवत्। तस्मादङ्गानां तन्त्रत्वमेवेति ॥

इत्यष्टमं दर्शपूर्णमासयोः प्रयाजादीनां तन्त्रताधिकरणम् ॥ ८ ॥

९

काम्यपशुषु श्रूयते—"आग्नेयं कृष्णग्रीवमालभेत" "सौम्यं बभ्रुम्" "आग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमानः" इति। तत्र चिन्त्यते—किं प्रथमतृतीययोस्सह-प्रदानम्? उत भेदेन? इति। तत्र पूर्वपक्षयति—

**व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणविशेषाणाम् ॥६०॥**

कालदेशकर्तृतस्तुल्यानां प्रधानानां प्रयोगे, अगृह्यमाणविशेषाणामङ्गानां यौगपद्यम्—तन्त्रत्वं व्याख्यातं पूर्वाधिकरणे। तथाच कृष्णग्रीवयोरेकदेवतयोः सह-प्रयोगे क्रियमाणे सहप्रदानमेव स्यात्, अगृह्यमाणविशेषत्वात्। न ह्युभयोः प्रदाने याज्यानुवाक्यादौ कश्चिद्विशेषो गृह्यते। अतस्तयोः सहप्रदानमिति प्राप्ते, सिद्धान्तयति—

**भेदस्तु कालभेदाच्चोदनाव्यवायात्स्याद्विशिष्टानां विधेः प्रदानकालत्वात् ॥ ६१ ॥**

तुशब्द एवार्थे। कृष्णग्रीवयोः प्रदाने भेद एव युक्तः, न तु तन्त्रता। कुतः? कालभेदात्–कथं कालभेदः? चोदनाव्यवायात्–सौम्यचोदनाकृष्णग्रीवचोदनयो-

र्व्यवहितत्वात्। यदि हि सहप्रदानमुभयोः सौम्यस्य पुरस्तात् स्यात्तर्हि तृतीयस्य क्रमो बाध्येत। यदि तु सौम्यस्योपरिष्टात्तयोः सहप्रदानं स्यात्, तर्हि प्रथमस्य क्रमो बाध्येत। अतो भेदेनैव प्रदानम्। ननु "आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवम्" इत्यत्रालभतेर्यागोपलक्षकत्वात्त्रयाणां यागानामेव क्रमोऽवगतः, न तु प्रदानानाम्। तथाच त्रीनपि यागान् क्रमेण कृत्वा कृष्णग्रीवयोः सहप्रदाने सौम्यप्रदानस्य पुरस्तात्परस्ताद्वा क्रियमाणे कुतः क्रमविरोधः ? तत्राह—विशिष्टानां विधेः प्रदानकालत्वादिति। विशिष्टानां क्रमेण विहितानां त्रयाणां यागानां विधेरनुष्ठानस्य प्रदानकालत्वात्। तत्तत्प्रदानकाल एव हि तद्यागानुष्ठानम्। एवं हि श्रूयते—"चतुरवत्तं जुहोति, वषट्कृते जुहोति" इति। वषट्कारानन्तरं देवतोद्देशेन त्यक्तं हविः प्रक्षिपतीत्यर्थः। जुहोतिर्हि देवतोद्देशेन त्यक्तस्य हविषः प्रक्षेपे वर्तते। तदुक्तं सूत्रकृता 'तदुक्तेः श्रवणाज्जुहोतिरासेचनाधिकः स्यात्' इत्यत्र चतुर्थे। एवञ्च तत्तत्प्रदानकाल एव तत्तद्यागानां कर्तव्यत्वात् कृष्णग्रीवयोस्सहप्रदाने क्रमविरोधाद् भेदेनैव प्रदानम्॥

उक्तो न्यायः श्रुतिसम्मत इत्याह—

**तथाचान्यार्थदर्शनम्॥ ६२॥**

तथा–उक्तन्यायानुसारेण "अभितस्सौम्यमाग्नेयौ भवतः" इति वाक्यशेषे आग्नेययागयोः सौम्यापेक्षया पूर्वोत्तरवर्तित्वश्रवणात् तत्सहचरितप्रदानभेदे दर्शनं भवति। अतश्च न सहप्रदानं तयोः॥

नन्वभितः सौम्यमाग्नेयौ भवत इत्याग्नेययोः प्रदानभेदविधिपरम्। सौम्यापेक्षया यागयोः पौर्वापर्यस्य पाठादेव सिद्धेः। 'तथाचात्र विधानादन्यत्रैवञ्जातीयके सहप्रदानमेव स्यात् इत्याशङ्क्य परिहरति—

**विधिरिति चेन्न वर्तमानापदेशात्॥ ६३॥**

"अभितस्सौम्यमाग्नेयौ भवतः" इति प्रदानभेदविधिरिति चेत्तन्न; कुतः ? वर्तमानापदेशात्–विद्यमानार्थातिक्रमात्। लक्षणाप्रसङ्गादिति यावत्। आग्नेयशब्दो हि यागे मुख्यः, प्रदाने तु लाक्षणिकः। न च विधौ लक्षणा युज्यते।

---

१. ततश्च. क.

ततश्चानुवादोऽयमित्यर्थः। यद्वा विधिक्रमवशात् सौम्यमभितो विद्यमानयोराग्नेय-यागयोस्स्तोतुमनुवादादित्यर्थः। तथाहि—"आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमानः" इत्यनन्तरमित्थमर्थवादः पठ्यते—"आग्नेयो वै ब्राह्मणः सौम्यो राजन्योऽभितः सौम्यमाग्नयौ भवतस्तेजसैव ब्राह्मण उभयतो राष्ट्रं परिगृह्णाति" इति। तत्र तेजसैव ब्राह्मण उभयतो राष्ट्रं परिगृह्णातीति स्तुत्योऽर्थः। तत्र तेजसैव ब्राह्मण इत्यस्योपपादकम् "आग्नेयो वै ब्राह्मणः" इति। राष्ट्रमित्यस्योपपादकम् "सौम्यो राजन्यः" इति। "उभयतः परिगृह्णाति" इत्यस्योपपादकम्—"अभितस्सौम्यमाग्नेयौ भवतः" इति। ततश्चाय-मनुवादः। प्रदानभेदविधिपरत्वे हि आग्नेयावित्यस्य प्रदानयोर्लाक्षणापत्तिः। न च विधौ लक्षणा युज्यते। आग्नेययागानुवादत्वे च मुख्यवृत्त्यनतिक्रम इत्यनुवाद एवायम्॥

इति नवमं काम्यपशुषु कृष्णग्रीवयोः प्रथमतृतीययोर्भेदेन प्रदानाधिकरणम्॥९॥

इति श्रीमद्वासुदेवविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ
एकादशाध्यायस्य प्रथमः पादः॥

॥ श्रीः ॥

# अथ द्वितीयः पादः

निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

पूर्वस्मिन् पादे केवलप्रधानार्थानामनुष्ठानतन्त्रता विचारिता । इह त्वङ्ग-प्रधानार्थानां देशादीनां तन्त्रता प्राधान्येन विचार्यते । दर्शपूर्णमासयोर्देशकालकर्तारः श्रूयन्ते—"समे दर्शपूर्णमासाभ्यां यजेत" "पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायां अमावास्यया यजेत" "दर्शपूर्णमासयोश्चत्वार ऋत्विजः" इति । ते किं तन्त्रम्? उत प्रतिप्रधानं भेदेन ? इति संशयः । कश्चात्र विशेषः ? यदि तन्त्रता, तर्हि यस्मिन्नेव समे देशे यस्यां पौर्णमास्यां यैरेव कर्तृभिराग्नेयः कृतः, तस्मिन्नेव समे देशे तस्यामेव पौर्णमास्यां तैरेव कर्तृभिरुपांशुयाजोऽग्नीषोमीयश्च कर्तव्यः । यदि तु भेदेन, तस्याग्नेयापेक्षया देशान्तरे पौर्णमास्यन्तरे कर्त्रन्तरैरुपांशुयाजः कर्तव्यः, एवमग्नीषोमीयोऽपीति । तदर्थं चेत्थं चिन्त्यते—किं देशादिविधयो "यदाग्नेयोऽष्टाकपालः" इत्याद्युत्पत्तिवाक्यशेषाः ? उत "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति फलवाक्यशेषाः ? इति । तत्र सिद्धान्तेनोपक्षिपति—

**एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात् ॥ १ ॥**

देशश्च कालश्च कर्तारश्च देशकालकर्तारः । एके देशकालकर्तारो येषां प्रधानानां तान्येकदेशकालकर्तृणि । तेषां भाव एकदेशकालकर्तृत्वं मुख्यानाम्—प्रधानानां स्यात् । कुतः ? एकशब्दोपदेशात्—फलवाक्ये एकेन यजेतेति शब्देन तन्त्राभिधानावगतसाहित्यानामेव प्रधानानां फलसाधनत्वोपदेशात् । ततश्च देशादिविधिभ्यः फलवाक्यशेषेभ्यः समुदिताङ्गत्वप्रतीतेर्देशादीनां तन्त्रत्वं भवति ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**अविधिश्चेत्कर्मणां नाभिसम्बन्धः प्रतीयेत लक्षणार्थाभि-
संयोगाद्विधित्वाच्चेतरेषां प्रतिप्रधानं
भावः स्यात् ॥ २ ॥**

यदि देशादिविधिः अविधिः-उत्पत्तिविधिभिन्नः स्यात्, उत्पत्तिवाक्यशेषो न स्यादिति यावत्। तर्हि कर्मणाम्—आग्नेयादिप्रधानानामभिसम्बन्धः-देशादिभिर्भेदेन सम्बन्धः न प्रतीयेत। नैवमस्ति। कुतः? विधित्वाच्चेतरेषाम्-चकारो हेतुत्वद्योतनार्थः। इतरेषां देशादिवाक्यानां विधित्वात्-उत्पत्तिविधिशेषत्वात्। भावनोत्पत्तिविधिशेषा एव हि देशादिविधयः, न तु फलवाक्यशेषाः। त्रयाणामपि ह्यंशानां भावनयैव सम्बन्धः, न परस्परम्, कारकाणां मिथस्सम्बन्धायोगात्। ततश्च फलवाक्यं देशादिवाक्यानि च सर्वाणि भावनोत्पत्तिवाक्यैरेव सम्बध्यन्ते। उत्पत्तिवाक्येषु चाग्नेयादिभावनानां परस्परनिरपेक्षतयावगमात्तासु देशादयः पृथगेव [1]सम्बन्धमर्हन्ति। ननु देशादिवाक्येषु यजेतेति तन्त्राभिधानतस्साहित्यावगमात् समुदिताङ्गत्वमेव देशादीनां स्यात्। सत्यम्; "समे दर्शपूर्णमासाभ्यां यजेत" इत्यत्र हि यागोद्देशेन देशविधिः-दर्शपूर्णमासाभ्यां यजेतेति यत्, तत् समे देश इति हि वचनव्यक्तिः। एवं कालकर्तृविधावपि। ततश्च तन्त्राभिधानावगतमपि साहित्यमुद्देश्यगतत्वान्न विवक्ष्यते। अतः प्रतिप्रधानं देशादीनां पृथगेव सम्बन्धः। नन्वेवं सति दर्शपूर्णमासाभ्यामिति द्वन्द्वसमासानुपपत्तिः, इतरेतरयोगे तद्विधानात्। तस्य चात्राविवक्षितत्वात्। न चायं समाहारद्वन्द्वः, तथा-सत्येकवचनापत्तेः। तत्राह—लक्षणार्थाभिसंयोगादिति। लक्षणया अर्थेष्वितरेतरयोगरहितेष्वपि प्रधानेषु द्वन्द्वसमासस्याभिसंयोगात्-वृत्तेः। ततश्च "य इष्टया पशुना सोमेन वा यजेत, सोऽमावास्यायां पौर्णमास्यां वा यजेत" इत्यस्मिन्वाक्ये तन्त्राभिहिताभिरपीष्टिभिः प्रत्येकमेव कालः सम्बध्यते, तन्त्राभिधानावगतसाहित्यस्याविवक्षितत्वात्। तथा नैकस्मिन्नेव पर्वणि सर्वाः क्रियन्ते। तथा देशादिविधिष्वपि, उद्देश्ययागगतसाहित्यस्याविवक्षितत्वात् प्रतिप्रधानं भेदेन कालादि-

---

१. सम्बद्धुं. क.

सम्बन्धादेकस्यां पौर्णमास्यामाग्नेयं कृत्वा अन्यस्यामग्नीषोमीयमित्येवं षट्सु पर्वसु षड्यागाः कर्तव्याः।

ननु प्रतिप्रधानं देशादिभेदेऽभ्युपगम्यमाने फलवाक्ये तन्त्राभिधानावगतं फलं प्रति प्रधानानां साहित्यं पूर्वपादाद्याधिकरणनिर्णीतं बाध्येतेति चेदुच्यते—तस्मिन्नधिकरणे तावदेतावदवगतम्—एकमेव फलं सर्वैः प्रधानैः साध्यते, न तु प्रत्येकं फलस्य पृथङ्निष्पत्तिरिति। न चैतावता देशकालादिभेदस्य बाधोऽस्ति, भिन्नदेशादिकृतैरपि सर्वैर्यागैरेकस्य फलस्य सम्भवात्। तस्मात्प्रतिप्रधानं देशादिभेदः॥

उक्तमेव न्यायमुपजीवन् विषयान्तरेऽपि पूर्वपक्षमुत्थापयति—

**अङ्गेषु च तदभावः प्रधानं प्रति निर्देशाद्यथा द्रव्यदेवतम् ॥ ३ ॥**

अङ्गेष्विदानीं चिन्त्यते—प्रधानस्य ये देशकालकर्तारस्त एवाङ्गानामपि भवन्ति? उतानियमः? इति। तत्राङ्गेषु प्रयाजादिषु तदभावः–प्रधानसम्बन्धिदेशकालकर्तृसम्बन्धाभावस्स्यात्। कुतः? प्रधानं प्रति निर्देशात्–देशादिविधीनामुक्तरीत्योत्पत्तिवाक्यशेषतया प्रधानं प्रति-आग्नेयादिप्रधानमेव प्रति देशादीनां निर्दिष्टत्वात्। ततश्चाङ्गेषु प्रधानदेशाद्यनियमः। यथा द्रव्यदेवतम्—द्रव्याणि पुरोडाशादीनि, देवताः अग्न्यादयश्च तत्समाहारः द्रव्यदेवतम्। तद्यथा—प्रधानं प्रत्येव निर्दिष्टमङ्गेषु न भवति। उत्पत्तिवाक्येषु प्रधानानां निरङ्गानामेवावगमात्, तद्वत्। तस्मादङ्गेषु देशाद्यनियमः॥

तदेवं प्रासङ्गिकं विषयान्तरे पूर्वपक्षमुद्भाव्य प्रकृतं पूर्वपक्षं निराकरोति—

**यदि तु कर्मणो विधिसम्बन्धस्स्यादैकशब्द्यात्**
**प्रधानार्थाभिसंयोगात् ॥ ४ ॥**

तुशब्दः पूर्वपक्षव्यावृत्तौ। यदि कर्मणः–आग्नेयादिप्रधानस्यैव देशादिविधिसम्बन्धस्स्यात्, तर्हि प्रतिप्रधानं भेदेन विधिसम्बन्धः–देशादिविधीनां सम्बन्धस्स्यात्। नैवमस्ति। कुतः? प्रधानार्थाभिसंयोगात्—प्रधानं फलं तदर्थो यः समुदितानां प्रधानयागानां प्रयोगः, तेन देशादीनामभिसंयोगात्—सम्बन्धात्। देशादिविधीनां फलवाक्यशेषत्वादिति यावत्। यद्यपि भावनयैवाङ्गानां सम्बन्धो न परस्परम्, तथाप्युत्पत्तिवेलायां नाङ्गानां भावनायां सम्बन्धो भवितुमर्हति।

उत्पत्तिवाक्येषु निरङ्गानामेव प्रधानानामवगमात् । भावना च भाव्यं पुरुषार्थत्वात् प्रथममपेक्षते । तल्लाभश्च फलवाक्याद्भवति । फलवतश्चेतिकर्तव्यताकाङ्क्षा । ततश्च फलवाक्यैकतापन्नानामुत्पत्तिविधीनामङ्गसम्बन्धात् पर्यवसानगत्या फलवाक्यशेषत्वं देशादिविधीनां भवति । नन्वस्त्वेवम्, तथापि प्रतिप्रधानं भेदेन देशादयः कुतो न सम्बध्येरन्, फलवाक्यावगतप्रधानसाहित्यस्य देशादिभेदेऽपि बाधकाभावात् । तत्राह—ऐकशब्द्यादिति । एकः सर्वेषां यागानां तन्त्रेणाभिधायको यजेतेति शब्दो यस्मिन् देशादिवाक्ये तस्य भावस्तत्त्वम्, तस्मादैकशब्द्यात् फलवाक्य इव देशादिवाक्येऽपि तन्त्राभिधानावगतप्रधानसाहित्यस्य विवक्षितत्वादित्यर्थः । ननु विषमोऽयं दृष्टान्तः । फलवाक्ये हि यागानां विधेयत्वात्तत्साहित्यविवक्षा सम्भवति । देशादिवाक्ये तु यागानामुद्देश्यत्वात् तत्साहित्यस्य कथं विवक्षा ? उच्यते—स्वभावादेव देशादिरनुपादेयः । तस्य चेहावश्यं क्रियासम्बन्धो वक्तव्यः, तत्र द्वयोरुद्देश्ययोरुपादेययोर्वा मिथस्सम्बन्धाभावादन्यतरोद्देशेनान्यतरस्मिन्नुपादातव्ये देशादिकमनुपादेयं प्रति यागा उपादीयन्ते । तद्गतस्य च तन्त्राभिधानावगतस्य साहित्यस्य विवक्षा युक्ता । ततश्च देशादिवाक्येषु फलं प्रति विवक्षितसाहित्यानामेव प्रधानानां देशादौ विधानात् फलार्थिनां युगपत्सर्वेषु प्रधानेषु कर्तव्यतयोपस्थितेषु चिकीर्षितेषु देशकालकर्तारो विहिताः । ते चागृह्यमाणविशेषत्वात् सर्वार्था भवन्ति ।

यदुक्तं य इष्ट्यादिवाक्ये तन्त्राभिहितानामपीष्टीनां पृथक्कालसम्बन्धवद्देशादिविधिष्वपि भेदेनैव प्रधानसम्बन्धः स्यादिति । विषमोऽयं दृष्टान्तः । सौर्यादीनां हि पृथक्स्वफले विनियुक्तानां पृथगेव कर्तव्यतावगमः नानाविधिविधेयत्वात्तेषाम् । ततश्चान्योन्यनिरपेक्षैरेव तैस्तत्र कालः सम्बध्यत इति नास्ति तन्त्रत्वम् । इह तु एकस्मिन् फले प्रधानानां सहितानामेकविधिविधेयत्वाद्देशादीनां तत्र तन्त्रत्वम् ॥

उक्तो न्यायः श्रुतिसम्मत इत्याह—

## तथाचान्यार्थदर्शनम् ॥ ५ ॥

यथा न्याय उक्तस्तथैवान्यार्थो वाक्यशेषोऽपि दर्शयति—"उग्राणि ह वा एतानि घोराणि हवींषि यदमावास्यायां सम्भ्रियन्ते, आग्नेयं प्रथममैन्द्र उत्तरे" इति सम्भरणं पौर्वापर्यञ्च हविषामेककालत्व उपपद्यते । तस्मादपि तन्त्रमिति

भाष्यम् । तन्न; न हि सम्भरतिरेकत्र मेलने नियतः, येनैककालत्वं प्रतीयेत, "उखां सम्भरति" इत्यादौ करोत्यर्थकत्वस्यापि दर्शनात् । ततश्च प्रत्यमावास्यमेकैकहविर्निष्पादनेऽपि सम्भरतिरुपपद्यते । तथा प्रथममुत्तरे इति पौर्वापर्यञ्च । किञ्च देशकर्तृभेदस्यात्रादर्शनान्न्यूनता । वस्तुतस्तु—अग्नीषोमीयादिपुरोडाशीयद्रव्याणां सहावघातसहपेषणादिविधायकं "तानि सहावहन्ति" "सह पिंषन्ति" इत्यादिवाक्यं देशादीनां तन्त्रत्वे दर्शनं भवति । प्रतिप्रधानं भेदेन देशाद्यन्वये हि तदनुपपन्नं स्यात् । न हि देशभेदे कालभेदे कर्तृभेदे वा सहावघातादि शक्यते कर्तुमिति व्याख्येयम् ॥

देशादिविधीनां फलवाक्यशेषत्वे युक्त्यन्तरमाह—

**श्रुतिश्चैषां प्रधानवत् कर्मश्रुतेः परार्थत्वात्कर्मणोऽश्रुतित्वाच्च ॥६॥**

पूर्वश्चशब्द उक्तयुक्तिसमुच्चयार्थः । एषां देशादीनां श्रुतिः-श्रवणं प्रधानवत् । षष्ठ्यन्ताद्वतिः । प्रधानस्येव-फलस्येव भवति । यथा फलवाक्ये फलगुणभूतदर्शपूर्णमासाख्ययागसंयुक्तस्य [1]फलश्रुतिः, तद्वद्देशादीनामपि फलगुणभूतदर्शपूर्णमासयागसंयोगेनैव श्रुतिर्भवतीत्यर्थः । तथाच देशादिविधयः फलवाक्यशेषा इत्युक्तं भवति । कुत एतत् ? कर्मश्रुतेः परार्थत्वात्-कर्मवाचकदर्शपूर्णमासपदोत्तरतृतीयाश्रुत्या प्रधानानां परार्थत्वात्–फलं प्रति गुणभावावगमात् । ततश्च देशादिविधीनामुत्पत्तिवाक्यशेषत्वे तेषु दर्शपूर्णमासाभ्यामिति तृतीयाश्रुतिर्भज्येत । कुतः ? कर्मणोऽश्रुतित्वाच्च-चशब्दो हेतुत्वद्योतनार्थः । क्रियत इति कर्म फलम् , तस्याश्रुतित्वात्–उत्पत्तिवाक्येष्वश्रवणात् । ततश्च यदाग्नेयादिवाक्येषु केवलं प्रधानानां फलं विना कृतानां विधानोद्देशादिविधीनामुत्पत्तिवाक्यशेषत्वे तत्र दर्शपूर्णमासाभ्यामिति फलकरणत्वबोधकतृतीयानुपपत्त्या तेषां फलवाक्यशेषत्वमेवास्थेयम् ॥

अमुमेव सिद्धान्तमुपजीवन्नङ्गेषु प्रधानदेशाद्यनियम इति पूर्वपक्षमपि निराकरोति—

**अङ्गानि तु विधानत्वात् प्रयोजनेनोपदिश्येरन्**
**तस्मात्स्यादेकदेशत्वम् ॥ ७ ॥**

तुशब्दः पूर्वपक्षव्यावृत्तौ । नैवमङ्गेषु प्रधानदेशाद्यनियम इति, किन्तु प्रधानानां ये देशादयस्त एवाङ्गानां भवन्ति । कुतः ? यतः फलवाक्ये फलं प्रत्यु-

---

[1] १, फलस्य, ग,

पदिश्यमानेन प्रधानेन सहाङ्गान्यपि उपदिश्येरन्–उपदिष्टानि भवेयुः। कुतः? विधानत्वात्–विधीयन्ते उपस्क्रियन्ते प्रधानान्येभिरङ्गैरिति विधानानि, तेषां भावस्तत्त्वम्। तस्मात्प्रधानेन फले जनयितव्ये कुठारेण छिदायां जनयितव्यायामुद्यमननिपतनादिवदङ्गानां सहकारित्वादित्यर्थः। ततश्च फलवाक्ये साङ्गानामेव प्रधानानां समुदितानां प्रयोगस्योक्तत्वात् तदेकवाक्येषु देशादिविधिष्वपि दर्शपूर्णमासाभ्यां यजेतेति साङ्गानामेव प्रधानानां समुदितानां देशादौ विधिः। तस्मात्कारणादेकदेशत्वम्—देशग्रहणमुपलक्षणम्। एकदेशकालकर्तृत्वमङ्गप्रधानानां स्यात्। देशादिवाक्येषु प्रधानगतं साहित्यं साङ्गत्वञ्चोपादेयगतत्वाद्विवक्षितमिति यावत्।

नन्वेवमपि देशकालयोरनुपादेयत्वात्तत्रोपादीयमानानां यागानां साहित्यं साङ्गत्वञ्च विवक्षितमस्तु, कर्तॄणान्तूपादेयतया द्रव्यदेवतादिवत् कर्मोद्देशेन विधानस्योपपन्नतया तत्र यागानामुद्देश्यत्वात्तद्गतसाहित्यसाङ्गत्वयोरविवक्षित्वाद् भेदेनैव प्रधानानामङ्गानाञ्च कर्तारः स्युः। किञ्च देशवाक्ये कालवाक्ये च दर्शपूर्णमासाभ्यामिति तृतीयाश्रुत्या साङ्गत्वस्यावगमेऽपि कर्तृविधौ तृतीयाश्रुत्यभावेन साङ्गत्वस्यानुपस्थितेरङ्गानां का प्रधानैककर्तृत्वकथा? सत्यम्; यद्यपि तृतीयाश्रुतिसंयोगाभावः कर्तॄणाम्, यद्यपि चोपादेयता, तथापि साङ्गानां सहितानामेव च प्रधानानां कर्तृसम्बन्धो विज्ञायते। तथाहि–प्रयोगाङ्गतया कर्तॄणामुपादानं विधानञ्च भवति, अपेक्षितत्वात्। सेतिकर्तव्यताकप्रयोगे विज्ञाते करिष्यामीति निश्चिन्वानस्य कथमिदं करिष्यामि, किं ससहायः, असहायो वेत्यस्यामवस्थायां 'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात्स्वयं प्रयोगे स्यात्' इत्यधिकरणन्यायेन केवलं यजमाने प्राप्तेऽध्वर्य्वादयोऽपि कर्तारो विधीयन्ते। तथाच प्रयोग एव सहायोपादित्सा भवति। समीहितप्राप्त्यर्थो यः पुरुषव्यापारः स प्रयोग इत्युच्यते। स च फलसामग्रीविषयः। अङ्गसहितानि च प्रधानानि समस्तानि फलसामग्री, नैकैकं प्रधानम्, नाप्यङ्गहीनम्। ततश्च समस्तविषये व्यापारे फलवाक्यविहिते सहायापेक्षायां विधीयमाना ऋत्विजस्तद्द्वारेण साङ्गानां समस्तानाञ्च प्रधानानां भवति देशकालयोरप्ययं न्यायस्समान एव, तयोरपि प्रयोगापेक्षितत्वात्। फलवाक्ये हि साध्यसाधनांशयुक्ता भावनावगता, सा च कथमितीत्थंभावमपेक्षते। भावनागतश्च रूपविशेष इत्थम्भावः। प्रज्ञातरूपा च भावना कालादीनपेक्षते। ततश्च प्रकारापेक्षायां

भावनायां तत्प्रकारत्वेन प्रयाजादिष्ववगतेषु सामस्त्यरूपेण भावनाख्ये व्यापारे प्रयोगापरपर्यायेऽवगते तच्छेषतया कालादयो विधीयन्त इत्यङ्गानामपि त[1] एव कालादयो भवन्ति। ततश्च "सायमग्निहोत्रं जुहोति" इत्यादौ तृतीयाश्रुत्यभावेऽपि साङ्गस्यैव तत्कालत्वं सिद्धं भवति ॥

अथ यदुक्तं प्रधानीयद्रव्यदेवतमङ्गेष्वपि प्राप्नुयादिति तदनूद्य निराकरोति—

**द्रव्यदेवतं तथेति चेन्न चोदनाविधिशेषत्वान्नियमार्थो विशेषः ॥८॥**

देशादिवत्प्रधानीयद्रव्यदेवतमङ्गेष्वपि स्यादिति चेत्तन्न; कुतः? चोदनाविधिशेषत्वात्—चोदनाविधय उत्पत्तिवाक्यानि "यदाग्नेयोऽष्टाकपालः" इत्यादीनि, तच्छेषत्वाद्द्रव्यदेवतस्य। उत्पत्तिवाक्येषु हि केवलं प्रधानं निरङ्गमवगतम्। अतस्तत्रावगतं द्रव्यदेवतं केवलप्रधानार्थमेव[2] विज्ञायते, न त्वङ्गार्थमपि, तत्र तस्यानपेक्षितत्वात्, अयोग्यत्वाच्च। तदेव दर्शयति—नियमार्थो विशेष इति। "यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्, यदुपभृति प्रयाजानूयाजेभ्यस्तत्" "आग्नेयाः प्रयाजा भवन्ति" "आज्यभागौ यजति, तावाग्नेयः सौम्यश्च भवतः, शेषात् स्विष्टकृते समवद्यति, आज्येन पत्नीः संयाजयन्ति" इत्यादिद्रव्यदेवताविशेषविधिरङ्गेषु सर्वत्रोपलभ्यते। स तावद्यजतीत्यनेनैव यस्य कस्यचिद्द्रव्यस्य प्राप्तौ नियमार्थो विज्ञायते। तत्कथं प्रधानीयद्रव्यदेवतस्याङ्गेषु प्रसक्तिः? न च यत्राङ्गेषु द्रव्यदेवताविधिर्नास्ति, यथा—अग्न्यन्वाधानादौ तत्र प्रधानीयद्रव्यदेवतमङ्गानां प्रसक्तिरिति वाच्यम्, अयोग्यत्वात्। तथाच फलभावनावयवयागस्वरूपनिष्पादन एव द्रव्यदेवतमपेक्षितत्वात् योग्यत्वाच्च सम्बध्यते। तस्मान्न प्रधानसम्बन्धिद्रव्यदेवतमङ्गानां भवति देशादयस्तु भवन्ति ॥

किञ्च—

**तेषु समवेतानां समवायात्तन्त्रमङ्गानि भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात्तथा चान्यार्थदर्शनम् ॥ ९ ॥**

यदि च प्रधानस्य द्रव्यदेवतादीन्यङ्गानामपि भवन्ति, तर्हि तेषु-द्रव्यदेवतादिषु समवेतानाम्—अङ्गसहितानां प्रधानानां समवायात्-सम्बन्धात्, तन्त्रमङ्गानि

---

१. तत एव. क.

२. प्रधानार्थकमेव, ग.

प्रयाजाद्यङ्गेज्यानां प्रधानेज्यानाञ्च यान्यङ्गानि-अनुवाचनप्रैषाश्रवणयाज्याप्रैष-प्रक्षेपादीनि, तानि तन्त्रेण स्युः, अगृह्यमाणविशेषत्वात्। नैवमस्ति, किन्तु भेदः-अङ्गानां प्रधानानाञ्च द्रव्यादिभेदस्स्यात्। कुतः? तेषां प्रधानशब्दत्वात्-तेषां द्रव्यादीनां प्रधानशब्दत्वात् निरङ्ग-प्रधानमात्रोत्पत्तिवाक्यश्रुतत्वात्। ततश्च तद् भेदात् कर्मभेदः। कर्मणामङ्गेज्यानां प्रधानेज्यानाञ्च भेदः प्रयोगे-अनुवाचन-प्रैषादौ स्यात्, विशेषग्रहणात्। तथा च तथासत्यङ्गप्रधानेज्यानामनुवचनप्रैषादि-भेदे सति "चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम्" इत्यन्यार्थे वाक्यशेषे आहुतिसङ्ख्यादर्शनमुपपद्यते। अङ्गप्रधानानामेकद्रव्यदेवतत्वे तु सर्वेषा-मेकैवाहुतिस्स्यादिति तद्विरोधः स्पष्ट एव। अतोऽपि द्रव्यदेवतमङ्गानां प्रधाना-नाञ्च भिद्यत इति वैषम्यम्। अतस्साङ्गानां प्रधानानां समुदितानामेकदेशकाल-कर्तृत्वमिति स्थितम्॥

इति प्रथममङ्गप्रधानानामेकदेशकालकर्तृत्वाधिकरणम्॥ १ ॥

२

स्तो दर्शपूर्णमासाख्ये द्वे त्रिके। किं तयोरङ्गानि तन्त्रम्? उत प्रतीष्ट्यावर्तें-रन्? इति संशयः। तथा राजसूये "अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति" इत्यादय इष्टयः। तत्र किं सर्वासामिष्टीनां तन्त्रमङ्गानि? उत प्रतीष्ट्यावर्तेरन्? इति संशयः। तथा तत्रैव "अग्निष्टोममग्र आहरति" इत्यादयस्सोमाः। तेषु किं सौमिकान्यङ्गानि तन्त्रम्? उत प्रतिसोममावर्तेरन्? इति संशयः। तथा सन्ति चातुर्मास्याख्यानि चत्वारि पर्वाणि वैश्वदेववरुणप्रघाससाकमेधशुनासीरीया-ख्यानि। तेषु किमङ्गानि तन्त्रम्? उत प्रतिपर्व भिद्येरन्? इति सशयः। तत्र पूर्वपक्षयति—

**इष्टिराजसूयचातुर्मास्येष्वैककर्म्यादङ्गानां तन्त्रभावस्स्यात्॥१०॥**

प्रकृतीष्ट्योर्दर्शपूर्णमासाख्ययोः राजसूये चेष्टिपशुसोमेषु चातुर्मास्येषु च पर्वसु चतुर्षु भिन्नभिन्नकालेषु विभज्य प्रयुज्यमानेष्वङ्गानामौष्टिकपाशुकसौमिकानां यथोचितं प्रवर्तमानानां तन्त्रभावः-सकृत् सकृत् प्रयोगस्स्यात्। कुतः? ऐक-कर्म्यात्-क्रियत इति कर्म फलम्। एकफलसाधनत्वादित्यर्थः। दर्शपूर्णमासयोर्हि

षण्णामपि प्रधानानां समुदितानामेकं फलं श्रुतम्—"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति। तथा राजसूये इष्टिपशुसोमानां समुदितानामेकमेव फलं श्रुतम् "राजसूयेन स्वाराज्यकामो यजेत"इति। तत्र हीष्टिपशुसोमाः प्रधानानि। तथा "चातुर्मास्यैः स्वर्गकामो यजेत"इति। तत्र चतुर्णामपि पर्वणां प्राधान्यम्। एषु च वाक्येषु यजतिना तन्त्रोपदिष्टानां सम्भूयैकफलकारित्वम्, एकफलसाधनानाञ्च तन्त्रमङ्गानीति व्यवस्थापितं पूर्वपादे॥

ननु तत्रागृह्यमाणविशेषत्वादङ्गानां तन्त्रत्वमुक्तम्। अत्र तु गृह्यते विशेषः, कालभेदात्। प्रकृतौ हि त्रिकयोः कालभेदः श्रूयते—"पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायाममावास्यया यजेत" इति। तथा राजसूये—"अन्वहमनुमत्यादिभिरिष्टिभिर्यजेत" इत्यादिकालभेदः श्रुतः। तथा "वसन्ते वैश्वदेवेन यजेत" "प्रावृषि वरुणप्रघासैर्यजेत" "शरदि साकमेधैर्यजेत" "ततो द्व्यहे त्र्यहे चतुरहे च चतुर्षु वा मासेषु शुनासीरीयेण यजेत" इति चातुर्मास्येष्वपि कालभेदः श्रुतः। कालभेदे चाङ्गप्रयोगो भिद्यत इति व्यवस्थापितमेव पूर्वाधिकरणे। ततश्चैतेष्वङ्गानां तन्त्रत्वमनुपपन्नमित्याशङ्क्य निराकरोति—

**कालभेदान्नेति चेन्नैकदेशत्वात् पशुवत्॥ ११॥**

कालभेदादङ्गानां तन्त्रत्वं नेति चेत्तन्न; कुतः? एकदेशत्वात्-फलं साधयतां प्रधानानामङ्गान्युपकुर्वन्ति। फलसाधनत्वञ्च समुदितानामेव प्रधानानाम्, न तु व्यस्तानामिति व्यवस्थापितं पूर्वपादाद्याधिकरणे। पौर्णमास्या यजेतेत्यत्र च फलसाधनीभूतसमुदितप्रधानषट्कैकदेशस्य त्रिकस्य निर्देशः। एवममावास्यावाक्येऽपि, न तु षण्णां समुदितानाम्। न चैकदेशस्य फलसाधनत्वमस्ति। कुतस्तत्राङ्गानां प्रसङ्गः? कुतस्तराञ्च कालभेदादङ्गप्रयोगभेदकथा? न हि कालभेदः-असतोऽप्यङ्गप्रयोगस्य भेदं सम्भावयितुमीष्टे। एवं राजसूयेऽनुमत्येष्ट्यादिषु चातुर्मास्येषु च वैश्वदेवादिषु द्रष्टव्यम्। ततश्च षण्णामपि प्रधानानामेकोपक्रमावसानानां यदेव किञ्चिदङ्गमनुष्ठितम्, तत् षट्सु चिकीर्षितेषु क्रियमणमगृह्यमाणविशेषत्वात्तन्त्रं भवति। वचनात्तु प्रधानानां [1]प्रयोगा विप्रकृष्यन्ते। नैतावताङ्गानामावृत्तिः सिध्यति, पशुवत् यथा "वपया प्रातस्सवने चरन्ति, पुरोडाशेन माध्यन्दिने सवने,

---

१. प्रयोगो विप्रकृष्यते. ग.

अङ्गैस्तृतीयसवने" इति पशुप्रयोगे विप्रकृष्यमाणेऽपि नाङ्गानामावृत्तिः, तद्वदिहापि राजसूयचातुर्मास्येष्वङ्गानां तन्त्रत्वमिति प्राप्ते, सिद्धान्तयति—

**अपिवा कर्मपृथक्त्वात्तेषाञ्च तन्त्रत्वविधानात् साङ्गानामुपदेशस्स्यात् ॥ १२ ॥**

अपिवेति पक्षव्यावृत्तौ । नैवमिष्टिराजसूयचातुर्मास्येषु तन्त्रमङ्गानीति । किं तर्हि ? तेषु साङ्गानामङ्गप्रयोगसहितानां प्रधानानामुपदेशः स्यात् । कुतः ? कर्मपृथक्त्वात्—कर्मणां पौर्णमासीत्रिकामावास्यात्रिकानुमत्यादिकर्मणां पृथक्त्वात्—भेदेन विधानात् । ननु "पौर्णमास्यां पौर्णमास्या यजेत" इत्यादिवाक्येषु न कर्मणां विधानम्, किंतु कर्मोद्देशेन कालविधानम् । ततश्चोद्देश्यकर्मगतसाङ्गत्वस्य कथं विवक्षा ? तत्राह—तेषाञ्च तन्त्रत्वविधानादिति । तेषां पौर्णमासीत्रिकादीनां कर्मणां तन्त्रस्य चाङ्गकलापस्य "पौर्णमास्यां पौर्णमास्या यजेत" इत्यादिवाक्येषु विधानात् । न ह्यत्र कर्मोद्देशेन कालस्य विधिः, तस्यानुपादेयत्वात् । किन्तु काले कर्मणस्साङ्गस्य विधानम् । प्रयोग एव कालस्यापेक्षितत्वादिति प्रपञ्चितमेव पूर्वाधिकरणे । ततश्चोपादेयगतस्य विवक्षितत्वाद्वाचनिकस्तेष्वङ्गप्रयोगभेद इत्युक्तं भवति । एतेन समुदितानां फलसाधनत्वात् 'तदेकदेशेऽङ्गप्रयोगाप्रसक्तिरिति[1] परास्तम्, कालभेदे सत्येकदेशोऽप्यङ्गप्रयोगभेदस्य[2] वाचनिकत्वात् ।

ननु त्रिकस्य फलसाधनत्वाभावात्पौर्णमास्येति तृतीयानुपपत्तिरिति चेद्—भ्रान्तोऽसि । न हि षट्सु प्रधानेषु फलसाधनत्वं व्यासज्यवृत्तीति पूर्वपादाद्याधिकरणे प्रतिपाद्यम्, फलसाधनत्वस्य सर्वेषु प्रधानेषु प्रत्येकं पर्याप्यवृत्तित्वात् । अन्यथा सौर्यादावाग्नेयादिविध्यन्तो न स्यात्, आग्नेयस्य केवलस्य फलसाधनत्वाभावेनाङ्गवत्त्वाभावात् । परन्तु षट्स्वपि प्रधानेषु फलसाधनेष्वेकेनापि साधनेन विना फलं नास्तीत्येतावदेव पूर्वपादाद्याधिकरणे प्रतिपाद्यम् । यथा घटसाधनेषु दण्डचक्रचीवरादिषु । तत्र हि घटसाधनत्वं न व्यासज्यवृत्ति, किन्तु पर्याप्यवृत्त्येव । अन्यतमसाधनस्याभावे घटस्यानुत्पाद इति दण्डादीनां साधनानां समुच्चयोऽभ्युपगम्यते । अन्यथा दण्डेन घट इति तृतीयानुपपत्तेः । ततश्च

---

१. तदङ्गदेशे. क.

२. प्रयोगस्य. क.

षड्भिरपि यागैः समुदितैः फलजननेऽपि प्रत्येकं फलसाधनत्वस्याक्षतेः न पौर्णमास्येत्यादितृतीयानुपपत्तिः। ततश्चैषु स्थलेषु प्रयोगभेदो वाचनिक इति स्थितम्॥

उक्तो न्यायः श्रुतिसंमत इत्याह—

**तथाचान्यार्थदर्शनम्॥ १३॥**

पौर्णमासीत्रिकादावङ्गप्रयोगभेदे यथा न्याय उपपादितस्तथा—"चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते" "त्रयोदशामावास्यायाम्" इति वाक्यशेषे उभयोरपि त्रिकयोराहुतिपरिमाणविशेषदर्शनं विद्यते। द्वयोरपि त्रिकयोः समानतन्त्रत्वे तु तद्विरोधस्स्पष्ट एव। तस्मात्तत्र तन्त्रभेद एव न्याय्यः॥

किञ्च,

**तदावयवेषु स्यात्॥ १४॥**

यदा कालभेदे प्रयोगभेदो न्याय्यः, तदा चातुर्मास्यावयवभूतेषु अनीकवतादिषु बर्हिस्साधारण्यवचनमर्थवत्स्यात्। एवं हि श्रूयते—"पूर्वेद्युरग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकं सूर्येणोद्यता, मरुद्भ्यः सान्तपनेभ्यो माध्यन्दिने चरुं निर्वपति, मरुद्भ्यो गृहमेधिभ्योऽपराह्णे चरुं निर्वपति" इति। "यदनीकवतस्य बर्हिस्तत्सान्तपनीयस्य सैव स्तीर्णा वेदिर्भवति, गृहमेधीयस्य या सान्तपनेभ्यः" इति च। यदि च कालभेदे तन्त्रभेदो न स्यात्, तर्हि बर्हिस्साधारण्यवचनमेतदनर्थकं स्यात्। एकतन्त्रत्वे बर्हिस्साधारण्यस्य सिद्धत्वात्।

अथ यदुक्तं पशुवदिति, तत्राह—

**पशौ तु चोदनैकत्वात् तन्त्रस्य विप्रकर्षः स्यात्॥ १५॥**

तुशब्दो वैषम्यद्योतनार्थः। पशुप्रयोगे कालभेदे सत्यप्यङ्गानां तन्त्रत्वमेव। कुतः? यतस्तन्त्रस्य विप्रकर्षस्स्यात्—तन्त्रस्य प्रचारस्य तत्र विप्रकर्षो विहितस्स्यात्। तथा च "वपया प्रातस्सवने चरन्ति" इत्यादिवचनात् प्रचारस्य विप्रकर्षे सत्यप्यङ्गानां तन्त्रत्वमित्याशयः। ननु प्रचारभेदेऽप्यङ्गप्रयोगभेदः कुतो न स्यात्? तत्राह—चोदनैकत्वादिति। एका हि पशुचोदना "सवनीयं पशुमुपाकरोति" इति। अङ्गानि च कर्मचोदनायामेव गृह्यन्ते, न प्रचारचोदनायाम्। एकमेव हि

प्रधानं भिन्नकालेन प्रचारद्वयेन निर्वर्त्यते। प्रधानार्थानि चाङ्गानि कृतान्येव। न च तेषां पुनः क्रियायां प्रयोजनमस्ति। अत्र तु भिन्नानि प्रधानान्येकफल-साधनत्वेन चोदितानि कालभेदाद्विप्रकृष्यन्ते। अतस्त्राङ्गानामावृत्तिर्युक्तेति वैषम्यम्।

ननु "पौर्णमास्यां पौर्णमास्या यजेत" इत्यत्र किं कर्मोद्देशेन कालस्य विधिः? उत काले कर्मविधिः? नाद्यः; कालस्यानुपादेयत्वात्। द्वितीयेऽपि किं काले प्रधान-त्रिकमात्रस्य विधिः? उत साङ्गस्य प्रधानत्रिकस्य। नाद्यः; यदाग्नेयादिवाक्यत एव प्रधानत्रिकस्य कालसम्बन्धसिद्धेः। न द्वितीयः; यदाग्नेयादिवाक्यतोऽपि साङ्गस्यैव प्रधानस्य कालसम्बन्धावगमात्, कालस्य प्रयोग एवापेक्षितत्वात्, कालश्रवणस्य साङ्गप्रधानविषयतायाः पूर्वाधिकरणे व्यवस्थापितत्वादिति। अत्रो-च्यते—"पौर्णमास्यां पौर्णमास्या यजेत" इति वाक्येऽसति उत्पत्तिवाक्येषु प्रत्येकं कालश्रवणात्, तस्य च साङ्गप्रधानविषयत्वादेकैकस्य प्रधानस्य कृत्स्नसितिकर्त-व्यताकाण्डमावर्तेत। सति त्वेतस्मिन् वाक्ये पौर्णमास्यां ये यागा उत्पन्नास्ते सर्वे करणविभक्तियुक्ताः कालं प्रति विधीयन्ते। करणविभक्तिश्चेतिकर्तव्यता-मन्तरेण न सम्भवतीति ततस्साङ्गत्वप्रतीतिः। उपादेयत्वाच्च यागानां त्रयाणां साहित्यं साङ्गत्वञ्च विवक्ष्यते। ततश्चानेन वाक्येन पौर्णमासत्रिकस्य तन्त्रेणेति-कर्तव्यता सिध्यति।

नन्वेवमपि "पौर्णमास्यां पौर्णमास्या यजेत" इति वचनं व्यर्थम्। तथाहि—"समे दर्शपूर्णमासाभ्यां यजेत" इति वाक्येनेतरेतरयुक्तास्सेतिकर्तव्यताका यागा देशं प्रति विधीयन्ते, न तु कर्मोद्देशेन देशस्य विधिः, कालवत्तस्याप्यनुपादेय-त्वात्। ततश्च तत्र षण्णामपि यागानां साहित्यं साङ्गत्वञ्च विवक्षितम्। तदेतत्पौर्ण-मासीत्रिकस्य प्रत्येकमङ्गत्वे बाध्येत। तथा च देशवाक्यतः षण्णां प्रधानानामेक-तन्त्रत्वस्यावगमे सति "पौर्णमास्यां पौर्णमास्या" इत्यनर्थकोऽनुवाद इति। तत्रो-च्यते—यद्यपि देशवाक्यतो देशं प्रति साङ्गानां सहितानाञ्च प्रधानानां विधिरव-गतः, तदेतत्पौर्णमासीत्रिकस्य प्रत्येकमङ्गवत्वेऽपि न विरुध्यते। षण्णामपि प्रधानानां साङ्गानामेकसमदेशकर्तव्यत्वे हि देशविधेस्तात्पर्यम्। न हि द्वयोस्त्रिकयोः प्रत्येकं साङ्गयोरेकसमदेशकर्तव्यत्वे प्रधानगतस्य साङ्गत्वस्य साहित्यस्य च विरोधोऽस्ति।

तस्मात्पौर्णमास्यां पौर्णमास्येति वाक्यं त्रिकसमुदायस्येतिकर्तव्यताविध्यर्थम् । एवममावास्यावाक्यमपीति सिद्धमित्यास्तां तावत् ॥

इति द्वितीयं दर्शपूर्णमासत्रिकराजसूयादिष्वङ्गानामतन्त्रत्वाधिकरणम् ॥ २ ॥

३

इदमाम्नायते—"आग्नावैष्णवं प्रातरष्टाकपालं निर्वपेत्, सारस्वतं चरुम्, बार्हस्पत्यं चरुम, आग्नावैष्णवमेकादशकपालं माध्यन्दिने सारस्वतं चरुम्, बार्हस्पत्यं चरुम्, आग्नावैष्णवं द्वादशकपालमपराह्णे, सारस्वतं चरुम्, बार्हस्पत्यं चरुम् यस्य भ्रातृव्यः सोऽनेन यजेत" इति । तत्र चिन्त्यते—किं त्रिषु कालेषु प्रयुज्यमानानामेतेषां त्रयाणां त्रिकानां तन्त्रेणाङ्गानि कर्तव्यानि ? उत प्रतित्रिकं भेदेन ? इति । तत्र पूर्वपक्षयति—

**तथा स्यादध्वरकल्पायां विशेषस्यैककालत्वात् ॥ १६ ॥**

अध्वरकल्पेति त्रिकत्रयस्य नामधेयम् "अध्वरकल्पां प्रति निर्वपेत्" इति प्रकृत्य तद्विधानात् । तस्यामध्वरकल्पायां त्रिकत्रयात्मिकायां तथा—यथा पशौ प्रचारयोः कालभेदे सत्यप्यङ्गानां तन्त्रत्वमुक्तम्, तथा तन्त्रत्वमङ्गानां स्यात्, न तु कालभेदेऽपि प्रतित्रिकमङ्गान्यावर्तेरन् । कुतः ? विशेषस्यैककालत्वात्—विशेषस्य निर्वापपशुरूपाङ्गविशेषस्य त्रिकत्रयसाधारणस्यैककालत्वात्—एककालत्वश्रवणात् । एवं हि श्रूयते—"पुरा वाचः प्रवदितोर्निर्वपेत्" इति । प्राग्वयसां प्रवादादित्यर्थः । महारात्र इत्युक्तं भवति । अत्र च प्रकरणाविशेषात् त्रयाणामपि त्रिकाणां निर्वापो महारात्रे विधीयते । ततश्च मध्यन्दिनापराह्णकालकयोस्त्रिकयोर्निर्वापस्य तत्तत्कालयोः प्राप्तस्यापकर्षः सिद्धो भवति । ततश्च 'तदादिवाभिसम्बन्धात्तदन्तमपकर्षः स्यात्' इति न्यायेन निर्वापान्तस्याग्न्यन्वाधानादेरङ्गकाण्डस्यापकर्षो भवति । तच्चाङ्गजातं वचनादन्यकालकमेव प्रधानानामुपकारकमित्यगृह्यमाणविशेषत्वात्तन्त्रम् । तथात्र नवानामपि यागानां तन्त्रेणोपक्रान्तानां[1] तथैव समापनीयत्वात्तदुत्तरेषामप्यङ्गानां तन्त्रत्वं सिध्यति ॥

---

१. उपात्तानां, क.

इतोऽप्येवमित्याह—

**इष्टिरिति चैकवच्छ्रुतिः ॥ १७ ॥**

एकवदिति स्वार्थे वतिः। भावप्रधानो निर्देशः। अध्वरकल्पेष्टिरित्येकत्वं श्रूयते, इष्टिशब्दश्च। तदुभयमप्येकतन्त्रत्व उपपद्यते, नान्यथा। मृगारेष्टिः सर्वपृष्ठेष्टिरित्यादावेकतन्त्रत्व एव तथा प्रयोगदर्शनात्। अतोऽपि हेतोरत्रैकतन्त्रत्वमिति प्राप्ते, सिद्धान्तयति—

**अपिवा कर्मपृथक्त्वात्तेषां च तन्त्रविधनात्**

**साङ्गानामुपदेशस्स्यात् ॥ १८ ॥**

अपिवेति पूर्वपक्षव्यावृत्तौ। नैवं त्रयाणां त्रिकाणां तन्त्रमङ्गानीति। किन्तर्हि? साङ्गानां पृथगङ्गप्रयोगवतां त्रयाणां त्रिकाणामुपदेशस्स्यात्। कुतः? कर्मपृथक्त्वात्—कर्मणां त्रयाणां त्रिकाणां पृथक्त्वात् प्रातरादिभिन्नकालेषु विधानात्। ननु "आग्नावैष्णवं प्रातरष्टाकपालं निर्वपेत्" इत्यादिवाक्येषु प्रातरादिकालानां कर्मोद्देशेन विधानाद् उद्देश्यकर्मगतसाङ्गत्वस्य कथं विवक्षा? तत्राह—तेषाञ्च तन्त्रविधानादिति। तेषां त्रयाणां त्रिकाणां तन्त्रस्य चाङ्गकलापस्य चैतैर्वाक्यैर्विधानात्। न ह्येषु वाक्येषु कर्मोद्देशेन कालस्य विधिः, तस्यानुपादेयत्वात्। किन्तु प्रातरादिकालेषु त्रयाणां त्रिकाणां साङ्गानां विधानम्। ततश्चोपादेयगतस्य साङ्गत्वस्य विवक्षितत्वाद्वाचनिकस्तेष्वङ्गप्रयोगभेद इत्युक्तं भवति॥

अथ यदुक्तं विशेषस्यैककालत्वादिति, तत्राह—

**प्रथमस्य वा कालवचनम् ॥ १९ ॥**

वाशब्द एवार्थे। "पुरा वाचः प्रवदितोर्निर्वपेत्" इत्येतत्प्रथमस्यैव त्रिकस्य निर्वापे कालवचनम्, न तु द्वितीयतृतीययोरपि। तथा सति हि द्वितीयतृतीययोस्त्रिकयोर्मध्यन्दिनापराह्णकालकयोरङ्गविशेषस्य निर्वापस्य 'अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् तस्मात्स्यादेकदेशत्वम्' इति न्यायेन () प्रधानकाले मध्यन्दिनेऽपराह्णे च कर्तव्यत्वे प्राप्ते प्रातःकालकर्तव्यत्वं विधेयं स्यादित्यपूर्वविधानगौरवम्। प्रातःकालकत्रिकमात्राङ्गनिर्वापस्य प्रातःकालविशेषकर्तव्यतापरत्वे लाघवम्। "पुरा वाचः प्रवदितोर्निर्वपेत्" इत्युक्तो हि कालः प्रातःकालावयवो भवति। तत्र निर्वापस्य

सामान्यतः प्रातःकालकर्तृत्वं "प्रातराग्नावैष्णवमष्टाकपालं निर्वपेत्" इति प्राप्तमेव तद्विशेषमात्रमत्र नियम्यते। अपूर्वविधानाच्च नियमविधानं बलीयः। एवञ्च सति द्वितीयतृतीययोस्त्रिकयोरपि निर्वापस्य प्रधानकालत्वं न बाधितं भवति। तस्मात्त्रयाणामपि त्रिकाणां भेदेनैवाङ्गप्रयोगः॥

अथ यदुक्तमिष्टिरिति चैकवच्छ्रुतिरिति, तत्राह—

## फलैकत्वादिष्टिशब्दो यथान्यत्र ॥ २० ॥

त्रयाणामपि त्रिकाणामेकफलकत्वम्—फलैकत्वञ्चापेक्ष्येष्टिशब्दस्तदेकवचनञ्चोपपन्नं भवति। यथान्यत्र दर्शपूर्णमासौ प्रकृतिरिष्टिरित्यादौ। तस्मादध्वरकल्पायां प्रतित्रिकमङ्गावृत्तिरिति।

अत्रेदं वक्तव्यम्—प्रातश्शब्दस्तावदह्नरेकदेशे[1] रूढः। महारात्रञ्च नाहरवयवः, येन "प्रातराग्नावैष्णवमष्टाकपालं निर्वपेत्" इति सामान्यतः प्रातःकालकत्वे प्राप्ते "पुरा वाचः प्रवदितोर्निर्वपेत्" इति वाक्यं तद्विशेषनियमविधानार्थं स्यात्। ततश्च पुरा वाचः प्रवदितोः निर्वपेदित्यस्याप्राप्तमहारात्रविधानार्थत्वादपूर्वविधित्वमेवावश्यमभ्युपेयम्। एवञ्च विनिगमनाविरहात् प्रकरणस्याविशिष्टत्वाच्च "पुरा वाचः प्रवदितोर्निर्वपेत्" इत्यस्य त्रितयसाधारणतया त्रयाणामपि त्रिकाणामुक्तरीत्यैकतन्त्रत्वमेव युक्तम्। "प्रातर्जुहोत्यनुदिते" इत्यादौ तु प्रातश्शब्दो लाक्षणिकः। अस्तु वा रात्रेश्चरमावयवेऽपि प्रातश्शब्दस्य कथञ्चिद्वृत्तिः, तथापि "प्रातराग्नावैष्णवमष्टाकपालं निर्वपेत्" इत्यत्र प्रातश्शब्दस्याहरवयवविशेषपरत्वमेव। "आग्नावैष्णवमष्टाकपालं निर्वपेत् पूर्वाह्णे" इति शास्त्रदीपिकोदाहृतशाखान्तरवाक्यगतपूर्वाह्णशब्दानुसारेण "तं चतुर्धा करोति" "आग्नेयं चतुर्धा करोति" इत्यत्रेव सामान्यस्य विशेषपर्यवसानावश्यम्भावात्। यत्तु शास्त्रदीपिकायाम् "आग्नावैष्णवमष्टाकपालं निर्वपेत्पूर्वाह्णे" इत्युदाहृत्य 'स्यादेवं यदि निर्वापः सर्वेषामपकृष्यते।[2] प्रातःकालिकमात्रस्य तद्विशेषोऽत्र चोद्यते॥ प्रातःकालविशेषोऽयं पुरावाच इति विधीयते। तेन यस्य सामान्यतः प्राप्तिस्तस्यैवायं विधीयते' इत्युक्तम्।

---

१. एकदेशविशेषे. ग.

२. प्रकृष्यते. क.

सोऽयं निरवलम्बो[1] भ्रमः, महारात्रे पूर्वाह्णावयवत्वाभावस्यापण्डितमागोपालाङ्गनञ्च प्रसिद्धत्वात्। अह्नः पूर्वावयवो हि पूर्वाह्ण इत्युच्यते—"पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे" इति समासविधानात्। न चाह्नः पूर्वः पूर्वाह्ण इति पञ्चमीसमासाश्रयणान्महारात्रेऽपि पूर्वाह्णशब्दसम्भव इति वाच्यम्, पञ्चमीसमासस्याप्रामाणिकत्वात्। न च 'पञ्चमी भयेन' इत्यत्र पञ्चमीति योगविभागात् समास इति वाच्यम्, योगविभागस्य तद्भाष्याद्यदृष्टस्याप्रामाणिकत्वात्, क्लिष्टत्वाच्च। पञ्चमीसमासाश्रयणेऽहश्शब्दस्य पूर्वनिपातापत्तेश्च।

वस्तुतस्तु "प्रातराग्नावैष्णवमष्टाकपालं निर्वपेत्" इति भाष्योदाहृतवाक्ये "आग्नावैष्णवमष्टाकपालं निर्वपेत्पूर्वाह्णे" इति शास्त्रदीपिकोदाहृतवाक्ये च प्रातः पूर्वाह्णशब्दौ प्रातस्सवनकालोपलक्षकौ। एवं हि तैत्तिरीयकशाखायां श्रूयते—"आग्नावैष्णवमष्टाकपालं निर्वपेत्प्रातस्सवनस्याकाले" इति। आकाल इति छेदः। आङभिविधौ 'पञ्चम्यपाङ्परिभिः' इत्यव्ययीभावः। 'तृतीयासप्तम्योर्बहुलम्' इत्यत्र बहुलग्रहेणादम्भावाभावः। प्रातस्सवनकालमभिव्याप्येत्यर्थ इति भट्टभास्करभाष्ये स्पष्टम्। महारात्र एव च प्रातस्सवनमुपक्रम्यत इति निर्विवादम्। एवञ्च प्रथमत्रिकस्य कात्स्न्र्येन प्रातस्सवनसम्बन्धावगमात् "पुरा वाचः प्रवदितोः" इत्यस्य तद्विशेषनियमपरत्वमेवास्थेयमिति दिक्॥

इति तृतीयमध्वरकल्पेष्ट्यधिकरणम्॥ ३ ॥

४

वाजपेये श्रूयते—"सप्तदश प्राजापत्यान् पशूनालभते" इति। अस्ति तु ज्योतिष्टोमेऽग्नीषोमीये पशौ वसाहोमः—"याज्यार्द्धर्चान्ते वसाहोमञ्जुहोति" इति। स तावच्चोदकपरम्परया प्राजापत्यपशुषु प्राप्यते। तत्र संशयः—किं प्रतिपशु भेदेन वसाहोमः कर्तव्यः ? उत तन्त्रेण ? इति। तत्र प्रतिप्रधानं गुणावृत्तेर्न्याय्यत्वाद् भेदेनेति प्राप्ते, सिद्धान्तयति—

**वसाहोमस्तन्त्रमेकदेवतेषु स्यात्प्रदानस्यैककालत्वात्॥ २१॥**

एकदेवतेषु—पशुषु वसाहोमस्तन्त्रं स्यात्। कुतः ? प्रदानस्यैककालत्वात्—एतेषां हि पशूनामेकदेवतत्वात्प्रदानमेककालं भवति। वाजसनेयके श्रूयते—

---

[1] निरवलम्बनः. क.

"अथेष्टा अनूयाजास्स्युः, अथैषां हविर्भिः प्रचरेयुः, एकानुवाक्यैका याज्यैका देवता प्रजापतय इत्युपांशु च्छागानां हविषामनुब्रूहीत्युच्चैः" इत्यादि। अतस्तत्र प्रदानस्य तन्त्रत्वेन याज्यार्धर्चान्तस्यैकत्वाद्गृह्यमाणविशेषत्वात् तन्त्रं वसाहोमः। यद्यपि पशुगणे कुम्भीशूलवपाश्रपणीनां 'प्रभुत्वात्तन्त्रभावः स्यात्' इत्यधिकरणे एकदेवतेषु सहश्रपणाद्वसाया एकीभूतत्वादेकदेवतत्वेन याज्यार्धर्चान्तस्यैकत्वाच्च तन्त्रं वसाहोम इत्यनुपदमेव वक्ष्यति, तथापि स्पष्टमेव शिष्यहितार्थमुक्तम् ॥

यत्र तु पशुषु देवताभेदः, यथैकादशिनेषु तत्र प्रदानस्य भिन्नकालत्वाद्याज्याभेदाद्वसाहोमभेद इत्याह—

## कालभेदात्त्वावृत्तिर्देवताभेदे ॥२२॥

स्पष्टम्। इदमपि सूत्रं शिष्यहितार्थमेव ॥

इति चतुर्थमेकदेवताकपशुगणे वसाहोमस्य तन्त्रताधिकरणम् ॥ ४ ॥

५

अस्ति ज्योतिष्टोमे यूपैकादशिनी—"एकं यूपमेकादशिनी वा यूपाञ्छिनत्ति" इति। अस्ति च तत्र यूपाहुतिः—"यूपमच्छैष्यता होतव्यमग्निं मथित्वा यूपस्यान्तिके जुहोति" इति। अच्छा—आभिमुख्येन एष्यता गमिष्यता होतव्यमित्यर्थः। सैषा यूपाहुतिः किमेकादशिन्यां प्रतियूपं भेदेन भवति? उत तन्त्रेण? इति संशयः। तत्र पूर्वपक्षयति—

## अन्ते यूपाहुतिस्तद्वत् ॥ २३ ॥

यथा नानादेवतेषु पशुषु भेदेनैव वसाहोम इत्युक्तं प्राक्, तद्वद्यूपभेदे भेदेनैव यूपाहुतिः कर्तव्या ( इयांस्तु विशेषः-वसाहोमावृत्तौ प्रदानकालभेदो हेतुः ) इह तु देशभेद इति। यूपानां हि भिन्नान्यन्तिकानि। यस्य च यूपस्यान्तिके यूपाहुतिर्न हूयते तस्य वैगुण्यप्रसङ्गः। अतो देशभेदेन गृह्यमाणविशेषत्वात् प्रतियूपं भेदेनैव यूपाहुतिरिति प्राप्ते, सिद्धान्तयति—

() कपुस्तके ग्रन्थपातः.

## इतरप्रतिषेधो वा ॥ २४ ॥

वाशब्द एवार्थे। "यूपस्यान्तिके जुहोति" इति नान्तिकदेशविधिः, किन्त्वितरप्रतिषेधो वा—इतरस्याहवनीयस्योत्सर्गतः प्राप्तस्य प्रतिषेध एव। अन्तिकदेशविधौ हि वाक्यभेदप्रसङ्गः। तथाहि—उत्सर्गतस्तावदाहवनीये प्राप्ते "अग्निं मथित्वा" इति विधातव्यम। तदपि मन्थनं प्राग्वंशे कर्मणः प्रवृत्तत्वात्तत्राप्राप्तमित्यन्तिक इत्यपि विधातव्यम्। तत्र मन्थनविधौ मन्थनस्य विधेयता, अन्तिकविधौ चोद्देश्यतेति वैरूप्यप्रसङ्गाद्वाक्यभेदः प्रसज्येत। न च देशस्यानुपादेयत्वादन्तिकदेशं प्रति मन्थनस्य विधिरिति न वैरूप्यमिति वाच्यम्, एवमपि वाक्यभेदप्रसङ्गस्य तदवस्थत्वात्। न ह्यग्निं प्रत्यन्तिकदेशञ्च प्रति मन्थनं वाक्यभेदमन्तरा युगपद्विधातुं शक्यम्। न चान्तिकदेशं प्रत्यग्निमथनविधिरिति वाच्यम्, तथापि मन्थनस्य होमं प्रत्यन्तिकदेशं प्रति च विधेयत्वमिति वैरूप्यस्य दुर्वारत्वात्। अतो मन्थनमेवात्र विधीयते, न त्वन्तिकदेशः। न च विनिगमनाविरहश्शङ्क्यः, "यूपमच्छैष्यता होतव्यम्" इति ह्युपक्रम्य "न दीक्षितस्याग्नावेतामाहुतिं जुहुयात्" इत्यादिना दीक्षितस्याहवनीये यूपाहुतौ दोषमुद्भाव्य "वैष्णवीमृचमनूच्याच्छेष्यति" इति तत्स्थाने तस्य मन्त्रजपं विधाय "होतव्यम्" इत्यादिना पुनर्होमे दोषमुद्भाव्य तदुभयमपि तत्र न शक्यमिति प्रतिषिध्याम्नायते—"यूपस्यैवान्तिके मथित्वा होतव्यं तदुभयमपि शक्यं जुहोत्यथ न दीक्षितस्याग्नौ जुहोति" इति। तत्र यद्यन्तिकदेशस्यैव विधिस्स्यान्न तु मन्थनस्य, तर्ह्याहवनीयमेव यूपान्तिके नीत्वा तत्र यूपाहुतिं कुर्यात्, अग्न्यन्तरविधानाभावेनाहवनीयशास्त्रस्य तत्र दुर्वारत्वात्। ततश्च "न दीक्षितस्याग्नौ" इति दोषस्य तदवस्थतया "तदुभयमपि शक्यम्" इत्यादिवाक्यशेषविरोधः। यदि त्वत्र मन्थनमेव विधीयते, तर्ह्याहवनीयशास्त्रस्य बाधितत्वान्न स दोषो भवति, नाप्यहोमदोष इति कृत्वा "तदुभयमपि शक्यम्" इत्यादिवाक्यशेषः समञ्जसो भवति। तस्मान्मन्थनस्यैवात्र विधिः, नान्तिकदेशस्य ॥

नन्वन्तिकग्रहणसामर्थ्याद्विशिष्टविधिरस्तु तत्राह—

## अनुवादमात्रमन्तिकस्य ॥ २५ ॥

सहाग्निना यूप्यवृक्षस्यान्वेषणं दुष्करम्, तदन्तिकदेशमन्थने तु तत्सुकरम्। अतस्सौकर्यप्राप्तस्यान्तिकदेशस्यानुवाद एवायम्। विशिष्टविधिस्तु सत्यां गतौ नाश्रयितुं युज्यत इति भावः ॥

अनुवादत्वकल्पनस्यागतिकगतित्वादाह—

## अशास्त्रत्वाच्च देशानाम् ॥ २६ ॥

शास्त्रं शासनं येषां देशानां न विद्यन्ते तेऽशास्त्राः। तेषां भावस्तत्त्वम्, तस्मात् विधानयोग्यत्वादित्यर्थः। तथाहि—किमत्र सन्निकर्षमात्रं विधीयते? उत परमसन्निकर्षः? नाद्यः; सर्वेषामपि देशानां यत्किञ्चिदपेक्षया सन्निकृष्टत्वेन तद्विधिवैयर्थ्यात्। न द्वितीयः; परमसन्निकर्षे सति यूप्यवृक्षस्य दाहापत्तेः। न च यं[1] देशं प्राप्तो [2]यूपसमीपं प्राप्तोऽस्मीति मन्यते, यत्र च यूपो दृष्टिपथमारोहति ( स देशोऽत्रान्तिकशब्देन विवक्षित इति वाच्यम्, तस्य देशस्य सर्वयूपसाधारणतया तत्र क्रियमाणस्य होमस्यागृह्यमाणविशेषत्वात्तन्त्रत्वाक्षतेः। तस्मादेकादशिन्यां यूपस्यान्तिके विहिता ) यूपाहुतिस्तन्त्रमेवेति। वस्तुतस्तु–यावति सन्निकर्षे चतुर्गृहीताज्याहुतिक्षमोऽग्निः प्रज्वलितो यूप्यवृक्षं न दहति, मन्थनञ्च कर्तुं शक्यते, तावानेव [3]सन्निकर्षोऽन्तिकशब्देन विवक्षितः। तावानेव च विप्रकर्षस्सोढव्यः, वचनसामर्थ्यात्। तथाचाहुः—'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' इति। किञ्चैकाज्याहुतिसमर्थाल्पाग्निसम्बन्धेनाल्पकालकेनार्द्रस्य यूप्यवृक्षस्य कथं दाहः। तस्मात् 'अशास्त्रत्वाच्च देशानाम्' इति चिन्त्यम् ॥

इति पञ्चममेकादशिन्यां यूपाहुतेस्तन्त्रताधिकरणम् ॥ ५ ॥

६

ज्योतिष्टोमे श्रूयते—"अप्स्ववभृथेन चरन्ति" इति। तत्र किं प्रधानमात्रमप्सु कर्तव्यम्? उताङ्गान्यपि? इति संशये, पूर्वपक्षयति—

## अवभृथे प्रधानेऽग्निविकारस्यान्न हि तद्धेतुरग्निसंयोगो द्रव्यदेवतवत् ॥ २७ ॥

अवभृथशब्दस्तावदेककपालपुरोडाशद्रव्यकस्य वरुणदेवतस्य यागस्य नामधेयम्। एवं हि तदुत्पत्तिवाक्यं श्रुतम्—"वारुणेनैककपालेनावभृथं यन्ति" इति।

---

१. यद्देशं. क.

२. यूपं प्राप्तोऽस्मि. क.

() गपुस्तके ग्रन्थपातः.

३. शब्दः. क.

न चायं गमनविधिः, अप्सु प्रचारवचनादेव तत्प्राप्तेः। नाप्यवभृथशब्दो देशविशेषे प्रसिद्धः, येन तं प्रति गमनमुच्येत। नाप्येककपालः पुरोडाशः कश्चिद्वारुणः प्रसिद्धः, यतस्तेन साधनेन गमनमुच्येत। तस्माद् द्रव्यदेवतासम्बन्धकरणरूपो याग एवात्र चोद्यते [1]तद्वचनाच्चावभृथशब्दोऽवभृथाख्ये तस्मिन् प्रधाने वारुणयागमात्रे। अग्निविकारः—अग्निकार्यकारित्वमपां स्यात्, प्रधानमात्रवाचकावभृथशब्द-संयोगात्। 'मुख्यार्थो वाङ्गस्याचोदितत्वात्' इति न्यायेन () "यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु यष्टव्याः" इत्युपांशुत्वं प्रधानशब्दसंयोगान्नाङ्गेषु यथा भवति, तद्वदापोऽपि नाङ्गेषु भवन्ति। अतः प्रधानमात्रमप्सु कर्तव्यम्, अङ्गानि त्वाहवनीय एव कर्तव्यानि। ननु 'अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् तस्मात्स्यादेक-देशत्वम्' इत्यधिकरणेऽङ्गानां प्रधानादेशत्वस्य निर्णीतत्वात् कथमत्राङ्गानामाहवनीये प्राप्तिः? तत्राह—न हि तद्धेतुरग्निसंयोग इति। अङ्गानामाहवनीयाग्निसंयोगो हि न तद्धेतुः—प्रधानहेतुको न भवति, येन प्रधानस्यात्राप्सु विधानादङ्गेष्वाहवनीयो न प्राप्नुयात्, "यदाहवनीये जुह्वति" इति वाक्येनाङ्गप्रधानसाधारण्येन स विहितः। अतोऽत्राङ्गान्याहवनीय एव कर्तव्यानि, प्रधानमात्रमप्सु कर्तव्यम्। द्रव्यदेवतवत्—द्रव्यमेककपालः पुरोडाशः, देवता वरुणः। तदुभयमपि यथा प्रधानमात्रे भवति, नाङ्गेषु, तद्वदापोऽपीति प्राप्ते, सिद्धान्तयति—

## साङ्गो वा प्रयोगवचनैकत्वात् ॥ २८ ॥

वाशब्द एवार्थे। साङ्ग एवावभृथोऽप्सु कर्तव्यः, न तु प्रधानमात्रम्। कुतः? प्रयोगवचनैकत्वात्—अप्सु इत्यस्येति शेषः। प्रयोगः साङ्गप्रधानानुष्ठानम्। तदुच्यते याभ्यां शब्दाभ्यां तौ प्रयोगवचनौ, तृतीया चरतिश्च, तदेकत्वात् तदन्वि-तत्वात्। अप्सु इत्यस्य चरतिर्हि प्रयोगवाचकः। तृतीया च करणत्वबोधिका इति-कर्तव्यतां गमयति। न हीतिकर्तव्यतामन्तरेण करणत्वावगतिस्सम्भवति। ततश्च "अप्स्ववभृथेन चरन्ति" इत्यत्र तृतीयाचरतिभ्यामवभृथकरणिकायां सेति-कर्तव्यताकायां क्रियायां विधीयमाना आपस्तदन्तर्गतानामङ्गानामपि भवन्ति। "ता उपांशु कर्तव्याः" इत्युपांशुत्वन्तु प्रधानक्रियायामेव भवति, प्रधानमात्रशब्द-संयोगात्। न हि तत्राङ्गबोधकं तृतीयाश्रुत्यादि किञ्चिदस्तीति वैषम्यम्। तस्मा-त्साङ्ग एवावभृथोऽप्सु कर्तव्यः।

---

१. तद्वचनश्च ग०

उक्तो न्यायः श्रुतिसम्मत इत्याह—

**लिङ्गदर्शनाच्च ॥ २९ ॥**

"अप्सु तृणं प्रास्याघारयति" इति वाक्यमप्स्वाघारयतीत्यनूद्य तृणप्रासनं विदधाति। यदि ह्यङ्गान्याहवनीय एव स्युः, तर्ह्याघारमुद्दिश्यापो विधेयाः, तृणप्रासनमपि विधेयम्। तदुद्दिश्य चापो विधेया इति भवेद्वाक्यभेदः। विशिष्टविधौ च गौरवम्। साङ्गस्यावभृथस्याप्सु कर्तव्यत्वे तु आघारं तृणप्रासनञ्च प्रति नापो विधेयाः। किन्तु अप्सु इत्यनूद्य तृणप्रासनमात्रं विधेयमिति लाघवम् ॥

यदुक्तं द्रव्यदेवतवदिति तत्राह—

**शब्दविभागाच्च द्रव्यदेवतापनयः ॥ ३० ॥**

द्रव्यदेवतस्यैककपालपुरोडाशस्य वरुणस्य चापनयः—अङ्गेष्वसम्बन्धस्स्यात्। कुतः? शब्दविभागात्—"वारुणेनैककपालेनावभृथं यन्ति" इति द्रव्यदेवताविधौ शब्दस्यावभृथशब्दस्य विभागात्—साङ्गत्वबोधकतृतीयादिसंयोगाभावात्। अतो न द्रव्यदेवतमङ्गेषु भवतीति वैषम्यम्। तद्योतनार्थश्चशब्दः। अतस्साङ्गोऽवभृथोऽप्सु कर्तव्य इति स्थितम्।

अत्रेदमवधेयम्—'अङ्गेषु च तदभावः प्रधानं प्रति निर्देशाद्यथा द्रव्यदेवतम्' इत्यधिकरणे 'अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् तस्मात्स्यादेकदेशत्वं द्रव्यदेवतं तथेति चेन्न चोदनाविधिशेषत्वान्नियमार्थो विशेषः' इति सूत्राभ्यां कालदेशकर्तृणां साङ्गप्रधानार्थत्वस्योत्पत्तिगतद्रव्यदेवतस्य प्रधानमात्रार्थतायाश्च निर्णीतत्वात् पुनरुक्तमिदमधिकरणमिति ॥

इति षष्ठमवभृथस्याप्सु साङ्गानुष्ठानाधिकरणम् ॥ ६ ॥

७

स्तो वरुणप्रघासेषु द्वौ विहारौ "पृथगग्नी प्रणयतः, पृथग्वेदी कुरुत" इति। तत्रेदमाम्नायते—'अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्" इति। तत्र चिन्त्यते—किं प्रतिविहारं भेदेनाङ्गानि कर्तव्यानि? उत यान्युत्तरत्र कृतानि तान्येवेतरत्राप्युपकुर्वन्ति? इति। तन्त्रेणेति ब्रूमः—'इष्टिराजसूयचातुर्मास्येष्वैककर्म्यादङ्गानां तन्त्रभावस्स्यात्' इत्यधिकरणे "प्रावृषि

वरुणप्रघासैर्यजेत" इति वाक्यस्य प्रावृषि साहित्येन साङ्गप्रधानप्रयोगविधानार्थत्वे स्थिते, 'तुल्यानान्तु यौगपद्यमेकशब्दोपदेशात् स्याद्विशेषाग्रहणात्' इत्यधिकरणन्यायेन () नवानामपि हविषामेकतन्त्रत्वप्राप्तेः। न च मारुतयागस्य देशभेदात्तन्त्रभेदः शङ्क्यः, देशभेदे प्रमाणाभावात्। "मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्" इति वाक्यतो हि दक्षिणे विहारे मारुत्या आमिक्षाया आसादनमात्रं विधीयते, न तु मारुतयागः। न चैवं सति दक्षिणस्याग्नेः प्रणयनविधिवैयर्थ्यम्, तस्य करम्भपात्रहोममात्रेण चरितार्थत्वात्। "दक्षिणेऽग्नौ करम्भपात्राणि पत्नी शूर्पेण जुहोति" इति श्रुतत्वात्। तथाच नवानामपि प्रधानानां तन्त्रमङ्गानीति प्राप्ते, सिद्धान्तयति—

**दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात्सर्वतन्त्रं विक्रियते ॥३१॥**

वरुणप्रघासेषु दक्षिणेऽग्नौ सर्वतन्त्रम्—कृत्स्नोऽङ्गकलापो विक्रियते—पृथक्क्रियते। कुतः? देशभेदात्—"उत्तरे विहारेऽष्टौ हवींषि आसादयति, दक्षिणस्मिन् मारुतीम्" इति देशभेदश्रवणात्। देशभेदे चाङ्गभेद इति व्यवस्थापितमनुपदमेव 'अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् तस्मात्स्यादेकदेशत्वम्' इति॥

ननु फलवत एवेतिकर्तव्यतापेक्षत्वादङ्गसम्बन्धः, मारुतयागस्तु नेह फलसाधनत्वेन चोद्यते, "मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्" इत्यत्रासादयतेरेव श्रवणात्, यजेः फलस्य चाश्रवणात् "चातुर्मास्यैः स्वर्गकामो यजेत" इति वाक्येनैव हि फलसाधनत्वावगमः। तत्र च यजिना तन्त्राभिधानतः साहित्यावगमात् समुदायस्यैव फलसाधनत्वं निर्णीतमेतदध्यायाद्याधिकरणे। ततश्च मारुतयागस्य केवलस्य फलाभावादङ्गाकाङ्क्षैव नास्ति दूरेतरां पृथगङ्गप्रयोग इत्याशङ्क्य परिहरति—

**अचोदनेति चेत् स्यात्पौर्णमासीवत् ॥ ३२ ॥**

मारुतयागस्य केवलस्य फलं प्रति चोदना नास्ति। अतस्तत्र कथं पृथगङ्गप्राप्तिरिति चेत्तन्न; कुतः? पौर्णमासीवत्। ततः पौर्णमासीवदङ्गपृथक्त्वं तत्र स्यात्। दर्शपूर्णमासाभ्यामिति फलवाक्ये हि षण्णामपि यागानां फलसाधनत्वं व्यासज्यवृत्तितया नावगम्यते, किन्तु षट्स्वपि यागेषु प्रत्येकं पर्याप्यवृत्तितयैव। अन्यथा पौर्णमास्येति तृतीयानुपपत्तेः। परन्तु षण्णामपि यागानामेकेनापि विना फलं नोत्पद्यते। अतः फलं यति साधनानां समुच्चय इत्येतावदेवैतदध्यायाद्याधि-

करणस्य हृदयम्। ततश्च पौर्णमासीत्रिकस्यापि फलवत्त्वादङ्गसम्बन्धसम्भव इति निर्णीतम्—'इष्टिराजसूयचातुर्मास्येष्वैककर्म्यादङ्गानां तन्त्रभावस्स्यात्' इत्यधिकरणे। तद्वन्मरुतयागेऽप्यङ्गप्राप्तिसम्भव इत्यर्थः। पौर्णमासीवदित्युपलक्षणम्। राजसूयान्तर्गतानुमत्यादिवच्चातुर्मास्यान्तर्गतवैश्वदेवादिवच्चेत्यपि द्रष्टव्यम्॥

ननु विषमोऽयं दृष्टान्तः। "पौर्णमास्यां पौर्णमास्या यजेत" इत्यत्र हि यजियुक्ताख्यातेन साङ्गप्रधानप्रयोगस्य काले विधानात् तत्र पृथगङ्गसम्भवः, इह तु न मारुतयागः साङ्गो दक्षिणे विहारे विधीयते, आसादयतेरेवात्र श्रवणात्, यजेरश्रवणात्। अतो मारुतयागस्य देशभेदाभावात्तन्त्रमङ्गानीत्याशङ्क्य परिहरति—

## प्रयोगचोदनेति चेत्तथेह ॥ ३३ ॥

"पौर्णमास्यां पौर्णमास्या यजेत" इत्यत्र यजियुक्ताख्यातेन साङ्गस्य प्रधानस्य प्रयोगचोदना, इह तु यजेरश्रवणान्न तथेति चेत्तथेह—"मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्" इति वाक्येऽपि तथा—साङ्गस्य मारुतयागस्य दक्षिणविहारे प्रयोगचोदना भवति, "सौर्यं चरुं निर्वपेत्" इत्यत्र निर्वपतेरिवासादयतेरत्र यागोपलक्षकत्वात्॥

ननु विषमोऽयं दृष्टान्तः। "सौर्यं चरुं निर्वपेत्" इत्यत्र प्रतीयमानस्य द्रव्यदेवतासम्बन्धस्य यागमन्तरेणानुपपत्तेर्यागविधायकस्य चान्यस्यानुपलम्भान्निर्वपतेरेव यागोपलक्षकत्वमाश्रित्य यागविधिरभ्युपगम्यते। इह त्वासादयतेस्स्वार्थवृत्तित्वेऽपि न किञ्चिदनुपपन्नमस्ति। न चात्रापि यागविध्यभावे "मारुतीमामिक्षामासादयति" इति द्रव्यदेवतासम्बन्धानुपपत्तिरिति वाच्यम्, "मारुत्यामिक्षा भवति" इति वाक्यान्तरतो यागस्यावगतत्वेन तदुपपत्तेः। ततश्च सम्भवति मुख्ये लक्षणाश्रयणायोगादासादनमेवात्र दक्षिणविहारे विधीयते, न तु यागः। अतो भिन्नदेशत्वाभावादेकतन्त्रत्वमेव युक्तमित्याशङ्क्य परिहरति—

## आसादनमिति चेन्नोत्तरेणैकवाक्यत्वात् ॥ ३४ ॥

आसादनमेवात्र वाक्ये विधीयते, न तु यागः, मुख्ये सम्भवति लक्षणाश्रयणायोगादिति चेत्तन्न; कुतः? उत्तरेणैकवाक्यत्वात्—"उत्तरेणाष्टावध्वर्युरुत्तरे

विहारे हवींष्यासादयति" इति वाक्येन "मारुतीं प्रतिप्रस्थाता दक्षिणस्मिन्" इति वाक्यस्यैकवाक्यत्वात् समानार्थत्वात् । न हि वाक्यद्वयेऽस्मिन्नपूर्वमासादनं विधीयते, किन्तु नवानामपि हविषां चोदकप्राप्तमासादनं होमश्चेत्युभयमपि विहारद्वयेऽप्यव्यवस्थया प्राप्तम्, उभयत्राहवनीयस्य विभज्य स्थापितत्वात्। तदेतन्नियम्यते वाक्यद्वयेन—"अष्टावुत्तरे मारुतीमेव दक्षिणस्मिन्" इति। अत एव नियमविधिद्योतनार्थक एवशब्दोऽप्यर्थवान् भवति। यादृशस्य चासादनस्य प्राप्तिस्तादृशस्यैव नियमो विधेयः। होमार्थस्य चासादनस्य प्राप्तिः। अतस्तादृशस्यैव तस्य दक्षिणविहारे नियमविधानाद्धोमोऽपि दक्षिणस्मिन्नेव मारुत्याः। यदि ह्युत्तरविहार एव नवानामपि हविषां होमस्स्यात्तर्हि दक्षिणविहारे मारुत्या आसादनस्य चोदकतः प्राप्तिर्न स्यात्, यत्र होमस्तत्रैवासादनस्यार्थसिद्धत्वात्। अतस्तस्य दक्षिणविहारे प्राप्त्यभावादपूर्वविधानमदृष्टार्थत्वञ्चापद्येत, द्वयोरपि वाक्ययोः समानार्थत्वञ्च भज्येत। अवश्यञ्च समानार्थत्वं तयोरभ्युपेयम्। "अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति" इति पूर्ववाक्य एव ह्यासदयतिः[1] श्रुतः, न "मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्" इत्युत्तारवाक्ये। सकृच्छ्रुतश्चायमासादयतिरुभयोर्विहारयोरासादनमाह। तत्रायुक्तमेकत्र दृष्टार्थमन्यत्रादृष्टार्थं तदिति वैरूप्यम्। ततश्च होमार्थासादननियमविधिबलेन मारुतहोमस्य प्रधानस्य देशभेदावगमात्तान्त्रभेदः ॥

वस्तुतस्तु वाक्यद्वयेऽप्यासादयतिना आसादनसाध्यहोमो लक्ष्यते। ततश्च नवानामपि प्रधानानां चोदकतः प्राप्यमाणा होमा द्वयोरप्यग्न्योरनियमतः प्राप्ता नियम्यन्ते—अष्टौ होमा उत्तारतो मारुत्या होमो दक्षिणत इति। न तु होमार्थासादनस्यात्र नियमविधिः, देशभेदेन होमनियमविधानादेव होमार्थासादनस्यापि देशभेदसिद्धेः। तदेतदाह—

**अवाच्यत्वाच्च ॥ ३९ ॥**

विहारभेदेन होमार्थासादननियमो न विधातव्यः, किन्तु होममात्रनियमः। तावतैव यत्र होमस्तत्र तदर्थासादनस्य प्राप्तत्वादित्यर्थः। न चात्र होमो न प्रधानम् किन्तु याग एव "चातुर्मास्यैस्स्वर्गकामो यजेत" इति फलवाक्ये यजेरेव श्रव-

---

१. आसादयतीति. ग.

णात्। होमस्तु संस्कारमात्रम्। ततश्च होमस्य देशभेदावगमेऽपि मारुतयागस्य प्रधानस्य देशभेदानवगमात् कथमङ्गभेद इति वाच्यम्, होमस्य देशभेदे सति यागस्य देशभेदासिद्धेः, यागस्य होमशरीरप्रविष्टत्वात्। उक्तं हि सूत्रकृता—'तदुक्तेः श्रवणात् जुहोतिरासेचनाधिकस्स्यात्' इति। ततश्च मारुतयागस्य प्रधानस्य देशभेदादङ्गभेदः ॥

तदेवमुक्तो न्यायः श्रुतिसम्मत इत्याह—

**आम्नायवचनं तद्वत् ॥ ३६ ॥**

यथा न्याय उपदिष्टः, तद्वत्—तथैवाम्नायश्च[1] "देवता यजानि" इति वाक्यशेषो दक्षिणे विहारे यागं दर्शयति। अतोऽत्रासादयतिशब्दस्य यागोपलक्षकत्वाद्देशभेदादङ्गभेद इति ॥

अत्रेदं वक्तव्यम्—अष्टावध्वर्युरित्यादिवाक्ये आसादयतेर्यागोपलक्षकत्वाश्रयणक्लेशो व्यर्थः, असङ्गतश्च। वाजसनेयशाखायामुत्पत्तिवाक्यत एव मारुतयागस्य देशभेदावगमात्। एवं हि तत्र श्रूयते—"तदेतानि पञ्च हवींषि भवन्त्यथैष ऐन्द्राग्नो द्वादशकपालः पुरोडाशो भवति, उभयत्र पयस्ये भवतो वारुण्युत्तरा भवति, मारुती दक्षिणा काय एककपालो भवति" इति। आसादननियमविधिरपि तत्रैव श्रूयते—"सर्वाणि हवींष्युत्तरस्यां वेद्यामध्वर्युरासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्याम्' इति। अत्र चासादयतेस्स्वार्थवृत्तित्वमेव, न तु यागोपलक्षकत्वमिति निर्विवादम्। एवञ्चोदाहृतवाक्येऽप्यासादयतेः स्वार्थवृत्तित्वमेव[2]युक्तम्। 'आसादनमिति चेत्' इति सूत्रसन्दर्भोऽपि वृथैव।

वस्तुतस्तु द्वयोरपि विहारयोर्भेदेन कृत्स्नाङ्गकलापस्य वाजसनेयके प्रत्यक्षाम्नातत्वादधिकरणप्रवृत्तिश्चिन्त्यप्रयोजना। एवं हि तत्र श्रूयते—"द्वे वेदी भवतो द्वावग्नी भवतः, सर्वाणि हवींष्युत्तरस्यां वेद्यामध्वर्युरासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्यामध्वर्युराहाग्नये समिध्यमानायानुब्रूहीत्युभौ त्वेवेध्मावभ्याधत्तः, पूर्वावाघारावाघारयतस्सम्मृज्याग्नी उत्तराबाघारावाघारयतो नव प्रयाजान् यजतः आज्यभागौ यजतोऽथैतैर्हविर्भिरध्वर्युः प्रचरत्यैन्द्राग्नान्तैः, अथ पयस्यां

१. आम्नायवचनं. क.

२. वृत्तित्वमिति. क.

चरतोऽथाध्वर्युः कायेनैककपालेन चरत्युभौ स्विष्टकृतेऽवद्यतो नवानूयाजान् यजतः" इत्यादि। तदेवमङ्गकलापस्य कृत्स्नस्य दक्षिणविहारे प्रत्यक्षाम्नाने सति किमधिकरणप्रवृत्त्या॥

इति सप्तमं वरुणप्रघासेषु दक्षिणविहारे पृथगङ्गानुष्ठानाधिकरणम्॥ ७॥

८

वरुणप्रघासेऽध्वर्युप्रतिप्रस्थातारौ वचनादेव व्यवस्थितौ। ब्रह्मा होताग्नीध्रश्च किं विहारयोर्भेदेन भवन्ति उत तन्त्रेण? इति संशये, देशभेदेनोभयत्र प्रयोगभेदात् प्रयोगाङ्गभूताः कर्तारोऽपि भिद्यन्त इति पूर्वपक्षमुद्भाव्य सिद्धान्तयति

**कर्तृभेदस्तथेति चेन्न समवायात्॥ ३७॥**

यथा प्रयोगस्य भेदस्तथा कर्तॄणामपि तदङ्गानां प्रतिविहारं भेदस्स्यादिति चेत्तन्न; कुतः? समवायात्—इतरविहारे ये कर्तारस्तेषामेव दक्षिणेऽपि विहारे समवायात्—वचनतस्समावेशात्। श्रूयते हि—"चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विजः" इति। न च प्रतिविहाराभिप्रायमिदं पञ्चर्त्विग्वचनमिति वाच्यम्, अध्वर्युप्रतिप्रस्थात्रोर्विहारद्वये वचनतो व्यवस्थापितत्वेन प्रतिविहारं पञ्चर्त्विगसम्भवात्। न च भिन्नदेशयोः प्रयोगयोः कथमभिन्नकर्तृकत्वम्? अशक्यत्वादिति वाच्यम्, अविरोधात्। तथाहि--होता तावदुत्तरविहारेऽवस्थितो याज्यानुवाक्यावचनेनाध्वर्युमिव प्रतिप्रस्थातारमपि प्रचरन्तं सामीप्याच्छक्नोति सम्बोधयितुम्। अग्नीध्रोऽपि समानत्वादुत्करदेशस्य तत्र स्थित एव प्रत्याश्रावणं कुर्वन्नुभावप्यनुग्रहीतुं शक्नोति। ब्रह्मापि दक्षिणविहारस्य दक्षिणत उपविष्टस्सन्नुभयोरपि विहारयोर्दक्षिणत उपविष्टो भवतीत्युभयत्रापि कृताकृतप्रत्यवेक्षणानुज्ञावचनादि कर्तुं शक्नोति। अध्वर्युप्रतिप्रस्थातारौ तु वचनादेव व्यवस्थितौ। तस्माद्ब्रह्महोत्रग्नीध्रा न भिद्यन्ते॥

किञ्च—

**लिङ्गदर्शनाच्च॥ ३८॥**

"प्रवयसमृषभदक्षिणां ददाति"इति दक्षिणैकत्वं दृश्यते। तदेतदभिन्नकर्तृत्व एवोपपद्यते। कर्तृभेदे त्वन्यतरत्र दक्षिणाभावान्न याजयेयुः। न च तत्रान्वाहार्येण तन्निर्वाहः, क्वान्वाहार्यः क्व ऋषभ इति विशेषाग्रहणात्। ततश्चोभयत्र ऋषभस्यो-

पादेयतया चोदितत्वेन तदेकत्वस्य विवक्षितत्वाद्दक्षिणैक्यात्तन्त्रं कर्तारः। वस्तुतस्तु-यथैकेनैव ऋषभेण पञ्चानामानमनं भवति, तद्वदष्टानामप्यानमनं कुतो न स्यात्। अतो नेदं भाष्योक्तं लिङ्गदर्शनस्योदाहरणं सङ्गच्छते। तस्मात् "अग्निभ्यां प्रणीयमानाभ्यामनुब्रूहीत्यध्वर्युराह, ब्रह्मन् प्रस्थास्याम इत्यध्वर्युराहोभावनूयाजान् यजतः, अनुप्रहरतमित्याग्नीध्र आहोभावनुप्रहरतः" इति वाजसनेयकादिगतवाक्येषु-अनुब्रूहि, ब्रह्मन्, आग्नीध्र इत्येकवचनं कर्त्रैकत्वे लिङ्गदर्शनमुदाहार्यम्॥

ननु "अन्तर्वेद्यन्यः पादो भवति, बहिर्वेद्यन्योऽथान्वाह" इति देशसंयोगो होतुः प्रकृतौ श्रुतः। स तावच्चोदकतो वरुणप्रघासेषु प्राप्यते। तत्प्राप्तिश्च होतुर्भेद एवोपपद्यते, न तु तन्त्रत्वे, एकस्य होतुः पादस्य वेदिद्वयसम्बन्धायोगात्। अतो होतृभेद एव युक्त इत्याशङ्क्य परिहरति—

**वेदिसंयोगादिति चेन्न देशमात्रत्वात्॥ ३९॥**

वेदिसंयोगश्रवणाद्धोतृभेदस्स्यादिति चेत्तन्न ; कुतः ? देशमात्रत्वात्—न ह्यत्र वेद्यर्थत्वेन होतुः पादो विधीयते, तथासति ह्येकस्मिन् पादे अन्तर्वेदिविहिते द्वितीयस्यानियमवारणाय सोऽपि विधातव्यस्स्यात्। तथाच वाक्यभेदः प्रसज्येत। अतोऽत्र न वेद्यङ्गत्वेन होतृपादविधिः, येन वेदिभेदाद्धोतृभेदस्स्यात्। किन्त्वन्तर्वेद्यन्यः पादो भवति, बहिर्वेद्यन्य इत्येतदेकं वाक्यम् होतुर्देशविशेषविधायकम्। यथाऽन्तर्वेद्यन्यः पादो भवति, बहिर्वेद्यन्यस्तथा होत्रा स्थातव्यमिति। ततश्चैकार्थत्वादेकवाक्यत्वं भवतीति लाघवम्। तस्मान्न कर्तृभेदः॥

**इत्यष्टमं वरुणप्रघासेषु होत्रादीनां तन्त्रत्वाधिकरणम्॥ ८॥**

९

वरुणप्रघासेष्वेव चिन्त्यते—आपराह्णिकाः पत्नीसंयाजाः किं तन्त्रम्? उत भेदेन ? इति। तत्र पूर्वपक्षयति—

**एकाग्नित्वादपरेषु तन्त्रं स्यात्॥ ४०॥**

(अपरेषु-आपराग्निकेषु पत्नीसंयाजेषु तन्त्रमेव स्यात्, न तु भेदः। कुतः ? एकाग्नित्वात्। पौर्वाग्निकानि कार्याणि भिन्नाग्निकानि। अतस्तत्र तन्त्रभेदः। आपराग्निकानि तु कार्याण्येकाग्नित्वात्तन्त्रमेवेति प्राप्ते, सिद्धान्तयति—

## नाना वा कर्तृभेदात् ॥ ४१ ॥

वाशब्द एवार्थे। आपराग्निककार्याणि भेदेनैव भवन्ति। कुतः? कर्तृभेदात्—प्रतिप्रस्थातृकर्तृकाण्येवाङ्गानि मारुतयागस्योपकुर्वन्ति।) इतरेषान्तु यागानामध्वर्युकर्तृकाण्येव। तस्मादापराग्निककार्याण्युभाभ्यामपि कर्तव्यानि।

वस्तुतस्तु—"अध्वर्युरेव पत्नीसंयाजान्यजति" इति वाजसनेयकश्रुति-विरुद्धत्वादिदमधिकरणमुपेक्ष्यम् ॥

इति नवमं वरुणप्रघासेषु पत्नीसंयाजानामतन्त्रताधिकरणम् ॥ ९ ॥

१०

वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते—"तान् पर्यग्निकृतानुत्सृजति, ब्रह्मसाम्न्यालभते" इति। तत्र संशयः—किं "तान् पर्याग्निकृतानुत्सृजति" इति कर्मशेषप्रतिषेधः, ब्रह्मसाम्न्यालभत इति कर्मान्तरविधिः? उत पर्यग्निकरणात् परेषां संस्काराणामुत्सृजतीति प्रतिषेधः, आलभत इति च तेषामेव कालान्तरे प्रतिप्रसवः? इति। तत्र पूर्वपक्षयति—

## पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रुतिसामान्यादारण्यवत्तस्माद् ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् ॥ ४२ ॥

पर्यग्निकृतानां प्राजापत्यानां पशूनाम् उत्सर्गे—उत्सर्गबोधके "तान् पर्यग्नि-कृतानुत्सृजति" इति वाक्ये कर्मोत्सर्गः-कर्मशेषप्रतिषेधः क्रियते। आरण्यवत् आरण्यपशूत्सर्गवाक्य इव—"पर्यग्निकृतानारण्यानुत्सृजति" इति। अत्र हि कर्मशेषप्रतिषेध इत्युक्तम्—'शेषप्रतिषेधाभावादिडान्तवत्' इत्यत्र। तद्वदत्रापि कर्मशेष-प्रतिषेधस्स्यात्। कुतः? श्रुतिसामान्यात्—द्वयोरपि वाक्ययोस्समानत्वात्। तस्मात्कर्मशेषप्रतिषेधाद्धेतोः ब्रह्मसाम्नि—"ब्रह्मसाम्न्यालभेत" इति वाक्ये चोदनापृथक्त्वम्-चोदनाभेदस्स्यात्। "आज्येन शेषं संस्थापयेत्" इतिवत् कर्मान्तरमेव विधेयं स्यादिति यावत्। तथाचोत्सृष्टेभ्योऽन्ये पशवो ब्रह्मसामकाले आलब्धव्या इति फलति ॥

---

() गपुस्तके ग्रन्थपातः

अथ सिद्धान्तयति—

**संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् ।। ४३ ।।**

वाशब्द एवार्थे । उत्सृजतीत्यनेन पर्यग्निकरणात् परेषां संस्काराणां स्वकाले प्रतिषेधः क्रियते । आलभत इत्यनेन च तेषामेव कालान्तरे प्रतिप्रसवः । कुतः? वाक्यैकत्वे क्रतुसामान्यात्—वाक्यैकत्वात् कर्मैकत्वाच्चेत्यर्थः । यदि ह्युत्सृजतीति कर्मशेषप्रतिषेधः, आलभत इति च कर्मान्तरविधिः, तर्हि वाक्यभेदस्स्यात्, अनेकादृष्टकल्पना च प्रसज्येत । अतः पर्यग्निकरणानन्तरं प्राप्तस्यालम्भस्य ब्रह्मसामकाले 'उत्कर्षमात्रं "ब्रह्मसाम्न्यालभते" इत्यनेन विधीयते । तद्विधौ च पर्यग्निकरणानन्तरमालम्भादिव्यापारोपरमः प्राप्त एवोत्सृजतिनानूद्यते । तदेवमत्यन्तलाघवलाभान्न वाक्यभेदः । कर्मभेदाभ्युपगमो [न] युक्तः ।।

उक्तो न्यायः श्रुतिसम्मत इत्याह—

**वपानाञ्चानभिधारणस्य दर्शनात् ।। ४४ ।।**

"सव्या वा एतर्हि वपा यदनभिघृता ब्रह्म वै ब्रह्मसाम यद्ब्रह्मसाम्न्यालभते तेनासव्यास्तेनाभिघृता" इति वाक्यशेषः प्राजापत्यवपानामनभिधारणं दर्शयति । तदिदं कर्मैकत्व एव घटते । कर्मैकत्वे हि जुह्वास्समवनीय प्रचारेण रेचितत्वेन प्रातस्सवनकालकसर्वपश्वर्थानुष्ठितप्रयाजशेषस्याभावादनभिघृतत्वं युज्यते । कर्मभेदे तु ब्रह्मसामकाले प्रयाजाद्यङ्गानामपि पुनः कर्तव्यत्वेन प्रयाजशेषस्य सत्वेन तदभिधारणस्य सम्भवाद् अ[ न ]भिधारणतस्सव्यत्वदोषोद्भावनं नोपपद्येत । तस्मात्संस्कारोत्कर्षविधिरेवायम् । ननु कर्मभेदपक्षेऽप्यनभिघारणतस्सव्यत्वदोषः प्रसज्येत, सवनीयप्रचारादिना जुह्वा रेचितत्वेन ब्रह्मसामकाले प्रयाजशेषाभावात् । न च कर्मभेदपक्षे तदानीं पुनः प्रयाजाद्यङ्गानामकरणे सति प्रयाजशेषसम्भव इति वाच्यम्, 'तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिस्स्यात् तन्त्रस्याविशिष्टत्वात्' इति द्वादशाद्याधिकरणन्यायेन () अग्नीषोमीयपश्वर्थानुष्ठितसाङ्गकलापस्य पशुपुरोडाशस्य 'पशुसवनीयेषु विकल्पस्स्याद्वैकृतश्चेदुभयोरश्रुतिभूतत्वात्' इति द्वादशिकद्वितीयपादीयाधिकरणन्यायेन () सवनीयपुरोडाशेष्विव च प्रातराग्नेयादिसकलपश्वर्थानुष्ठितानां प्रयाजानामपि ब्रह्मसामकालकप्राजापत्यपशुषु कर्मान्तरभूतेष्वपि

१. आकर्ष. क.

प्रसङ्गादुपकारकत्त्वसम्भवेन तदानीं पुनः प्रयाजकरणाप्रसक्त्या प्रयाजशेषाभावेन तदनभिधारणप्रयुक्तसव्यत्वदोषोद्भावनस्य कर्मभेदपक्षेऽप्युपपन्नत्वात्। तस्माद् "ब्रह्मसाम्न्यालभते" इत्यत्र कर्मैकत्वे कथमिदं लिङ्गदर्शनमुपपद्यत इति चेत्— अनुपपन्नमेवेदं लिङ्गदर्शनसूत्रमिति वार्तिककृतः। तन्त्ररत्नादावप्येवम्। वस्तुतस्तु पशुपुरोडाशे पाशुकं तन्त्रं न प्रसङ्गादुपकरोति·········सिद्धेर्योगस्य। एवं सवनीय-पुरोडाशानामपीति मतान्तरं द्वादशाद्याधिकरणे प्रपञ्चयिष्यते। तदभिप्रायेण 'वपानाञ्चानभिधारणस्य दर्शनात्' इति सूत्रप्रवृत्तिः। तन्मते प्रसङ्गादुपकाराभावेन ब्रह्मसामकालकप्राजापत्यानां कर्मान्तरत्वे तत्र प्रातस्सवनकालकपश्वर्थानुष्ठित-प्रयाजानामुपकारकत्वाभावेन पुनः प्रयाजानां करणे सति प्रयाजशेषस्य सत्वेन तेन वपानामभिधारणस्य कर्तुं शक्यतया तदनभिधारणप्रयुक्तसव्यत्वदोषोद्भावनस्य कर्मान्तरत्वपक्षेऽनुपपत्तेः। तदुक्तं वार्तिकतन्त्ररत्नयोः—'तस्मादयुक्तमेवेदं लिङ्गं परम-तत्वेन नेतव्यम्' इति। तदेवं "ब्रह्मसाम्न्यालभते" इति न कर्मान्तरविधिः, किन्तु संस्कारोत्कर्षविधिः। ततश्च ये पर्यग्निकरणान्ते उत्सृष्टाः, तेषामेव पशूनां ब्रह्म-साम्न्यालम्भो नान्येषामिति स्थितम्। वस्तुतस्तु पर्यग्निकरणान्तेऽन्ये पशव उत्स्र-ष्टव्याः, अन्ये च ब्रह्मसाम्न्यालब्धव्या इति पूर्वपक्षस्योन्मेष एव नास्ति। एवं हि— तैत्तिरीये श्रूयते—"सप्तदश प्राजापत्यान् पशूनालभते, तान् पर्यग्निकृतानुत्सृजति, मारुत्या प्रचर्यैतान् संज्ञपयेत्" इति। अत्र एतानित्ययं शब्द उत्सृष्टान् पशून् परामृशति। अतः कर्मैकत्वस्य स्पष्टमवगतत्वादधिकरणप्रवृत्तिश्चिन्त्यप्रयोजना॥

इति दशमं ब्रह्मसामकाले प्राजापत्यालम्भोत्कर्षमात्राधिकरणम्॥१०॥

## ११

अस्ति पञ्चशारदीयो नामाहीनः पञ्चसुत्याकः पञ्चसांवत्सरिकः। "यः काम-येत बहोर्भूयान् स्यामिति स पञ्चशारदीयेन यजेत" इति। तत्र श्रूयते—"वैशाख्या-ममावास्यायां सप्तदश मारुतीस्त्रिवत्सा अप्रवीता उपाकरोति, सप्तदश पृश्नीनुक्ष्णस्तान् पर्यग्निकृतान् प्रोक्षितानितरा आलभते प्रेतरानुत्सृजन्ति, ततः संवत्सरे राजीवा आनयन्ति, तांश्चैवोक्ष्णस्तान् पर्यग्निकृतान् इतरा आलभन्ते प्रेतरानुत्सृजन्त्येवं तृतीये चतुर्थे संवत्सरे, पञ्चमे वर्षे दीक्षित एतानुक्ष्णः त्रींस्त्रीनन्वहमालभते पञ्चोत्त-मेऽह्नि" इति। त्रिवत्साः त्रिहायनीर्वत्सतरीः, अप्रवीताः अगर्भिणीः, मारुतीर्मरु-

द्देवत्याः, सप्तदश उपाकरोति । पृश्नीन् श्वेतान् । उक्ष्णः अनड्डुहः । सप्तदश उपाकरोतीत्यनुषज्यते । तथा मारुतीरित्यपि । तच्च पुंल्लिङ्गतया विपरिणम्यते । तदेवं वाक्यद्वयेनानेन सप्तदश त्रिवत्सद्रव्यकमारुतयागाः, सप्तदशोक्षद्रव्यकमारुतयागा इति चतुस्त्रिंशत्कर्माणि विहितानि भवन्ति । तत्र इतरानुक्ष्णः प्रोक्षितान् पर्यग्निकृतान प्रोत्सृजति, इतराः त्रिवत्सा आलभन्ते । ततः संवत्सरेऽतीते राजीवा वर्णविशेषविशिष्टाः त्रिवत्सा आनयन्ति । तांश्चैवोक्ष्णः आनयन्ति । तान् पर्यग्निकृतानित्यादि पूर्ववत् । तत्र पञ्चस्वपि संवत्सरेषु त्रिवत्सानामालम्भो निर्विवादः । उक्षसु चिन्त्यते—किं ये प्रथमे संवत्सरे पर्यग्निकृता उत्सृष्टास्तेषामेव द्वितीयतृतीयचतुर्थ संवत्सरेषु पुनः पर्यग्निकरणान्त उत्सर्गः, पञ्चमे संवत्सरे तेषामेव पञ्चसु सुत्यासु त्रींस्त्रीनन्वहं पञ्चोत्तम इत्येवमालम्भः ? उत प्रतिवर्षमन्येऽन्य उक्षाण उत्स्रष्टव्याः, पञ्चमे च संवत्सरेऽन्य एवालब्धव्याः ? इति । तत्र "त्रींस्त्रीनन्वहमालभन्ते, पञ्चोत्तमेऽह्नि" इत्यस्य कर्मान्तरपरत्वेऽनेकादृष्टकल्पनस्योत्सर्गवाक्यानां कर्मशेषप्रतिषेधपरत्वे वाक्यभेदस्य च प्रसङ्गात् । पूर्वाधिकरणन्यायेन ब्रह्मसाम्न्यालभत इत्यस्यैव त्रींस्तीनन्वहमालभन्ते । पञ्चोत्तमेऽन्हीत्यस्यापि प्रथमसंवत्सरे उपक्रान्तानामुक्षयागानां संस्कारोत्कर्षविधिपरत्वम् , वचनाच्च पुनः पर्यग्निकरणं क्रियते । उत्सर्गवाक्यानाञ्चालम्भोत्कर्षतः प्राप्तानुवादत्वमिति लाघवादभ्युपेयमिति पूर्वपक्षमुद्भाव्य निराकरोति—

## पञ्चशारदीयास्तथेति चेन्न चोदनैकवाक्यत्वात् ॥ ४५ ॥

यथा प्राजापत्याः पशवः प्रातस्सवने पर्यग्निकरणान्तसंस्कृता ब्रह्मसाम्न्यालभ्यन्ते, तथा पञ्चशारदीयाः पञ्चशारदीयवर्तिन उक्षाणोऽपि प्रथमादिवर्षेषु पर्यग्निकरणान्ते उत्सृष्टाः सुत्यास्वालभ्यन्त इति चेत्तन्न; कुतः ? चोदनैकवाक्यत्वात्— "त्रींस्त्रीनन्वहमालभन्ते पञ्चोत्तमेऽह्नि" इति चोदनाया एकवाक्यत्वात् । अनेन हि वाक्येनालम्भोत्कर्षो न शक्यो विधातुम, तथासति त्रींस्त्रीनिति च अन्वहमिति चानेकार्थविधाने भूयो वाक्यभेदापत्तेः । तथा पञ्चेति चोत्तमेऽहनीति चार्थभेदो दर्शयितव्यः । तस्मादनेन वाक्येन सङ्ख्याकालविशिष्टापूर्वविधानं क्रियते । एवञ्चालम्भोत्कर्षेऽविहिते सति प्राजापत्यन्यायासम्भवात् "पर्यग्निकृतानारण्यानुत्सृजति" इतिवदुत्सर्गवाक्यानां कर्मशेषप्रतिषेधपरत्वम् । "आज्येन शेषं संस्थापयति"

इतिवच्च "त्रींस्त्रीनन्वहमालभन्ते, पञ्चोत्तमेऽह्नि" इत्यस्य कर्मान्तरविधायकत्वमेव। ततश्च प्रतिवर्षमन्येऽन्ये उक्षाण उत्स्रष्टव्याः। सुत्यासु चान्य एवालब्धव्याः। न चैवं सति "तांश्चैवोक्ष्ण आनयन्ति" इति तच्छब्दविरोध इति वाच्यम्। भूयो वाक्यभेदगौरवभयात् त्रींस्त्रीनित्यादिवाक्यस्य पूर्वविधित्वे स्थिते तच्छब्दस्य तत्स्थानीयेषु लक्षणया निर्वाह्यत्वात्। अतस्त्रींस्त्रीनन्वहमित्यादिवाक्ये कर्मभेद एव युक्तः ॥

किञ्च -

## संस्काराणाञ्च दर्शनात् ॥ ४६ ॥

"तान् पर्यग्निकृतान्" इति प्रतिवर्षमुक्ष्णां पर्यग्निकरणदर्शनं [प्रति]वर्षमुक्ष्णां भेद एवोपपद्येत। तदभेदे तु प्रथमवर्षे पर्यग्निकृतानां पुनः पर्यग्निकरणमनर्थकमेव स्यात्। न च वचनात्पुनः पर्यग्निकरणमिति वाच्यम्, न हि पर्यग्निकरणमत्र विधीयते, किन्तूत्सर्गः। [1]यदीदमपि विधीयेत, तर्हि पर्यग्निकरोति, तांश्चोत्सृजतीति वाक्यभेदप्रसङ्गात्। अतः पुनः पर्यग्निकरणानुवादादप्युत्स्रष्टव्यानामालब्धव्या-[2]नाञ्चोक्ष्णां भेद इति।

अत्रेदं वक्तव्यम्-"त्रींस्त्रीनन्वहम्" इत्यादिवाक्यस्योत्कर्षपरत्वे-अन्वहमुक्ष्ण आलभेत, तांश्च त्रींस्त्रीन्, उत्तमेऽहनि तु पञ्चेति त्रेधा वाक्यभेदः। तथा प्रथमवर्षे "पर्यग्निकृतानुत्सृजति" इति वाक्ये पर्यग्निकृतानिति चोदकप्राप्तस्य पर्यग्निकरणस्यानुवादः, उत्सृजतीत्यपि संज्ञपनोत्कर्षतः प्राप्तस्य कर्मोपरमस्यानुवादः। द्वितीयतृतीयचतुर्थेषु तु वर्षेषु "पर्यग्निकृतानुत्सृजति" इति त्रिष्वपि वाक्येषु पर्यग्निकरणमुत्सर्गश्चेत्युभयमपि विधातव्यम्—पर्यग्निकरोति तांश्चोत्सृजतीति। तत्र षोढा वाक्यभेदः। उक्षादृष्टानि तु सप्तदशेति स्थितिः। कर्मभेदपरत्वे तु प्रतिवर्षं सप्तदशोक्षादृष्टानीति पञ्चसु वर्षेषु पञ्चाशीतिरुक्षादृष्टानि स्युः। चतुर्णामप्युत्सर्गवाक्यानां विधायकत्वमभ्युपेयम्। तथाच "त्रींस्त्रीन्" इत्यादिवाक्येन सह पञ्चापि वाक्यानि विधायकानि सम्पद्येरन्। किञ्च द्वितीयतृतीयचतुर्थवर्षेषु तांश्चैवोक्ष्ण इति त्रीणि

---

१. यदि तदपि क.

२. आलब्धव्यानाञ्च. नास्ति. क.

वाक्यानि। तत्र त्रयाणामपि तच्छब्दानामतज्जातीयेषु[1] लक्षणाप्रसङ्गः। अतः "त्रींस्त्रीनन्वहम्" इत्यस्य संस्कारोत्कर्षपरत्वमेव लघीय इति प्रतीमः॥

इत्येकादशं पञ्चशारदीयाधिकरणम्॥ ११॥

१२

अस्ति राजसूयेऽभिषेचनीयो नाम सोमः। ततः संसृपांहवींषि। ततो दशपेयो नाम सोमः। तत्र किमभिषेचनीयदशपेययोरेकतन्त्रत्वम्? उत भिन्नतन्त्रत्वम्? इति संशये, पूर्वपक्षयति—

**दशपेये क्रयप्रतिकर्षात् प्रतिकर्षः प्राचां तस्मात् समानतन्त्रं स्यात्॥ ४७॥**

"सह सोमं क्रीणात्यभिषेचनीयदशपेययोः" इति वाक्येन पूर्वकालकस्याभिषेचनीयस्य क्रतुकाले उत्तरकालकस्य दशपेयस्य क्रयप्रतिकर्षो विधीयते। अतस्ततः प्राचाम्—क्रयात्प्राग्वर्तिनां सङ्कल्पर्त्विग्वरणदीक्षणीयादीनामपि प्रतिकर्षस्स्यात् 'तदन्तमपकर्षं स्यात्' इति न्यायात्। अतस्सहोपक्रान्तौ तौ तथैव समापनीयौ। तस्मात्समानतन्त्रम्—एकतन्त्रं तयोस्स्यात्॥

**समानवचनं तद्वत्॥ ४८॥**

"समानो वा एष यज्ञो यद्दशपेयश्चाभिषेचनीयश्च" इति समानवचनम्, तद्वत्—क्रयप्रतिकर्षवाक्यवत् समानतन्त्रत्वं तयोर्गमयति। न हि स्वरूपतो भिन्नयोरभिषेचनीयदशपेययोरेकवचनं तन्त्रैकत्वं विना सङ्गच्छते। तस्मादेकतन्त्रत्वं तयोरिति प्राप्ते, सिद्धान्तयति—

**अप्रतिकर्षो वार्थहेतुत्वात् सहत्वं विधीयते॥ ४९॥**

वाशब्द एवार्थे। "सह सोमं क्रीणाति" इत्यादिवाक्ये दाशपेयिकस्य क्रयस्य प्रतिकर्षो न विधीयते। कुतः? अर्थहेतुत्वात्—"सह सोमं क्रीणाति" इत्यादिवाक्ये क्रीणातिना प्रतीयमानस्य क्रयस्यार्थहेतुत्वात्। अर्थः-अन्यथानुपपत्तिलक्षणो हेतुः प्रयोजको यस्य क्रयस्य सोऽर्थहेतुः, तस्य भावस्तत्त्वम्, तस्मादर्थ-

1. तज्जातीयेषु. क.

हेतुत्वात्। आर्थिकत्वादित्यर्थः। ज्योतिष्टोमे हि द्वौ 'सोमक्रयौ। एकस्तावदार्थिकः क्रतुप्रवृत्तेः प्राग्यज्ञसाधनोपकल्पनकाले सोमविक्रयिणा सह संवादरूपः-तुभ्यङ्ग-वादिमूल्यं दास्यामि, त्वमस्मिन् क्रतौ सोमविक्रयी भवेत्युपसंवादो हि क्रतुप्रवृत्तेः प्रागावश्यकः। अकृते हि तस्मिन् संवादे क्रतावारब्धे कदाचित् सोमविक्रय्य-लाभात् क्रतुरेव न संवर्तेत। तस्मिंश्चोपसंवादे सति क्रयो निर्वृत्तप्रायः। मूल्यार्पण-मात्रं परिशिष्टम्। तदेतद् "गवा क्रीणाति" इत्यादिना विधीयते। सोऽयमन्यः प्रयोगमध्यपाती। तत्र दाशपेयिकस्य क्रतूपक्रमप्राक्कालिकस्योपसंवादरूपस्यैव क्रयस्याभिषेचनीयकक्रयेण सहत्वमुच्यते, प्रथमोपस्थितत्वात्। न तु प्रयोगमध्य-पातिनो मूल्यार्पणरूपस्य क्रयस्य, तस्य जघन्यत्वात्। उपसंवादश्चायं क्रतुबहिर्भूतः। अतः प्रयोगमध्यपातिक्रयस्य प्रतिकर्षविधानाभावे सति सहोपक्रमाभावात्काल-भेदात् तन्त्रभेद उभयोः॥

ननु मूल्यं दत्वा परकीयस्यात्मीयकरणे क्रीणातिर्मुख्यः। मूल्यं दास्यामीत्युक्त-वन्तं प्रति विक्रीतं धान्यमित्यादिप्रयोगे उपसंवादे क्रीणातिस्तु गौणः। न चेह गौणाश्रयणे प्रमाणमस्ति। अतो मुख्यस्यैव क्रयस्यायं प्रतिकर्षविधिस्स्यादित्यस्वर-सादुपसंवादरूपक्रयपरत्वे युक्त्यन्तरमाह—

## पूर्वस्मिंश्चावभृथस्य दर्शनात् ॥ ५० ॥

पूर्वस्मिन् दशपेयापेक्षया पूर्वकालकेऽभिषेचनीयेऽवभृथं दर्शयति—"समानं वा एतद्यज्ञं विच्छिन्दन्ति, यदभिषेचनीयस्यावभृथमवयन्ति" इति। तदेतत् "सह सोमं क्रीणाति" इत्यस्योपसंवादरूपक्रयपरत्वे घटते[3]। मुख्यक्रयपरत्वे तु दाशपेयिक-क्रयप्रतिकर्षादुभयोः समानतन्त्रत्वे सत्यवभृथो दशपेयान्ते स्यात्, न त्वभिषेच-नीयान्ते। ततश्च सोमं क्रीणातीत्येतदुपसंवादरूपमेवास्थेयम्॥

किञ्च—

## दीक्षाणाञ्चोत्तरस्य ॥ ५१ ॥

दर्शनादित्यनुषज्यते। चशब्दो मध्यमणिन्यायेनोभयत्र सम्बध्यते—उत्तरस्य च दीक्षाणाञ्चेति। तत्रोत्तरस्य चेति चशब्दोऽभिषेचनीयसमुच्चयार्थः। दीक्षाणां

१. सोमस्य. क.
२. क्रतुसंवादे. ग.
३. उपपद्यते. क.

चेति चशब्दस्तु सोमक्रयसमुच्चयार्थः। उत्तरस्य दशपेयस्य पूर्वस्याभिषेचनीयस्य च दीक्षाणां सोमक्रयस्य च पृथग् दर्शनादित्यर्थः। एवं हि श्रूयते—"तथाभिषेचनीयस्य दीक्षां वर्धयेयुः, यथा दशमेऽहनि दशपेयस्सम्पद्यते, सद्यो दीक्षयति, सद्यस्सोमं क्रीणाति" इति। तदिदं "सह सोमं क्रीणाति" इत्यस्योपसंवादपरत्व एवोपपद्यते। मुख्यस्य क्रयस्य प्रतिकर्षे ह्यभिषेचनीयदशपेययोरेकतन्त्रत्वेन पृथग्दीक्षानुपपत्तेः, क्रीतस्य पुनः क्रयानुपपत्तेश्च। अतस्तयोस्तन्त्रभेदो युक्तः॥

यदुक्तं समानवचनं तद्वदिति, तत्राह—

**समानः कालसामान्यात् ॥ ५२ ॥**

अभिषेचनीयो दशपेयश्च कालसामान्यात् समानो भवति। एकस्मिन् क्रतौ हि तौ, अन्ये तु राजसूयकाः क्रतवो न तथा। अतः कालैकत्वकृतमेव तयोः समानत्वम्, न तु तन्त्रैकत्वकृतमित्यर्थः। तस्मादभिषेचनीयदशपेयौ भिन्नतन्त्रौ॥

इति द्वादशमभिषेचनीयदशपेययोर्भिन्नतन्त्रताधिकरणम्॥ १२ ॥

१३

वरुणप्रघासेषु "मारुत्यामिक्षा भवति, वारुण्यामिक्षा" इति श्रुतम्। तत्रेदमन्यच्छ्रूयते—"वारुण्या निष्कासेन तुषैश्चावभृथमभ्यवयन्ति" इति। तत्र चिन्त्यते—किं प्रधानस्यामिक्षायागस्यायं प्रचारविप्रकर्षः? उत निष्कासस्येयं प्रतिपत्तिः? उत निष्कासद्रव्यकमवभृथधर्मकं कर्मान्तरं विधीयते? इति। तत्र पूर्वपक्षयति—

**निष्कासस्यावभृथे तदेकदेशत्वात्पशुवत्प्रदानविप्रकर्षस्स्यात् ॥५३॥**

अवभृथे निष्कासितस्य वारुणयागीयामिक्षैकदेशस्यामिक्षाकुम्भीविलग्नस्य प्रक्षालनसमये निष्कासितस्य द्रव्यस्य प्रदानविप्रकर्षस्स्यात्—वारुण्या आमिक्षाया एकदेशस्याज्यभागान्ते एकदेशान्तरस्य च समिष्टयजुरूर्ध्वं प्रदानम्। प्रदानद्वयेन चामिक्षायाग एको वारुणो निर्वर्त्यते, न तु कर्मान्तरमत्र[1] विधीयते। कुतः? तदेकदेशत्वात्—वारुणयागीयामिक्षैकदेशत्वान्निष्कासस्य। ततश्चैकयागस्य शेषभूतं द्रव्यं यागान्तरं कथं निर्वर्तयितुं शक्नुयात्। अतो वारुणयागस्यैव प्रधानस्य

१. कर्मान्तरमपि. क.

प्रदानविप्रकर्षोऽयं पशुवत्। यथा ''वपया प्रातस्सवने चरन्त्यङ्गैस्तृतीयसवने'' इति सवनीयपशुयागस्य प्रदानविप्रकर्षः, तद्वत्॥

सिद्धान्तयति---

**अपनयो वा प्रसिद्धेनाभिसंयोगात्॥ ५४॥**

वाशब्द एवार्थे। अपनीयते पृथगपूर्वं प्राप्यतेऽनेनेत्यपनयः, कर्मान्तरमिति यावत्। कुतः? प्रसिद्धेनाभिसंयोगात्--प्रसिद्धेनावभृथसंज्ञकेन कर्मान्तरेण निष्कासस्य संयोगात्। अवभृथशब्दो हि कर्मविशेषे प्रसिद्धः। स तावत् निष्कासेनाभ्यवेतुमशक्यः। ततश्च निष्कासेनावभृथं कर्तुमपोऽभ्यवयन्तीत्यर्थः। अवभृथशब्दश्च तद्धर्मातिदेशकः। ननु यत्राख्यातेन कर्म प्रतिपाद्यते, तत्र नाम्नो धर्मातिदेशकत्वम्। यथा ''मासमग्निहोत्रं जुह्वति'' इति। तत्र हि जुहोतिना कर्म प्रतिपाद्यते। अग्निहोत्रशब्दश्च तद्धर्मातिदेशकः। इह त्ववभृथमिति नामशब्द एव केवलं श्रूयमाणः कर्म विदधाति। स एव च धर्मातिदेशको भवतीति गौरवं स्यात्। न च यन्तीत्यनेन कर्म प्रतिपाद्यत इति वाच्यम्, तस्य गमनमात्रवचनत्वात्। तेन तस्यैवामिक्षायागस्यायं प्रचारविप्रकर्ष इति युक्तमिति चेत्, उच्यते--यन्तीति गमनं नोच्यते, किन्तु लक्षणया क्रियामात्रम्। ततश्च निष्कासेनावभृथं कुर्वन्तीत्यर्थः। एवञ्चाख्यातेन कर्मणः प्रतिपाद्यत्वादवभृथशब्दो धर्मातिदेशको भवति। न चैवमपि निष्कासेन कुर्यात्, तच्चावभृथधर्मकमिति वाक्यभेदस्स्यादिति वाच्यम्, विशिष्टविधानाभ्युपगमात्। न चैवमपि गौरवमिति वाच्यम्, प्रचारविप्रकर्षपक्षे ह्यवभृथशब्दो गौणोऽनुवादस्स्यात्। तदेतदानर्थक्ये पर्यवसितम्। ततो वरं विशिष्ट विधानाश्रयणम्। तस्मादवभृथधर्मककर्मान्तरविधिः॥

ननु भवतु कर्मान्तरम्, तथापि वारुणयागीयामिक्षाद्रव्यस्य प्रतिपत्तिरेवास्त्वित्याशङ्क्य निराकरोति---

**प्रतिपत्तिरिति चेन्न कर्मसंयोगात्॥ ५५॥**

अन्यशेषत्वान्निष्कासस्य प्रतिपत्तिरवभृथकर्मेति चेन्न; कुतः? कर्मसंयोगात् अवभृथाख्येन कर्मणा प्रसिद्धेन संयोगात्। यथा प्रसिद्धोऽवभृथः क्रियते, तद्वदिदमपि कर्मेति नामधेयादवगम्यते। प्रसिद्धे च सौमिकेऽवभृथे एककपालपुरोडाशलक्षणं द्रव्यं यागं प्रति गुणः, यागश्च प्रधानमित्यवगतम्। तथेहापि कर्मणि

भवितव्यम् । प्रतिपत्तिकर्मत्वे तु निष्कासलक्षणं द्रव्यं यागं प्रति प्रतिपाद्यत्वात् प्रधानम् , यागस्तु निष्कासं प्रति गुण इति वैपरीत्यमेव स्यात् । ततश्च प्रसिद्धावभृथतुल्यत्वमस्य कथं स्यात् । तथाच यस्यावभृथनामधेयस्य प्रसादात् कर्मान्तरमिदं सिध्यति, तेनैव नामधेयेन प्रतिपत्त्यर्थतानिराकरणेनार्थकर्मतापि सिध्यति । वचनात्त्वन्यदीयस्यापि द्रव्यस्यैकदेशोऽन्यत्र विनियुज्यते । तस्मादवभृथधर्मकं कर्मान्तरमर्थकर्मैवात्र विधीयत इति स्थितम् । अत्र वाजसनेयकब्राह्मणम्—"वारुण्यै पयस्यायै क्षामकर्षमिश्रमादाय तेनावभृथं यन्ति" । "तत्र न साम गीयते तूष्णीमेव परेत्य" "अवभृथ निचुम्पुणेति स्थालीमुपमारयति स्नात्वन्ये वाससी परिधायोदेत" इत्यादि । अत्र सामगानप्रतिषेधादवभृथधर्मककर्मान्तरविधिः स्पष्टमेवावगम्यते । 'सोमाचावभृथे सामप्रतिषेधात्' इत्येव कात्यायनः ॥

इति त्रयोदशं वरुणप्रघासेष्ववभृथस्य कर्मान्तरत्वबोधनाधिकरणम् ॥१३॥

## १४

ज्योतिष्टोमे श्रूयते—"प्रायणीयस्य निष्कासे उदयनीयमनुनिर्वपति" इति । तत्र संशयः—किं प्रायणीयनिष्कासद्रव्यकमुदयनीयधर्मकं कर्मान्तरं विधीयते ? उत प्रायणीयनिष्कासस्योदयनीयनिर्वापसंयोगः प्रतिपत्तिः ? किं वा प्रायणीयनिष्कासे निर्वाप उदयनीयस्य संस्कारः ? इति । तत्र पूर्वपक्षयति—

### उदयनीये च तद्वत् ॥ ५६ ॥

यथा वरुणप्रघासेषु "वारुण्या निष्कासेनावभृथमभ्यवयन्ति" इति वाक्येऽवभृथधर्मककर्मान्तरविधिः, तथोदयनीये—उदयनीयशब्दघटिते "प्रायणीयनिष्कास उदयनीयमनुनिर्वपति" इति वाक्येऽपि प्रसिद्धोदयनीयधर्मककर्मान्तरविधिः । उदयनीयो हि "आदित्य उदयनीयो भवति" इति वाक्यान्तरप्रसिद्धः । तत्सदृशमिदं कर्मान्तरम् । अतो भेदेन द्वयोरनुष्ठानमिति प्रथमः पक्षः ॥

द्वितीयं पक्षमुद्भावयति—

### प्रतिपत्तिर्वाकर्मसंयोगात् ॥ ५७ ॥

वाशब्दः प्रथमपक्षव्यावृत्तौ । नात्रोदयनीयधर्मककर्मान्तरविधिः, किन्तर्हि ? प्रायणीयनिष्कासस्योदनीयनिर्वापसंयोगरूपा प्रतिपत्तिरेव विधीयते । कुतः ?

अकर्मसंयोगात्—न ह्यत्र निष्कास उदयनीयकर्मणा संयुज्यते, कारकाणां मिथस्सम्बन्धायोगात्। किन्तु निर्वापेण संयुज्यते। उदयनीयशब्दश्चोदयनीय हविर्लक्षक एव। न च यागवचनः, यागस्य प्रायणीयनिष्कासे निर्वप्तुमशक्यत्वात्। ततश्च प्रायणीयनिष्कासे उदयनीयं हविर्निर्वपतीत्यर्थः। एवञ्चोदयनीयनामक-कर्मणोऽत्र विधानान्न तद्धर्मककर्मान्तरविधिः। अत उदयनीयस्य सकृदेवानुष्ठानम्। प्रायणीयनिष्कासश्च प्रतिपत्तिरेवेति प्राप्ते, सिद्धान्तयति—

**अर्थकर्म वा शेषत्वाच्छ्रयणवत्तदर्थेन विधानात् ॥ ५८ ॥**

वाशब्द एवार्थे। प्रायणीयस्य निष्कासे निर्वापोऽर्थकर्मैव, न तु प्रतिपत्तिः। निष्कासे निर्वाप उदयनीयहविषस्संस्कार इति यावत्। कुतः? शेषत्वात्—निर्वापं प्रति निष्कासस्य शेषत्वाद् गुणभूतत्वात्। कुतः? तदर्थेन विधानात्—तदर्थेन गुणभावार्थकशब्देन सप्तम्या विभक्त्या विधानात्। सप्तमी ह्यधिकरणत्वे विहिता। अधिकरणत्वञ्च कर्तृकर्मद्वारा तन्निष्ठक्रियाधारत्वम्। निर्वापक्रियां प्रति चोदयनीय-हविः कर्म। तत्र निर्वापस्साक्षाद्वर्तते। हविर्द्वारा निष्कासे। ततश्च निष्कासस्य क्रियाधारत्वेन सप्तम्यावगतस्य क्रियां प्रति गुणभूतत्वान्न निर्वापसंयोगप्रतिपाद्यत्वं सम्भवति। प्रतिपाद्यत्वे सति निष्कासस्य निर्वापं प्रति प्राधान्यापत्त्या सप्तम्य-वगतगुणत्वबाधप्रसङ्गात्। किञ्चोदयनीयहविर्निरुप्यमाणं भाव्युपयोगित्वात् संस्कारार्हम्, न तु प्रायणीयं हविः, तस्योपयुक्तत्वात्। उपयोक्ष्यमाणसंस्कारश्चोप-युक्तसंस्काराच्छ्रेयान्। [1]किञ्च यदि निर्वापोऽयं प्रायणीयनिष्काससंस्कारस्स्यात् तर्हि प्रायणीयाङ्गमेव स्यात्। तत्रोदयनीयसन्निधिर्बाध्येत। न च निष्कासस्य प्रयाजशेषवदुदयनीयनिर्वापसंयोगे दृष्टं किञ्चित्प्रयोजनमस्ति। अतश्शब्दानुगुण्या-दुदयनीयहविस्संस्कारः प्रायणीयनिष्कासे निर्वापः श्रयणवत्। यथा "पयसा मैत्रावरुणं श्रीणाति" इत्यत्र श्रयणं सोमस्य संस्कारः, तद्वत्। तथाच[2] निष्कासनाशे उदयनीयस्य वैगुण्यम्, न तु प्रायणीयस्येति फलति ॥

इति चतुर्दशं प्रायणीयनिष्कासस्योदयनीयनिर्वापार्थत्वाधिकरणम् ॥१४॥

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसा-
कौतूहलवृत्तावेकादशाध्यायस्य द्वितीयः पादः ॥

१. किञ्च. नास्ति. क.
२. ततश्च. क.

# अथैकादशाध्यायस्य तृतीयः पादः

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

( द्वितीयपादे कालादीनामङ्गप्रधानेषु तन्त्रता प्राधान्येन विचारिता। अथास्मिंस्तृतीयपादे क्वचिदङ्गप्रधानयोर्भिन्नकालत्वं प्रस्तुत्य भिन्नकालानामङ्गानां तन्त्रत्वं निरूप्यते । )

**अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम् ॥ १ ॥**

कालग्रहणं देशकर्त्रोरप्युपलक्षणम् । मुख्यकालत्वादिति ल्यब्लोपे पञ्चमी । अङ्गानां प्रधानदेशकालकर्तृत्वं पूर्वस्मिन् पादे व्यवस्थापितम् 'अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् तस्मात्स्यादेकदेशत्वम्" इत्यत्र । येषान्त्वङ्गानां प्रधानभिन्नदेशकालकर्तृत्वं वाचनिकम्, तत्र न्यायप्राप्तमङ्गानां प्रधानदेशकालकर्तृकत्वमनादृत्य देशकालकर्तृभेदोऽभ्युपेयः, वचने सति न्यायाप्रवृत्तेः। कालभेदो यथा—"पूर्वेद्युरमावास्यायां वेदिं करोति" इति । देशभेदो यथा—"अवभृथेन चरन्ति" इति । कर्तृभेदो यथा—"अग्निं चित्वा सौत्रामण्या यजेत वडवा दक्षिणा" इति । अत्र दक्षिणाभेदात्कर्तृभेदः । वचने सति न्यायाप्रवृत्तेरिति सुहृदुपदेशोऽयम् ॥

**इति प्रथममङ्गानां प्रधानकालान्यकालकर्तव्यत्वाधिकरणम् ॥ १ ॥**

२

आधानं प्रकृत्य चिन्त्यते—किं प्रतिकर्म भेदेनाग्न्याधानं कर्तव्यम् ? उत सर्वकर्मार्थं सकृदादौ ? इति । तत्र प्रयाजादिवदङ्गत्वादाधानस्य प्रतिकर्मावृत्तिस्स्यात् । न चाग्रहणविशेषत्वात् तन्त्रता, आधानानन्तरं यत्कर्मापतति, तादर्थ्यमित्यानन्तर्येण विशेषग्रहणात् । अतः प्रतिप्रयोगमाधानमिति प्राप्ते, सिद्धान्तयति—

() ग पुस्तके ग्रन्थपातः,

## द्रव्यस्याकर्मकालनिष्पत्तेः प्रयोगस्सर्वार्थस्स्यात् स्वकालत्वात् ॥ २ ॥

स्वः स्वकीयः कालो वसन्तादिर्यस्याधानस्य तत्स्वकालम्, तस्य भावस्तत्त्वम, तस्मात्। न ह्याधानं कस्यचित्कर्मणः काले श्रुतम्, येन गृह्यमाणविशेषत्वात् तन्त्रं न भवेत्। न चानन्तर्याद् गृह्यते विशेष इति वाच्यम्, आनन्तर्यस्य नान्तरीयकत्वेन विशेषाग्राहकत्वात्। यदेव हि किञ्चिदग्निसाध्यं कर्म नित्यं काम्यं नैमित्तिकं वा प्राप्तकालं तत्सर्वं कर्तुम् 'अहमग्नीनाधास्ये' इत्येवाभिसन्धायाधत्ते। आधानोत्पन्नानामग्नीनां प्रयोजनाकाङ्क्षायां यद्यदग्निभिः कर्तुं शक्यते, तस्य सर्वस्य कर्मणः प्रयोजनत्वेन परिग्रहात्। ततश्चानभिसन्धाय कर्मविशेषं सर्वकर्मार्थमाधाने कृते सति यत्किञ्चित्कर्म प्रथममापतति तन्मात्रार्थत्वं तस्य न भवति, प्रथमावगतसर्वार्थत्वस्य बाधप्रसङ्गात्। अतस्सर्वकर्मणां तन्त्रमाधानमिति। यद्यप्याधानस्य कर्माङ्गत्वं न प्रकरणात्, तस्यानारभ्याम्नातत्वात्। नापि वाक्यात्, तथाविधवाक्यस्यानुपलम्भात्। नापि क्रतुविधितः, क्रतुविधीनामाहवनीयाद्यपेक्षित्वेन तत्राधानस्यार्थिके प्रयोजनकत्वे सत्यपि यागसाधनव्रीह्याद्युत्पादककर्षणादिवत् प्रकरणादिप्रमाणागोचरत्वेन क्रत्वङ्गत्वासम्भवात्। तथाच प्रयाजादिवत् प्रतिकर्माधानस्यावृत्तिरिति संशयकोटेरनुन्मेषादधिकरणप्रवृत्तिरनुपपन्ना, तथापि क्रत्वङ्गत्वमाधानस्याभ्युपगम्याधिकरणप्रवृत्तिरित्यदोषः ॥

इति द्वितीयमाधानस्य तन्त्रताधिकरणम् ॥ २ ॥

३

'सन्त्यग्निष्टोमेऽग्नीषोमीयसवनीयानुबन्ध्याः पशवः। तत्राग्नीषोमीये यूप उपदिष्टः। सवनीयानुबन्ध्ययोस्तु चोदकतः प्राप्यते। स यूपः किं त्रयाणामपि पशूनां तन्त्रम्? उत प्रतिपशु भेदेन? इति संशयः। तदर्थञ्चेत्थं चिन्त्यते—"दीक्षासु यूपं छिनत्ति" इति किमग्नीषोमीयमात्रार्थयूपापकर्षविधिः? उत पशुत्रयसाधारणयूपापकर्षविधिः? इति। तत्र 'तथा स्यादध्वरकल्पायाम्' इत्यधिकरणन्यायेन () "पुरा वाचः प्रवदितोर्निर्वपेत्" इत्यस्य प्रथमत्रिकमात्रनिर्वापकालविधायकत्ववद् "दीक्षासु

१. सन्ति ज्योतिष्टोमे. ग.

यूपं छिनत्ति" इत्यस्यापि प्रथमाग्नीषोमीययूपस्यैवापकर्षविधायकतया सवनीयानुबन्ध्ययोर्भेदेनैव स्वस्वकाले यूपोत्पादनमिति प्राप्ते, सिद्धान्तयति—

**यूपश्चाकर्मकालत्वात् ॥ ३ ॥**

सर्वार्थ इत्यनुषज्यते। आधानस्य प्रयोगः सर्वार्थो यूपश्चेत्युक्तसमुच्चयार्थश्चकारः। त्रयाणामपि पशूनां यूपस्तन्त्रमिति यावत्। कुतः ? अकर्मकालत्वात्—यूपोत्पादनस्येति शेषः। न ह्यग्नीषोमीयस्य काले यूपस्योत्पत्तिः, येन तन्मात्रार्थता यूपस्य स्यात्। किन्तु कालान्तर एव तदुत्पत्तिः—"दीक्षासु यूपं छिनत्ति" इति श्रुतत्वात्। न चेदं वचनमध्वरकल्पान्यायेन प्रथमस्याग्नीषोमीयस्य पशोर्यूपस्यापकर्षपरमिति वाच्यम्, वैषम्यात्। अध्वरकल्पायां हि प्रथमत्रिकमात्रनिर्वापापकर्षे सति द्वितीयतृतीयत्रिकयोर्निर्वापस्य प्रधानकालाबाधो नियमविधानञ्च लभ्यत इति मुख्यस्यैव कालविधिरित्यास्थितम्। इह त्वग्नीषोमीययूपस्यापकर्षेऽपि तस्याग्नीषोमीयप्रणयनानन्तरपठितस्य दीक्षासु प्रयोगोऽत्यन्ताप्राप्त एवेति नियमविधिर्न लभ्यते। अतोऽपूर्वविधिः प्रधानकालबाधश्चावर्जनीय इति विशेषात्। सर्वयूपापकर्षे सत्यगृह्यमाणविशेषत्वात्त्रयाणामपि पशूनां यूपस्तन्त्रम् ॥

उक्तो न्यायः श्रुतिसम्मत इत्याह—

**एकयूपश्च दर्शयति ॥ ४ ॥**

"आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य त्रिवृता यूपं परिव्ययति" इति सवनीयपशुयूपस्य परिव्याणविधिस्त्रयाणामपि पशूनामेकं यूपं दर्शयति। यदि हि तत्र प्रतिपशु यूपभेदस्स्यात्, तर्हि पूर्वस्य यूपस्याग्नीषोमीयापवर्गेणापवृत्ततया यूपान्तरे चोदकतः परिव्याणस्य प्राप्तत्वात्तद्विधानमनर्थकं स्यात्। यूपस्य तन्त्रत्वे त्वग्नीषोमीय एव परिवीतत्वाद्यूपस्य पुनस्सवनीये परिव्याणस्याप्राप्तत्वात्तद्विधानमर्थवत्। अतोऽपि हेतोस्तन्त्रं यूप इति।

अत्रेदं वक्तव्यम्—पूर्वाधिकरणे प्रधानानन्तरं यत्कर्म क्रियते तदेकार्थत्वमाधानस्यानुष्ठानसमीप्यलक्षणसन्निधिप्रमाणवशाद् भवतीति पूर्वपक्षयित्वा, अनारभ्योत्पन्नस्य कस्यचिदपि कर्मणः कालेऽश्रुतस्याधानस्यागृह्यमाणविशेषतया, अग्निसाध्यकृत्स्नकर्मार्थतयावगतस्य सत्यपि सन्निधिप्रमाणानुग्रहेऽनन्तरकर्ममात्रार्थत्वं न सम्भवति, प्रथमावगतसर्वार्थत्वेन सन्निधेर्बाधादिति सिद्धान्तितम्।

प्रकृते च "यूपं छिनत्ति" इत्यग्नीषोमीयकाले श्रुतस्य यूपच्छेदनस्य सन्निधिप्रकरणाभ्यामग्नीषोमीयमात्रार्थतयावगतस्य "दीक्षासु यूपं छिनत्ति" इत्यनेन दीक्षाकालेऽपकर्षो विधीयते। अतस्तस्मिन् काले छिन्नो यूपोऽग्नीषोमीयमात्रार्थ एव भवति, अनुष्ठानसामीप्यलक्षणसन्निधिप्रमाणवशात्, न तु सवनीयानुबन्ध्यार्थोऽपि। अग्नीषोमीयेन तयोर्व्यवहितत्वात्, प्रकरणबाधाच्च। पशुत्रयसाधारण्ये सति प्रथमावगताग्नीषोमीयमात्रार्थत्वबाधापत्तेश्च। ततश्चाकर्मकालकत्वेऽपि यूपच्छेदनस्यागृह्यमाणविशेषत्वमसिद्धम्। किञ्चाकर्मकालकत्वं ज्ञप्तावुत्पत्तौ वा। नाद्यः; असिद्धेः। यूपच्छेदनस्य प्रथममग्नीषोमीयकाल एव ज्ञायमानत्वात्, तदपकर्षमात्रस्यैव च दीक्षासु यूपं छिनत्तीति विधानात्। न द्वितीयः; यूपच्छेदनस्याग्नीषोमीयतन्त्रोपक्रमात् प्राग् दीक्षाकाले उत्पत्तावपि तदानीमुत्पन्नस्य यूपस्याम्नाय-सन्निधिप्रकरणाभ्यामनुष्ठानसामीप्यलक्षणसन्निधिवशेन चाग्नीषोमीयमात्रार्थतयावगतस्य गृह्यमाणविशेषत्वेन पशुत्रयसाधारण्यानुपपत्तेः। आधाने तु न तथा, ज्ञप्तावेव तस्याकर्मकालकत्वात्। "वसन्ते ब्राह्मणोऽग्नीनादधीत" इत्यादि हि तस्योत्पत्तिवाक्यम्। न चैतत् कस्यचिदपि कर्मणः काले श्रुतम्, येन गृह्यमाणविशेषत्वं स्यात्। [1]अनुष्ठानतः सन्निधिस्तु न तस्यानन्तरकर्ममात्रार्थत्वं ग्राहयितुमीष्टे, आम्नायसन्निधिप्रकरणावगतसर्वार्थत्वबाधप्रसङ्गात्। "दीक्षासु यूपं छिनत्ति" इत्येतत्तु न यूपच्छेदनस्योत्पत्तिवाक्यम्, यूपच्छेदनस्य तदुद्देशेनापकर्षस्य च विधौ वाक्यभेदापत्तेः। किञ्च "यूपं छिनत्ति" इति वाक्यान्तरमेव यूपच्छेदनस्योत्पत्तिवाक्यम्। तत्प्राप्तयूपच्छेदनानुवादेनापकर्षमात्रविधिपरं "दीक्षासु यूपं छिनत्ति" इति। ततश्चाम्नायसन्निधिप्रकरणाभ्यामनुष्ठानसन्निधिवशेन च दीक्षाकाले छिन्नस्यापि यूपस्याग्नीषोमीयमात्रार्थत्वमेव न्याय्यम्। पशुत्रयसाधारण्यन्तु वचनादेव तस्य निर्वाह्यम्। वचनन्तु—"एकयूपो वैकादशिनी वान्येषां यज्ञानां यूपा भवन्ति" इत्यन्वेषणीयम्॥

इति तृतीयमग्निष्टोमे पशूनां यूपतन्त्रताधिकरणम्॥ ३॥

---

१. अनुष्ठानसन्निधिस्तु. क.

४

"दीक्षासु यूपं छिनति" इति छेदनस्यान्यकालत्वात्तन्त्रत्वमविप्रतिपन्नम्। ये तु प्रोक्षणाञ्जनोच्छ्रयणपरिव्याणादयो यूपसंस्कारा अग्नीषोमीयस्य काले श्रुताः, तेषां किं तन्त्रत्वम्? आवृत्तिर्वा? इति संशये, पूर्वपक्षयति—

**संस्कारास्त्वावर्तेरन्नर्थकालत्वात् ॥ ५ ॥**

तुशब्दः प्रोक्षणादिसंस्काराणां चोदनापेक्षया वैषम्यद्योतनार्थः। यूपप्रोक्षणादयस्संस्काराः प्रतिपशु आवर्तेरन्। कुतः? अर्थकालत्वात्—अर्थः—अग्नीषोमीयपशुनियोजनम्। [1]तस्य हि काले प्रोक्षणादिसंस्कारा विहिताः। ततश्च गृह्यमाणविशेषत्वादग्नीषोमीयमात्रार्थास्तेऽग्नीषोमीयापवर्गेणापवृज्यन्ते। तस्मात्तेषां प्रतिपश्वावृत्तिरिति प्राप्ते, सिद्धान्तयति—

**तत्कालास्तु यूपकर्मत्वात्तस्य धर्मविधानात् सर्वार्थानाञ्च वचनादन्यकालत्वम् ॥ ६ ॥**

तुशब्दः पूर्वपक्षव्यावृत्तौ। प्रतिपशु यूपस्य प्रोक्षणादिसंस्कारा नावर्तेरन्। कुतः? यतस्तत्कालाः—दीक्षाकालकाः प्रोक्षणादिसंस्काराः, न त्वग्नीषोमीयपशुनियोजनकालकाः। कुतः? यूपकर्मत्वात्—छेदनप्रोक्षणादीनां यूपोत्पत्तिप्रयोजनकसंस्कारकर्मत्वात्। "यूपं छिनत्ति" "यूपं प्रोक्षति" इत्यादौ हि यूपस्य सतो न छेदनादि विधीयते, यूपस्य ततः प्रागसिद्धत्वात्। किन्तु छेदनेन यूपं कुर्यात्, प्रोक्षणेन यूपं कुर्यादित्येवं छेदनप्रोक्षणाञ्जनादयः संस्काराः यूपोत्पत्तिप्रयोजनका विधीयन्ते। यूपस्तु नियोजनार्थः। नन्वेवं ततः किं प्रकृते, तत्राह—तस्य धर्मविधानादिति। तस्य यूपस्य हि दीक्षाकालकत्वं धर्म उच्यते—दीक्षासु यूपं छिनत्तीति। छिनत्तिरत्र प्रोक्षणादीनामप्युपलक्षणम्। न हि छेदनमात्रेण यूपस्य निष्पत्तिस्सम्भवति, प्रोक्षणादीनामपि यूपत्वे विहितत्वेनापेक्षितत्वात्। ततश्च दीक्षासु छेदनप्रोक्षणाञ्जनादिभिर्यूपं कुर्यादित्यर्थः। अतः प्रोक्षणादीनामपि दीक्षाकालेऽपकर्षात्तन्त्रत्वम्। ननु दीक्षाकालकानां यूपसंस्काराणां प्रायणीयादिव्यवहिताग्नीषोमीयाद्यर्थत्वेऽङ्गानां प्रधानकालत्वं न्यायप्राप्तं बाधितं स्यात्, तत्राह सर्वार्थानां वचनादन्यकालत्वमिति ॥

---

१. तस्मिन्हि. क.

ननु "यूपं छिनत्ति" इत्यस्य छेदनेन यूपं कुर्यादित्यर्थो युज्यते, यूपस्य ततः प्रागसिद्धत्वात्। तदुत्तरप्रोक्षणादिवाक्येषु तु न तथा, छेदननिष्पन्नयूपस्य प्रोक्षणादिविधायकत्वसम्भवात्। ततश्च छेदनमात्राद्यूपस्य निष्पत्तिः। स च यूपो नियोजनार्थः। प्रोक्षणादिसंस्काराश्च यूपद्वारा नियोजनार्थाः। "दीक्षासु यूपं छिनत्ति" इत्यत्र छिनत्तिरपि छेदन एव वर्तते, न तु प्रोक्षणादिष्वपि, लक्षणाप्रसङ्गात्। एवञ्च छेदनमात्रस्य दीक्षाकालतावगमादग्नीषोमीयनियोजनकाले श्रुतानां यूपप्रोक्षणादीनां गृह्यमाणविशेषतया सवनीयानुबन्ध्यासाधारण्यं सम्भवतीति तेषामावृत्तिरेव तत्र स्यादिति चेत्तर्हि, 'तत्कालास्तु' इति सूत्रमेतदन्यथा व्याख्यायते—तत्कालाः—अग्नीषोमीयनियोजनकालका एव प्रोक्षणादिसंस्काराः, न तु सवनीयानुबन्ध्याकालका अपि। तन्त्रमिनि यावत्। कुतः? यूपकर्मत्वात्—प्रोक्षणादीनां यूपसंस्कारकर्मत्वात्। तस्य धर्मविधानात्—प्रोक्षणादिवाक्येषु यूपमिति द्वितीयया श्रुत्या तस्य यूपस्य प्रोक्षणादिधर्मविधानात्। अयमाशयः—प्रोक्षणादिसंस्कारकर्मणां यूपद्वारा नियोजनार्थत्वाद् यूपस्य च पूर्वाधिकरणे पशुत्रयसाधारणतया व्यवस्थापितत्वेनाग्नीषोयापवर्गेऽप्यनपवृत्ततया 'यज्ञोत्पत्त्युपदेशे निष्ठितकर्मप्रयोगभेदात् प्रतितन्त्रं क्रियेत' इति द्वादशाधिकरणन्यायेनातिथ्याकालकानां बर्हिस्संस्काराणामुपसदग्नीषोमीयकालकानामपि यूपप्रोक्षणादिसंस्काराणां सवनीयानुबन्ध्ययोः पुनःक्रियेति। नन्वग्नीषोमीयकालकानां यूपसंस्काराणां सर्वार्थत्वे सवनीयानुबन्ध्याविषये तेषां प्रधानकालत्वं न्यायप्राप्तं बाधितं स्यात्, तत्राह—सर्वार्थानां वचनादन्यकालत्वमिति। अतः प्रोक्षणादियूपसंस्कारा अग्नीषोमीयनियोजनकालका एव त्रयाणामपि पशूनां तन्त्रम्॥

उक्तो न्यायः श्रुतिसम्मत इत्याह—

## सकृन्मानश्च दर्शयति॥ ७॥

"आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति" इति परिव्याणोपक्रमं सवनीयं पशुमुपदिशति। तदेतत्सकृ [दुच्छ्रयणं] यूपस्य दर्शयति। उच्छ्रयणावृत्तौ ह्याश्विनं ग्रहं गृहीत्वा परिवीयेत्याश्विनग्रहग्रहणपरिव्याणयोरानन्तर्यं नोपपद्यते, परिव्याणप्राग्भाव्युच्छ्रयणेन व्यवहितत्वात्। यदि त्वाश्विनग्रहग्रहणात् पूर्वमुच्छ्रीयेत, तर्ह्युच्छ्रयणस्य प्रधानकालबाधः, 'बहिष्पवमाने

स्तुत आश्विनो गृह्यते' इति क्रमविरोधश्च। मानग्रहणञ्चोपलक्षणमितरेषामापि संस्काराणाम्। न च परिवीयेति प्रोक्षणोच्छ्रयणादीनामपि प्रदर्शनार्थमिति वाच्यम्, लक्षणाप्रसङ्गात्। तस्मात्त्रयाणामपि पशूनां यूपसंस्कारास्तन्त्रम्। सवनीयपशौ तु पुनः परिव्याणं वाचनिकमिति।

अत्रेदं वक्तव्यम्—द्वादशे 'यज्ञोत्पत्युपदेशे' इत्यधिकरणेऽनेककर्मसाधारण-द्रव्यसंस्काराणामेकस्मिन् कर्मणि परिनिष्ठितेऽप्यपवर्गाभावादन्यस्मिन् कर्मणि [न] पुनःकरणमिति व्यवस्थापयिष्यति। तेनैव न्यायेनाग्नीषोमीयकालकानां यूपसंस्काराणामपि सवनीयानुबन्ध्ययोरनावृत्तौ सिद्धायां पुनरुक्तमिदमधिकरणं द्वितीयव्याख्याने। प्रथमव्याख्याने तु प्रोक्षणादिसंस्काराणामपि दीक्षाकालकत्वपरं वार्तिकतन्त्ररत्नादौ दूपितमेवोक्तरीत्या। किञ्च "अग्रेण यूपावटं प्राञ्चं यूपं निधाय प्रोक्षति, अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि" इति वाजसनेयकादौ श्रुतम्। "पुरस्तान्मिनोति वेद्यन्तस्य सन्धौ मिनोति" इति तैत्तिरीयके। न हीदं यूपप्रोक्षणादीनां दीक्षाकालत्वे घटते, तदानीं सौमिकवेदेरनुत्पत्तेः। न च तस्या अप्यपकर्षो युक्तः, "अन्तरा मध्यमे प्रवर्ग्योपसदौ वेदिं कुर्वन्ति" इति वचनविरोधात्। "उपवसथे यूपमुच्छ्रयन्ति" इत्येव कौषीतकम्। उपवसथ इत्यग्नीषोमीयस्याहरुच्यते। अतः प्रोक्षणादिसंस्काराणां दीक्षाकालत्वपरं [1]प्रथमव्याख्यानमसङ्गतमेवेति दिक्॥

## इति चतुर्थं यूपसंस्काराणां तन्त्रताधिकरणम्॥ ४॥

५

"यूपस्य स्वरुं करोति" इति स्वरुः श्रुतः। स किमग्नीषोमीयसवनीयानुबन्ध्यापशूनामेकयूपानां तन्त्रम्? उत प्रतिपशु भिद्येत? इति संशये, पूर्वपक्षयति—

## स्वरुस्तन्त्रापवर्गस्स्यादस्वकालत्वात्॥ ८॥

यस्मिन्नग्नीषोमीये स्वरुरुपादीयते, तत्तन्त्रेणापवृज्यमानेनापवर्गो यस्य स तन्त्रापवर्गः। प्रतिपशु भिद्येतेति यावत्। कुतः? अस्वकालत्वात्। न हि स्वरुर्यूपोत्पत्तिकालः, येन यूपवत् साधारण्यं स्यात्। "स्वरुणा स्वधितिना च पशुं सम-

---

१. प्रथम. नास्ति. क.

नक्ति" इत्यग्नीषोमीयपशुसमञ्जनकाले हि स्वरुरुपादीयते। ततश्च गृह्यमाणविशेषत्वात् प्रतिपशु भिद्यते स्वरुरिति प्राप्ते, सिद्धान्तयति—

**साधारणो वा यदनुनिष्पत्तिस्तस्य साधारणत्वात् ॥ ९ ॥**

वाशब्दः पक्षव्यावृत्तौ। त्रयाणामपि पशूनां स्वरुस्साधारण एव। कुतः? यदनुनिष्पत्तिस्तस्य साधारणत्वात्—यस्मादयं स्वरुरनुनिष्पद्यते, तस्य यूपस्य साधारणत्वात्। "दीक्षासु यूपं छिनत्ति" इति यूपस्य प्रतिकर्षे हि सति "यूपस्य स्वरुं करोति" इति तदनुनिष्पत्तिरपि स्वरोरपकृष्यते। अतो दीक्षाकालत्वात् स्वरोरगृह्यमाणविशेषत्वात्तन्त्रता ॥

किञ्च—

**सोमान्ते च प्रतिपत्तिदर्शनात् ॥ १० ॥**

"संस्थिते सोमे प्रस्तरं प्रहरति, स्वरुञ्चायज्ञवेशसाय" इत्यग्नीषोमीयकाले उपात्तस्य स्वरोः सोमान्ते प्रतिपत्तिर्दृश्यते। तदेतत्स्वरोः पशुत्रयसाधारण्ये घटते। प्रतिपशु तद्भेदे तु सोमान्ते तत्प्रतिपत्तिदर्शनमनुपपन्नं स्यात्। तत्तत्पशुतन्त्रापवर्ग एव तत्तत्स्वरोः प्रतिपाद्यत्वात्। अतोऽपि हेतोस्स्वरुस्साधारणः ॥

ननु "संस्थिते सोमे प्रस्तरं प्रहरति स्वरुञ्च" इत्यत्र नाग्नीषोमीयस्य काले उपात्तस्य स्वरोः प्रहरणमुच्यते, किन्तु सोमान्तेऽनुबन्ध्यायामुपात्तस्यैव, प्रस्तरसाहचर्यात्। प्रस्तरस्य हि प्रहरणमानुबन्ध्यस्यैवात्र वाक्ये विधीयते[1], न त्वाग्नीषोमीयकस्य सावनीयकस्य वा प्रस्तरस्य, तत्तत्तन्त्रयोरेव तस्य प्रहृतत्वात्। अन्यथाग्नीषोमीयप्रस्तरस्यैव सवनीयाद्यर्थत्वेऽपि सति "यदातिथ्याया बर्हिस्तदुपसदां तदग्नीषोमीयस्य" इति वचनविरोधात्[2]। तस्मादनुबन्ध्याप्रस्तरस्यैव प्रहरणमस्मिन्वाक्ये विधीयत इति निर्विवादम्। तद्वत्स्वरोरप्यानुबन्ध्यस्यैव प्रहरणमुच्यते। [3]तत्कथमिदं सोमान्ते प्रतिपत्तिदर्शनं स्वरोस्तन्त्रत्वगमकमित्याशङ्कते—

**तत्कालो वा प्रस्तरवत् ॥ ११ ॥**

वाशब्दश्शङ्कायाम्। "संस्थिते सोमे प्रस्तरं प्रहरति, स्वरुञ्च" इत्यत्र स्वरुस्तत्कालः—अनुबन्ध्याकालक उच्यते, प्रस्तरवत् ॥

---

१. अभिधीयते. क.
२. विरोधः. क.
३. अतः. क.

परिहरति—

**न वोत्पत्तिवाक्यत्वात् प्रदेशात्प्रस्तरे तथा ॥ १२ ॥**

वाशब्दः पक्षान्तरनिग्रहे। आनुबन्ध्यस्वरुरुच्यत इत्येतन्न भवति। कुतः? उत्पत्तिवाक्यत्वात्—स्वरुप्रहरणस्य ह्येतदेवोत्पत्तिवाक्यम् "सोमान्ते प्रस्तरं प्रहरति स्वरुञ्च" इति। अग्नीषोमीयकाले यूपोच्छ्रयणानन्तरं पशूपाकरणात्प्रागिदमाम्नातम्। ततश्च क्रमादग्नीषोमीयस्वरोः प्रहरणं गम्यते, नानुबन्ध्यस्य स्वरोः। अतस्स्वरोस्तन्त्रत्वे दर्शनमिदमुपपद्यते। यत्तु प्रस्तरवदिति। तत्राह—प्रदेशात्प्रस्तरे तथेति। प्रदिश्यते-अतिदिश्यते धर्मजातमनेनेति प्रदेशश्चोदकः। तेन प्राप्ते प्रस्तरे–प्रस्तरप्रहरणे, तथा-प्रतिपशु भेदो भवति। प्रस्तरस्य हि दर्शपूर्णमासयोः प्रहरणमुक्तम्—"आशीर्भिः प्रस्तरं प्रहरति" इति। तत्प्रतिपशु चोदकेन प्राप्यते। तत्रानुबन्ध्यप्रस्तरप्रहरणस्य "सोमान्ते प्रस्तरं प्रहरति" इत्यनुवादः। नैवमत्र स्वरुप्रहरणस्यानुबन्ध्यायां चोदकतः प्राप्तिरस्ति, येनानुबन्ध्यस्वरुप्रहरणमपि तत्रानूद्येत। अतः स्वरुप्रहरणविधायकमेवैतत्। विधायकत्वे चानुबन्ध्यास्वरुविषयत्वे सति क्रमबाधाद् अग्नीषोमीयस्वरुविषयकल्पकत्वं तस्य वक्तव्यम्। तस्य च सोमान्ते प्रतिपत्तिदर्शनात्तान्त्रत्वमिति युज्यते।

ननु प्रतिपशु स्वरुभेदेऽप्यग्नीषोमीयान्ते प्राप्तस्याग्नीषोमीयस्वरुप्रहरणस्य सोमान्त उत्कर्षवचनमिदम्—"संस्थिते सोमे प्रस्तरं प्रहरति स्वरुञ्च" इति चेत्—भवेदेवम्, यद्यग्नीषोमीयस्वरुप्रहरणं वाक्यान्तरविहितं स्यात्, तर्हि तस्य सोमान्त उत्कर्षो विधीयेत। नैवमस्ति। इदमेव हि स्वरुप्रहरणस्योत्पत्तिवाक्यम्। तत्र यदि स्वरुप्रहरणं तदुत्कर्षश्च विधीयेयाताम्, तर्हि भवेद्वाक्यभेदः—स्वरुं प्रहरति, तच्च सोमान्त इति। स्वरोस्तन्त्रत्वाभ्युपगमे तु स्वरुप्रहरणमेवात्र वाक्ये विधेयम्। "संस्थिते सोमे" इति तु पशुत्रयेऽपि स्वरुकार्ये निर्वृत्ते सति प्रहरणस्य सोमान्ते प्राप्तत्वादनुवाद इति लाघवम्। अतस्सोमान्ते प्रतिपत्तिदर्शनात्तन्त्रत्वमिति युज्यते। अत्रेदं वक्तव्यम्—अग्नीषोमीये तावत् "अनूयाजान्ते स्वरुं जुहोति" इति वाक्यतः स्वरुप्रहरणमुत्पन्नम्, तदनूद्य "संस्थिते सोमे" इत्युत्कर्षविधिरित्येव युक्तमिति॥

इति चतुर्थं स्वरुतन्त्रताधिकरणम् ॥ ४ ॥

५

ज्योतिष्टोमे श्रूयते—"कृष्णविषाणया कण्डूयते" इति, "नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति" इति च। तच्चोदकेन द्वादशाहे प्राप्यते। तत्र संशयः—किं प्रथमेऽन्त्ये वाहनि कृष्णविषाणाप्रासनम्? उतान्त्येऽहन्येव? इति। तत्र पूर्वपक्षयति—

**अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादन्त्ये प्रथमे वाहनि विकल्पस्स्यात् ॥ १३ ॥**

अहर्गणे-अहर्गणसाध्यसुत्याकक्रतौ द्वादशाहे प्रथमेऽहनि अन्त्ये वाहनि कृष्णविषाणायाः प्रासनमित्येवं विकल्पस्स्यात्। कुतः? धर्मविप्रतिषेधात्—प्रकृतौ हि प्रासनोत्तरकालानां पदार्थानां पाणिना कण्डूयनधर्मः, तत्पूर्वकालानान्तु विषाणया कण्डूयनम्। तद्यदि प्रथमेऽहनि प्रास्येत, उत्तरेष्वहस्सु दक्षिणानयनात् प्राग्भाविनां पदार्थानां विषाणाकण्डूयनं धर्मो बाध्येत। न हि प्रास्तायाः[1] पुनरुपादानं सम्भवति। त्यागात्मकं हि प्रासनं प्रकृतौ विहितम्। न च पुनरुपादित्समानस्य त्यागबुद्धिर्भवति। अतो बाध्यत एव विषाणाकण्डूयनम्। यदि पुनरन्त्येऽहनि प्रास्येत, तदा पूर्वेष्वहस्सु दक्षिणानयनोत्तरपदार्थानां पाणिकण्डूयनं धर्मो बाध्येत। न ह्यप्रास्तायां विषाणायां पाणिकण्डूयनं सम्भवति। सत्यां तस्यां प्रक्रान्तनियमत्यागे दोषप्रसङ्गात्। अतः पक्षद्वयेऽपि केषाञ्चिद्धर्मबाधस्यावश्यम्भावात् प्रथमेऽहन्यन्त्ये वा विषाणाप्रासनमिति प्राप्ते, सिद्धान्तयति—

**पाणेस्त्वश्रुतिभूतत्वाद्विषाणानियमस्स्यात् प्रातस्सवनमध्यत्वाच्छिष्टे चाभिप्रवृत्तत्वात् ॥ १४ ॥**

तु शब्दः पूर्वपक्षव्यावृत्तौ। विषाणानियमः—विषाणाकण्डूयननियमः, द्वादशाहे सर्वेष्वहस्सु प्रवृत्तस्स्यात्। अन्त्येऽहन्येव प्रासनमिति यावत्। कुतः? प्रातस्सवनमध्यत्वात्—प्रातस्सवनानि मध्ये यस्याहर्गणस्य स प्रातस्सवनमध्यः, तस्य भावस्तत्त्वम्, तस्मात्। बहूनि हि प्रातस्सवनानि द्वादशाहे विद्यन्ते। [2]तत्रान्त्ये-

---

१. प्रास्तानां. क.

२. तत्रान्त्ये हि. क.

ऽहनि माध्यन्दिने सवने कृष्णविषाणायाः प्रासने बहूनां प्रातस्सवनानां विषाणाकण्डूयनं धर्मोऽनुगृहीतो भवति । प्रथमेऽहनि तत्प्रासने तु तेषां धर्मबाधस्स्यात् ।

ननु द्वादशाहे द्वादश प्रातस्सवनानि सन्ति माध्यन्दिनतृतीयसवनानि तु चतुर्विंशतिः । तत्रान्त्येऽहन्येव विषाणाप्रासने माध्यन्दिनतृतीयसवनानां प्रातस्सवनतोऽपि बहूनां विषाणाकण्डूयने सति हस्तकण्डूयनं धर्मो बाध्येत । तथा च सत्यल्पानां प्रातस्सवनानामेव धर्मबाधो युक्तः । ततश्च प्रथमेऽहन्येव विषाणाप्रासनं स्यात् । वक्ष्यति हि द्वादशे 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम्' इति । तत्र विषमसङ्ख्याकानां विप्रतिषेधे भूयस्त्वस्यादरः, अन्यथा मुख्यत्वस्येति भाष्यवार्तिकमतम् । तद्रीत्या माध्यन्दिनतृतीयसवनानां प्रातस्सवनतो बहुत्वेन विषमसङ्ख्याकत्वात्तद्धर्मस्यैवादरे सति प्रथमेऽहन्येव विषाणाप्रासनम् । मुख्यत्वभूयस्त्वाभ्यां समसङ्ख्याकेषु विषमसङ्ख्याकेषु च विकल्पेन धर्मादर इति वृत्तिकारमतम् । तत्र भाष्यकारो वक्ष्यति (?) परिष्करिष्यते च तदस्माभिः । तद्रीत्या तु मुख्यानां प्रातस्सवनानां बहूनाञ्च माध्यन्दिनतृतीयसवनानां विकल्पेन धर्मादरे सति प्रथमेऽहन्यन्त्ये वा विषाणाप्रासनमिति विकल्प एव प्राप्नोतीति चेत्—स्यादेवम्, यद्यन्त्येऽहनि कृष्णविषाणाप्रासेन प्रातस्सवनतो बहूनां माध्यन्दिनतृतीयसवनानां धर्मबाधस्स्यात् । नैवमस्ति, हस्तकण्डूयनस्यार्थप्राप्तत्वेनाशास्त्रीयत्वात् । न चाविहितमङ्गं भवति । तस्मादन्त्येऽहन्येव कृष्णविषाणाप्रासनम् ।

ननु यदि हस्तकण्डूयनं माध्यन्दिनतृतीयसवनधर्मः, तर्ह्यन्त्येऽहनि विषाणाप्रासनेऽपि तत्पूर्वेष्वहस्सु माध्यन्दिनतृतीयसवनेषु कृष्णविषाणायास्सत्वात् तया कण्डूयनं स्यात् । न चैतदिष्टम्, प्रकृतौ माध्यन्दिनतृतीयसवनयोर्विषाणाकण्डूयनस्याभावात् । 'तदाह—शिष्टे चाभिप्रवृत्तत्वादिति । शिष्टशब्देन एकदेश उच्यते । सामान्याभिप्रायमेकवचनम् । सर्वेषामह्नां प्रातस्सवनान्येकदेशभूतानि । तेषु प्रवृत्तः कृष्णविषाणाकण्डूयननियमः । स च माध्यन्दिनतृतीयसवनेष्वप्यवश्यम्भावी । सत्यां विषाणायां प्रक्रान्तनियमत्यागे कारणाभावात् । प्रकृतौ तु माध्यन्दिनतृतीयसवनयोः कृष्णविषाणाया अभावान्न तन्नियमस्सम्भवति । न चैतावता सत्यामपि कृष्णविषाणायां तत्त्यागो युज्यते । तस्मादहर्गणे माध्यन्दिनतृतीय-

१. तत्राह. ग.

सवनेष्वपि कृष्णविषाणाकण्डूयनमस्त्येव। तदेवं विषाणाप्रासनमहर्गणेऽन्तिमेऽहन्येवेति स्थितम्॥

इति पञ्चमं कृष्णविषाणाप्रासनाधिकरणम्॥ ५॥

६

दर्शपूर्णमासयोः श्रुतम्—"प्रणीताः प्रणेष्यन्वाचं यच्छति तां सहविष्कृता वाचं विसृजति" इति। तदेतद्राजसूयान्तर्गतेषु देवसुवां हविष्षु नानाबीजेषु चोदकतः प्राप्तम्। तत्र चिन्त्यते—किं प्रथमस्यान्त्यस्य वा बीजस्य सहविष्कृता वाग्विसर्गः? उतान्त्यस्यैव? इति। यद्यपि हविष्कृदाह्वानं कालभेदे सत्यावर्तते, एककालत्वे हि तन्त्रमिति वक्ष्यत्यध्यायान्ते। ततश्च हविष्कृदाह्वानस्य सर्वादौ सकृत्कर्तव्यत्वात् प्रतिबीजं हविष्कृदाह्वानाभावादन्त्यस्यैवेति संशय एवायमनुपपन्नः, तथापि "सहविष्कृता वाचं विसृजति" इत्यत्र हविष्कृतेत्यस्य कालोपलक्षणार्थत्वाद्धविष्कृदाह्वानोपलक्षितकाल इत्यर्थः। तदेतदुक्तम्—'तथाह्वानमपीति चेन्न, कालविधिचोदितत्वात्' इत्यत्र। एवञ्चात्र प्रतिबीजं हविष्कृदाह्वानाभावेऽपि तदुपलक्षितकालस्य सत्त्वाद् भवत्यन्त्यस्यैवेति संशयस्योपपत्तिः।

तत्र "उलूखले हविरावपति" इति हविरावपनप्रभृतीनां "देवोवस्सविता गृह्णातु इति पात्र्यां तण्डुलान् प्रस्कन्दयति" इति तण्डुलप्रस्कन्दनान्तानामनुसमय हिरण्यपाणिःप्रतिइत्युक्तम्—"नानाबीजेष्वेकमुलूखलं विभवात्" इत्यत्र। यत्तु शास्त्रदीपिकायां कृष्णाजिनास्तरणादीनां फलीकरणपर्यन्तानामनुसमय इत्युक्तम्। तत्तुच्छम्, कृष्णाजिनास्तरणोलूखमुसलाध्यूहनमुसलादानानां हविरावपनप्राग्भाविनां कृतत्वेन पुनःकरणायोगात्। हविरावपनादीनान्तु एकस्मिन्नुलूखले नानाबीजत्वेन युगपदसम्भवात् काण्डानुसमयो युज्यते। तथा फलीकरणस्यापि पदार्थानुसमय एव युज्यते, शक्यत्वात्। एकोलूखलत्वे यावत्पदार्थानुसमयेन कर्तुं शक्यते, तावत्येव काण्डानुसमयाभ्युपगमस्य युक्तत्वात्। अतो हविरावपनादीनामित्येव संशयप्रदर्शनं युज्यते। तत्र प्रथमं वाग्विसर्गे सत्युत्तरेषां बीजानां ये हविष्कृत्कालात्प्राञ्चः पदार्था हविरावपनादयः, तेषां वाग्यमो धर्मो बाध्येत। अन्तिमे बीजे वाग्विसर्गे सति पूर्वबीजानां ये हविष्कृदाह्वानकालोत्तर-

पदार्थाः हविरुद्वासनादयः तेषां वाग्विसर्गो धर्मो बाध्येत। न ह्यत्र पूर्ववद्वाग्विसर्गस्याशास्त्रीयत्वमस्ति, विसृजतीति वचनात्। तस्मादवश्यम्भाविन्यन्यतरधर्मबाधे विकल्पस्स्यादिति प्राप्ते, सिद्धान्तयति—

**वाग्विसर्गो हविष्कृता बीजभेदे तथा स्यात् ॥ १५ ॥**

हविष्कृता-हविष्कृदाह्वानेनोपलक्षितकाले विहितो वाग्विसर्गः बीजभेदे धान्यभेदे सति तथा—अहर्गणे कृष्णविषाणाप्रासनवद् अन्त्य एव बीजे स्यात्। न ह्यत्र वाग्विसर्गो धर्मो विधीयते, किन्तु वाग्यमविधेरवधिरुच्यते। वाग्यमविधिना सहावधिप्रतिपादनेन सम्भवत्येकवाक्यत्वे वाक्यभेदायोगात्, वाग्विसर्गविधावनेकादृष्टकल्पनाप्रसङ्गाच्च। वाग्विसर्गस्य रागप्राप्तत्वेनाविधेयत्वाच्च। अतो वाग्विसर्गस्यानङ्गत्वादविसृष्टायामपि वाचि न कस्यचिद्धर्मबाध इत्यन्त्य एव बीजे वाग्विसर्गः ॥

इति षष्ठं नानाबीजेष्वन्त्यबीजे वाग्विसर्गनियमाधिकरणम् ॥ ६ ॥

७

अस्त्यग्नीषोमीयः पशुः। अस्ति च तत्र पशुपुरोडाशः। तत्रपशुपुरोडाशे पाशुकं तन्त्रमेव प्रसङ्गादुपकरोति, न तु तस्य पृथक् तन्त्रतेति[1] द्वादशे व्यवस्थापयिष्यति। तत्र किं प्रथमे पशुकाले वाग्विसर्गः? उतान्ते पुरोडाशकाल एव? इति संशयः। तत्र पुरोडाशस्य प्रासङ्गिकत्वात् पाशुकेनैव वाग्यमेन कार्यसिद्धेः पुरोडाशे वाग्यमतो न किञ्चित्कार्यमस्ति। अतः पशुकाल एव वाग्विसर्ग इति पूर्वपक्षमुद्भाव्य निराकरोति

**पशौ च पुरोडाशे च समानतन्त्रं भवेत् ॥ १६ ॥**

पूर्वसूत्रात्तथेत्यस्यानुकर्षार्थ एकश्चकारः। द्वितीयस्तु पशुतत्पुरोडाशयोस्समुच्चयद्योतनार्थः। यद्यपि तथापीत्यध्याहार्यौ। अनुषज्यमानस्तथाशब्दो भवेदित्यत्रान्वेति। पशुपुरोडाशे पशौ च समानतन्त्रम्—एकतन्त्रं यद्यपि, तथापि तथा-नानाबीजवाग्विसर्गवदन्त्ये पुरोडाशकाल एव वाग्विसर्गो भवेत्, न तु पशुकाले।

१. तन्त्रमिति. क.

वाग्यमो हि न प्रयाजादिवदाराद्उपकारकः, किन्तु कर्तृसंस्कारोऽसौ, तस्याविक्षिप्त-चित्तताधायकत्वात्। ततो विसृष्टवाचा क्रियमाणाः पौरोडाशिका निर्वापादि-पदार्था अपि[वि]गुणा भवेयुः। पाशुकवाग्यमेन पौरोडाशिकपदार्थानुष्ठानसमये कर्तुर्विक्षेपाभावस्यासिद्धेः। तस्मात्पुरोडाशकाल एव वाग्विसर्गः। अत्र पशुकालको वाग्यमो विसृष्टायामपि वाचि पुरोडाशे प्रासङ्गिके उपकरोतीति पूर्वपक्षशरीरम्। पुनर्वाग्यमः पुरोडाशे कर्तव्य इति सिद्धान्तशरीरम्। न तु वाग्विसर्गोऽपि तत्र निवेश्यः। न च पशुकाले नास्ति वाग्विसर्गः, किन्तु पुरोडाशकाले, पाशुक एव तु वाग्यमः पुरोडाशहविष्कृत्पर्यन्तमनुवर्तत इति भ्रमितव्यम्। "सहविष्कृता वाचं विसृजति" इत्यस्य वाग्यमविध्यवधिसमर्पकत्वेन रागप्राप्तत्वेन च वाग्विसर्गस्या-विधेयतायाः पूर्वाधिकरणे निर्णीतत्वात्, पाशुकहविष्कृत्तदुत्तरकालकपाशुकप्रयोग-मन्त्रोच्चारणादिना पाशुकवाग्यमस्य विच्छिन्नत्वाच्च, संज्ञपनादौ पुनर्वाग्यमन-विधानवैयर्थ्याच्च। ततश्च वाग्यमस्यैवात्र तन्त्रत्वमस्ति नेति विचार्यमिति दिक्।

ननु हविष्कृदाह्वानमौषधधर्मः, अवहननार्थत्वात्। श्रूयते हि—"हविष्कृत-मुद्वादयति हविष्कृदेहीति या यजमानस्य पत्नी साभिद्रुत्यावहन्ति, यो वा कश्चित्" इति। न च पशोरवहननमस्ति। अतस्तत्र हविष्कृदाह्वानस्याप्रसक्तेः पशुकाले वाग्विसर्ग इति संशयकोटेरनुन्मेषादधिकरणप्रवृत्तिर्व्यर्थेति चेन्न; अत्र हविष्कृदा-ह्वानं पशावप्यस्तीति कृत्वा चिन्त्यत इति भाष्यादौ समाहितम्। तत्तुच्छम्—"सहविष्कृता वाचं विसृजति" इत्यत्र हविष्कृतेत्यस्य हविष्कृदाह्वानोपलक्षित-कालोपलक्षणार्थतायाः पूर्वाधिकरणे भाष्यादावभ्युपगतत्वात्। अन्यथा नाना-बीजेषु हविष्कृदाह्वानस्य 'हविष्कृदध्रिगुपुरोनुवाक्यामनोतामन्त्रस्यावृत्तिः काल-भेदे स्यात्' इत्येतदध्यायान्त्याधिकरणे प्रथमे बीज एव व्यवस्थापितत्वेनान्त्ये बीजे हविष्कृदाह्वानाभावेनान्त्ये बीजे वाग्विसर्ग इति संशयकोटेरनुत्थित्या पूर्वाधिकरणस्यानुन्मेषप्रसङ्गात्।

वस्तुतस्तु हविष्कृदाह्वानस्यावहननार्थत्वमुदाहृतशाखारीत्या "य एव देवानां हविष्कृतस्तानाह्वयति" इति तैत्तरीयकशाखारीत्या त्वदृष्टार्थत्वं तस्येति द्वावपि पक्षौ सूत्रकारस्य [सम्मतौ]। वक्ष्यति हि द्वादशे 'हविष्कृत्सवनीयेषु न स्यात् प्रकृतौ यदि सर्वार्था पशुं प्रत्याहूता सा कुर्याद्विद्यमानत्वात्' इति। स्फुटतरञ्चैतत्तत्र प्रपञ्चयिष्यते। अतः पशावपि पक्षे हविष्कृदाह्वानस्य सत्त्वात् कृत्वाचिन्तेति

भाष्यादिग्रन्था उपेक्ष्याः। सोमनाथदीक्षितास्तु—पशौ पुरोडाशे च समानतन्त्रता भवेदिति पठित्वा पशौ पुरोडाशे च वाग्यमस्य समानतन्त्रता स्यादिति व्याचख्युः। भाष्यवार्तिकतन्त्ररत्नशास्त्रदीपिकादिपुस्तकेषु तु बहुषु तथा पाठो न दृश्यते, समानतन्त्रं भवेदित्येव पाठो दृश्यते।

किञ्च पशौ पुरोडाशे च वाग्यमस्य समानतन्त्रता स्यादिति व्याख्याने तन्त्रशब्देन किमङ्गकलापो विवक्षितः? उतैकत्वे सत्यनेकोपयोगित्वम्? आद्येऽपि किं समानतन्त्रशब्दो बहुव्रीहिः? कर्मधारयो वा? नाद्यः; न हि वाग्यमस्य कश्चिदङ्गकलाप उपदिष्टोऽस्ति, येन समानत्वं तस्य पशौ पुरोडाशे च व्यवस्थाप्यं स्यात्। वाग्यमस्यैव पशुकालस्य पशुतन्त्रोपजीविन्यपि पुरोडाशे उपकारकत्वं नास्तीति हि व्यवस्थाप्यमिह, न तु वाग्यमस्य समानाङ्गकलापकत्वम्। न द्वितीयः; वाग्यमस्य समानाङ्गकलापात्मकत्वमित्यर्थपर्यवसानेनासाङ्गत्यात्। नापि मुख्यद्वितीयः; तन्त्रपदेनैव समानत्वलाभे समानपदस्य वैयर्थ्यात्।

किञ्च पशौ पुरोडाशे च वाग्यमस्य तन्त्रत्वमिति पूर्वपक्षः। पुरोडाशे भेदेन वाग्यम इति सिद्धान्तश्च। तत्र पशौ पुरोडाशे च वाग्यमस्य तन्त्रता स्यादिति व्याख्याने सूत्रमिदं पूर्वपक्षपरमेव स्यात्। न चैतद्युक्तम्, सिद्धान्तसूत्रस्यान्यस्याभावात्। तस्मात्समानतन्त्रं भवेदित्येव पाठो युज्यत इत्यास्तां तावत्॥

## इति सप्तमं पाशुकवाग्यमस्य पौरोडाशिकहविष्कृदाह्वानकाले बिसर्गाधिकरणम्॥ ७॥

## ८

अग्नौ श्रूयते—"राजानमुपावहृत्य प्रातरनुवाकमुपाकरिष्यन्नग्निं युनज्मि शवसा घृतेनेति जुहोत्यग्निमेवैतद्युनक्ति" इति। तथा तत्रैव कालविशेषमनुपादाय श्रूयते—"इमं स्तनमूर्जस्वन्तं धयायामित्यग्निविमोकं जुहोति" इति। किमयमग्नियोगोऽङ्गप्रधानार्थः? उत प्रधानमात्रार्थः? इति संशयः। तत्राङ्गप्रधानार्थत्वे साङ्गस्य सोमस्यान्तेऽग्निविमोकः। प्रधानमात्रार्थत्वे प्रधानान्ते हारियोजनप्रचारे सत्यग्निविमोक इति फलभेदः। तत्र सिद्धान्तेनोपक्षिपति—

**अग्नियोगस्सोमकाले तदर्थत्वात् संस्कृतकर्मणः परेषु साङ्गस्य तस्मात्सर्वापवर्गे विमोकस्स्यात् ॥ १७ ॥**

सोमोपावहरणकाले सोऽयमग्नियोगो विहितः। स तावत् साङ्गस्य 'प्रधानस्याङ्गं भवति, न तु प्रधानमात्रस्य। कुतः? संस्कृतकर्मणस्तदर्थत्वात्—क्रियते यत्तत्कर्म-अग्न्याख्यस्थण्डिलविशेषः। तस्याग्नियोगसंस्कृतस्य तदर्थत्वात्—साङ्गप्रधानार्थत्वात्। यथा चैतत्तथा व्यवस्थापितं 'सर्वेषां वा शेषत्वं स्यात् तत्प्रयुक्तत्वात्' इत्यत्र। तस्माद्धेतोः परेषु-प्रधानोत्तरकालकेषु यज्ञपुच्छाङ्गेष्वप्यनुष्ठितेषु सर्वापवर्गे—अङ्गप्रधानापवर्गे सत्यग्नेर्विमोकस्स्यात् ॥

अथ पूर्वपक्षमुद्भावयति—

**प्रधानापवर्गे वा तदर्थत्वात् ॥ १८ ॥**

वाशब्दो विरुद्धपक्षान्तरपरिग्रहे। प्रधानमात्रापवर्गे यज्ञपुच्छात्प्रागेवाग्नेर्विमोको भवति। कुतः? तदर्थत्वात्—"पञ्चभिर्युनक्ति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमालभते" इति यज्ञशब्दसंयुक्तवाक्यशेषेणाग्नियोगस्य प्रधानमात्रार्थत्वावगमाद्, यज्ञशब्दस्य प्रधानमात्रे याज्ञिकप्रसिद्धेः। न च यज्ञशब्दस्य प्रधानमात्रवाचित्वे "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्" इति ध्रौवाज्यस्यापि यज्ञसंयोगात् केवलप्रधानार्थता स्यादिति वाच्यम्; "यज्ञाय गृह्यते" इत्येनेनैवाविशेषात् सर्वप्रधानार्थत्वे सिद्धेऽपि सर्वशब्दप्रयोगबलेन तत्र यज्ञशब्दस्याङ्गप्रधानपरत्वकल्पनात्। न चैवमपि "वारणो यज्ञावचरो वैकङ्कतो यज्ञावचरः" इति यज्ञसंयुक्तानां वारणवैकङ्कतादिपात्राणां केवलप्रधानार्थत्वं स्यादिति वाच्यम्, इष्टापत्तेः। प्रधानार्थैरेव पात्रैः प्रसङ्गादनुष्ठानसिद्धेः। ततश्चात्राग्नियोगस्य यज्ञशब्दसंयोगात् प्रधानमात्रार्थत्वम् ॥

अत्र न्याये लिङ्गदर्शनमाह—

**अवभृथे च तद्वत् प्रधानार्थस्य प्रतिषेधोऽपवृक्तार्थत्वात् ॥ १९ ॥**

"न होतारं वृणीते नार्षेयम्" इत्यवभृथे होतृवरणस्य प्राकृतस्य प्रतिषेधः श्रूयते। स च प्रतिषेधो प्रधानमात्रार्थत्वे सति होतृवरणस्य सौमिकस्य घटते, न

१. प्रधानाङ्गं. ग.

त्वङ्गप्रधानार्थत्वे। कुतः? प्रधानार्थस्यापवृक्तार्थत्वात्—सौमिकहोतृवरणस्य प्रधान-मात्रार्थत्वे सत्येव तस्य प्रधानापवर्गेण तदानीमवभृथसमयेऽपवृक्तप्रयोजनकत्वात्। यदि हि सौमिकहोतृवरणस्याङ्गप्रधानार्थता स्यात्, तर्ह्यवभृथसमये तस्यानपवृक्त-तया तत्र प्राकृतहोतृवरणस्याप्राप्तत्वेन तन्निषेधोऽनर्थक एव स्यात्। प्रधानमात्रार्थत्वे सौमिकहोतृवरणस्य प्रधानापवर्गेण तस्यावभृथसमयेऽपवृक्ततया प्राकृतं होतृवरणं तत्र प्रसज्यत इति [1]तत्प्रतिषेधोऽर्थवान् भवति। सौमिकवरणस्य च केवलप्रधा-नार्थत्वम्—"यदवृता वषट्कुर्युः भ्रातृव्यं यज्ञस्याशीर्गच्छेद्यद्वृता वषट्कुर्वन्त्ये-कधा तद्यजमाने यज्ञस्याशीः प्रतितिष्ठति" इति यज्ञशब्दसंयुक्तवाक्यशेषादवधा-र्यते। तद्वदत्रापि "पाङ्क्तो यज्ञः" इत्यादिवाक्यशेषादग्नियोगस्य केवलप्रधानार्थत्व-मवधार्यम्। अन्यथा वाक्यशेषानादरेणाग्नियोगस्याङ्गप्रधानार्थत्वाभ्युपगमे तुल्य-न्यायतया सौमिकहोतृवरणस्याप्यङ्गप्रधानार्थत्वापत्त्या तस्यावभृथसमयेऽनपवृक्त-त्वेन तत्प्रतिषेधानर्थक्यं स्यात्। अतो यज्ञशब्दसंयुक्तवाक्यशेषानुसारेणाग्नियोगस्य केवलप्रधानार्थत्वेऽवभृथे होतृवरणप्रतिषेधो लिङ्गमित्युक्तं भवति॥

तमिमं पूर्वपक्षं निराकरोति—

## अहर्गणे च प्रत्यहं स्यात्तदर्थत्वात्॥ २०॥

चशब्दस्तुशब्दार्थकः पूर्वपक्षव्यावृत्तौ। नैवमग्नियोगः केवलप्रधानार्थ इति, किन्त्वङ्ग[प्रधानार्थ]कः। कुतः? यतोऽग्नियोगस्याङ्गप्रधानार्थत्वादहर्गणे प्रत्यहमग्नि-योगविमोकविधानमर्थवत् स्यात्। अहर्गणे हि श्रुतम्—"अहरहरग्निं युनक्त्यहर-हर्विमुञ्चति" इति। तदेतदग्नियोगस्याङ्गप्रधानार्थत्वे सत्येव घटते, न तु केवल-प्रधानार्थत्वे। तथासति प्रत्यहं प्रधानावृत्त्या तदाद्यन्तयोरग्नियोगविमोकयोः [2]प्राप्तत्वात्प्रत्यहं तद्विधानानर्थक्यात्। साङ्गप्रधानार्थत्वे त्वग्नियोगस्य साङ्गक्रत्वन्त एवाग्निविमोकस्य प्राप्तत्वात् प्रत्यहमग्नियोगविमोकविधानमर्थवद्भवति। अतोऽग्नि-योगस्य साङ्गप्रधानार्थत्वात् साङ्गे क्रतौ सर्वान्त एवाग्निविमोकः। न च "पाङ्क्तो यज्ञः" इत्यादियज्ञशब्दसंयुक्तवाक्यशेषवशादग्नियोगस्य केवलप्रधानार्थत्वाव-धारणमिति वाच्यम्। वाक्यशेषो ह्ययं नाग्नियोगस्योत्पत्तौ श्रुतः, "पञ्चभिर्युनक्ति"

---

१. तस्य. क.

२. प्राप्तत्वेन. क.

इत्यत्रैव हि स श्रूयते। तच्च गुणवाक्यम्। पञ्चसङ्ख्या ह्यत्र गुणो विधीयते, न त्वग्नियोगः। "अग्निं युनज्मि शवसा घृतेनेत्यग्निविमोकं जुहोति" इत्येतदेव ह्यग्नियोगस्योत्पत्तिवाक्यम्। उत्पद्यमानश्चाग्नियोगः कैमर्थ्याभिलाषी भवति, न तु गुणविध्यवस्थायाम्। उत्पत्त्यवसरे प्रकरणाद्वाक्याद्वावगतेन प्रयोजनेन शान्ताकाङ्क्षत्वात्। "अग्निविमोकं जुहोति" इत्यग्नियोगस्योत्पत्तौ च "अग्निमेवैतद्युनक्ति" इत्येतद्वाक्यं श्रुतम्। तत्र च नास्ति यज्ञसंयोगः, येन केवलप्रधानार्थताग्नियोगस्य स्यात्।

अस्तु वा "पञ्चभिर्युनक्ति" इत्यग्नियोगस्योत्पत्तिः, तथापि तद्वाक्यशेषस्थयज्ञशब्दो यागमात्रं ब्रवीति, न प्रधानयागमेव, सङ्कोचे प्रमाणाभावात्। अतो न यज्ञशब्दसंयुक्तवाक्यशेषवशादग्नियोगस्य केवलप्रधानार्थत्वावगमः। यत्त्ववभृथे होतृवरणप्रतिषेधेन सौमिकवरणस्य केवलप्रधानार्थत्वावगमे सति न्यायसाम्यादग्नियोगस्यापि तथात्वमिति लिङ्गदर्शनमुक्तम् 'अवभृथे च तद्वत्' इत्यादिसूत्रेण, तदयुक्तम्; सौमिकवरणस्याप्यङ्गप्रधानार्थत्वात्। [1]तथाहि—सोमे तावद्वरणद्वयमस्ति। तत्र क्रत्वादावेकं श्रुतम् "ऋत्विजो वृणीते" इति। अन्यत्तु वरणमृत्विग्विशेषानधिकृत्य सवनीयपशुकाले श्रुतम्—"दैवञ्च मानुषञ्च होतारौ वृत्वा पुनराश्राव्य प्रशास्तृब्राह्मणाच्छंसिपोतृनेष्ट्रग्नीधो वृणीते" इति। तत्रायं वाक्यशेषः श्रूयते—"यदवृता वषट्कुर्युर्भ्रातृव्यं यज्ञस्याशीर्गच्छति" इति। तत्र क्रत्वादौ विहितं वरणमानत्यर्थः, प्रयोगमध्ये विहितन्त्वदृष्टार्थमिति स्थितिः। तत्र "यदवृता वषट्कुर्युः" इत्यादिवाक्यशेषः प्रयोगमध्यपातिवरणविधेरर्थवादः, न तु क्रत्वारम्भकालकवरणविधेः। ततश्च तस्य सौमिकवरणस्याङ्गप्रधानार्थत्वमेव, तस्य ऋत्विगानत्यर्थत्वात्। आनतानाञ्चर्त्विजां समाख्यादिभिरङ्गप्रधानार्थतया तत्संस्कारार्थवरणस्यापि तथात्वात्। अवभृथे च होतृवरणस्य प्राकृतस्य प्रतिषेधोऽङ्गप्रधानार्थत्वेऽपि सौमिकस्य वरणस्य घटत एव। सौमिकं हि वरणमानत्यर्थम्, कर्मादौ क्रियमाणत्वात्। प्राकृतन्तु होतृवरणं प्रवृत्ते होतरि सामिधेन्यनुवचनानन्तरं क्रियमाणमदृष्टार्थमेव। अतस्तत्सर्वासु सोमेष्टिषु कार्यमिति द्वादशे वक्ष्यति—'प्रवृत्तवरणत्वात् प्रतितन्त्रं वरणं होतुः क्रियेत' इत्यत्र। ततश्च क्रत्वादौ क्रिय-

---

१. तथाहि. नास्ति. क.

माणस्य होतृवरणस्यानत्यर्थस्यावभृथसमयेऽप्रवृक्तत्वाभावेऽपि प्राकृतस्य होतृवरणस्यादृष्टार्थस्यावभृथे प्राप्तिसम्भवात् तत्प्रतिषेधो युज्यत इति न तस्य प्रतिषेधस्य केवलप्रधानार्थत्वे लिङ्गत्वमुपपद्यते । तस्मादङ्गप्रधानार्थोऽग्नियोगः, सर्वापवर्गे च विमोक इति चत्वार्यपि सूत्राणि वार्तिकरीत्या योजितानि ।

भाष्ये तु–'अग्नियोगः सोमकाले' इति सूत्रमग्नियोगः सर्वार्थ इति पूर्वपक्षपरं कृत्वा 'प्रधानापवर्गो वा तदर्थत्वात्' इति सूत्रं केवलप्रधानार्थोऽग्नियोग इत्येवं सिद्धान्तपरं व्याख्याय तृतीयचतुर्थसूत्रे तत्र लिङ्गदर्शनपरत्वेन व्याख्याते । तत्र दूषणान्युच्चावचानि वार्तिके प्रपञ्चितानि तत एवानुसन्धेयानि ॥

इत्यष्टममग्नियोगविमोकाधिकरणम् ॥ ८ ॥

९

ज्योतिष्टोमे सुब्रह्मण्यानिगदस्ताण्डकादिशाखायां पठ्यते–"सुब्रह्मण्यों सुब्रह्मण्यों सुब्रह्मण्योमिन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेषवृषणश्वस्य मेने गौरावस्कन्दिन्नहल्यायै जार कौशिकब्राह्मण गौतमब्रुवाण इयत्यहे सुत्यामागच्छ मघवन्देवा ब्रह्माण आगच्छत" इति । तत्र तेन निगदेनोपसत्काले सुब्रह्मण्याह्वानम् । तदेतद् द्वादशाहे चोदकतः प्राप्तम् । सन्ति च द्वादशाहे द्वादशौपसदान्यहानि द्वादश च सौत्यान्यहानि । तत्रोपसत्कालं सुब्रह्मण्याह्वानं यावन्ति सौम्यान्यहानि तावत्कृत्वः कर्तव्यम् । यथा प्रथमायामुपसदि सुब्रह्मण्यानिगदे द्वादशाहे सुत्यामागच्छेति प्रथमायास्सुत्यायाः । त्रयोदशाहे सुत्यामागच्छेति द्वितीयायास्सुत्यायाः । एवं क्रमेण द्वादशकृत्व आह्वानानि । द्वितीयायामुपसदि तु एकादशाहे सुत्यामागच्छेति प्रथमायास्सुत्यायाः । द्वितीयायास्तु द्वादशाहे इत्येवं क्रमेणैकादशकृत्वः कृत्स्नेन निगदेनाह्वानानि। एवं परिशिष्टेष्वहस्सु यथायथमूह्यम् ? अथवा सर्वासामपि सुत्यानामुपसत्कालं सुब्रह्मण्याह्वानं तन्त्रम् ? इति । यथा प्रथमायामुपसदि द्वादशाहे सुत्यामागच्छेति, द्वितीयायां त्वेकादशाहे सुत्यामागच्छेत्यादि । तदर्थं चेत्थं चिन्त्यते–किं सुब्रह्मण्यानिगदे सुत्योपलक्षणं चिकीर्षितम् ? उत यागसमवेतदेवतेन्द्रादिस्मरणं चिकीर्षितम् ? इति । तत्र सुत्योपलक्षणमेवेति ब्रूमः, सुत्यामागच्छेति सुत्याशब्दश्रवणात् । प्रकृतौ च सौत्यमहरेकमासीत् । तदुपलक्षितं त्र्यहे सुत्यामागच्छेति । द्वादशाहे तु द्वादश

सौत्यान्यहानि। तत्र च यदेव सौत्यमहर्नोपलक्ष्यते, तस्य संस्कारहानाद्वैगुण्यमापद्येत। तस्मात्प्रतिसुत्यं भेदेन सुब्रह्मण्याह्वानमुपसत्काले कर्तव्यमिति प्राप्ते, सिद्धान्तयति—

**सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात् ॥ २१ ॥**

तुशब्दः पूर्वपक्षव्यावृत्तौ। सुब्रह्मण्या—सुब्रह्मण्याह्वानं द्वादशाहे उपसत्कालकं तन्त्रं स्यात्। कुतः? अन्यकालत्वात्—न हि तस्यास्तस्यास्सुत्यायाः काले सुब्रह्मण्याह्वानमिदं विहितमस्ति, येन गृह्यमाणविशेषत्वात् तन्त्रत्वं न भवेत्। किन्तु तदन्येषु कालेषूपसद्दिनेषु विहितमिदं सुब्रह्मण्याह्वानम्। तस्य चागृह्यमाणविशेषत्वात्तन्त्रत्वम्, दीक्षावत्। तद्यथा --दीक्षा पृथक्काला तन्त्रं भवति सर्वासां सुत्यानाम्, तद्वत्। यदुक्तं इयत्यहे सुत्यामागच्छेति सुत्योपलक्षणमित्यादि, तन्न; न हि सुत्योपलक्षणमत्र चिकीर्षितम्। न हि तयोपलक्षितया दृष्टं किञ्चित्प्रयोजनमस्ति। अदृष्टपरिकल्पनन्तु न न्याय्यम्, यागसमवेतेन्द्रादिस्मरणस्य दृष्टस्य प्रयोजनस्य सम्भवात्। ततश्च प्रकृतौ इयत्यहे सुत्यामागच्छेत्यौपसदानामह्नां निगदद्वारेण त्र्यहादिषूपसद्दिनेष्वतीतेष्विन्द्रादिदेवैरागन्तव्यमिति यागसमवेतदेवतास्मरणं चिकीर्षितम्। तस्य च द्वादशाहे सकृदाह्वानेनापि सिद्धं तन्त्रत्वमिति ॥

इति नवममहर्गणे सुब्रह्मण्याह्वानस्य तन्त्रताधिकरणम् ॥ ९ ॥

१०

ज्योतिष्टोमे श्रुतम्—"उपाकृते प्रातरनुवाके सुब्रह्मण्यस्सुब्रह्मण्यामाह्वयति" इति। तद् द्वादशाहे चोदकतः प्राप्तम्। तत्र संशयः—किं प्रतिसुत्यं भेदेन कर्तव्यम्? उत तन्त्रम्? इति। तत्र प्रथमसुत्याकाल एव कृतस्य सुब्रह्मण्याह्वानस्य सर्वासामपि सुत्यानामुपकारकत्वसम्भवात्तन्त्रत्वे प्राप्ते, सिद्धान्तयति—

**तत्काला त्वावर्तेत प्रयोगतो विशेषसंयोगात् ॥ २२ ॥**

तुशब्दः पूर्वपक्षव्यावृत्तौ। तत्काला—[1]सुत्याकाला सुब्रह्मण्या प्रतिसुत्यमावर्तेत, न तु तन्त्रम्। कुतः? प्रयोगतो विशेषसंयोगात्—स्वार्थे तसिः। अद्य

१. सुब्रह्मण्यकाला. ग.

सुत्यामागच्छेति हि प्रयोगविशेषसंयोगो गम्यते। न ह्यद्येत्युक्ते श्वः परश्वो वेत्यपि गम्यते। ततश्च गृह्यमाणविशेषत्वात् प्रतिसुत्यं भेदेन सुत्याकालं सुब्रह्मण्याह्वानम् ॥

ननु प्रकृतावद्यसुत्यामागच्छेत्यत्र अद्येत्यस्याविवक्षितार्थत्वम्, प्रकृतौ सुत्याया एकत्वेन व्यावर्त्यसुत्यान्तरस्याभावेनाद्यत्वस्य तत्रार्थिकत्वात्। ततश्च द्वादशाहेऽपि चोदकतः प्राप्ते सुब्रह्मण्यानिगदे अद्येत्यस्याविवक्षितार्थत्वम्। सुत्यामागच्छेत्येतावदेव समवेतार्थाभिधायि। सुत्यात्वञ्च सर्वेषामह्नामविशिष्टम्। अतस्तत्र सुब्रह्मण्यानिगदस्य तन्त्रत्वं युज्यत इत्याशङ्क्य निराकरोति—

**अप्रयोगाङ्गमिति चेत् स्यात्प्रयोगनिर्देशात् कर्तृभेदवत् ॥ २३ ॥**

प्रकृतावद्येत्येतदविवक्षितार्थत्वात् प्रयोगाङ्गं न भवति। अतो विकृतिभूते द्वादशाहेऽपि तस्याविवक्षितार्थत्वेन प्रयोगविशेषाभावेनागृह्यमाणविशेषत्वात्तन्त्रत्वमिति चेन्न; किन्तु प्रतिसुत्यं भेद एव स्यात्। कुतः? प्रयोगनिर्देशात् -प्रयोक्तव्यस्य सुब्रह्मण्यानिगदस्य कालनिर्देशात्। निरिति पृथग्भावे। भिन्नकालत्वादिति यावत्। यद्यपि निगदेऽद्यशब्दः प्रकृतावविवक्षितार्थकः, तथापि यस्मिन् सौत्येऽहनि निगदः प्रयुज्यते, तत्कालस्यैव प्रधानस्य स निगद उपकरोति। नान्यकालस्यापि प्रधानस्य कालभेदात्। कर्तृभेदवत्-कर्तारौ अध्वर्युप्रतिप्रस्थातारौ यत्र भिद्येते तानि कर्तृभेदानि वरुणप्रघासहवींषि। तत्रोत्तरवैहारिकाण्यङ्गानि दक्षिणवैहारिकमारुत्या यथा नोपकुर्वन्ति, देशभेदात्, तद्वदत्रापि कालभेदादेकस्मिन् सौत्येऽहनि प्रयुक्तसुब्रह्मण्यानिगदो न सुत्यान्तराणामुपकरोति। तस्माद्भेदः ॥

ननु सुब्रह्मण्याह्वानं कर्मसमवेतेन्द्रादिदेवतासंस्मरणार्थमित्युक्तम्। एकस्मिन् सौत्येऽहनि आह्वानेन चेन्द्रादिदेवतानां संस्कृतत्वान्न सुत्यान्तरेषु पुनराह्वानम्। यथा सकृदाधानसंस्कृतस्याग्नेर्न प्रतिकर्माधानसंस्कार इत्याशङ्क्य निराकरोति—

**तद्भूतस्थानादग्निवदिति चेत्तदपवर्गस्तदर्थत्वात् ॥ २४ ॥**

तम्-आह्वानसंस्कारं भूतानाम् एकस्मिन्-सौम्येऽहनि प्राप्तानामेवेन्द्रादि देवतानां स्थानात्—सुत्यान्तरेषु विद्यमानत्वान्न पुनराह्वानम्, किन्त्वाधानसंस्कृताग्निवत् तन्त्रमिति चेत्तन्न; कुतः? यतस्तदपवर्गः-तस्याह्वानसंस्कारस्य यस्मिन् सौत्येऽहनि क्रिया, तदपवर्गेणापवर्गो भवति। कुतः? तदर्थत्वात्-आह्वानसंस्कारस्य सुत्याविशेषार्थत्वात्। ततश्चाग्निसंमार्गादिवत् प्रतिसुत्यमाह्वानस्यावृत्तिर्युक्ता ॥

अथ यदुक्तमग्निवदिति, तदनूद्य निराकरोति—

**अग्निवदिति चेन्न प्रयोगसाधारण्यात् ॥ २५ ॥**

आधानसंस्कृताग्निवत् तन्त्रमाह्वानमिति यदुक्तम्, तन्न; कुतः ? प्रयोगसाधारण्यात्। प्रयोगस्याधानप्रयोगस्य साधारण्यात्—कर्मविशेषमपर्यालोच्य स्वतन्त्रवसन्तादिकाले प्रवृत्तत्वेन सर्वकर्मसाधारण्यात्। सुत्याकालन्तु सुब्रह्मण्याह्वानं न तथा, यस्यां [सुत्यायां] क्रियते तदर्थमिति गृह्यमाणविशेषत्वात्। तस्मादाधानतो वैषम्यमाह्वानस्य। अतः प्रतिसुत्यमाह्वानम् ॥

उक्तो न्यायः श्रुतिसम्मत इत्याह—

**लिङ्गदर्शनाच्च ॥ २६ ॥**

"संस्थिते संस्थितेऽहन्यग्नीदाग्नीध्रागारं प्रविश्य सुब्रह्मण्य सुब्रह्मण्यमाह्वयेति सम्प्रेष्यति" इति सम्प्रैषविधानञ्च प्रत्यहं सुब्रह्मण्याह्वानमिति दर्शयति। प्रेषविधानं ह्येतदाह्वानार्थम्। तच्च प्रत्यहमाह्वाने सत्येव घटते। अन्यथा प्रत्यहं तत्प्रैषस्यादृष्टार्थत्वप्रसङ्गात्। अतः प्रतिसुत्यं सुब्रह्मण्याह्वानम् ॥

नन्वेवमपि यूपाहुतिवत् सुब्रह्मण्याह्वानस्य सुत्याकालस्य तन्त्रत्वं स्यात्। यूपैकादशिन्यां हि यूपाहुतिरवश्यं यस्य कस्यचिद्यूपस्यान्तिके कर्तव्या, सर्वयूपसाधारणस्यान्तिकस्य [1]दुर्लभत्वात्। अतो यस्य कस्यचिद्यूपस्यान्तिके यूपाहुतिः क्रियमाणा सर्वार्था भवति, सन्निवेशनान्तरीयकत्वेनाविशेषकत्वात्। तद्वत्सुब्रह्मण्याह्वानमपि यस्य कस्यचित्सौत्यकर्मणोऽन्तिके क्रियमाणं सर्वसुत्यार्थं कुतो न स्यादित्याशङ्क्य परिहरति—

**तद्धि तथेति चेन्नाशिष्टत्वादितरन्यायत्वाच्च ॥ २७ ॥**

चशब्दस्सुब्रह्मण्याह्वानस्य यूपाहुतिवैषम्यद्योतनार्थः। तत्—यूपाहुतिः कर्म। हि यस्मात्कारणादेकस्य यूपस्यान्तिके क्रियमाणमपि सर्वयूपार्थम्, तथा—सुब्रह्मण्याह्वानमपीति चेत्तन्न; कुतः ? अशिष्टत्वात्—अन्तिकदेशस्याविहितत्वात्। "यूपान्तिकेऽग्निं मथित्वा जुहोति" इत्यत्र हि नान्तिकदेशविधिः, किन्त्वन्तिक इत्यनुवादः। मथनस्यैव च विधिरिति व्यवस्थापितं पूर्वपादे—'इतरप्रतिषेधो वानुवादमात्रमन्तिकस्य' इति। ततश्च तत्रान्तिकदेशस्याशास्त्रविहितत्वाद् देशतस्सन्निधिरवि-

---

१. असम्भवात्, क.

शेषकः। इह तु सुब्रह्मण्याह्वाने न तथा। कुतः ? इतरन्यायत्वात्—विलक्षणधर्मकत्वात्। वैषम्यादिति यावत्। कालो ह्यत्र विहितस्ताण्डिकशाखायाम्—'प्रातरनुवाक उपाकृते सुब्रह्मण्यामाह्वयति'' इति। अतः कालस्य विहितत्वेन तत्सन्निधेर्विशेषकत्वाद् भवति यूपाहुतितो वैषम्यमाह्वानस्य। तस्मात्प्रतिसुत्यमावृत्तिः॥

ननु द्वादशाहे वसतीवरीहरणान्तस्य प्राच्यस्यावभृथादेश्चोदीच्यस्याङ्गकलापस्य तन्त्रत्वं दृष्टम्, तथा सुब्रह्मण्याह्वानस्यापि तन्त्रत्वमेव स्यादित्याशङ्क्य परिहरति—

**विध्येकत्वादिति चेन्न कृत्स्नस्य पुनःप्रयोगात्प्रधानवत् ॥ २८ ॥**

विधीयत इति विधिः, प्राच्योदीच्याङ्गकलापः। तस्यैकत्वात्—तन्त्रत्वात् सुब्रह्मण्याह्वानस्यापि तन्त्रत्वं स्यादिति चेत्तन्न; कुतः ? प्रधानवत् कृत्स्नस्य पुनः प्रयोगात्—यथा प्रधानं प्रत्यहं क्रियते, तद्वदभिषवपवमानग्रहग्रहणचमसोन्नयनस्तुतशस्त्रादिः कृत्स्नः सौम्यः प्रयोगः पुनः क्रियते। एतदुक्तं भवति—यद्यपि कतिपयानामङ्गानां तन्त्रत्वं दृष्टम्, नैतावतेतरेषामप्यङ्गानां तन्त्रत्वं भवति, केषाञ्चिदङ्गानामावृत्तेरपि दर्शनात्। ततश्च न्यायादेवैतदवधार्यम्। सौत्येऽहनि सुब्रह्मण्याह्वानस्य तन्त्रत्वं न न्याय्यम्, यस्मिन्नहनि क्रियते तदर्थमिति गृह्यमाणविशेषत्वात्। अतो द्वादशाहे प्रतिसुत्यं सुब्रह्मण्याह्वानमावर्तत इति॥

इति दशमं द्वादशाहे सुब्रह्मण्याह्वानस्यातन्त्रताधिकरणम्॥ १०॥

११

समादिदेशानामृत्विजाञ्च प्रतियोगं भिन्नानामेवोपादानम् ? उत तेषामन्येषां वेत्यनियमः ? इति संशये, एककर्मण्युपयुक्तस्यान्यस्मिन् कर्मण्युपादाने शिष्टाचारविरोधादन्येषामेवोपादानमिति प्राप्ते, सिद्धान्तयति—

**लौकिकेषु यथाकामो संस्कारार्थालोपात् ॥ २९ ॥**

लौकिकेषु प्रयाजादिवद् वैदिकवचनैकप्रमाणागोचरेषु लोकतोऽपि गम्यस्वरूपेषु देशकर्तृषु यथाकामी तेषामन्येषां वोपादानमित्यनियमः। कुतः ? संस्कारार्थालोपात्—उभयथापि संस्कारार्थयोरलोपात्। यदि ह्यन्येषां तेषां वा देशकर्तॄणामुपादाने संस्कारलोपोऽर्थलोपो वा विद्येत, तर्हि तेषामेवोपादानमिति नियम

आस्थेयः। यदि हि पूर्वस्मिन् प्रयोगे कृता देशकर्तृसंस्काराः प्रयोगान्तरे उपजीव्याः स्युः, यदि वा प्रयोगान्तरे देशकर्त्रन्तरोपादाने कस्यचिदर्थस्य लोपस्स्यात्, तर्हि तत्र त एव देशकर्तार उपादीयेरन्, अन्येषामुपादाने संस्कारलोपप्रसङ्गात्। नैवमस्ति, देशकर्तृसंस्काराणां प्रतिप्रयोगं कर्तुं शक्यत्वात्, तैरन्यैश्च देशकर्तृभिः प्रयोगनिष्पत्त्यार्थलोपाभावाच्च। न च "ऋत्विगाचार्यौ नातिचरितव्यौ" इति निषेधात् प्रयोगान्तरेऽपि त एवर्त्विजो नान्य इति वाच्यम्, तस्य निषेधस्य पुरुषार्थत्वेन तदतिक्रमे पुरुषस्य प्रत्यवायेऽपि क्रतुवैगुण्याभावात्, वैपरीत्याचरणरूपातिचारनिषेधपरत्वेन तस्य वचनस्यान्योपादाने बाधकाभावाच्च। न च पूर्वस्मिन् कर्मण्युपयुक्तानामन्यस्मिन् कर्मण्युपयोगे शिष्टाचारविरोध इति वाच्यम्। शिष्टा हि चरुपुरोडाशादिकमेव पूर्वकर्मोपयुक्तमन्यस्मिन् कर्मणि वर्जयन्ति, देशकर्तॄंस्तु तानप्युपाददते। अतो न तद्विरोधः। तस्माद्देशकर्तॄणामनियमः॥

इत्येकादशं देशकर्तॄणामनियमाधिकरणम्॥ ११ ॥

१२

स्रुगादिपात्राणि प्रकृत्य चिन्त्यते—किं प्रतिप्रयोगमन्यानि तानि वोपादेयानीत्यनियमः? उत तान्येवेति नियमः? इति। तत्र पूर्वाधिकरणन्यायेन देशकर्तृवत्तान्यन्यानि वोपादेयानीत्यनियमे प्राप्ते, सिद्धान्तयति—

**यज्ञायुधानि धार्येरन् प्रतिपत्तिविधानादृजीषवत्॥ ३०॥**

यज्ञायुधानीत्यनेन स्रुगादियज्ञपात्राण्युच्यन्ते। तानि प्रथमे प्रयोगे प्रयुक्तानि यावज्जीवं धार्येरन्। कुतः? प्रतिपत्तिविधानात्—"आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च" इत्यन्त्येष्टौ तेषां प्रतिपत्तिविधानात्। यदि तु तानि न धार्येरन् तर्हि परिधानीये कर्मणि तत्प्रतिपत्तिविधानमनुपपन्नं स्यात्। अतो यावज्जीवं तानि धार्येरन् ऋजीषवत्। तद्यथा—अहर्गणे सर्वेष्वहस्स्वभिषुतानां सोमानामृजीषोऽवभृथे प्रतिपादनार्थमवभृथपर्यन्तं धार्यते तद्वत्। ततश्च यज्ञपात्राणां यावज्जीवं धारणे सति पात्रान्तरोपादाने प्रयोजनाभावात् प्रतिप्रयोगं तान्येव पात्राणि विनियोज्यानि॥

ननु "आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च" इति वाक्ये [1]यज्ञपात्राणां प्रतिपत्तिर्न विधीयते, यज्ञपात्रैरिति तृतीयानिर्देशात्, किन्तु यजमानसंस्कार एव विधीयते, यजमानमिति द्वितीयानिर्देशात्। तस्मिंश्च संस्कारे पात्राणि साधनत्वेन विधीयन्ते। ततश्च प्रतिपत्तिविधानादित्यनुपपन्नम्। अप्रतिपाद्यत्वे च सति पात्राणामर्थकर्मत्वात्, यैः कैश्चिदपि नवैः पात्रैर्यजमानसंस्कारः सिध्यतीति न यावज्जीवधार्यता पात्राणाम्। तस्मादेशकर्तृवत् प्रतिप्रयोगमनियमस्स्यादिति पूर्वपक्षी शङ्कते—

**यजमानसंस्कारो वा तदर्थः श्रूयते तत्र याथाकामी तदर्थत्वात् ॥३१॥**

वाशब्दश्शङ्कायाम्। "आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च" इत्यत्र यजमानस्य दाहसंस्कारो विधीयते। स च तदर्थः—यजमानार्थः। कुतः? [यतो] यजमानमिति द्वितीया[2] श्रूयते। ततश्च तत्र तेषु पात्रेषु याथाकामी—प्रतिप्रयोगमन्यानि तानि वेत्यनियमंस्स्यात्। कुतः? तदर्थत्वात्—संस्कारार्थत्वात्पात्राणाम्, न[3] तु संस्कारः पात्रार्थः। ततश्च प्रतिपत्तिविधानाभावेनाभिनवैः पात्रैः तत्संस्कारस्य सम्भवान्न पात्राणां यावज्जीवधार्यता सिध्यतीत्यनियमः प्रतिप्रयोगं स्यादित्यर्थः॥

सिद्धान्ती परिहरति—

**मुख्यधारणं वा मरणस्यानियतत्वात् ॥ ३२ ॥**

वाशब्दोऽवधारणे। मुख्यानां [4]प्रथमप्रयोगपरिगृहीतानां पात्राणां यावज्जीवं धारणं भवत्येव। कुतः? मरणस्यानियतत्वात्—यद्यपि तृतीयाश्रुत्या पात्राणां गुणभावः, न तु प्रतिपाद्यता, तथापि प्रथमप्रयोगपरिगृहीतानां पात्राणां त्यागे सति मरणस्यानियतत्वादेव कदाचित्पूर्वप्रयोगोपयुक्तेषु पात्रेषु त्यक्तेषूत्तरप्रयोगात् प्राग्यजमानस्य मरणे सति यज्ञपात्राभावाद्दाहो विगुणस्स्यात्। तस्मादावश्यकमुत्तरप्रयोगपर्यन्तधारणम्। धारितेषु च तेषु सत्सु तैरेव तत्प्रयोगस्यापि सिद्धेर्न तत्र पात्रान्तरोपादानम्। एवमतः परमपीति सिद्धं यावज्जीवधारणं पात्राणाम्॥

---

१. यज्ञपात्राणां. नास्ति. ग.
२. द्वितीया. नास्ति. क.
३. च. ग.
४. पृथक्. ग.

नन्वेवमपि प्रथमप्रयोगपरिगृहीतानामेव पात्राणां यावज्जीवधारणमिति न सिध्यति। "आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च" इति वाक्ये हि प्रयोगमध्ये मृतस्य यजमानस्य संस्कारो विधीयते, न तु कालान्तरे मृतस्य। तत्प्रयोगाङ्गभूत-पात्रैरेव च स सम्भवति। अतो न तत्संस्कारो यावज्जीवधारणं पात्राणां प्रयोज-यितुमीष्टे, कपालोपधानमिवोपवेषकरणम्। न हि "उपवेषेण कपालान्युपदधाति" इत्युपवेषस्य कपालोपधानसंयोगश्रवणात् पौर्णमास्यां सान्नाय्याभावेन शाखाया अभावे सति कपालोपधानस्योपवेषप्रयोजकत्वमस्ति। अतो न यावज्जीवधारणं पात्राणामिति पूर्वपक्षी शङ्कते—

**यो यजनीयेऽहनि म्रियेत सोऽधिकृतस्स्यादुपवेषवत् ॥ ३३ ॥**

स्पष्टोऽर्थः ॥

सिद्धान्ती परिहरति—

**न शास्त्रलक्षणत्वात् ॥ ३४ ॥**

पात्राणां न यावज्जीवधारणमिति, [1]एतन्न भवति। कुतः? शास्त्रलक्षणत्वात्– शाखाया हि सान्नाय्यार्थत्वं शास्त्रविहितम्—"शाखया वत्सानपाकरोति, कुम्भ्यां शाखापवित्रं निदधाति, पवित्रवत्यानयति" इत्यादि हि श्रूयते। उपवेषस्तु शाखामनु निष्पद्यते। ततश्च पौर्णमास्यां सान्नाय्याभावेन शाखाया अभावात् तदनु निष्पन्नो-पवेषस्य करणमशक्यमिति न तत्कपालोपधानं प्रयोजयति। इह तु प्रयोगाद् बहिर्मृतस्यापि पात्रैर्दाहो[न]कर्तुमशक्यः, यावज्जीवधारणेन तदुपपत्तेः। तस्मादु-पवेषतो वैषम्यं पात्रकरणकसंस्कारस्य ॥

नन्वेवमपि यथा ऋतपेये "घृतव्रतो भवतः" इति वचनेन पयोव्रतस्य निवृत्त्या व्रतदोग्ध्र्या गोरभावे सति "या यजमानस्य व्रतधुक् तामाशिरे दुहन्ति" इत्याशिराख्यदधिविशेषो गामन्यां प्रयोजयति तद्वद् यज्ञपात्रैस्संस्कारोऽपि नवानि पात्राणि प्रयोजयेदिति पूर्वपक्षी शङ्कते—

**उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् ॥ ३५ ॥**

आशिराख्यपयोदोहनस्य गोप्रयोजकत्ववद्यज्ञपात्रसाधनकदाहसंस्कारस्यापि पात्रप्रयोजकत्वान्नवानां पात्राणां संस्कारसमये उत्पत्तिस्स्यादित्यर्थः ॥

---

१. तन्न. क.

ननु शङ्केयं नोपपद्यते, संस्कारसमये नवानां पात्राणामुत्पादने सति तेषां यज्ञे विनियुक्तत्वाभावेन यज्ञपात्रत्वासम्भवेन यज्ञपात्रशब्दस्य तेष्वनुपपत्तेरिति सिद्धान्तिनश्शङ्कामनूद्य पूर्वपक्षी प्रतिबन्द्या परिहरति—

**शब्दसामञ्जस्यमिति चेत्तथाशिरे ॥ ३६ ॥**

संस्कारसमये उत्पादितेषु पात्रेषु यज्ञपात्रशब्दस्यानुपपत्तिरिति चेत्—आशिरेऽपि तुल्यम्। ऋतपेये आशिरार्थपयोदोहनाय या गौरुपादीयते तस्यां व्रतधुक्छब्दस्यानुपपत्तेः। तस्मादाशिरवत्पात्रप्रयोजकत्वं संस्कारस्येति शङ्का स्थिता॥

तां सिद्धान्ती परिहरति—

**शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृतावथेहापूर्वार्थैस्तद्भूतोपदेशः ॥ ३७ ॥**

तुशब्दश्शङ्काव्यावृत्तौ। ऋतपेये शास्त्रादित्युभयत्रान्वेति। आशिरप्रयोज्यायां गवि व्रतधुक्छब्दस्यासामञ्जस्यं युज्यते। कुतः? यतस्तद्विप्रयोगः तत्र—ऋतपेये "घृतव्रतौ भवतः" इति शास्त्राद् व्रतदुहो विप्रयोगो निवृत्तिरस्ति। प्रकृतौ च ज्योतिष्टोमे "या यजमानस्य व्रतधुक् तामाशिरे दुहन्ति" इति शास्त्रादेव व्रताशिरयोरेकस्य द्रव्यस्य गोलक्षणस्य चिकीर्षा, विधानमस्तीति यावत्। अतस्तत्र ऋतपेये चोदकतः प्राप्यमाणोऽप्यसम्भवान्निवर्तते। आशिरश्च गामन्यां प्रयुङ्क्ते। व्रतधुक्त्वगुणलोपस्तु "घृतव्रतौ भवतः" इति शास्त्रान्मृष्यते। अथेह—इह तु आहिताग्निदाहेऽपूर्वार्थे विहिते पात्राणां तद्भूतानाम्—यज्ञसम्बन्धं प्राप्तानामेवोपदेशः। आशिरवाक्ये तु व्रतधुक्छब्दस्य प्रकृतावस्ति सम्भव इति तत्र चरितार्थत्वाद्विकृतौ शास्त्रान्तरविरोधात् तन्मात्रस्य बाधो युज्यते। यज्ञपात्रैर्दाहस्त्वत्रैव विधीयते, नाशिरवदन्यतः प्राप्यते, येन क्वचिद्यज्ञपात्रशब्दस्य सामञ्जस्यं स्यात्। ततश्च संस्कारसमये यज्ञपात्राणामुत्पत्तौ [1]यज्ञपात्रशब्दस्य सर्वथा असामञ्जस्यमेव स्यात्। सम्भवति च प्रथमप्रयोगपरिगृहीतानां यज्ञसम्बन्धोपलक्षितानां पात्राणां यावज्जीवधारणात्तत्सामञ्जस्यम्। तस्माद्यज्ञपात्राणि यावज्जीवं धार्याण्येव॥

तदेवमन्त्येष्टौ यज्ञपात्राणां दाहं प्रति गुणभावः प्रतिपाद्यत्वञ्चाभ्युपगम्य यावज्जीवधारणं साधितम्। इदानीं प्रतिपाद्यत्वमग्रे समर्थयिष्यते। तत्रान्तरा-

---

१. यज्ञपात्रस्य. क.

गर्भिणीन्यायेन चिन्त्यते—किं यज्ञपात्राणि पौर्णमासीप्रभृति धार्याणि ? उत पवमानेष्टिप्रभृति ? इति । तत्र पूर्वपक्षयति—

**प्रकृत्यर्थत्वात्पौर्णमास्या ध्रियेरन् ॥ ३८ ॥**

पौर्णमासीमारभ्य यज्ञपात्राणि ध्रियेरन् । कुतः ? प्रकृत्यर्थत्वात्—पात्राणि ह्यनारभ्य विहितत्वाद्दर्शपूर्णमासार्थानि । तत्र पौर्णमासी प्रथमं प्रयुज्यते "पौर्णमासीं पूर्वामालभेत" इति वचनात् । ततश्च पौर्णमास्यां यज्ञपात्राणामुत्पन्नत्वात्ततः प्रभृत्येव धारणमिति प्राप्ते, सिद्धान्तयति—

**अग्न्याधेयाद्वा विप्रतिषेधात् तानि धारयेन्मरणस्यानिमित्तत्वात् ॥ ३९ ॥**

वाशब्द एवार्थे । अग्न्याधेयशब्देनात्र पवमानेष्टय उच्यन्ते । अग्न्याधेये उपाभृद्ध्रुवादिपात्राणां विनियोगाभावाद्यज्ञपात्राणि पवमानेष्टीरारभ्य धारयितव्यानि, न तु पौर्णमास्या आरभ्य । कुतः ? अविप्रतिषेधात्—पवमानेष्टीरारभ्य धारण एव विरोधाभावात् । पौर्णमासीप्रभृति धारणे च विरोधप्रसङ्गात् । कुतः ? मरणस्यानिमित्तत्वात्—मरणं तावदनियतकालं भवति । तत्र यद्याधानादूर्ध्वं दर्शपूर्णमासोपक्रमात्प्राग् यजमानो म्रियेत, तदा तद्दाहस्य यज्ञपात्राभावाद्वैगुण्यमापद्येत । पवमानेष्टिप्रभृति पात्रधारणे तु नायं विरोधो भवति । तस्मात्पवमानेष्टिप्रभृत्येव पात्रधारणमिति ॥

अथ स्थितादुत्तरमुच्यते—

**प्रतिपत्तिर्वा यथान्येषाम् ॥ ४० ॥**

वाशब्द एवार्थे "आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च" इत्यत्र यज्ञपात्राणां यद्यपि दाहं प्रति गुणभावोऽवगतः, तथापि "दक्षिणे हस्ते जुहूमासादयति सव्य उपभृतम्" इत्यादिवाक्येषु द्वितीयाश्रवणादासादनं पात्राणां प्रतिपत्तिः, यथान्येषां द्रव्याणां सोमलिप्तानामवभृथे प्रक्षेपः प्रतिपत्तिः, "सर्वाणि सोमलिप्तान्यवभृथे प्रविध्यन्ति" इति द्वितीयाश्रुतेः, तद्वत् । ततश्च दहने तृतीयासंयोगात् परार्थानामपि सतां पुरोडाशकपालवद् भवतु गुणभावः, सादने तु प्रतिपत्तिरेव । अतो धारणाभावे प्रतिपत्तिलोपेन वैगुण्यापत्तेः यावज्जीवं पात्राणां धारणम् ।

ननु प्रतिपत्तिरसौ नोपयोक्ष्यमाणसंस्कारः, मरणानन्तरं [1]कर्त्रभावेन तदुपयोगाभावात्। किन्तूपयुक्तसंस्कार इति वक्तव्यम्। एवं सति पात्रवतां कर्मणां सर्वेषामपि प्रतिपत्तिरसावङ्गं स्यात्। ततश्चामरणकालं कर्मणामसमाप्तिस्स्यात्। तत्र यद्यपि स्वर्गादिफलकानां कर्मणां फलोत्पादकत्वं भवति। यानि तु कर्माणि ऐहिकतात्कालिकफलकानि कारीर्यादीनि तेषां तात्कालिकफलजनकत्वानुपपत्तिः। तत्कर्माङ्गभूतपात्रप्रतिपत्तेर्मरणकालकत्वेन तत्कर्मणां मरणात्प्रागसमाप्तत्वादिति चेत्, अत्र केचित्---अपवृक्तेषु सर्वेषु कर्मसु विधीयमानोऽयं प्रतिपत्तिनियमो न क्रत्वर्थः, किन्तु पुरुषार्थ एवायम्। एवं प्रतिपादितेषु पात्रेषु पुरुषस्याभ्युदयो भवतीति। तथाच श्रूयते—"स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकमेति" इत्याहुः। अन्ये तु प्रतिपत्तिनियमोऽयं क्रत्वर्थ एव। तत्रोत्पन्नतात्कालिकैहिक-फलानां कर्मणां नासावङ्गम्, असम्भवात्। किन्तु कालान्तरभाविदेहान्तरोप-भोग्यस्वर्गादिफलकानां कर्मणामेव प्रतिपत्तिरिति विधानबलात् कल्प्यत इति वदन्ति। पक्षद्वयमप्येतत्तन्त्ररत्ने स्पष्टम्॥

इति द्वादशं यज्ञपात्राणां यावज्जीवं धारणाधिकरणम्॥ १२॥

१३

वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते--"उपरिष्टात्सोमानां प्राजापत्यै-श्चरन्ति" इति। हृदयाद्यवदानैश्चरन्तीत्यर्थः। ब्रह्मसामकाल एव वपाप्रचारस्य [2]वृत्तत्वात्। तत्र चिन्त्यते—किमाभवकाले प्रचरितव्यम्? उत स्तोत्ररहितशस्त्रवतां सोमानामुपरिष्टात्? उताग्निमारुतस्योपरिष्टात्? अथवा हारियोजनान्ते सर्व-सोमानामुपरिष्टात्? इति। आर्भवकाल एव प्रचरितव्यमिति ब्रूमः। प्रकृतौ ह्यार्भवकाले प्रचारो विहितः। इहापि चोदकतस्तथैव भवितव्यम्। न चैवं सति "उपरिष्टात्सोमानाम्" इति वचनविरोधस्स्यादिति वाच्यम्, आर्भवकालस्यापि केषाञ्चित् सोमानामुपरितनत्वेन तद्विरोधाभावादिति प्राप्ते, सिद्धान्तयति—

---

१. कर्माभावेन. ग.

२. कृतत्वात्. क, घ.

**उपरिष्टात्सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषादवाच्यो हि प्रकृतिकालः ॥ ४१ ॥**

"उपरिष्टात्सोमानां प्राजापत्यैश्चरन्ति" इति सर्वेषामेव सोमानामुपरिष्टात् हारियोजनान्ते प्राजापत्यप्रचार उच्यते, न तु केषाञ्चित् सोमानामुपरि आर्भवकाले। कुतः ? अविशेषात्—सोमानामित्युक्ते सर्वसोमानामविशेषतः प्रतीतेः। यदुक्तमार्भवकालश्चोदकतः प्राप्तोऽनेनोच्यत इति, तत्राह—अवाच्यो हि प्रकृतिकाल इति। यस्मात्कारणात्प्रकृतिविहितः कालोऽत्र वक्तव्यो न भवति, चोदकतः प्राप्तत्वेन वचनवैयर्थ्यात्, तस्मात्सर्वसोमानामुपरिष्टात्प्रचारः ॥

ननु यदि हारियोजनान्ते सर्वसोमानामुपरिष्टात्प्रचारस्स्यात्, तर्ह्यनूयाजास्तत ऊर्ध्वं कर्तव्यास्स्युः। तदनन्तरञ्च परिधिप्रहरणं कर्तव्यं स्यात्, प्रकृतावग्नीषोमीये तथा बद्धक्रमत्वात्। न चेष्टापत्तिः, तथासति हि "आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति" इति "प्रहृत्य परिधीन हारियोजनं गृह्णाति" इत्युभयमपि विपर्यस्येत। न चैतद्विपर्यासो वचनाभावे युज्यते। न ह्यग्निमारुतोर्ध्वकालकानामनूयाजानां हारियोजनपूर्वकालकस्य परिधिप्रहरणस्य च हारियोजनोत्तरभाविप्रचारोत्तरकाले उत्कर्षे किञ्चित्प्रयोजनमस्तीत्याशङ्क्य निराकरोति—

**अङ्गविपर्यासो विना वचनादिति चेदुत्कर्षस्संयोगात्कालमात्रमितरत्र ॥ ४२ ॥**

अनूयाजपरिधिप्रहरणाङ्गविपर्यासो वचनाभावे सति न युक्त इति चेत्तन्न; कुतः ? यतः संयोगादुत्कर्षस्स्यात्। यद्यप्यनूयाजानां परिधिप्रहरणस्य च हारियोजनोत्तरकालकपशुप्रचारानन्तरकाले उत्कर्षे न किञ्चिद्वचनमस्ति, अथापि न्यायात्तादुत्कर्षस्सिध्यति। पशुप्रचारे हि हारियोजनान्ते उत्कृष्यमाणे पशुप्रचारेण क्रमतस्संयुक्तानूयाजानां परिधिप्रहरणस्य चोत्कर्षसिद्धेः। ननु "प्रहृत्य परिधीन्, हारियोजनं गृह्णीयात्" इति हारियोजनस्य तत्पूर्वकालकपरिधिप्रहरणकत्वमागमादवगतम्, तत्परिधिप्रहरणस्य हारियोजनोत्तरकालकप्राजापत्यप्रचारानन्तरमुत्कर्षो विरुध्येत। तत्राह—कालमात्रमितरत्रेति। इतरत्र—"प्रहृत्य परिधीन् हारियोजनं गृह्णाति" इति वाक्ये हारियोजनस्य कालमात्रमुच्यते। अग्निमारुतादूर्ध्वमनूयाजानां कालः। परिधिप्रहरणादूर्ध्वञ्च हारियोजनस्य काल इति कालार्थ एव संयोगः।

परिधिप्रहरणं कालस्योपलक्षणम् । तस्योत्कर्षेऽपि तत्कालो नापैति । यथाग्निहोत्रवेलाया मागन्तव्यमित्युक्ते अग्निहोत्राभावेऽपि तत्काले भवत्यागमनम्, एवमत्र परिधिप्रहरणस्योत्कर्षे तत्कालस्यानपेतत्वाद्धारियोजनस्य न वैगुण्यम् ॥

ननु "उपरिष्टात्सोमानां प्राजापत्यैश्चरन्ति" इत्यत्र सोमशब्देन स्तोत्ररहितशस्त्रवन्तः सोमा उच्यन्ते । ततश्च तार्तीयसवनिकवैश्वदेवग्रहयजेरूर्ध्वं प्राजापत्यानां प्रचारः । एवं हि सति प्राकृतार्भवकाले प्रत्यासत्तिलाभात् । एवञ्चानूयाजानां परिधिप्रहरणस्य च यथाकालत्वमेव लभ्यते, नोत्कर्षक्लेशोऽनुभवितव्य इति द्वितीयं पूर्वपक्षमुत्थाप्य निराकरोति—

**प्रकृतिकालासत्तेश्शस्त्रवतामिति चेन्न श्रुतिविप्रतिषेधात् ॥४३॥**

"उपरिष्टात्सोमानाम्" इत्यत्र सोमशब्देन केवलशस्त्रवतामेव सोमयागानामभिधानमिति चेत्तन्न; कुतः ? श्रुतिविप्रतिषेधात्—एवं सति सोमानामित्यविशेषश्रुतिविरोधात् । तत उपरिष्टादपि केषाञ्चित्सोमयागानां सत्त्वात् । यद्यपि तत्र प्राकृतकालप्रत्यासत्तिर्लभ्यते, तथापि किं तावता स्यात् ? न हि प्रत्यासत्तिमात्रेण चोदकानुग्रहो भवति । तस्मात्सर्वसोमानामुपरिष्टादित्येव युक्तम् ॥

ननु सोमानामित्यनेनाग्निष्टोमस्तोत्रकग्रहयज्यन्ताः सोमयागा उच्यन्ते । तदूर्ध्वकालो ह्यागन्तुकानामुक्थ्यादीनां विकाराणां स्थानम् । प्राजापत्यप्रचारश्चागन्तुकविकारः । तस्मात् तत्रैव प्राजापत्यानां प्रचार इति तृतीयं पूर्वपक्षमुत्थाप्य निराकरोति—

**विकारस्थान इति चेन्न चोदनापृथक्त्वात् ॥ ४४ ॥**

अग्निष्टोमविकाराणामुक्थ्यादीनां स्थाने-काले, अग्निष्टोमस्तोत्रग्रहयजेरूर्ध्वं प्राजापत्यैः प्रचरितव्यमिति चेत्तन्न, कुतः ? चोदनापृथक्त्वात्—चोद्यत इति चोदना कर्म, तत्पृथक्त्वात्–कर्मभेदादित्यर्थः । द्वे ह्येते कर्मणी सौमिकं पाशुकञ्च । तत्र सोमविकाराणामेतत् स्थानम्, न तु पशुविकाराणाम् । प्राजापत्यप्रचारश्च पशुविकारः । अतस्तस्य न तत्स्थानत्वम् । तस्मात्सर्वसोमानामुपरिष्टाद्धारियोजनान्ते प्राजापत्यप्रचार इति युक्तम् ।

वस्तुतस्तु—"उपरिष्टात् सोमानाम्" इत्यत्र सोमशब्देन हारियोजनात् प्राग्भाविनस्सर्वे सोमयागा उच्यन्ते, न तु हारियोजनः । एवं हि वाजसनेयके

श्रूयते—"यद्यत्र मैत्रावरुणो वामदेव्यमनुशंसति तदेषां वपाभिः प्रचरेयुरथेष्टा अनूयाजास्युः अभ्यूहेत्स्रुचावथैषां हविर्भिः प्रचरेयुः" इति। उपरिष्टात्सोमाना-मित्यनेनाप्ययमेव काल उच्यते, सम्भवत्येकवाक्यत्वे वाक्यभेदायोगात्। तत्कथ-मस्मिन् प्रत्यक्षवचने जाग्रति भगवता जैमिनिना हारियोजनान्ते प्राजापत्यप्रचार इति निर्णीतम्? कथं वा भाष्यवार्तिककारप्रभृतिभिस्तथैवानुमोदितमिति न जानीमः। यदि तु सर्वज्ञैस्तैश्शाखान्तरे तथाविधं वचनं दृष्टं स्यात् तर्हि किमधि-करणप्रवृत्या ॥

इति त्रयोदशं वाजपेये सर्वसोमोत्तरं प्राजापत्यप्रचाराधिकरणम् ॥ १३ ॥

१४

अस्त्यग्नीषोमीये पशौ "अग्निमद्य होतारमवृणीत" इत्यादिसूक्तवाकप्रैषो मैत्रावरुणकर्तृकः। स तावच्चोदकतः सवनीये प्राप्तः। तत्र सवनीयदेवताः सङ्कीर्त्यन्ते "भृज्यन्निन्द्राय हरिवते धानाः पूषण्वते करम्भम्" इत्यादिना। विकारार्थं तत्र पुन-राम्नायते—"अग्निमद्य होतारमवृणीतायं सुन्वन् यजमानः" इत्यादि। स तावद् विकृतस्सूक्तवाकप्रैषो वाजपेयिकेषु सौम्येषु पशुषु चोदकतः प्राप्तः। तत्र प्राजापत्यानां पशूनां हारियोजनान्ते भवत्युत्कर्षः। तदुत्कर्षाच्च तदङ्गभूतानामनूयाजानामप्युत्कर्ष इति पूर्वाधिकरणे स्थितम्। तत्र चानूयाजानामुत्कर्षे सति "तदादिवाभिसम्बन्धात्" इति () न्यायेनानूयाजाद्यङ्गकलापस्य कृत्स्नस्योत्कर्षः सिध्यति। तत्र विचार्यते—

किं सूक्तवाकप्रैषे सवनीयदेवतादिसङ्कीर्तनस्योत्कर्षो भवति? न वा? इति। तत्र पूर्वपक्षयति—

**उत्कर्षे सूक्तवाकस्य न सोमदेवतानामुत्कर्षः पश्वनङ्गत्वाद्यथा निष्कर्षेऽनन्वयः ॥ ४९ ॥**

वाजपेये प्राजापत्यप्रचारोत्कर्षेण सूक्तवाकस्योत्कर्षे सति सोमदेवतानां "भृज्यन्निन्द्राय हरिवते धानाः पूषण्वते करम्भम्" इत्यादि सोमाङ्गसवनीयादि-देवतासंङ्कीर्तनस्य नोत्कर्षो भवति। कुतः? पश्वनङ्गत्वात्—सोमाङ्गसवनीयादि-देवतासङ्कीर्तनं हि सोमस्यैवाङ्गम्, न तु पश्वङ्गम्। अनूयाजास्तु पश्वङ्गभूता उत्कृष्यमाणाः स्वोत्तरकालकानि पश्वङ्गान्येवोत्क्रष्टुमीशते, न तु सोमाङ्गमप्युत्क्रष्टुमिति

व्यवस्थापितम् 'असंयोगात्तु वैकृतं तदेव प्रतिकृष्येत' इत्यत्र। तस्मान्न सवनीयदेवतादिसङ्कीर्तनस्योत्कर्षः। यथा निष्कर्षे सति—दर्शपूर्णमासयोः षट्सु प्रधानेषु पौर्णमासीत्रिकस्य विभज्य प्रयोगे सति सूक्तवाकप्रैषेऽमावास्यादेवतानामनन्वयः—असम्बन्धः, अमावास्यायाश्च सूक्तवाके पूर्णमासदेवतानाम्। तद्वदिहापीति प्राप्ते, सिद्धान्तयति—

**वाक्यसंयोगाच्चोत्कर्षस्समानतन्त्रत्वादर्थलोपादनन्वयः ॥ ४६ ॥**

वाशब्द एवार्थे। वाजपेयप्राजापत्यप्रचारोत्कर्षेण सूक्तवाकस्योत्कर्षे सति सोमाङ्गसवनीयादिदेवतासङ्कीर्तनस्याप्युत्कर्षः स्यादेव। कुतः? वाक्यसंयोगात्—सौमिकदेवतासङ्कीर्तनस्य पश्वङ्गसूक्तवाकवाक्यैकदेशभूतत्वात्। तथा हि—प्रकृतिभूतेऽग्नीषोमीयपशौ सूक्तवाकप्रैषे[1] "अग्निमद्य होतारमवृणीतायं यजमानः पचन्पक्तीः पचन्पुरोडाशं बध्नन्नग्नीषोमाभ्यां छागम्" इति वाक्यं पठ्यते। तत्रायं यजमानः पक्तीः-पक्तव्यानि वपादिहवींषि पचन् पुरोडाशं तच्छिद्रापिधानार्थं पचन् अग्नीषोमाभ्यां पशुञ्च यूपे बध्नन् होतारमग्निमद्य—अस्मिन्नहनि, अवृणीतेत्यन्वयः। तदिदं वाक्यं ज्योतिष्टोमे सवनीये पशौ विकारार्थं पुनः पठ्यते—"अग्निमद्य होतारमवृणीतायं सुन्वन् यजमानः पचन्पक्तीर्भृज्जन्निन्द्राय हरिवते धानाः पूषण्वते करम्भं सरस्वतीवते भारतीवते परिवापमिन्द्राय पुरोडाशं मित्रावरुण्यां पयस्यां बध्नन्नग्नये च्छागम्" इति। तदिदं विकृतं [ वाक्यं ] वाजपेये चोदकतः प्राप्यते। तत्राग्नये छागमित्यस्य स्थाने प्रजापतये छागानित्याद्यूह्यते। यदि च हारियोजनप्रचारान्ते प्राजापत्यप्रचारोत्कर्षेण सूक्तवाकस्योत्कर्षे सति सोमाङ्गसवनीयादिदेवतासङ्कीर्तनस्योत्कर्षो न स्यात्, तर्हि हारियोजनप्रचारात्प्राक् स्वकाल एव सोमाङ्गसवनीयादिदेवतासङ्कीर्तनं स्यात्। तर्हि "भृज्जन्निन्द्राय हरिवते धानाः" इत्यादि सोमाङ्गदेवतासङ्कीर्तनपरस्यैकदेशस्य पृथक् प्रयोगो भवेत्। न चैतद्युज्यते, विकारमात्रे क्रियापदाभावेन साकाङ्क्षत्वात् न चाग्निमद्य होतारमवृणीतेति क्रियापदस्यापकर्षो युज्यते, तस्य पश्वङ्गत्वेन सौमिकविकारापकर्षेणापकर्षानुपपत्तेः। ततश्च होतारमवृणीतेति सकृच्छ्रुतेन क्रियापदेन तन्त्रेण सम्बन्ध्यमानस्य सौमिकदेवतासङ्कीर्तनस्यापि सूक्तवाकोत्कर्षेणोत्कर्ष एव युज्यते। न तु तस्य हारियोजन-

---

१. प्रैषः पठ्यते, ग.

प्रचारात् प्राक् स्वकाले पृथगपकर्षः। यदुक्तम्—यथा निष्कर्षेऽनन्वय इति, विषमोऽयं दृष्टान्त इत्याह—समानतन्त्रत्वादर्थलोपादनन्वय इति। तन्त्रमङ्गकलापः प्रयाजादिः। स तावदविशेषाद्दर्शस्य पूर्णमासस्य च साधारणः। ततश्च सूक्तवाकोऽपि साधारणो भवति। तत्रेतरदेवतासङ्कीर्तनस्यार्थलोपादन्वयो न युज्यते, नैवमत्रार्थलोपोऽस्ति। उत्कृष्टैरपि सौमिकदेवतापदैस्तत्प्रकाशनस्य सम्भवादिति वैषम्यम्। तस्मात्प्राजापत्यप्रचारोत्कर्षेण सूक्तवाकोत्कर्षे सति सौमिकदेवतासङ्कीर्तनस्याप्युत्कर्ष इति सिद्धम्॥

इति चतुर्दशं वाजपेये सूक्तवाके सोमदेवतासङ्कीर्तनाधिकरणम्॥ १४॥

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तावेकादशाध्यायस्य तृतीयः पादः॥

# अथैकादशाध्यायस्य चतुर्थः पादः

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

राजसूये यान्युक्तकालानि दक्षिणाभेदवन्ति, यथा "आग्नावैष्णवमेकादशकपालं निर्वपेत्" "ऐन्द्रावैष्णवमेकादशकपालं वैष्णवं त्रिकपालं वामनो वह दक्षिणा अग्नीषोमीयमेकादशकपालं निर्वपतीन्द्रासोमीयमेकादशकपालं सौम्यं चरुं बभ्रुर्दक्षिणा सोमापौष्णं चरुं निर्वपत्यैन्द्रापौष्णं चरुं पौष्णं चरुं श्यामो दक्षिणा" इति. तानीमानि त्रीणि त्रिकाणि । किमेतेष्वङ्गानां तन्त्रता ? उत भेदः ? इति [1]संशये, पूर्वपक्षयति—

**चोदनैकत्वाद्राजसूयेऽनुक्तदेशकालानां समवायात्तन्त्रमङ्गानि ॥ १ ॥**

राजसूयेऽनुपदिष्टदेशकालभेदानां प्रधानानामाग्नावैष्णवादीनां तन्त्रमङ्गानि । कुतः ? समवायात्—फले जननीये तेषां साधनतया समावेशात् । सम्भूयैकफलकारित्वादिति यावत् । कुतः ? चोदनैकत्वात्—एका हि चोदना—"राजसूयेन स्वाराज्यकामो यजेत" इति । तत्र च यजिना तन्त्राभिधानतस्साहित्यावगमात् । सहितानामेकफलजनकत्वादेकफलकप्रधानानाञ्चैकतन्त्रतायाः प्राग्व्यवस्थापितत्वात्तन्त्रमङ्गानीति प्राप्ते, सिद्धान्तयति—

**प्रति दक्षिणं वा कर्तृसम्बन्धस्स्यादिष्टिवदङ्गभूतत्वात्समुदायो हि तन्निर्वर्त्या तदेकशब्दोपदेशः स्यात् ॥ २ ॥**

वाशब्दः पक्षव्यावृत्तौ । नैवमुदाहृतेषु त्रिकेषु तन्त्रमङ्गानीति । किन्तर्हि ? भेदेनैव । कुतः ? यतः प्रतिदक्षिणं कर्तृसम्बन्धः स्यात् प्रतित्रिकं दक्षिणाभेदश्रवणात् प्रत्येकमेव कर्तृसम्बन्धो वाच्यः । कर्तृभेदे चाङ्गभेद इति व्यवस्थितं प्राक् ।

---

१. विशये. क.

ननु सत्यपि दक्षिणाभेदे कथं कर्तृभेदः ? तेभ्य एव कर्तृभ्योऽन्योन्यदक्षिणादानसम्भवात् । तत्राह—अङ्गभूतत्वादिति । वामनपरिक्रीताः कर्तारः पूर्वत्रिकस्याङ्गभूताः, बभ्रुपरिक्रीतास्तु मध्यमस्य त्रिकस्य, श्यामपरिक्रीता उत्तमस्य । यदि तु त्रिभिरपि परिक्रीतास्त्रीण्यपि त्रिकाण्येकतन्त्रेण कुर्युः, तर्हि त्रीण्यपि त्रिकेषु प्रत्येकं दक्षिणावचनात् गम्यमाना दक्षिणाव्यवस्था बाध्येत । त्रीणि त्रिकाण्युक्त्वैव वामनबभ्रुश्यामा दक्षिणेत्येव ब्रूयात् । ननु दक्षिणाभेदेऽपि कथं कर्तृभेदः, तत्राह—अङ्गभूतत्वादिति । दक्षिणायाः कर्तृशरीरप्रविष्टत्वादित्यर्थः । ऋत्विजां परार्थकर्मकर्तृत्वमानतत्वेनैव निर्वाह्यम् । आनतिश्च दक्षिणया भवति । अतो दक्षिणाभेदात् कर्तृभेद आवश्यकः कर्तृभेदे चाङ्गभेदः, इष्टिवत् । यथा दर्शपूर्णमासयोरङ्गानि कालभेदाद् भिद्यन्ते, तद्वदिहापि कर्तृभेदात्तद्भेदः । ननु प्रतीष्ट्यङ्गप्रयोगभेदे कथं राजसूयेनेत्येकवचनम्, तत्राह—समुदाये हि तन्निर्वृत्त्येति । हेतौ तृतीयैषा । फलमपि हेतुः । तच्छब्देन फलमुच्यते । फलनिष्पत्तौ निमित्ते प्रधानानां समुदायः-साहित्यम् यजिना तन्त्राभिधानतोऽवगम्यत इति व्यवस्थापितं प्राक् । तदेकत्वात् तस्य समुदायस्य फलस्य वैकत्वेन राजसूयेनेत्येकशब्दोपदेशः-एकवचनोपदेशस्स्यात् । प्रधानसमुदायैकत्वाभिप्रायं फलैकत्वाभिप्रायं वा राजसूयेनेत्येकवचनमिति यावत् । तदेतदन्यत्राप्युक्तं सूत्रकृता 'फलैकत्वादिष्टिशब्दो यथान्यत्र' इति ॥

उक्तो न्यायः श्रुतिसम्मत इत्याह—

**तथाचान्यार्थदर्शनम् ॥ ३ ॥**

प्रतित्रिकमङ्गप्रयोगभेदं वाक्यशेषो दर्शयति—"यत्पूर्वं त्रिकसंयुक्तं वीरजननं तद्यदुत्तरं त्रिकसंयुक्तं पशुजननं तत्" इति । अत्र त्रिकद्वयं फलभेदवत्त्वेन स्तूयते । फलसम्बन्धश्च साङ्गस्यैव भवति । ततश्च प्रतित्रिकमङ्गभेदः ।

वस्तुतस्तु राजसूयिकेष्विष्टिपशुसोमेषु सर्वत्र क्वचित् कालभेदस्य, क्वचिद्देशभेदस्य च वाजसनेयकादौ प्रत्यक्षमाम्नानात् चिन्त्येयमधिकरणप्रवृत्तिः ॥

**इति प्रथमं राजसूये पृथग्दक्षिणायुक्तानामिष्टीनामतन्त्रताधिकरणम् ॥ १ ॥**

२

तत्रैव राजसूये चिन्त्यते— किमुपक्रमे वृता एव ऋत्विज आन्तात् कुर्युः ? उत ते वा अन्ये वेत्यनियमः ? इति । तदर्थञ्चेत्थं चिन्त्यते— किमिष्टिपशुसोमानां सर्वेषामृत्विग्वरणं तन्त्रम् ? उत भेदेन ? इति । भेदेनैव भाव्यम् । कालदेशकर्तृभेदे ह्यङ्गानां पृथक्प्रयोग इति व्यवस्थापितं प्राक् । राजसूये च क्वचिद्देशभेदो दक्षिणाभेदश्च श्रुतः—"बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे शितिपृष्ठो दक्षिणैन्द्रमेकादशकपालं राजन्यस्य गृहे" इत्यादीनि । क्वचित्कालभेदः "षडेव पूर्वेद्युर्निरुप्याणि षडुत्तरेद्युः" इत्यादीनि "क्वचिद्दक्षिणाभेदात् कर्तृभेदः—आग्नावैष्णवादित्रिकत्रये वामनो वही दक्षिणा" इत्यादि । ततश्च भिन्नेषु प्रयोगेषु सत्सु यस्मिन् कर्मणि प्रयुयुक्षित्रे वरणमनुष्ठितं, तदर्थमेव तदिति विशेषग्रहणान्नास्ति तन्त्रत्वं वरणस्य । न हि पवित्राग्नीष्टोमारम्भसमयेऽनेकेष्टिव्यवहिताभिषेचनीयोक्थ्यस्य प्रयोग उपस्थितः, येन तत्कालकं वरणं तस्यापि स्यात् । ततश्च यस्मिन् कर्मणि ये वरणभरणाभ्यामुपात्ताः, ते तदपवर्गेऽपवृक्ता लौकिका भवन्तीति कर्मान्तरार्थं पुनर्वरणसंस्कार आधातव्यः । तदाधाने चाविशेषात्ते वान्ये वेत्यनियमस्स्यात् इति पूर्वपक्षमुद्भाव्य निराकरोति—

## अनियमस्स्यादिति चेन्नोपदिष्टत्वात् ॥ ४ ॥

राजसूये उपक्रमवृता वा अन्ये वा ऋत्विज इत्यनियमस्स्यादिति चेत्तन्न; कुतः ? उपदिष्टत्वात्—आदावेव हि वरणमृत्विजां यजमानेनोपदिष्टं कर्मप्रवृत्तेः प्रागेव, तत्तन्त्रेण सर्वार्थं भविष्यति । ननु देशकालकर्तृभेदात् सर्वत्र प्रयोगभेदे सति वरणस्यापि भेदस्स्यादित्युक्तमिति चेत्—सत्यम्; अङ्गभूतवरणं भिद्यत एव, लौकिकन्तु वरणं तन्त्रमिति वयमाचक्ष्महे । यजमानो हि उपक्रमात्प्रागेव लौकिक्या वाचा ऋत्विजो वृणीते—अनेन राजसूयसंज्ञकेन कर्मसमुदायेन मां याजयतेति । तच्च प्रार्थनं समुदायोद्देशेनैव कर्तुमर्हति, अन्यथा ह्येकस्मै कर्मणे वृतास्तत्समाप्तौ ते कदाचिन्न याजयेयुः, अन्ये च न लभ्येरन्, कर्मविघ्नस्स्यात् । निरन्तरमन्वहं प्रयोज्यानि हि राजसूयकर्माणि ऋत्विगन्वेषणविलम्बं न सहन्ते । दर्शपूर्णमासयोस्तु बहुदिनव्यवधानेन प्रयोज्ययोस्तदन्वेषणसहत्वाद् ऋत्विग्भेदो युज्यते । तस्मादिहोपक्रमप्रभृत्यान्तात् त एव कुर्युः । यद्यपि राजसूये चातुर्मास्यानि मास-

चतुष्टयव्यवधानतः प्रयोज्यानि, तत्रान्तरालेष्वृत्विगन्वेषणसम्भवः, तथापि शाखान्तरसिद्धं राजसूयस्य निरन्तर[1]प्रयोज्यत्वमभिप्रेत्याधिकरणप्रवृत्तिरित्यदोषः। राजसूयस्य निरन्तरमन्वहप्रयोज्यत्वं बोधायनकर्मान्तसूत्रादौ व्यक्तम्॥

इति द्वितीयं राजसूये ऋत्विङ्नियमाधिकरणम्॥ २॥

३

राजसूये तावद् "दिशो व्यवस्थापयन्ति" इति विधाय तत्र "ईश्वरो वा एष दिशोऽनून्मदितो यद्दिशोऽनुव्यवस्थापयन्ति" इति दोषमुद्भाव्य तत्परिहारार्थतया दिशामवेष्टयो नाम पञ्च हवींषि विहितानि—"दिशामवेष्टयो भवन्ति दिक्ष्वेव प्रतितिष्ठत्यनुन्मादायाग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा" इति। तत्र चिन्त्यते—किमिमानि पञ्च हवींषि एकतन्त्राणि ? उत नानातन्त्राणि ? इति। तत्र पूर्वपक्षयति—

**अवेष्टौ त्वैकतन्त्र्यं स्याल्लिङ्गदर्शनात्॥ ५॥**

शाखान्तरेऽवेष्टिरित्येकवचननिर्देशोऽस्ति। तदनुसारेण तन्त्रैकत्वाभिप्रायमेकवचनम्। तुशब्दो वैषम्यद्योतनार्थः। दक्षिणाभेदे तन्त्रभेद इति व्यवस्थापितं प्राक्। अवेष्टिषु सत्यपि दक्षिणाभेदे तन्त्रभेदो नास्ति, किन्तु ऐकतन्त्र्यम्—सकृदङ्गप्रयोगस्स्यात। कुतः ? लिङ्गदर्शनात्—"यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाभिघारयेद्यदि वैश्यो वैश्वदेवं यदि राजन्य ऐन्द्रम्" इति बार्हस्पत्यस्याग्नेयादीनां मध्ये निधानं प्रतिप्रधानाहुति तत्संस्रावेण तदभिघारणञ्च पञ्चानां हविषामेकतन्त्रत्वे लिङ्गम्। न हि भिन्नतन्त्रत्वे तदुभयमुपपद्यते। अवेष्टिरित्येकवचननिर्देशश्च लिङ्गमेकतन्त्रत्वे। अतो लिङ्गदर्शनादैकतन्त्र्यमत्रेति प्राप्ते, सिद्धान्तयति—

**वचनात्कामसंयोगेन॥ ६॥**

उच्यतेऽनेनेति वचनं वाक्यम्। काम्यत इति कामः फलम्। "एतयान्नाद्यकामं याजयेत्" इति वाक्यतोऽन्नाद्यफलसंयोगेनापि विहिता अत्रेष्टिः। न चैषा

---

१. प्रयोज्यत्वमधिकृत्य. क.

राजसूयिकी, तस्यास्स्वाराज्यफलकत्वात्। "यदि राजन्य" इत्यादिदर्शनमपि क्रतुबहिर्वर्त्यन्नाद्यकामप्रयोगविषयमेव, न तु राजसूयिकावेष्टिविषयमपि। ततश्च बहिःप्रयोगे पञ्चहविषां समानतन्त्रत्वेऽपि राजसूयिकानां दक्षिणाभेदाद्भिन्नतन्त्रता॥

ननु "यदि ब्राह्मणो यजेत" इत्यादि दर्शनं राजसूयिकावेष्टिविषयमपि किं न स्यादित्याशङ्क्य ब्राह्मणवैश्यवर्णसंयोगेन तच्छ्रवणाद्राजसूयस्य च राजन्यमात्रविषयत्वाद् बहिःप्रयोगविषयमेव तद्दर्शनमिति तदन्यथानुपपत्या गम्यमानमेकतन्त्रत्वं बहिःप्रयोगविषयमेवेति परिहरति—

**क्रत्वर्थायामिति चेन्न वर्णसंयोगात्॥ ७॥**

स्पष्टोऽर्थः॥

ननु, राजसूये यथोत्पन्नाया एव दक्षिणाभेदवत्या अवेष्टेः "एतया अन्नाद्यकामं याजयेत्" इति बहिर्विधानम्, ततश्च क्रतुमध्य इव बहिरपि दक्षिणाभेदात् भिन्नतन्त्रत्वं स्यात्। यदि मध्ये निधानाद्यन्यथानुपपत्या बहिःप्रयोगे एकतन्त्रत्वमभ्युपगम्य तत्रैकस्मिन्नपि काले पञ्चानामपि दक्षिणानां दानं क्रियमाणतत्तत्प्रधानोद्देश्यकं वाचनिकमिति कथञ्चित् समर्थ्येत, तर्हि क्रतुमध्येऽपि तुल्यं व्यभिचारेण दक्षिणाभेदस्य तन्त्रभेदप्रयोजकत्वाभावात्। तथाच क्रत्वन्ताप्रयोगे तन्त्रभेदः, बहिःप्रयोगे त्वेकतन्त्रतेति चेत्, उच्यते—राजसूये उत्पद्यमानान्येवैतानि पञ्च हवींषि दक्षिणाभेदवन्त्येवोत्पन्नानि ततश्च दक्षिणाभेदादुत्पत्तिसमय एवैतानि नानातन्त्राणि क्रतुमध्ये प्रयोक्तव्यानीत्यवगतम। पश्चात्तु ब्राह्मणादीनां बहिः प्रयोगो मध्ये निधानादिवचनानुपपत्या "एतया अन्नाद्यकामम्" इति प्रयोगवचनैक्याच्चैकतन्त्रता[1] गम्यते। पश्चादवगतबहिःप्रयोगैकतन्त्रता च प्रथमावगतं राजसूयिकावेष्टिहविषां भिन्नतन्त्रत्वमवैरूप्याय बाधितुमीष्टे। अत एव च राजसूये दिशामवेष्टय इति बहुवचनम्, "एतया अन्नाद्यकामम्" इति बहिःप्रयोगे एकवचनमिति च वैरूप्यमुपपन्नं भवति। शाखान्तरेऽवेष्टिरित्येकवचनमपि बहिःप्रयोगविषयमेव। तस्मात्क्रत्वन्तःप्रयोज्यानामेवावेष्टिहविषां भिन्नतन्त्रत्वम्, बहिःप्रयोज्यानामेकतन्त्रत्वमिति।

अत्रेदं वक्तव्यम्—वाजसनेयशाखायां "प्राचीमारोह गायत्री त्वावतु रथन्तरं साम त्रिवृत्स्तामो वसन्त ऋतुर्ब्रह्म द्रविणम्" इत्यादिभिः पञ्चभिर्मन्त्रैः "दिशः

१. एकतन्त्रः क.

समारोहयति" इति विधाय शार्दूलास्तरणादिदशपेयान्तमुक्त्वा आम्नायते—"आग्नेयोऽष्टाकपालो भवति तं पुरस्तादासादयत्यैन्द्र एकादशकपालो भवति तं दक्षिणत आसादयति, वैश्वदेवश्चरुर्भवति तं पश्चादासादयति, मैत्रावरुणी पयस्या भवति तामुत्तरत आसादयति, बार्हस्पत्यश्चरुर्भवति तं मध्य आसादयति, तेषां वा एतेषां पञ्चानां हविषां पञ्च बिलानि तस्माच्चरुः पञ्चबिल इत्याख्यायते यदेतेन यजते यदेवैनमदो दिशस्समारोहयति, यदृतून् यत्स्तोभ्यंश्छन्दांसि यत्सामानि तत एवैनमेतेन निष्क्रीणाति, सोऽनेनाग्नेयेनाष्टाकपालेन पुरोडाशेन प्रचरति स हुत्वा-हुतिसंस्रावं बार्हस्पत्येऽवनयति, अथानेनैन्द्रेण प्रचरति स हुत्वा आहुतिसंस्रावं बार्हस्पत्येऽवनयति, अथानेन वैश्वदेवेन प्रचरति स हुत्वा आहुतिसंस्रावं बार्हस्प-त्येऽवनयति, अथानया मैत्रावरुण्या प्रचरति स हुत्वैवाहुतिसंस्रावं बार्हस्पत्येऽवन-यति, अथानेन बार्हस्पत्येन प्रचरति स हुत्वैवाहुतिसंस्रावं बार्हस्पत्येऽवनयति, आग्नेयस्य हिरण्यं दक्षिणा तमग्नीधे ददाति, ऐन्द्रस्य ऋषभो दक्षिणा तं ब्रह्मणे ददाति, वैश्वदेवस्य पृषद्गौः दक्षिणा तां होत्रे ददाति, मैत्रावरुण्या वशा दक्षिणा तामध्वर्यवे ददाति, बार्हस्पत्यस्य शितिपृष्ठो दक्षिणा तं ब्रह्मणे ददाति, तेन हाप्येतेनान्नाद्यकामो यजेत" इति। अत्र "यदेवैनमदो दिशः समारोहयति" इत्यादिवाक्यशेषाद् राजसूयिकानीमानि पञ्चहवींषीत्यविवादम्। तत्र बार्हस्पत्यस्य मध्येविधानान्यथानुपपत्त्यैकतन्त्रत्वमपि स्फुटमवगतम्। तदनन्तरं दक्षिणाभेदेऽव-गते प्रथमावगतमेकतन्त्रत्वं कथं विहन्यात्। तथा तैत्तरीयशाखायामपि राजसूये-"दिशो व्यास्थापयति" इति विहिते दिग्व्यवस्थापने "ईश्वरो वा एष दिशोऽनून्म-दितोर्यं दिशोऽनुव्यास्थापयन्ति" इत्युन्माददोषमुद्भाव्य "दिशामवेष्टयो भवन्ति दिक्ष्वेव प्रतितिष्ठतीत्यनुन्मादाय" इति तत्परिहारार्थत्वेन विहितेषु पञ्चस्वेतेषु हविष्षु बर्हत्यमध्येनिधानमाहुतिसंस्रावाभिधारणञ्चाम्नायते—"हविषो हविष इष्ट्वा बार्ह-स्पत्यमभिघारयति" इति। एतदन्यथानुपपत्त्या राजसूयिकानामेषां हविषामेक-तन्त्रत्वं दुर्वारमित्यास्तां तावत्॥

इति तृतीयमवेष्टेर्भिन्नतन्त्रताधिकरणम्॥ ३॥

(ग्रन्थकारमतेनैकतन्त्रताधिकरणम्)

४

सन्त्याधाने पवमानेष्टयः—"त्रीणि हवींषि निर्वपत्यग्नये पवमानायाग्नये पावकायाग्नये शुचये" इति। तान्यधिकृत्य श्रूयते—"अह्वा निरुप्याणि यः कामयेतोत्तरं वसीयान् श्रेयान् स्यामिति तस्याग्नये पवमानाय निरूप्य पावकशुचिभ्यामुत्तरे हविषी समानबर्हिषि निर्वपेत्" इति च। तदिह काम्ये प्रयोगे चिन्त्यते–किं त्रीण्यपि हवींषि एकतन्त्राणि ? उत प्रथमं हविः पृथक्तन्त्रम्, उत्तरे हविषी एकतन्त्रे ? इति। तत्र पूर्वपक्षयति—

**पवमानहविष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् ॥ ८ ॥**

प्रयोग उच्यतेऽनेनेति प्रयोगवचनं वाक्यम्—"अह्वा निरुप्याणि" इति। [1]तस्यैकत्वात्—असहायत्वात् तन्त्रभेदबोधकवाक्यान्तराभावात्। अस्मिंश्च वाक्ये "अह्वा" इत्येककालकश्रवणादेककालकत्वे चागृह्यमाणविशेषतया समानतन्त्रत्वमिति भावः। न च "यः कामयेत" इति वाक्यं तन्त्रभेदबोधकमस्तीति वाच्यम्, तस्य "अह्वा निरुप्याणि" इति कालैक्यादेकतन्त्रत्वेनावगतानां फलार्थतामात्रबोधकत्वात्, तन्त्रभेदस्यापि बोधने वाक्यभेदापत्तेः, वाक्यान्तरावगतैकतन्त्रत्वबाधापत्तेश्च। न च विकल्पः, तस्याष्टदोषदुष्टत्वात्। तस्मात्काम्यप्रयोगेऽप्येकतन्त्रत्वमेव ॥

किञ्च—

**लिङ्गदर्शनाच्च ॥ ९ ॥**

"समानहवींषि भवन्ति" इत्यनुवादस्त्रयाणामेकतन्त्रत्वे लिङ्गं दृश्यते ॥

सिद्धान्तयति—

**वचनात्तु तन्त्रभेदः स्यात् ॥ १० ॥**

तुशब्दः पक्षव्यावृत्तौ। तन्त्रभेद एव स्यात् काम्ये प्रयोगे, न त्वेकतन्त्रत्वम्। कुतः ? यः कामयेतेति तन्त्रभेदवचनात्। ननु फलाय हविषामत्र विधिः, न तु तन्त्रभेदस्यापि, वाक्यभेदप्रसङ्गादिति चेत्—भ्रान्तोऽसि, न हि फलाय हवींष्यत्र विधीयन्ते तदाश्रितस्तु तन्त्रभेद एव दध्यादिवत् फलाय विधीयते। वसीयस्त्वं

---

१. तदेकत्वात्. ग.

काममयमानः प्रथमं हविः पृथक्तन्त्रं कृत्वा उत्तरे हविषी एकतन्त्रे कुर्यादिति। यत्तु "अह्ना निरुप्याणि" इति कालैक्यं गम्यते, तदेतत्पृथक्तन्त्रत्वे सत्यकिञ्चित्करमेव। उक्तञ्च सूत्रकृता—'अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम्' इति ॥

यत्तु "समानबर्हींषि भवन्ति" इति लिङ्गदर्शनमुक्तम्, तत्राह—

## सहत्वे नित्यानुवादस्स्यात् ॥ ११ ॥

"यो ब्रह्मवर्चसकामस्स्यात् तस्य सर्वाणि हवींषि निरुप्याणि" इति ब्रह्मवर्चसफलाय सर्वेषां सहप्रयोगः श्रुतः। तत्र सहप्रयोगे 'समानबर्हींषि' इति नित्यानुवादस्स्यात्। यद्यप्यत्र[1] निरुप्याणीत्येव श्रुतम्, न तु सहेति, तथापि निरुप्याणीति बहुवचनस्योपादेयगतत्वेन विवक्षिततया बहुत्वयुक्तप्रयोगावगमादेकशः प्रयोगे च तद[नुप]पत्तेः सहप्रयोगो विज्ञायते। सर्वाणीत्यपि तत्र तात्पर्यग्राहकम्। तस्माद् "यः कामयेतोत्तरम्" इति काम्यप्रयोगे समानतन्त्रत्वं नास्ति ॥

## इति चतुर्थं काम्यानां पवमानहविषां भिन्नतन्त्रताधिकरणम् ॥ ४ ॥

५

द्वादशाहे श्रूयते—"द्वादशाहेन प्रजाकामं याजयेत्" इति। तत्र संशयः—किमेकैकमहः पृथक्पृथग् द्वादशदीक्षोपसद्युक्तं कृत्वा द्वादश पञ्चविंशतिरात्राः कर्तव्याः? उतैकैकमहः सद्य एव दीक्षोपसद्युक्तं निर्वर्त्य द्वादशस्वहस्सु द्वादश साद्यस्काः कर्तव्याः? अथवा द्वादशस्वेवाहस्सु चतुरहे दीक्षाश्चतुरहे उपसदश्चतुरहे सुत्यास्सम्पाद्याः? आहोस्विद्दीक्षोपसत्सुत्यानां स्वस्थानानां विवृद्धिः द्वादशस्वहस्सु दीक्षा ततो द्वादशसूपसदः ततो द्वादशसु सुत्या इति षट्त्रिंशता अहोभिः क्रतुसमाप्तिः? इति। तत्र पूर्वपक्षयति—

## द्वादशाहे तत्प्रकृतित्वादेकैकमहरपवृज्येत कर्मपृथक्त्वात् ॥ १२ ॥

एकैकं सौत्यमहः द्वादशदीक्षाकं द्वादश सुत्याकञ्चापवृज्येत। कुतः? कर्मपृथक्त्वात्—पृथग्भूतानि हि द्वादशसुत्याकर्माणि पृथगेव धर्मानाकाङ्क्षन्ति। कुतः? तत्प्रकृतित्वात्—एकैकस्यास्सुत्यायाः ज्योतिष्टोमप्रकृतिकत्वात्। ज्योतिष्टोमे

१. अत्र वाक्ये. ग.

ह्येका तिस्रश्चतस्रो वा दीक्षास्तिस्र उपसद इति विहितमेकादिदीक्षात्वं त्र्युपसत्कत्वञ्चैकस्यां सुत्यायां दृष्टम्। तद्वदिहापि द्वादशदीक्षात्वं द्वादशोपसत्कत्वञ्च प्रति सुत्यमङ्गं भवितुमर्हति। अतो द्वादश पञ्चविंशतिरात्राः कर्तव्याः। न चैवं सति द्वादशाहशब्दविरोध इति वाच्यम्। न हि द्वादशाह इति गुणविधिः-द्वादशभिरहोभिः कर्तव्य इति, किन्तु नामधेयमेव। नामधेयत्वञ्चाङ्गभूतदीक्षोपसद्गतद्वादशत्वसङ्ख्यया तत्प्रख्यन्यायेन()सम्भवति॥

तमिमं प्रथमं पक्षमुपक्षिपन् द्वितीयं पक्षमुपक्षिपति—

**अह्नां वा श्रुतिभूतत्वात्तत्र साङ्गं क्रियेत यथा माध्यन्दिने॥ १३॥**

वाशब्दः प्रथमपक्षव्यावृत्तौ। द्वादश पञ्चविंशतिरात्राः कर्तव्या इत्येतन्न भवति। किन्तु तत्र द्वादशस्वहस्सु एकैकस्मिन्नहनि 'एकमेकं सुत्याकर्म साङ्गम्—दीक्षोपसदादिसकलाङ्गकलापयुक्तं साद्यस्क्रवत्क्रियेत। कुतः? अह्नां श्रुतिभूतत्वात्—द्वादशाहेनेति हि गुणविधिः। तत्र द्वादशसङ्ख्याह्नां प्रत्यक्षश्रुता। ततश्च द्वादशस्वहस्सु एकैकस्मिन्नहनि एकैकं सुत्याकर्म प्रयोज्यमिति निश्चये सत्यङ्गानां प्रधानकालत्वस्य न्याय्यत्वात्तत्तदङ्गकलापस्यापि तत्तत्प्रधानकालत्वं निश्चितं भवति। यथा माध्यन्दिने—"मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुं निर्वपति" इति मध्यन्दिनकालके प्रधाने ऽङ्गानामपि तत्कालत्वं भवति, तद्वत्। यदि तु द्वादश पञ्चविंशतिरात्राः क्रियेरन्, तर्हि द्वादशाहेनेति श्रुता साङ्गप्रधानानां दिनानां द्वादशत्वसङ्ख्या विरुध्येत। तस्माद् द्वादश साद्यस्क्राः कर्तव्या इति॥

तमिमं द्वितीयपक्षं प्रतिक्षिपन् तृतीयं पक्षमुपक्षिपति—

**अपि वा फलकर्तृसम्बन्धात् सहप्रयोगस्स्यादाग्नेयाग्नीषोमीयवत्॥ १४॥**

अपिवेति द्वितीयपक्षव्यावृत्तौ। न द्वादश साद्यस्क्राः कर्तव्या इति। किन्तु सहप्रयोगस्स्यात्—सकृदङ्गप्रयोगयुक्तद्वादशानां सुत्यानां प्रधानानामनुष्ठानं स्यात्। कुतः? फलकर्तृसम्बन्धात्—एकस्मिन् फलेऽभिन्नेषु ऋत्विक्षु समुदितानां प्रधानानां सम्बन्धावगमात् फलैक्यात्कर्त्रैक्याच्च प्रधानानामेकतन्त्रत्वमिति यावत्। "द्वादशाहेन प्रजाकामं याजयेत्" इत्येकस्मिन् फले द्वादशानां सुत्यानां समु-

१. एकैकं. ग.

दितानां सम्बन्धो गम्यते। "गृहपतिसप्तदशास्सत्रमासीरन्, तत्र सर्वे यजमाना ऋत्विजश्च" इति सत्रभूते द्वादशाहे यजमानानामृत्विक्त्वान्नास्ति ऋत्विजां भेदः। अहीनेऽपि द्वादशाहे "दीक्षितमदीक्षिता द्वादशाहेन याजयेयुः" इति द्वादशसुत्याक-समुदायवचनाद्द्वादशाहशब्दसंयोगेन याजयितृत्वश्रवणात्तदभेदः। यत्तु भाष्ये दक्षिणैक्यादहीने कर्तारो न भिद्यन्त इत्युक्तम्, तन्न; "अन्वहं द्वादशशतं दक्षिणा ददाति" इति विरोधात्। तदेवं फलैक्ये कर्त्रैक्ये च सत्यगृह्यमाणविशेषत्वादेक-तन्त्रत्वम्। यथाग्नेयाग्नीषोमीययोरेकफलत्वादभिन्नकर्तृकत्वाच्चैकतन्त्रत्वं तद्वत्। यदि च द्वादशस्वहस्सु एकैकस्मिन्नहनि दीक्षोपसदादिसकलाङ्गोपेतास्साद्यस्क्राः क्रियेरन्, तर्हि फलकर्त्रैक्यादवगतः सहप्रयोगोऽनुपपन्नस्स्यात्। सकृदङ्गप्रयोग-मनेकप्रधानानुष्ठानमेव हि सहप्रयोगो नाम। तत्र सुत्याकालकानामङ्गानां सवनीय-पश्वादीनां प्रतिसुत्यं भेदोऽग्रिमाधिकरणे व्यवस्थापयिष्यति। ततश्च परिशेषाद् द्वादशाहेनेति सकृत्प्रयोज्यदीक्षोपसत्कानेकसुत्यानां द्वादशाहत्वावगमे सति 'समं स्यात् श्रुतित्वात्' इति न्यायेन चतुरहे दीक्षाश्चतुरहे उपसदश्चतुरहे सुत्या इति पर्यवस्यति। एवञ्च सति द्वादशत्वसङ्ख्या सहप्रयोगश्चेत्युभयमुपपन्नं भवति॥

तमिमं पक्षं निराकुर्वन् सिद्धान्तयति—

## साङ्गकालश्रुतिकत्वात्तु स्वस्थानानां विकारस्स्यात्॥ १९॥

तुशब्दस्तृतीयपक्षव्यावृत्तौ। चतुरहे दीक्षाश्चतुरहे उपसदश्चतुरहे सुत्या इति न युक्तम्, किन्तु स्वस्थानानाम्—दीक्षोपसदां विकारः—वृद्धिस्स्यात्। कुतः? साङ्गकालश्रुतित्वात्—अङ्गं दीक्षा उपसदश्च, तत्सहितानि प्रधानानि साङ्गानि, तेषां कालश्रुतित्वात्—कालस्य श्रुतिः—श्रवणं येषां तानि कालश्रुतीनि साङ्गप्रधानानि, तेषां भावस्तत्त्वम्, तस्मात्। "द्वादश दीक्षाः द्वादशोपसदो द्वादश सुत्याः" इति दीक्षोपसत्सुत्यानां प्रत्येकं द्वादशत्वश्रवणादित्यर्थः। द्वादशाहशब्दश्च नामधेयम्। तच्च प्रधानसुत्यापेक्षम्, अथवा प्रत्येकं दीक्षोपसत्सुत्यापेक्षम्। ततश्च द्वादशस्वहस्सु दीक्षाः, ततो द्वादशस्वहस्सूपसद इति वसतीवरीपरिहरणान्तानि कर्माणि प्राच्या-ङ्गानि तन्त्रेण कृत्वा द्वादशस्वहस्सु सुत्याः पत्नीसंयाजान्ताः कृत्वा तत उदीच्या-ङ्गान्यवभृथादीनि तन्त्रेण कर्तव्यानि, फलकर्त्रैक्ये सत्येकतन्त्रत्वावश्यम्भावात्। तत्र द्वादशपञ्चविंशतिरात्रकरणे द्वादश साद्यस्क्रकरणे च फलकर्त्रैक्यतोऽवगतसह-

प्रयोगस्य बाधः। चतुरहे दीक्षाश्चतुरहे उपसदश्चतुरहे सुत्या इति पक्षे तु द्वादश-दीक्षादिविरोधः। अतो दीक्षोपसत्सुत्यानां प्रत्येकं द्वादशत्वम् ॥

उक्तेऽर्थे लिङ्गमप्यस्तीत्याह—

**तथाचान्यार्थदर्शनम् ॥ १६ ॥**

'षट्त्रिंशदहो वा एष द्वादशाहः" इति वाक्यशेषोऽपि दीक्षोपसत्सुत्यानां [1]प्रत्येकमेव द्वादशत्वं दर्शयति। तस्मात्तथैव प्रयोगः ॥

नन्वत्रान्यकालानां दीक्षोपसदामन्यकालप्रधानोपकारकत्वाभ्युपगमे दर्श-पूर्णमासयोरप्यन्यतरत्र प्रयुज्यमानानामङ्गानामुभयकालकप्रधानोपकारकत्वं स्या-दित्याशङ्क्याह—

**चोदनापृथक्त्वे त्वैकतन्त्र्यं समवेतानां कालसंयोगात् ॥ १७ ॥**

तुशब्दो वैषम्यद्योतनार्थः। "यदाग्नेय" इत्यादिचोदनानां पृथक्त्वं यस्मिन् प्रधानषट्के तच्चोदनापृथक्त्वम्। तस्मिन् प्रतित्रिकमेकतन्त्रत्वं स्यात्। कुतः? समवेतानाम्—अङ्गसहितानां प्रधानानां कालसंयोगात्—"पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्यया" इति कालयोर्विधानात्। यथाचैतत्तथा व्यवस्था-पितं द्वितीयपादे। ततश्च तत्रोभयत्र वचनतः साङ्गत्रिकस्य कर्तव्यतावगमादन्य-तरकालकानामङ्गानामुभयत्रोपकारकताया असम्भवात् प्रधानकालान्येवाङ्गानि भवन्ति। इह तु दीक्षोपसदां प्रधानानामेककालकत्वस्य वाचनिकत्वान्न दोष इति वैषम्यम् ॥

इति पञ्चमं द्वादशाहे दीक्षोपसदां स्वस्थानविवृध्यधिकरणम् ॥ ५ ॥

६

अस्ति ज्योतिष्टोमे सुब्रह्मण्याह्वानमुपसत्कालम्। तत्र श्रूयते—"त्र्यहे सुत्या-मागच्छ मघवन्निति ब्रूयात्" इति। तत्रेतिकरणेन सङ्ख्योच्यते—त्र्यहे सुत्यामिति प्रथमायामुपसदि द्व्यहे सुत्यामिति द्वितीयायां तृतीयायान्तु श्वस्सुत्यामिति वाच-निकम् त्र्यहेऽतीते सतीत्यर्थः। 'यस्य च भावेन' इति सप्तमी, न त्वसमानाधिकरण

---

१. प्रत्येकं द्वादशत्वं. क.

सप्तमी। उपसदहानां त्रयाणामह्नां सुत्याधिकरणत्वाभावात्, उपसदहेष्वतीतेष्वेव सुत्याप्रवृत्तेः। भाष्यादिषु तु चतुरहेष्वित्युक्तम्, तदयुक्तम्। तन्मते हि किं चतुरहे अतीत इति विवक्षितम्? उत चतुरहे अधिकरणे? इति। नाद्यः; प्रकृतौ त्रिषूपसदहेष्वतीतेषु चतुर्थेऽहन्येव सुत्याविधानात्। "तिस्र उपसदश्चतुर्थेऽहनि सुत्या" इति हि श्रूयते। अत एव न द्वितीयः; अतः प्रकृतौ इयत्यह इत्यस्य त्र्यहे द्व्यह इत्येव व्याख्यानं साधु। तदिदमुपसत्कालं सुब्रह्मण्याह्वानं द्वादशाहे चोदकतः प्राप्तं द्वादशानामपि सुत्यानां तन्त्रम्, न तु प्रतिसुत्यमावर्तत इति पूर्वपादे व्यवस्थापितम्। तत्र तन्त्रेण क्रियमाणे विचार्यते—किं सर्वेषामह्नां पृथक्पृथगुपलक्षणम्, 'गौतम ब्रुवाण" इत्यन्तमुक्त्वा द्वादशाहे त्रयोदशाहे चतुर्दशाहे इत्यादित्रयोविंशाह इत्यन्तमनुक्रम्य "आगच्छ मघवन्" इत्यादिनिगदशेषो वक्तव्यः [इति प्रथमायामुपसदि] द्वितीयायान्तु एकादशाह इत्यादि द्वाविंशाह इत्यन्तम्, तृतीयायान्तु दशाह इत्यादि एकविंशाह इत्यन्तम्, चतुर्थ्यान्तु नवाह इत्यादि विंशाह इत्यन्तमित्यादियथोचितमूह्यम्। एकादश्यामुपसदि द्व्यह इत्यादि त्रयोदशाहमित्यन्तमिति सम्पद्यते। द्वादश्यान्तूपसदि श्वो द्व्यहे त्र्यह इत्यादि द्वादशाह इत्यन्तमिति विशेषः। तत्राध्रिगुप्रैषे "एकधास्य त्वचमाच्छयतात्" इत्यत्रैकधाशब्दस्य बहुषु पशुषु एकधैकधैषामितिवदित्यह इत्यत्राहश्शब्दस्याभ्यासात्मकमूहं कृत्वा तन्त्रेण सुब्रह्मण्यानिगदपाठः फलतीति? आहोस्विदहश्शब्दस्य सकृदेव प्रयोगः, द्वादशाहे सुत्यामागच्छेति प्रथमायामुपसदि द्वितीयायामेकादशाह इति तृतीयायां दशाह इत्यादि? तत्र पूर्वपक्षयति—

## सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादावाहनवत्॥ १८॥

द्वादशाहे सुत्याविवृद्धौ सुब्रह्मण्यायामुपसत्काले सुब्रह्मण्याह्वाने सर्वेषां सुत्याहानामुपलक्षणं कर्तव्यम्—द्वादशाह एकादशाह इत्यादि। कुतः? प्रकृत्यन्वयात्—प्रकृतितः सर्वेषामह्नामुपलक्षणस्य प्राप्तेः। प्रकृतौ तावत् सौत्यमहरुपलक्षितम्। सर्वाणि चैतानि सौत्यान्यहानि तत्प्रकृतीनि। तत्र द्वादशाहे सुत्यामित्युक्ते प्रथमैव सुत्योपलक्षिता स्यात्, नेतराः। अत ऊहेन सर्वास्सुत्या उपलक्षणीयाः। आवाहनवत्। तद्यथा—"आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायां

स्पर्धमानाः” इत्यत्राग्नेर्देवताया एकत्वेऽपि ‘अग्निमावह, सोममावहाग्निमावह’ इति पृथगावाहनं क्रियते, चोदनाभेदेन कर्मभेदात्। तद्वदिहापि सुत्याभेदाद् भेदेन तदुपलक्षणमिति प्राप्ते, सिद्धान्तयति—

**अपि वेन्द्राभिधानत्वात् सकृत्स्यादुपलक्षणं कालस्य लक्षणार्थत्वादविभागाच्च ॥ १९ ॥**

अपि वेति पूर्वपक्षव्यावृत्तौ। तन्त्रेण क्रियमाणे सुब्रह्मण्याह्वाने उपसत्कालके सुत्याह्वानां पृथगुपलक्षणमिति न भवति, किन्तु सुत्याह्वानामुपलक्षणम्—अभिधानं सकृदेव स्यात्, सुत्यामिति सकृदुच्चरितेनैव सुत्याशब्देन सुत्यात्वाभिप्रायकेण सर्वेषां सुत्यानामभिधानसिद्धेः। ननु भवेदेवं यदि केवलसुत्याशब्दस्स्यात्। चतुरहे सुत्यामित्यादि प्रकृतौ स्थितम्। ततश्च प्रथमायामुपसदि द्वादशाहे सुत्यामित्युक्ते प्रथमैव सुत्योपलक्षिता स्यात्, न द्वितीयाद्याः। अतः पृथगेवोपलक्षणं युक्तमित्यत्राह[1]-इन्द्राभिधानत्वादिति। करणे ल्युट्। निगदस्येन्द्राभिधायकत्वात्। सुब्रह्मण्यानिगदे हीन्द्रोऽभिप्रेतः, न तु सुत्या। तथा सत्यदृष्टार्थत्वापातात्। यागसमवेतेन्द्राभिधाने तु दृष्टार्थता भवति। ततश्चेन्द्रस्यावाहन[2]संस्कार्यत्वेन विवक्षितत्वात्तस्य चैकत्वेन सकृदाह्वानेनैव संस्कारसिद्धेर्न पृथक् सुत्योपलक्षणम्। नन्वेवं सति ‘इत्यहे सुत्याम’ इत्यनर्थकम्, तत्राह—कालस्य लक्षणार्थत्वादिति। इत्यह इति कालानुक्रमणस्य निमित्तसप्तमीवशेन सुत्यायामिन्द्रागमन[3]ज्ञापनार्थत्वात्। इन्द्रागमनज्ञापनश्चैकेना-प्युपसदहेन सम्भवतीति प्रथमायामुपसदि द्वादशाहे सुत्यामिति सकृदेव वक्तव्यम्, तावतैवेन्द्रस्याह्वानसंस्कारसिद्धेः। न च प्रथमायामुपसदि कदाचिदेकादशाह इति कदाचिद्दशाह इत्येवमन्यतमेन द्वितीयाद्युपसदहेनापि तदुपलक्षणं स्यात्, विनिग-मनाविरहादिति वाच्यम्, प्रथमस्यैव कपिञ्जलाधिकरणन्यायेन विनिगमकत्वात्। ततश्च प्रथमायामुपसदि द्वादशाहे सुत्यामिति सकृदाह्वानम्, द्वितीयतृतीयादौ तूपसदि एकादशाहे दशाह इत्यादि ज्ञेयम्। अथ यदुक्तमावाहनवदिति, तत्राह—अविभागाच्चेति। तुशब्दार्थश्चकारो वैषम्ये। “आग्नेयं कृष्णग्रीवमालभेत” इत्युदा-

---

१. इत्यत आह. क.

२. आह्वान. क.

३. अभिगमन. क.

हृतत्रिकेऽग्नेरेकत्वेऽपि आग्नेययोस्सौम्येन व्यवहितत्वात् कालतो विशेषग्रहणात् पृथगेवावाहनं युक्तम्, इह तु न तथा। कुतः? अविभागात्—सुत्यानामव्यवेतत्वात्। ततश्च विशेषग्रहणाद् द्वादशाहे सुत्यामित्यादि यथोचितं सकृदेव सुत्योपलक्षणमिति॥

## इति षष्ठं द्वादशाहे सुब्रह्मण्याह्वानस्य तन्त्रताधिकरणम्॥ ६॥

७

अग्नीषोमीयपशौ तावत् सन्ति पशोरङ्गानि श्रपणीयानि—वपा हृदयं जिह्वा वक्षो यकृद्वृक्यौ सव्यदक्षिणे दोषणी उभे पार्श्वे सव्यदक्षिणे श्रोणी गुदमिति। तत्र जिह्वादीनि द्वादशाङ्गानि कुम्भ्यामवधाय शामित्रे श्रप्यन्ते। हृदयन्तु शूलाख्येन तीक्ष्णाग्रकाष्ठेनोपतृद्य शामित्र एव श्रप्यते। वपा तु वपाश्रणीभ्यां काश्मर्यमयीभ्यां विशाखात्मकाभ्यामाहवनीये श्रप्यते। तदिमाः कुम्भीशूलवपाश्रपण्यो वाजपेयिकप्राजापत्यपशुषु एकदेवत्येषु किं प्रतिपशु भिद्यन्ते? उत तन्त्रम्? इति संशये, प्रधानभेदात् कुम्भ्यादिभेदे प्राप्ते, सिद्धान्तयति—

**पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात्तन्त्राभावस्स्यात् ॥२०॥**

एकदेवत्यपशुगणे कुम्भ्यादीनां तन्त्रत्वमेव स्यात्। कुतः? प्रभुत्वात्—शक्तत्वात्। शक्नोति हि एका स्थूला कुम्भी बहूनां पशूनामङ्गानि श्रपयितुम्, शूलञ्च हृदयाणि बहूनि श्रापयितुम्, वपाश्रापण्यौ च बह्वीर्वपाः श्रपयितुम्। ततश्च शामित्रादिवत् कुम्भ्यादीनि तन्त्रमिति सुहृदुपदेशोऽयमुत्तरविवक्षया॥

## इति सप्तमं पशुगणे कुम्भ्यादीनां तन्त्रताधिकरणम्॥ ७॥

८

सन्ति भिन्नदेवत्या एकादशिनाः पशवः "आग्नेयः कृष्णग्रीवः, सारस्वती मेषी, बभ्रुः सौम्यः, पौष्णश्श्यामः, शितिपृष्ठो बार्हस्पत्यः, शिल्पो वैश्वदेवः, ऐन्द्रोऽरुणः, मारुतः कल्माषः, ऐन्द्राग्नः संहितोऽधोरामः सावित्रः, वारुणः पेत्वः" इति। तत्र सारस्वतीं मेषीं विना सर्वे छागाः। पेत्वो मेष इति केचित्। पातितवृषणश्छाग इत्यपरे। तत्र जातिभेदे कुम्भ्यादिभेदोऽग्रिमाधिकरणे व्यवस्थापयिष्यते। अतो

मेषजातेश्छागजातेश्च कुम्भ्यादिभेदस्सिद्धः। आग्नेयादिषु छागेष्वेकजातीयेषु चिन्त्यते किं कुम्भ्यादीनि तेषु भिद्यन्ते ? उत तन्त्रम् ? इति। तत्र पूर्वपक्षयति—

**भेदस्तु सन्देहाद्देवतान्तरे स्यात् ॥ २१ ॥**

तुशब्द एकदेवत्यपशुगणतो वैषम्यद्योतनार्थः। देवतान्तरे देवताभेदे सति कुम्भ्यादीनां भेदस्स्यात्, न तु तन्त्रता। कुतः ? सन्देहात्-एकस्मिन्नेव हि कुम्भ्यादौ बहूनां पशूनामङ्गेषु श्रप्यमाणेषु[2] अवदानसमये भेदेन तत्तत्पशोरङ्गान्यवदातुं प्रवृत्तस्य कस्या देवताया अङ्गमित्यज्ञानात् कदाचिदन्यस्यापि पशोरन्यस्यै देवतायै अवदीयेत। अतः कुम्भ्यादीनि भिद्यन्ते ॥

सिद्धान्तयति—

**अर्थाद्वा लिङ्गकर्म स्यात् ॥ २२ ॥**

वाशब्दः पक्षव्यावृत्तौ[3]। एकजातीयभिन्नदेवत्यपशुगणे कुम्भ्यादीनि भिद्यन्त इति न भवति। किन्तु तन्त्रतैव स्यात्। कुतः ? सहप्रयोगात्। अथ यदुक्तं कुम्भ्याद्येकत्वेऽवदानसन्देहस्स्यादिति, तत्राह—अर्थाल्लिङ्गकर्म स्यादिति। अर्थात्—अवदानभेदज्ञानलक्षणकार्यवशात् तत्तत्पश्वङ्गानां लिङ्गकर्म—चिह्नकरणं स्यात्। तेनावदानभेदश्शक्यते विज्ञातुम्[4]। अतस्तन्त्रमेव कुम्भ्यादीनि ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**अभाज्यत्वाद्वसानां भेदस्स्यात् स्वयाज्याप्रदानत्वात् ॥ २३ ॥**

कुम्भ्यादीनां भेद एव स्यात्। तन्त्रत्वे चिह्नकरणेनावदानभेदसंशयनिवृत्तावपि वसासन्देहस्य दुर्निवारत्वात्। कुतः ? अभाज्यत्वाद्वसानाम्—वसास्तावदविभाज्याः, अत्यन्तसंसृष्टत्वात्। अतश्चिह्नकरणेनापि तद्भेदो न ज्ञातुं शक्येत। ननु सन्तु वसा अविभाज्याः, तथापि का हानिरित्यत आह—स्वयाज्याप्रदानत्वादिति। प्रकृतौ तावत् "याज्यार्धर्चान्ते वसां जुहोति" इति श्रुतम्। तत्र यस्य पशोर्या वसा तद्याज्यार्धर्चान्ते हुता, एवमिहापि भवितव्यम्। न संसृष्टासु

---

१. दुर्निवारविषयः ग.

२. गृह्यमाणेषु. ग.

३. व्यावर्तकः. ग.

४. ज्ञातुम्. क.

वसासु तथा सम्भवति। आग्नेययाज्यार्धर्चान्ते तदीयवसाहोमे क्रियमाणे तदितरसर्ववसानामपि प्रक्षेपस्यावर्जनीयत्वात्। तस्मात् कुम्भ्यादीनां भेद एवोचितः। अयाज्यत्वादिति पाठेऽपि वसानामत्यन्तं संसृष्टत्वेनाविभाज्यतया होमानर्हत्वादित्यर्थः। कथं होमानर्हत्वम्? स्वयाज्याप्रदानत्वात्। [१]उक्तोऽर्थः॥

सिद्धान्ती परिहरति—

**अपिवा प्रतिपत्तित्वात्तन्त्रं स्यात् स्वत्त्वस्याश्रुतिभूतत्वात्॥ २४॥**

अपिवेति पक्षव्यावृत्तौ। कुम्भ्यादीनि भिद्यन्त इति न भवति। किन्तु तन्त्रमेव। कुतः? प्रतिपत्तित्वात्—हृदयजिह्वादीनि प्रधानद्रव्याणि, वसास्तु तदनुनिष्पादिन्यः प्रतिपत्तिभूतद्रव्याणि प्रयोजयितुमनीशानास्तद्धारणार्थपात्रभेदं कुतस्तरां प्रयोजयितुमीशते। यदुक्तमन्ययाज्यार्धर्चान्तेष्वपि वसा [२]हूयेरन्निति, तत्राह—स्वत्त्वस्याश्रुतिभूतत्वादिति। यदि स्वयाज्यार्धर्चान्ते वसां जुहोतीति-स्वत्त्वं श्रूयेत, तर्हि स्वशब्दोपादानसामर्थ्यात्स्वयाज्यान्त एव होतव्या, न तु परयाज्यान्त इति लभ्येत। याज्यान्त इत्येव श्रुतम्, न तु स्वत्त्वमपि। तस्मादन्यपशुवसाहोमे क्रियमाणे नान्तरीयक इतरवसाहोमो न दोषाय, न चाभ्युदयाय॥

नन्वेवं सति सकृदेव वसाहोमस्स्यात्, प्रथमयाज्यार्धर्चान्त एव, न तु प्रतिपशु स्यात्। सकृद्धोमेनैव सर्वासां वसानां याज्यार्धर्चान्ते होमलाभात्, स्वत्त्वस्याश्रुतत्वेन स्वयाज्यान्त एवेति परिसङ्ख्याया अभावादित्याशङ्क्य निराकरोति—

**सकृदिति चेन्न कालभेदात्॥ २५॥**

सकृदेव वसाहोमस्स्यादिति चेत्तन्न; कुतः? कालभेदात्—"याज्यार्धर्चान्ते वसां जुहोति" इत्यत्र निमित्तसप्तमी, [३]अधिकरणार्थस्यासम्भवात्। निमित्तावृत्तौ च नैमित्तिकावृत्तिर्युक्ता। तस्मात्प्रतियाज्यार्धर्चान्ते वसाहोमः। परन्तु संसृष्टत्वेनावर्जनीयत्वादन्यदीयवसा अप्यन्यत्र हूयन्ते। अतः कुम्भ्यादीनि तन्त्रम्। यद्यपि

१. उक्तमर्थं सिद्धान्ती परिहरति. ग.
२. संसृज्येरन्. क.
३. इत्यधिकरणार्थस्य. ग.

पूर्वपादे 'कालभेदे त्वावृत्तिर्देवताभेदे' इत्यधिकरणेऽयमर्थः प्रपञ्चितः, तथापि मन्द-बुद्धिं प्रति तदविस्मरणाय पुनरिदं सूत्रं प्रवृत्तमिति ध्येयम् ॥

इत्यष्टमं भिन्नदेवताकसमानजातीयपशुगणे कुम्भ्यादीनां तन्त्रताधिकरणम् ॥८॥

९

एकादशिनीषु सारस्वती मेषी, इतरे छागाः। तत्र छागानामेकजातीयानां कुम्भ्यादीनि तन्त्रमिति स्थितम्। इदानीं मेष्याश्छागानाञ्च किं कुम्भ्यादीनि तन्त्रम्? उत भिद्यन्ते? इति चिन्त्यते। तत्र पूर्वाधिकरणन्यायेन तन्त्रत्वे प्राप्ते, सिद्धान्तयति–

**जात्यन्तरेषु भेदस्स्यात्पक्तिवैषम्यात् ॥ २६ ॥**

विजातीयेषु पशुषु कुम्भ्यादीनां भेदस्स्यात्, न तु तन्त्रता। कुतः? पक्तिवैष-म्यात्—चिरकालपाच्यानि छागमांसानि, मेषमांसानि स्वल्पकालपाच्यानि। यावता कालेन छागमांसानि पच्यन्ते, तावति काले मेषमांसानि विलीयेरन्, यावता वा कालेन मेषमांसानि पच्यन्ते, तावति छागमांसान्यशृतानि स्युः। अतो जातिभेदे पाकवैषम्यात् कुम्भ्यादीनि भिद्यन्ते ॥

उक्तोऽर्थः श्रुतिसम्मत इत्याह—

**वृद्धिदर्शनाच्च ॥ २७ ॥**

सौत्रामण्यां विजातीयाः पशवः—"आश्विनं धूम्रमालभते सारस्वतं मेष-मैन्द्रमृषभम्" इति। तत्र "शूलैश्च मासरेण चावभृथमभ्यवयन्ति" इति शूलबहुत्वं दृश्यते। तदेतत् स्थालीपुलाकन्यायेन कुम्भ्यादीनां भेदे लिङ्गं भवति। अतस्सर्वत्र विजातीयपशुगणे कुम्भ्यादीनि भिद्यन्ते ॥

इति नवमं विजातीयपशुगणे कुम्भ्यादीनामतन्त्रताधिकरणम् ॥ ९ ॥

१०

अस्त्यश्वप्रतिग्रहेष्टिः—"यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्क-पालान्निर्वपेत्" इति। यदा बहुष्वश्वेषु प्रतिगृहीतेषु बहवः पुरोडाशाः क्रियन्ते, तदा किं सर्वेषां पुरोडाशानामेकमेव कपालचतुष्कम्? उत प्रतिपुरोडाशं कपालचतुष्कं भिद्यते? इति संशये, पूर्वपक्षयति—

**कपालानि च कुम्भीवत्तुल्यसङ्ख्यानाम् ॥ २८ ॥**

चशब्दस्समुच्चये। अश्वसङ्ख्यातुल्यसङ्ख्याकानां वारुणपुरोडाशानामपि प्राजापत्यपशुकुम्भीवत्कपालचतुष्कमेकमेव, न तु भिद्यते। एकस्मिन् दीर्घकपाल-चतुष्के प्रदेशभेदेन सर्वेषां पुरोडाशानां श्रपणसम्भवात् ॥

सिद्धान्तयति—

**प्रतिप्रधानं वा प्रकृतिवत् ॥ २९ ॥**

वाशब्दः पक्षव्यावृत्तौ। सर्वेषां पुरोडाशानामेकमेव कपालचतुष्कमिति न भवति, किन्तु प्रतिपुरोडाशं भिद्यते, प्रकृतिवत्। प्रकृतौ हि प्रतिपुरोडाशं कपालानि भिन्नानि, तद्वदिहापि चोदकानुग्रहाय भाव्यम् ॥

किञ्च—

**सर्वेषाञ्चाभिप्रथनं स्यात् ॥ ३० ॥**

"यावत्कपालं पुरोडाशं प्रथयति" इति प्रकृतौ श्रुतम्। अन्यूनानतिरेकेण यथा सर्वाणि कपालानि व्याप्नोति तथा प्रथयतीत्यर्थः। तदेतच्चोदकतः प्राप्तं कपाल-चतुष्कस्य तन्त्रतायां न घटते। तस्मादपि प्रतिपुरोडाशं कपालचतुष्कं भिद्यते ॥

इति दशममश्वप्रतिग्रहेष्टौ कपालानामतन्त्रताधिकरणम् ॥ १० ॥

११

अस्ति दर्शपूर्णमासयोरवघातमन्त्रः—"अव रक्षो दिवस्सपत्नं वध्यासम्" इति। मुसलेन व्रीहीणां प्रहरणमवहननम्। तच्चातण्डुलनिष्पत्तेरभ्यस्यत इति प्रथम-पादे निर्णीतम् 'क्रियाणामर्थशेषत्वात् प्रत्यक्षोऽतस्तन्निवृत्या अपवर्गस्स्यात्' इत्यत्र। तत्र किं प्रतिप्रहारं मन्त्रो भेदेन प्रयोक्तव्यः? उत सर्वादौ सकृत्? इति संशये पूर्वपक्षमुत्थाप्य निराकरोति—

**एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वं तस्मिन्मन्त्रार्थ-नानात्वादावृत्तौ मन्त्रस्य सकृत्प्रयोगस्स्यात् ॥ ३१ ॥**

आवृत्ताविति 'षष्ठी चानादरे' इति सप्तमी, चकारेण सप्तम्या अनुकर्षणात्। रुदति रुदतो वा प्राव्राजीदिति यथा। रुदन्तं पुत्रादिकमनादृत्य सन्यस्तवा-

नित्यर्थः। तस्मिन्मन्त्रार्थनानात्वादावृत्ताविति पूर्वपक्षपरम्। तस्मिन्-संस्कारकर्मणि, अवहनने मन्त्रार्थस्य-मन्त्रप्रकाश्यस्यावहननस्य नानात्वाद् भेदाद् गुणभूतमन्त्रस्यापि प्रत्यवघातं प्राप्तामावृत्तिमनादृत्य सकृदेव प्रयोगस्स्यात्। कुतः? द्रव्ये-व्रीह्यादौ संस्काराणाम्-अवहननानाम्, एककर्मत्वमातण्डुलभावाद्व्याख्यातम्-पञ्चमस्य द्वितीये 'सर्वेषां त्वैककर्म्यादेतेषाञ्च तद्गुणत्वात्' इत्यत्र। तत्र यद्यपि 'मुष्टिकपालावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन' इति पूर्वपक्षसूत्रे चतुर्मुष्टिनिर्वापादीन्येवानुक्रान्तानि, न त्ववहननानि, तथापि तुल्यन्यायत्वादवहननानामप्यैककर्म्यं तत्र व्याख्यातप्रायमित्यर्थः।

अयमाशयः—"व्रीहीनव (हन्ति" इत्यत्रावघातकरणकतण्डुलभावना विधीयते। तच्छेषत्वादयं मन्त्रस्तण्डुलभावनां प्रति करणीभवतोऽवघातस्याङ्गं विज्ञायते। न च तद्रूपस्येहावृत्तिरस्ति, प्रति ) प्रहारं भेदेन तण्डुलभावस्यानिष्पत्तेः। साभ्यासेनैव च तन्निष्पत्तेः तस्य चाभ्यासस्यावृत्तेरभावात्, सकृदेव मन्त्रः। यद्यपि 'सर्वेषां त्वैककर्म्यादेतेषाञ्च तद्गुणत्वात्' इति पाञ्चमिकाधिकरणन्यायेनावहननानामेककर्मत्वसिद्धेरत्र पूर्वपक्षानुत्थितिः, तथापि तस्यैवाधिकरणस्य फलान्तरप्रदर्शनपरमिदमधिकरणमित्यदोषः॥

इत्येकादशं दर्शपूर्णमासयोरवघातमन्त्रस्य सकृदनुष्ठानाधिकरणम्॥ ११॥

१२

सन्ति राजसूये देवसुवांहवींषि नानाधान्यकानि सहप्रयोज्यानि—"अग्नीषोमीयस्य पशुपुरोडाशमन्वष्टौ देवसुवां हवींषि निर्वपत्यग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाम्, सोमाय वनस्पतये श्यामाकं चरुम्, सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणाम्" इत्यादीनि। तत्र किं सर्वेषामवघातमन्त्रस्तन्त्रम्? उत प्रतिबीजमावर्तेत? इति संशये, सर्वबीजतण्डुलीभावमुद्दिश्य सर्वेषामवघातस्य चिकीर्षितत्वात्सकृदेव मन्त्र इति प्राप्ते, सिद्धान्तयति—

() गपुस्तके ग्रन्थपातः.

**द्रव्यान्तरे कृतार्थत्वात्तस्य पुनःप्रयोगान्मन्त्रस्य तद्गुणत्वात् पुनःप्रयोगस्स्यात्तदर्थेन विधानात् ॥ ३२ ॥**

द्रव्यान्तरे—द्रव्यभेदे सति, अवघातमन्त्रस्य पुनः प्रयोगस्स्यात्—प्रतिप्रधानं भेदेन प्रयोगस्स्यात्। कुतः? कृतार्थत्वात्—प्रकृतौ सर्वेषां सहावघातश्चोदितः। "तानि सहावघ्नन्ति" इति। स तावन्नानाबीजेष्वसम्भवात् प्रत्येकं निविशते। ततश्च प्रत्येकं तण्डुलीभावस्य चिकीर्षितत्वात्तण्डुलभावनाकरणभूतोऽवघातोऽपि प्रत्येकमेव चिकीर्षितः। ततश्च पूर्वस्मिन् बीजे कृतस्यावघातस्य तत्तण्डुलभावनया कृतप्रयोजनत्वात् बीजान्तरे तत्तण्डुलभावाय पुनस्तस्यावघातस्य प्रयोगः। ततश्च मन्त्रस्यापि तद्गुणत्वात् तण्डुलीभावान्तरकरणावघातगुणत्वात् पुनः प्रयोगस्स्यादवघातमन्त्रस्य तदर्थेन—तण्डुलभावनाकरणभूतावघातार्थत्वेन विधानात्। [1]अतः प्रतिबीजमवघातमन्त्र आवर्तते।

वस्तुतस्तु नानाबीजेषु सर्वेषामवघातो नैकस्मिन काले, एकस्मिन्नुलूखले नानाबीजानां युगपदवहन्तुमशक्यत्वात्। उलूखले हविष्यान् प्रक्षिप्यावहत्य शूर्पे समोप्य[2] परापूय विविच्य तण्डुलान् पात्र्यां प्रस्कन्दयतीत्यन्तमेकस्य बीजस्य कृत्वा बीजान्तरस्योलूखले प्रक्षेपणादि पात्र्यां तण्डुलप्रस्कन्दनान्तमित्युक्तम्—'नानाबीजेष्वेकमुलूखलं विभवात्' इत्यत्र। अतः प्रतिबीजमवघातस्य भिन्नकालकतया गृह्यमाणविशेषत्वात् 'हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्यावृत्तिः कालभेदात् स्यात्' इत्यधिकरणन्यायेन() प्रति बीजमवघातमन्त्रावृत्तेस्सिद्धत्वादेतदाधिकरणप्रवृत्तिश्चिन्त्यप्रयोजना ॥

इति द्वादशं नानाबीजेष्ववघातमन्त्रस्यावृत्त्यधिकरणम् ॥ १२ ॥

१३

दर्शपूर्णमासयोः श्रूयते—"चतुरो मुष्टीन्निर्वपति" "देवस्य त्वेति निर्वपति" इति। तत्र संशयः—किं मन्त्रस्य सकृत्प्रयोगः? उत प्रतिमुष्टि? इति। तत्रैव श्रूयते—"अयुङ्गायुङ्गान्मुष्टीन् लुनोति" "आच्छेत्ता ते मारिषमित्याच्छिनत्ति" इति। तत्र किं

१. अत एव. क.

२, समारोप्य. ग.

मन्त्रस्य सकृत्प्रयोगः ? उत प्रतिमुष्टि ? इति संशयः। तत्रैव श्रूयते—( "बर्हिषा वेदिं स्तृणाति त्रिधातु पञ्चधातु वा स्तृणाति" इति। तत्र किं मन्त्रस्य सकृत्प्रयोगः ? उत प्रतिधातु ? इति संशयः।) तत्रैव श्रूयते—"आज्यं गृह्णाति" "शुक्रं त्वा शुक्रियामिति—चतुर्जुह्वां गृह्णाति" इति। तत्र किं सकृन्मन्त्रः ? उत प्रतिग्रहणम् ? इति संशयः। तत्र पूर्वपक्षयति—

**निर्वपणलवनास्तरणाज्यग्रहणेषु चैकद्रव्यवत्प्रयोजनैकत्वात् ॥३३॥**

निर्वपणादिषु चैकद्रव्यवत्-एकद्रव्यसंस्कारावहननमन्त्रवत् सकृत्प्रयोगस्स्यादित्यर्थः। कुतः ? प्रयोजनैकत्वात्—चतुर्णामपि [1]निर्वपणानामेकं प्रयोजनं यागार्थतया परिग्रहणम, न ह्येकेन [2]परिग्रहणेन दैवतसौविष्टकृतावदानादिपर्याप्तपुरोडाशस्य निष्पत्तिस्सम्भवति। अतोऽवहननवत् चतुर्णामपि निर्वपणानामेककर्मत्वात्सकृन्मन्त्रः। लवनानामपि वेदिस्तरणपर्याप्तबर्हिस्सम्पत्तिः प्रयोजनम्। स्तरणानाञ्च वेदेराच्छादनम्। जुह्वामाज्यग्रहणस्य प्रयाजनिष्पत्तिः एतानि च प्रयोजनान्येकैकेन लवनादिना नोपपद्यन्ते। किन्तु साभ्यासलवनादिभिरिति तेषामप्यवहननवदेककर्मत्यात्सकृन्मन्त्र इति प्राप्ते, सिद्धान्तयति—

**द्रव्यान्तरवद्वा स्यात् तत्संस्कारात् ॥ ३४ ॥**

वाशब्दः पक्षव्यावृत्तौ द्रव्यान्तरवत्-द्रव्यभेदवत्। सप्तम्यन्ताद्वतिः। नानाबीजेष्ववघातमन्त्रवन्निर्वपणादिमन्त्राणामावृत्तिस्स्यात्, न तु सकृत्प्रयोग इत्यर्थः। कुतः ? तत्संस्कारात्—अवहननैस्त एव व्रीहयोऽवहन्यन्ते [3]ततश्च सकृत्प्रयुक्तेनैव मन्त्रेण सर्वव्रीहीणां समन्त्रकावघातलाभान्न मन्त्रस्य पुनः प्रयोग इति युक्तम्। निर्वापादिषु तु अन्येऽन्ये व्रीहिमुष्टयो दर्भमुष्टयो धातव आज्यञ्च प्रतिमुष्टि निर्वापं प्रतिलवनं प्रतिस्तरणं प्रतिग्रहणञ्च निरूप्यन्ते, लूयन्ते, स्तीर्यन्ते, गृह्यन्ते च। ततश्च यत्रैव मन्त्रः प्रयुक्तः तस्यैव तत्संस्कारलाभात् सर्वेषां तल्लाभाय प्रतिमुष्ट्यादि पुनर्मन्त्रप्रयोग इति ॥

() गपुस्तके ग्रन्थपातः.

१. निर्वापाणां. क.

२. निर्वपणेन. ग.

३. तत्र. ग.

अत्रेदं चिन्त्यम्—एवं सति चतुर्थेऽपि निर्वापे मन्त्रः प्राप्नोति, न चेष्टापत्तिः; "त्रिर्यजुषा तूष्णीं चतुर्थम्" इति तैत्तरीयकवाजसनेयकादिश्रुतिविरोधात्। न च वचनात्तत्र मन्त्रनिवृत्तिः, तर्हि वचनादेव त्रिर्मन्त्रस्यापि[1] प्राप्तेस्सकृन्मन्त्रप्रयोग इति पूर्वपक्षस्यानुन्मेषात्। एवमाज्यग्रहणेऽपि त्रिस्सकृद्वा मन्त्रप्रयोगो वाजसनेयशाखायामाम्नातः—"त्रिरेव यजुषा गृह्णीयात् सकृदेव यजुषा गृह्णीयात्" इति। अतस्सूत्रेऽस्मिन्मुष्ट्याज्यग्रहणपदे सम्पातायाते, 'वचनादाज्ये' 'मुष्टौ चोत्तमे' इत्येव कात्यायनः॥

इति त्रयोदशं निर्वापादिष्वसकृन्मन्त्रप्रयोगाधिकरणम्॥ १३॥

१४

दर्शपूर्णमासयोः श्रूयते—"वेदिरसि बर्हिषे त्वेति वेदीस्त्रिः प्रोक्षति" इति। तत्र किं मन्त्रः प्रतिप्रोक्षणमावर्तते? उत सर्वादौ सकृत्? इति संशये, पूर्वपक्षयति—

**वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनः प्रयोगात्॥ ३५॥**

वेदिप्रोक्षणे प्रतिप्रोक्षणं मन्त्रावृत्तिस्स्यात्। कुतः? कर्मणः पुनः प्रयोगात्—प्रोक्षणस्य भेदेन प्रयोगात्। अवहननवदत्र प्रोक्षणानामेककर्मत्वं न सम्भवति, "त्रिः प्रोक्षति" इति सङ्ख्यया तद्भेदस्य स्पष्टमवगमात्। प्रोक्षणस्य च भेदे सति तदर्थमन्त्रस्यापि भेदो युक्तः, प्रधानावृत्तौ गुणावृत्तेर्न्याय्यत्वादिति प्राप्ते, सिद्धान्तयति—

**एकस्य वा गुणविधिर्द्रव्यैकत्वात्तस्मात् सकृत्प्रयोगस्स्यात्॥ ३६॥**

वाशब्द एवार्थे। द्रव्यसंस्कारप्रोक्षणस्यैकस्यैव विधिः। त्रिः प्रोक्षतीत्यत्र हि न त्रीणि प्रोक्षणान्यवगम्यन्ते, किन्त्वेकस्यैव प्रोक्षणस्य त्रिरावृत्तिर्गुणो विधीयते। त्रिरित्यस्य सुच्प्रत्ययान्तत्वात्, 'सङ्ख्यायाः क्रियाभ्यावृत्तिगणने' इत्यावृत्तौ 'द्वित्रिचतुर्भ्यस्सुच्' इति तद्विधानात्। ततश्च "वेदिरसीति त्रिः प्रोक्षति" इत्यत्र मन्त्रवदावृत्तिमच्च प्रोक्षणमेकमेवावगतम्। तत्र मन्त्रस्य प्रोक्षण एवान्वयः,

---

१. मन्त्रप्रयोगस्स्यादिति प्राप्ते. ग.

न तु त्रिरित्यावृत्तौ, प्रधानान्वयस्याभ्यर्हितत्वात्, 'गुणानाञ्च परार्थत्वादसम्बन्धस्समत्वात्स्यात्' इति न्यायाच्च । तस्माद्वेदिप्रोक्षणमन्त्रस्य सकृदेव प्रयोगस्स्यात् ॥

इति चतुर्दशं वेदिप्रोक्षणमन्त्रस्य सकृत्प्रयोगाधिकरणम् ॥ १४ ॥

१५

ज्योतिष्टोमे श्रूयते—"विषाणे विष्यैतं ग्रन्थिं यदस्य गुल्फितं हृदि मनो यदस्य गुल्फितमित्यङ्गानि कृष्णविषाणया कण्डूयते" इति । तत्र यदानेकस्मिन्नङ्गे युगपत्कण्डूरुत्पद्यते किं तदा प्रत्यङ्गं मन्त्रः ? उत सकृत् ? इति संशये, पूर्वपक्षयति—

**कण्डूयने प्रत्यङ्गं कर्मभेदात्स्यात् ॥ ३७ ॥**

अनेकस्मिन्नङ्गे युगपत्कण्डूयने प्रत्यङ्गं मन्त्रस्स्यात् । कुतः ? कर्मभेदात् । प्रत्यङ्गं हि कण्डूयनकर्म भिद्यते । तद्भेदे च तदर्थमन्त्रस्यापि भेदो न्याय्यः । कण्डूयनापनेयस्य दुःखस्य कण्डूयनीयस्याङ्गस्य च भेदाच्च । एवं हि सकृन्मन्त्रप्रयोगे सति यस्मिन्नङ्गे मन्त्रः प्रयुक्तः तदर्थस्स इति विशेषग्रहणादङ्गान्तरे मन्त्रप्रयुक्तसंस्कारलोपस्स्यात् । अतः प्रत्यङ्गं कण्डूयनमन्त्र इति प्राप्ते—

सिद्धान्तयति—

**अपि वाचोदनैककालमैककर्म्यं स्यात् ॥ ३८ ॥**

अपिवेति पक्षव्यावृत्तौ । प्रत्यङ्गं कण्डूयनमन्त्र इति न भवति । किन्तु ऐककर्म्यं स्यात्—एकं कर्म मन्त्रप्रयोगरूपं यस्य कण्डूयनजातस्य तदेककर्म, तस्य भाव ऐककर्म्यम् । सकृन्मन्त्रप्रयोगस्स्यादिति यावत् । कुतः ? एककालं यतः, कण्डूयनापनेयं कण्डूदुःखमेककालकम् । अतस्तदपनयनार्थानां कण्डूयनानां युगपच्चिकीर्षिततया तत्र प्रयुक्तस्य मन्त्रस्यागृह्यमाणविशेषत्वात्तन्त्रता । न च कण्डूयनीयानामङ्गानां भिन्नत्वादस्ति विशेषग्रहणम्, तत्राह अचोदनेति । न ह्यत्र कण्डूयनं विधीयते, येन कण्डूयनसंस्कार्यत्वमङ्गस्य स्यात्, अङ्गभेदे च मन्त्रभेदस्स्यात् । किन्त्वर्थप्राप्ते कण्डूयने कृष्णविषाणं नियम्यते । कण्डूयनञ्च कण्ड्वाख्यदुःखापनयनार्थम् । दुःखापनयनञ्चात्मनः, न शरीरस्य, तस्यात्मधर्मत्वात्, अवच्छेदकमात्रं हि शरीरम् । ततश्चात्मानं कण्डूदुःखरहितं कर्तुं कण्डूयनं क्रियते । युगपत्कालकेषु च कण्डूदुःखेषु यावता दुःखेनानपनीतेन [न] दुःखमपैति तावत् सर्वमपि दुःखमप-

नेतुमभिसंधाय कण्डूयनमुपक्रममाणेन प्रयुक्तस्य मन्त्रस्यागृह्यमाणविशेषत्वात्तन्त्रता। अत्र भाष्यादौ "कृषिषु स्याम कृष" इति कण्डूयनमन्त्र इत्युक्तम्, एवंविधं शाखान्तरीयवचनमन्वेषणीयम् ॥

इति पञ्चदशं कण्डूयनमन्त्रस्य सकृत्प्रयोगाधिकरणम् ॥ १५ ॥

१६

ज्योतिष्टोमे श्रूयते—"अग्ने त्वं सुजागृहि इति स्वपिति" "देवीरापो अपां नपादिति नदीं तरति" "उन्दतीरोजो धत्तेत्यभिवृष्टो जपति"। "अबद्धं मन इत्यमेध्यं दृष्ट्वा जपति" इति। तत्र यदि दीक्षितः पुनः प्रबुद्धस्स्वपिति, अनेकस्रोतसं वा नदीं तरति, युगपदम्बुभिर्धाराभिरभिवृष्यते, अनेकममेध्यं वा युगपत्पश्यति, तत्र किमेतेषामावृत्तिः? उत सकृत्प्रयोगः? इति संशये, विशेषग्रहणादावृत्तौ प्राप्तायाम्, सिद्धान्तयति—

**स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् ॥ ३९ ॥**

यथा कण्डूयने युगपत्कालके मन्त्रो नावर्तते, एवं स्वप्नादिष्वपि मन्त्रास्तन्त्रम्। कृत्स्नां हि रात्रिं निद्रातुं मन्त्रं प्रयुङ्क्ते, तथा सर्वस्रोतसं नदीं तर्तुम्, सर्वाणि चाभिवर्षणान्युद्दिश्य, अमेध्येषु तु कालभेदाऽभावात् स्पष्टमेवागृह्यमाणविशेषत्वम्। तस्मादेतेषु मन्त्रस्तन्त्रम् ॥

इति षोडशं स्वप्नादिमन्त्राणामनावृत्त्यधिकरणम् ॥ १६ ॥

१७

ज्योतिष्टोमे श्रूयते—"भद्रादभिश्रेयः प्रेहि बृहस्पतिरिति प्रयाति" इति। तत्र किं पुनः पुनर्विश्रम्य प्रतिष्ठमानेन मन्त्र आवर्तयितव्यः? उतादौ सकृदेव प्रयोक्तव्यः? इति संशये, प्रतिविश्रामं प्रयाणभेदाद् गृह्यमाणविशेषत्वादावृत्तिरिति प्राप्ते, सिद्धान्तयति—

**प्रयाणे त्वार्थनिर्वृत्तेः ॥ ४० ॥**

तुशब्दश्चार्थे उक्तसमुच्चये। दीक्षितस्य प्रयाणे-प्रस्थाने, आर्थनिर्वृत्तेः—

अर्थः गन्तव्यदेशप्राप्तिः, तन्निर्वृत्तिपर्यन्तं गमनं प्रयाणमिति तदर्थस्य मन्त्रस्य सकृदेव प्रयोगः ॥

इति सप्तदशं दीक्षितप्रयाणमन्त्रस्य सकृत्प्रयोगाधिकरणम् ॥ १७ ॥

१८

ज्योतिष्टोमे सन्त्युपरवाख्याश्चत्वारो गर्ताः। तेषां खनने मन्त्रः श्रूयते—"रक्षोहणो वलगहनो वैष्णवान् खनामि" इति। किं चतुर्णामपि तन्त्रम्? उत प्रत्युपरवं भिद्यते? इति संशये, पूर्वपक्षयति—

**उपरवमन्त्रस्तन्त्रं स्याल्लोकवद्बहुवचनात् ॥ ४१ ॥**

उक्तोपरवमन्त्रश्चतुर्णामपि तन्त्रं स्यात्। कुतः? बहुवचनात्। वैष्णवानित्युपरवपरोऽयं शब्दः, "वैष्णवा वै देवतयोपरवाः" इति ब्राह्मणम्। यद्ययं मन्त्रः प्रत्युपरवं प्रयुज्येत, तर्हि प्रत्येकमुपरवाणामेकत्वाद् वैष्णवानिति बहुवचनं विरुध्येत। शक्नोति च बहुवचनान्तघटितोऽयं मन्त्रः सर्वानुपरवानभिधातुम्। तत्रावृत्तिरनर्थिका, लोकवत्। यथा लोके बहूनां ब्राह्मणानामानयनाय ब्राह्मणानानयेति सकृदेव प्रयुज्यते, न तु प्रतिब्राह्मणं ब्राह्मणानिति बहुवचनान्तघटितं वाक्यं प्रयुज्यते। ततश्चतुर्णामुपरवाणां मन्त्रः सकृदेव ॥

सिद्धान्तयति—

**न सन्निपातित्वादसन्निपातकर्मणां विशेषाग्रहणे कालैकत्वात् सकृद्वचनम् ॥ ४२ ॥**

उपरवमन्त्रस्तन्त्रमिति न भवति। कुतः? सन्निपातित्वात्-सन्निपातो दृष्टेन फलेन सम्बन्धो येषु, तानि सन्निपातीनि कर्माणि। तेषां भावः सन्निपातित्वम्। तस्मात्सन्निपातित्वात्, प्रत्यक्षफलकत्वादित्यर्थः। खननकर्माणीह गर्तरूपप्रत्यक्षफलकानि। गर्ताश्चत्वारः, तत्फलकानि च खननानि क्रमेण निष्पद्यन्त इति च प्रत्यक्षसिद्धम्। खननमन्त्रश्चायमन्त्याक्षरेण कर्मसम्बद्धः खननं प्रकाशयति। तथाच द्वादशे वक्ष्यति—'मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसन्निपातस्स्यात्, सर्वस्य वचनार्थत्वात्' इति। ततश्च सकृत्प्रयुक्तो मन्त्रोऽयमन्त्याक्षरेण सर्वैः खननैः

सम्बन्धुमशक्नुवन्नेकमेव खननं प्रकाशयेत्, एकेनैव खननेन सम्बन्धात्। ततश्च विशेषग्रहणादेक एवोपरवो मन्त्रसंस्कृतस्स्यात्, न सर्वे। अतः प्रत्युपरवं खनन-मन्त्रः, बहुवचनन्त्वेकस्मिन्नेव पूजार्थमित्यदोषः। अत्र प्रत्युदाहरणमाह—असन्नि-पातीत्यादि। असन्निपातिकर्मणामुपस्थानाभिमन्त्रणादीनां ये मन्त्राः, तेषां कालै-कत्वाद्विशेषाग्रहणे सति सकृद्वचनं भवति। यथा—"प्रवत्स्यन्नग्नीनुपतिष्ठेत अभयं वोऽभयं मेऽस्तु" इत्यादौ। उपस्थानं ह्यदृष्टफलकम्, न ह्युपस्थानतोऽग्निषु कश्चिद्विशेषः प्रत्यक्षमुपलभ्यते। मन्त्रकरणकशाब्दबोधनं ह्युपस्थानं नाम। तच्चाग्निषु बहुष्वपि युगपदेव सम्भवतीति विशेषाग्रहणात् सकृदेव मन्त्रः॥

कालैकत्वादित्यस्य व्यावर्त्यमाह—

**हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्यावृत्तिः कालभेदात्स्यात् ॥४३॥**

हविष्कृदित्यनेन "हविष्कृदेहि" इत्याह्वानमुच्यते। अध्रिग्वित्यनेन "दैव्याश्शमितारः" इत्यादिनिगद उच्यते। पुरोनुवाक्येत्यनेन याज्यायाः पुरस्ता-दनूच्यमाना ऋगुच्यते। मनोताशब्देन "त्वं ह्यग्ने प्रथमो मनोता" इति सूक्त-मुच्यते। मनोतान्तस्समाहारद्वन्द्वः। पुरोनुवाक्याग्रहणं याज्याया अप्युपलक्षणम्। सन्ति ज्योतिष्टोमे प्रतिसवनं सवनीयाः पुरोडाशाः। तेषु प्रतिसवनं हविष्कृदा-ह्वानं कालभेदादावर्तते। तथा नानाबीजेषु देवसूहष्ष्वपि। तत्र चावहननस्य भिन्न-कालताया व्यवस्थापितत्वात्। तथा वाजपेये यदा प्राजापत्यान् क्रतुपशूंश्च सहोपा-कृत्य प्राजापत्यान् पर्यग्निकृतानुत्सृज्य माध्यन्दिने ब्रह्मसामन्यालभते, तदा अध्रि-गुवचनं कालभेदादावर्तते। तथा "आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमानः" इत्यत्र कृष्णग्रीवयोर्भेदेन प्रदानमिति व्यवस्था-पितं प्रथमपादान्त्याधिकरणे 'भेदस्तु कालभेदाच्चोदनाव्यपायात्स्यात्' इत्यत्र। याज्यापुरोनुवाक्ये प्रतिकृष्णग्रीवं भिद्यते, प्रधानयोर्भिन्नकालत्वात्। तथा–वाजपेये प्राजापत्यान् ब्रह्मसाम्न्यालभ्य हारियोजनान्ते हविःप्रचारे क्रियमाणे कालभेदा-दावर्तते मनोता॥

अध्रिगुविषये युक्त्यन्तरमाह—

**अध्रिगोश्च विपर्यासात् ॥ ४४ ॥**

चशब्दोऽनुक्तसमुच्चये। प्रातस्सवने क्रतुपशुभिः सहोपाकृतानां प्राजापत्यानां ब्रह्मसाम्न्यालम्भपक्षे प्रातस्सवनकालकस्याध्रिगोस्तन्त्रत्वे पुरस्तादध्रिगोः कर्तव्य-

पर्यग्निकरणोत्तरकालकानां "वपाश्रपणीभ्यामन्वारभते, आश्राव्य प्रत्याश्राविते सम्प्रेष्यति, अजैदग्निरिति मैत्रावरुणः प्रेष्यति" इत्येतेषां किं प्रातस्सवने क्रिया? उत ब्रह्मसाम्नि तदालम्भकाल इति। नाद्यः; पश्वालम्भादीनां पर्यग्निकरणोत्तरकालकानामपि प्रातस्सवने क्रियाभ्युपगमे प्राजापत्यानां पर्यग्निकरणेनोत्सर्जनश्रुतिविरोधात्। न द्वितीयः; प्रातस्सवनकालकस्याध्रिगोस्तन्त्रेण प्रजापत्योपकारकत्वे पश्वारम्भणादीनामध्रिगोः पुरस्तात्कर्तव्यानां परस्ताद् ब्रह्मसाम्नि करणे सति क्रमभङ्गप्रसङ्गात्। अतोऽपि हेतोस्तत्राध्रिगुर्निगद्यते ॥

तत्रैव व्यावर्त्यान्तरमाह—

## करिष्यद्वचनाच्च ॥ ४५ ॥

चशब्दोऽनुक्तसमुच्चये। करिष्यन्तः कार्यकराश्शमित्रादयः। तान्प्रतिवचनात्। अध्रिगुनिगदे हि—"दैव्याश्शमितार आरभध्वमुपनयत मेध्यादुरः, प्रास्मादग्निं भरत स्तृणीत बर्हिः" इत्यादि शमित्रादीन् प्रत्युच्यते। तत्र लोट्प्रत्ययः प्राप्तकालत्वे वा प्रैषे वा स्यात्। तत्राद्ये प्रातस्सवन एव यद्यध्रिगुरुच्येत, तर्हि माध्यन्दिनसवनकालकप्राजापत्यकार्याणां प्रातस्सवनेऽप्राप्तकालत्वात् कथमध्रिगोस्तद्विषयता? प्रेषणार्थत्वेऽपि प्रातःकालकप्रेषणस्य बहुकर्मराशिव्यवहितमाध्यन्दिनसवनकालिककार्यप्रवृत्तिकरत्वानुपपत्तेः तदावृत्तिर्युक्ता। न च पश्वर्थानुष्ठितप्रयाजानां कालान्तरभाविपुरोडाश इवाध्रिगोरपि कालान्तरभावि प्राजापत्यकार्योपकारकतासम्भव इति वाच्यम्, वैषम्यात्। प्रयाजकृतस्तावददृष्टः संस्कारः कालान्तरेऽवतिष्ठते। अध्रिगुस्तु प्रवृत्तिप्रकाशनार्थः। तत्प्रकाशनस्य च तदानीं प्रध्वस्तस्य कालान्तरे कार्यकारकत्वासम्भवादावृत्तिरिति सिद्धम् ॥

इत्यष्टादशमुपरवखननमन्त्रहविष्कृदाह्वानादीनामावृत्त्यधिकरणम् ॥ १८ ॥

इति श्रीमत्सन्ततसन्तन्यमानश्येनकूर्मषोडशार-रथचक्राकारादिबहुगुण-
विराजमानप्रौढापरिमितमहाध्वरस्य श्रीशाहजीशरभजितुक्कोजि-
भोसलचोलमहीमहेन्द्रामात्यधुरन्धरस्य श्रीमत आनन्दराय-
विद्वत्सार्वभौमस्याध्वर्युणा पञ्चपुरुषीपोष्येण बाल्य एव
तदयानिर्वर्तितापरिमितमहाग्निविजृम्भितसर्व-

पृष्ठसर्वस्तोमाप्तोर्यामवाजपेयप्रमुखमखसन्तर्पितशतमखप्रमुखबर्हिर्मुखेन
अपारपदवाक्यप्रमाणपारावारपारीणाग्रजन्मविश्वेश्वरवाजपेय-
याजिनो लब्धविद्यावैशद्येन श्रीमहादेववाजपेय
याजिसुतेनान्नपूर्णागर्भजातेन
श्रीवासुदेवदीक्षितविदुषा
विरचितायामध्वरमीमांसाकुतूहलवृत्ता-
वेकादशाध्यायस्य चतुर्थः पादः ॥

॥ समाप्तश्चाध्यायः ॥

❀ श्रीः ❀

## अध्वरमीमांसा-

# द्वादशाध्यायसूत्रवृत्तौ

## प्रथमः पादः

आम्नायगम्यमरुणाधरपल्लवाढ्य-
माखण्डलादिदिविषद्गणसेविताङ्घ्रिम् ।
कामेश्वराङ्कनिलयं किमपि स्तुवेऽहं
लावण्यनिर्जितसुमायुधकोटितत्त्वम् ॥

कलाधरकृतापीडं कलये कामितार्थदम् ।
कामिनीहृतकायार्धं हृदये वस्तु निस्तुलम् ॥

मीमांसानयसागरस्य लहरीन्यायैस्सुपूतैर्मुहुः
नित्यं वेदतदर्थचिन्तनपरस्वान्तो महीयान् प्रभुः ।
वात्सल्यैकरसो गम्भीरहृदयस्सत्कर्मनिष्ठस्सदा
चिन्नस्वामिपदाभिधो मम गुरुश्चित्ते चिरं वर्तताम् ॥

सर्वतन्त्रार्थकुशलो विद्वज्जनसुपूजितः ।
काशीपीठयतिर्नित्यं मम स्वान्ते विराजताम् ॥

---

वासुदेवदीक्षितविरचितायाः कुतूहलवृत्तेर्द्वादशाध्यायस्य मातृका कृतेऽपि यत्नेन लब्धा । अतो भाष्यवार्तिकाद्यवलम्बनेन ग्रन्थकृच्छैलीमाश्रित्य मयैव यथामति द्वादशाध्यायसूत्राणां वृत्तिर्विरचिता । साऽत्र सन्निवेशिता । सम्पादकः

श्रीवासुदेवविदुषा रचिता सुवृत्तिः
नैवोपलम्भि मिहिराङ्कितलक्षणस्य ।
तस्याः पुपूरयिषया वितनोमि वृत्तिं
भाष्यस्य रीतिमवलम्ब्य सुमन्दबुद्धिः ॥
क्वाहं मन्दमतिः क्वेयं जैमिनेस्सूत्रसंहतिः ।
तथापीयमिदंशास्त्रभक्तिः प्रेरयतीह माम् ॥
साधवो विमलस्वान्ता ममेदं बालचेष्टितम् ।
मर्षयेयुर्मुदा मान्या मत्वा भक्तिविलासनम् ॥

१

एकादशेऽध्याये तन्त्रावापौ सापवादौ व्याख्यातौ । अधुना द्वादशे क्रमप्राप्तः प्रसङ्गो व्याख्यायते । प्रसङ्गो नामान्यत उपकारलाभप्रयुक्ताङ्गाननुष्ठानम् । अन्यत्र कृतस्यान्यत्रापि प्रसक्तिरित्यर्थः । प्रासादार्थं कृतस्य प्रदीपस्य राजमार्गेऽप्यालोककरणं यथा । सोऽयं प्रसङ्गो नारब्धव्यः ? उतारब्धव्यः ? इति भवति संशयः । यदि नारब्धव्यस्तर्ह्यग्नीषोमीयपशौ पशुपुराडाशस्याङ्गानि पृथक्कर्तव्यानि स्युः । यदि चारब्धव्यस्तर्हि तानि पृथङ् न कर्तव्यानि भवेयुरिति संशयनिष्कर्षः । तत्र पूर्वपक्षयति—

**तन्त्रिसमवाये चोदनातः समानानामैकतन्त्र्यमतुल्येषु तु भेदो विधिप्रक्रमतादर्थ्यात्तादर्थ्यं श्रुतिकालनिर्देशात् ॥ १ ॥**

तन्त्रम् साधारणो धर्मग्रामः । यथा दर्शपूर्णमासयोराज्यभागादिः पूर्वाङ्गकलापः, स्विष्टकृदादिश्चोत्तराङ्गकलापः, स येषां प्रधानानामस्ति तानि तन्त्रीणि-प्रधानानि । तेषां समवाये-एकदेशकालकर्तृत्वेन प्राप्ते. चोदनातस्समानानां समानवाक्यविहितत्वाद् एकतन्त्रत्वं भवतीत्यर्थः । यथा-दर्शपूर्णमासयोराग्नेयादीनां त्रयाणां त्रयाणां यागानाम्, चित्रेष्टौ सप्तानां यागानाम, चातुर्मास्येषु वैश्वदेवादि पर्वसु आग्नेयादीनां यागानाम् "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "चित्रया यजेत पशुकामः" इत्यादिविधिवाक्यैस्समानतया चोदनादेकतन्त्रत्वम् । अतुल्येषु

तु भेदस्स्यात्-न तुल्यान्यतुल्यानि, तेषु पशुपशुपुरोडाशादिषु, भेदस्स्यात्-भिन्नतन्त्रत्वं स्यात्। पशुः "अग्नीषोमीयं पशुमालभेत" इति, पुरोडाशस्तु "अग्नीषोमीयं पुरोडाशमेकादशकपालं निर्वपति" इति च नानावाक्यैश्चोदितः। अतुल्यत्वे हेतुमाह—विधिप्रक्रमतादर्थ्यादिति। विधिर्विधानम्, तस्य प्रक्रमेण तादर्थ्यावगमादित्यर्थः। पशुविधायकं पश्वर्थम्, पुरोडाशविधायकञ्च पुरोडाशार्थमिति तत्तदर्थत्वेन विधेः प्रक्रमादतुल्यत्वमिति यावत्। तस्य तस्य विधेस्तत्तदर्थत्वमेव कुतः? इत्यत्राह—तादर्थ्यं श्रुतिकालनिर्देशादिति। श्रुत्या कालस्य भेदेन निर्देशात्तादर्थ्यमित्यर्थः। पशोः कालः—अग्नीषोमीयप्रणयनानन्तरम्, पुरोडाशस्य च वपाप्रचारादूर्द्ध्वम्। अतः पशोः पशुपुरोडाशस्य च श्रुत्या भिन्नयोः कालयोर्निर्देशाद् विधेः प्रक्रमस्तत्तदर्थ एवेति यावत्। यः पशोः कालो न स पुरोडाशस्य प्राप्तः। तस्मात्पशोस्तन्त्रं पुरोडाशस्य च पृथगिति भावः। किञ्च पशौ विधिः "यदेकादश प्रयाजान् यजति, पशुमेव तत्प्रयजति, यदेकादशानूयाजान् यजति, पशुमेव तदनुयजति" इति पशावेवैकादश प्रयाजाश्चानूयाजाश्च न पुरोडाश इति दर्शयन् भिन्नतन्त्रत्वमुभयोरवगमयति। एवञ्च भिन्नप्रयोगविधिचोदितत्वाद्भेदेनैवाङ्गानि कर्तव्यानीति न प्रसङ्गेन पशुतन्त्रं पुरोडाशस्योपकर्तुमर्हति। लोके तु प्रासाददीपप्रसङ्गस्तु युक्तः, प्रत्यक्षगम्यत्वात्।

ननु चित्रेष्ट्युदाहरणमनुपपन्नम्—"दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टम्" इत्यत्र न सप्त यागाः, किन्त्वेक एव। अत्र 'तत्' इत्येकवचनान्तं सर्वनाम न दध्यादिपरामर्शकम्, तथा सति बहुवचनान्तं स्याद् वीप्सा वा 'तत्तद्' इति। अतः संसृष्टशब्देन 'तद्' इत्यस्य सम्बन्धमङ्गीकृत्य, तस्य च प्रजापतिदेवतया सम्बन्धस्स्वीकर्तव्यः। तथा सति संसृष्टस्यैकत्वादेक एव यागः। कुतस्तन्त्रमिति चेदुच्यते—बुद्धिस्थत्वावच्छिन्नपदार्थे सर्वनाम्नश्शक्तिः। दध्यादयश्च बुद्धिस्थाः। तेषामेव बुद्धौ विपरिवर्तमानत्वात्तच्छब्देन सर्वनाम्ना परामर्शः। न चात्र बहुवचनस्य वीप्साया वा प्रसक्तिः, सर्वनामप्रातिपदिकवचनयोर्विरोधात्। सर्वनामप्रातिपदिकं निर्दिष्टप्रतिनिर्देशकत्वे शक्तम्, वचनन्त्वेकार्थप्रतिपादकम् इति तयोर्विरोधः। तत्र प्रथमोपनिपातात्प्रातिपदिकं यथाश्रुतं गृह्णीमः, उत्तरकालभावित्वाच्च लिङ्गसंख्ययोरविवक्षा। अतो न बहुवचनस्य वीप्साया वा प्रसक्ति-

रित्युपपन्नं चित्रेष्व्युदाहरणम्। एवञ्च तत्तुल्यत्वाभावेन पशुपशुपुरोडाशयोर्नैक-तन्त्रत्वमिति न प्रसङ्ग आरब्धव्यः॥

इतोऽपि नास्ति प्रसङ्ग इत्याह—

**गुणकालविकाराच्च तन्त्रभेदस्स्यात्॥ २॥**

गुणतः कालतश्च विकारात् पशुपशुपुरोडाशाङ्गानां प्रयाजानूयाजानां तन्त्र-भेदस्स्यात्—न प्रसङ्गस्स्यादित्यर्थः। पशुस्सान्नाय्यविकृतिः, पुरोडाशस्त्वग्नीषो-मीयविकृतिः। चोदकात् पञ्चप्रयाजेषु त्रिष्वनूयाजेषु च प्राप्तेषु पशावेकादश प्रयाजाः, पशुपुरोडाशे च पञ्चैव ते। अयमेको गुणतो विकारः। पशावनूयाजाः पृषदाज्येन कर्तव्याः, पुरोडाशे च केवलाज्येनेति द्वितीयो गुणतो विकारः। एवं कालतश्च विकारः—पशौ तिष्ठति पशौ "तिष्ठन्तं पशुं प्रयजन्ति" इति वचनात् प्रयाजाः क्रियन्ते, वेद्यां हविष्ष्वासादितेषु पुरोडाशे प्रयाजा अनुष्ठीयन्ते, पशौ पशुपुरोडाशे च पृथक्पृथक्प्रयाजानूयाजा न क्रियेरंस्तर्हि प्रयोगद्वयमपि विगुणं भवेत्। तस्मात्तन्त्रभेदः॥

अथ सिद्धान्तयति—

**तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिस्स्यात्तन्त्रार्थस्या-विशिष्टत्वात्॥ ३॥**

वाशब्दो नेत्यर्थे। न भेदेन पुरोडाशस्य तन्त्रं कर्तव्यम्, मुख्यस्य पशोस्तन्त्रेण सिद्धिः-प्रसङ्गादुपकारसिद्धिस्स्यात्। कुतः? तन्त्रमध्ये विधानात्—"अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति शृते वा पशौ" इति वचनात्पाशुकस्य तन्त्रस्य मध्ये पुरोडाशस्य विधानात्। अत एव तन्त्रार्थस्या-विशिष्टत्वात्—तन्त्रस्यार्थः प्रयोजनमङ्गकृत उपकारः तस्याविशिष्टत्वात्—सन्नि-धानाविशेषात् पशौ क्रियमाणान्यङ्गानि पशोरप्युपकारकाणि पुरोडाशस्यापि। यथा प्रासादे कृतः प्रदीपस्सन्निधानाद्राजमार्गेऽप्युपकरोति। ननु प्रासादप्रदीपोदाहरणं विषमम्, तस्य प्रत्यक्षगम्यत्वात्। अत्र पशावनुष्ठितानामङ्गानां पुरोडाशोपकारो न प्रत्यक्षगम्य इति चेन्न; अयमप्युपकारः शास्त्रगम्यः। "अग्नीषोमीयं पशुपुरोडाश-मेकादशकापालं निर्वपेत्" इत्यत्र प्रत्ययोपात्तभावना किं केन कथमित्याकाङ्क्षति। भाव्याकाङ्क्षायां पशूपकारमिति, साधनाकाङ्क्षायां पशुपुरोडाशयागेनेति, इतिकर्तव्यता-

काङ्क्षायां यागगतव्यापार इति चान्वयः। तत्र उपमितिलक्षितप्रापणेनाग्नीषोमीयस्य यो यागगतो व्यापारस्तं सादृश्येन गृह्णाति–यथाऽग्नीषोमीययागगतव्यापारविशेष-नियमनमष्टमलक्षणसिद्धं तथात्रापीति। द्वावपि चेमावतिदेशव्यापारौ। तत उत्तर-कालमुपसङ्ग्रहः। उपसङ्ग्रह एव प्रसङ्गः। उपशब्दस्समीपकरणार्थकः, समिति च साकल्यार्थकः, तस्य ग्रहणमुपसङ्ग्रहः। पाशुकेन प्रयोगेण यो व्यापारस्सम्पा-दितः, तस्य कृतत्वान्न भूयः पौरोडाशिकः प्रयोगः समीपे भवति। अतः पौरोडा-शिकः प्रयोगवचनो लुप्यते। अयमेव प्रसङ्गः। एवञ्चाप्रत्यक्षोऽप्यङ्गोपकारोऽति-देशशास्त्रगम्य इति न दोष इति सिद्धम्॥

अथ 'गुणकालविकाराच्च' इति यदुक्तं तत्राह—

**विकाराच्च न भेदस्स्यादर्थस्याविकृतत्वात्॥ ४॥**

गुणतः कालतश्च विकारान्न तन्त्रभेदस्स्यात्। कुतः? अर्थस्याविकृतत्वात्—अर्थः प्रयोजनमङ्गकृत उपकार, स न विकृत इत्यर्थः। यथा प्रयाजानूयाजादयो दर्शपूर्णमासयोरुपकारं सम्पादितवन्तः, विकृतावतिदेशेन प्राप्तास्ते तथैवोपकारं सम्पादयन्ति। उपकारे न कोऽपि विकारः। उपकारकपदार्थेषु प्रयाजानूयाजेषु सङ्ख्याद्रव्यकालकृतविकारे सत्यपि विकृत्युपकारकत्वं यथाप्रकृति पदार्थानामिति न कोऽपि दोष इति भावः॥

इतोऽपि न तन्त्रभेद इत्याह—

**एकेषाञ्चाशक्यत्वात्॥ ५॥**

यदि पशाविव पुरोडाशेऽपि पृथगङ्गान्यनुष्ठीयेरंस्तर्हि वेद्यग्न्युद्धरणादीना-मप्यनुष्ठानं प्राप्नुयात्। तन्न शक्यमनुष्ठातुम्। वेदिद्वये क्रियमाणे विहारपृथक्त्वम-श्रुतमापद्येत, प्रधानानामङ्गानाञ्चैकदेशकालकर्तृकत्वं व्याकुप्यत। एवमग्न्युद्धरण-माहवनीयनिर्वृत्त्यर्थमनुष्ठीयते। आहवनीयश्च निर्वृत्तः। द्वितीयाहवनीये सम्पाद्य-माने गार्हपत्याहवनीययोरेकदेशस्थत्वं बाध्यते। एतदर्थं विहारपृथक्त्वाश्रयणे स एव दोषः। अतः एकेषाम्—वेद्यग्न्युद्धरणादीनाम् अशक्यत्वात्—अशक्यानुष्ठान-त्वान्न पशुपशुपुरोडाशयोस्तन्त्रभेदः॥

इतोऽप्येवमित्याह—

**एकाग्निवच्च दर्शनम् ॥ ६ ॥**

पशोः पशुपुरोडाशस्य चैकमग्निं दर्शयति—"मध्येऽग्नेराज्याहुतीर्जुहोति पुरोडाशाहुतीः पश्वाहुतीश्च" इति । तस्मात्पाशुकतन्त्रस्य पुरोडाशे प्रसङ्गः । अतः प्रसङ्ग आरब्धव्यः ॥

इति प्रथमं प्रसङ्गस्यारब्धव्यत्वाधिकरणम् ॥ १ ॥

२

पाशुकैरङ्गैः प्रसङ्गात् पुरोडाशस्य कार्यसिद्धेः पृथगङ्गानि नानुष्ठेयानीति स्थितम् । यान्यङ्गानि पशौ न विद्यन्ते—आज्यभागावघातादीनि तानि किं पुरोडाशे कर्तव्यानि ? उत न कर्तव्यानि ? इति संशयः । यदि कर्तव्यानि तर्हि चोदको न बाध्यते, पुरोडाशप्रयोगवचनं बाध्यते; यदि च न कर्तव्यानि तर्हि चोदको बाध्यते, प्रयोगवचनं न बाध्यते । अतश्चोदकप्रयोगवचनयोः कतरस्य प्राबल्यमिति चिन्तनीयम् । तत्र प्रयोगवचन प्रत्यक्षम्, चोदकस्त्वानुमानिकः । अनुमानात्प्रत्यक्षं बलीयः । यद्यपि उत्पत्तिविनियोगाधिकाराणां परिचायकानि "अग्निहोत्रं जुहोति" "दध्ना जुहोति" "अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यादीनि वाक्यानि यथा प्रत्यक्षाणि सन्ति, न तथा प्रयोगविधिपरिचायकं वाक्यं प्रत्यक्षम्, किन्तु चोदकवाक्यवत्कल्प्यमेव, तथाप्यङ्गवाक्यैकवाक्यतामापन्नस्य प्रधानविधेरेव प्रयोगविधित्वात्, तस्य च प्रधानविधेः "अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपेत्" इत्यस्य प्रत्यक्षत्वात् प्रधानविधिवाक्यगतस्य लिङ्प्रत्ययस्य विधिप्रमाणप्रापितपदार्थग्रामविशिष्टभावनाविधायकतया प्रयोगविधित्वपर्यवसानाद्युक्तं प्रत्यक्षत्वम् । अतः प्रकृतिवद् विकृतिः कर्तव्या इति कल्पनीयचोदकापेक्षया प्रयोगवचनस्य प्राबल्याच्चोदको लुप्यते । तस्मात्पाशुकैरेव कतिपयैरङ्गैः गृहमेधीयन्यायेन पुरोडाशस्य निराकाङ्क्षत्वात् पुरोडाशे आज्यभागादीनि न कर्तव्यानीति प्राप्ते, सिद्धान्तयति—

**जैमिनेः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधस्स्यात् ॥ ७ ॥**

जैमिनेराचार्यस्य मतमाज्यभागावघाताद्यङ्गानि कर्तव्यानीति । कुतः ? परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधस्स्यात्—स्वस्य तन्त्रं स्वतन्त्रम् तस्य कार्ये यत्पर-

तन्त्रमापद्यते तस्य प्रतिषेधस्स्यादित्यर्थः। अयं भावः--दर्शपूर्णमासतः पशौ पशुपुरोडाशे च चोदकतः प्रयाजादीन्यङ्गानि प्राप्नुवन्ति। तत्र पशुपुरोडाशे प्रयाजानूयाजादीनां कार्ये पाशुकप्रयाजानूयाजादिभिस्सम्पाद्यमाने तेषां पशुपुरोडाशस्य कृते चोदकप्रतिषेधो युक्तः। यानि चाज्यभागावघातनिर्वपणप्रोक्षणादीनि पौरोडाशिकान्यङ्गानि तेषां कार्ये पाशुकाङ्गाप्तेरभावेन तच्चोदकप्रतिषेधो न युक्तः। पशुयागः सान्नाय्यविकृतिः। अतस्तत्र निर्वापावघातप्रोक्षणादयो न सन्ति। आज्यभागयोस्तु "न तौ पशौ करोति" इति निषेध एव। पुरोडाशयागस्तु–अग्नीषोमीयपुरोडाशविकृतिः। ततो निर्वापावघातप्रोक्षणाज्यभागादीनां चोदकतः प्राप्तौ सत्यां पुरोडाशोपजीव्येन प्रसङ्गेन न प्रतिषेधो युक्त इति। यदुक्तम्-प्रयोगवचनः प्रत्यक्षः, चोदक आनुमानिक इति, तत्रोच्यते--प्रयोगवचनस्य प्रत्यक्षत्वेऽपि चोदकतः प्राप्त्युत्तरकालिकस्य तत्प्रापकचोदकापेक्षत्वात्प्रयोगवचनस्यैव बाधः। तस्मात्पशुपुरोडाशयागे आज्यभागादीनि कर्तव्यानि॥

इति द्वितीयं पशुपुरोडाशे आज्यभागादिकर्तव्यत्वाधिकरणम्॥ २॥

३

ज्योतिष्टोमे सन्त्यैष्टिकान्यङ्गानि दीक्षणीयादीनि। तत्र यानि सौमिकमहावेद्यां कृतायामनुष्ठीयन्ते, तेषु चोदकतो दार्शपूर्णिमासिकान्यङ्गानि प्राप्नुवन्ति। तत्रेतराङ्गैस्सह दार्शिकी वेदिरपि प्राप्ता। तत्र महावेद्या भेदेन दार्शिकी वेदिः कर्तव्या वा न वेति संशये, पूर्वपक्षयति—

**नानार्थत्वात्सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात्॥ ८॥**

सोमे—सोमयागे दर्शपूर्णमासप्रकृतीनाम्—दर्शपूर्णमासौ प्रकृतिः येषां ते दीक्षणीयादयस्तेषां वेदिकर्म स्यात्—चोदकतः प्राप्ताया वेदेरनुष्ठानं स्यात्। पृथग्वेदिर्निर्मातव्या स्यादिति यावत्। कुतः? नानार्थत्वात्— नाना अनेकः अर्थः प्रयोजनं ययोस्ते, नानार्थे, तयोर्भावस्तस्मात्। सौमिक्या वेदेः प्रयोजनमन्यत् अन्यच्च दार्शिक्या वेदेः। सौमिकी वेदिः प्रचाराय निर्मीयते। "इयति शक्ष्यामहेऽस्यां कर्तुम्" इत्यनेन प्रचारार्थत्वं ज्ञायते। प्रचारश्च 'अवदान-ग्रहणादिजातम्' इति धूर्तस्वामी। दार्शिकी वेदिश्च हविरासदनार्था, "वेद्यां हवींष्या-

सादयति" इति प्रमाणात्। अतो भिन्नप्रयोजनकत्वाद्वेदेर्भेदेनानुष्ठानम्। नन्वङ्ग-प्रधानानां देशस्तन्त्रमित्युक्तमेकादशे। कथं देशस्य वेदेर्भेद इति चेत्सत्यम्; "इयति शक्ष्यामहेऽस्यां कर्तुम्' इति प्रचारार्थत्वावगमबलेन प्रचारद्वारकमेवाङ्ग-प्रधानार्थत्वं वाच्यमित्यङ्गानामपि प्रचार एव वेदेस्तन्त्रेणोपकारकत्वम्, हविरा-सादनादिकञ्चाङ्गप्रचारात्पूर्वभावि। तदर्थं प्राकृती वेदिः कर्तव्यैव। ननु महावेदेः हविरासादनादौ प्रसङ्गोपकारकत्वं किमिति न स्यात्? इति चेन्न; एकप्रयोगवचन-गृहीतानामेव प्रसङ्गोपकारस्साधितः—पशुपशुपुरोडाशादौ। अत्र सोमे दीक्षणीया-द्यैष्टिककर्माणि सौत्यादन्हः पूर्वमनुष्ठीयन्ते। ज्योतिष्टोमे सौत्यमहः पञ्चमम्, दीक्षणीयादीनि च प्रथमद्वितीयादिष्वहस्स्वनुष्ठीयन्ते। अतः सौत्यदिनमध्यपतितत्वा-भावादेकप्रयोगवचनगृहीतत्वं नास्तीति पूर्वपक्ष्यभिप्रायः। तस्माद्धविरासादनाय दार्शिकी वेदिः कर्तव्येति प्राप्ते, सिद्धान्तयति—

## अकर्म वा कृतदूषा स्यात् ॥ ९ ॥

वा शब्दोऽवधारणे। प्राकृती वेदिरकर्तव्यैव। कुतः? कृतदूषा स्यात्—कृतो दूषः—दूषणं यस्यास्सा। महावेदिः प्राकृत्या वेदेः करणेन कृतदूषा स्यादित्यर्थः। यदुक्तमेकप्रयोगवचनगृहीतत्वं नास्तीति, तन्न सम्यक्; सोमप्रधानप्रयोगस्य पञ्चमदिनानुष्ठेयत्वेऽपि तदङ्गानामग्नीषोमीयपश्वादीनां सुत्यातिरिक्तदिनेष्वपि कर्तव्यत्वेन विहितत्वात् तन्मध्यपतितैरैष्टिककर्मविधिभिः सोमप्रयोगवचनसन्निहित तया महावेद्याः प्रसङ्गमङ्गीकृत्य तद्व्यतिरिक्ताङ्गानां विधानसम्भवात्प्रसङ्गे न काचिद-नुपपत्तिः। प्रचारार्थं विहितापि महावेदिर्हविरासादनादिकार्यमपि साधयितुं शक्नोति। यस्यां वेद्यां कर्तव्यत्वेन श्रुतं हविरासादनादिकं तत्र तदननुष्ठायान्यत्र वेद्यां प्रसङ्गादनुष्ठीयमानं तन्न विगुणं भवति। 'वेद्यां हवींष्यासादयति' इत्यत्र विशेषो न श्रूयते—तदर्था वातदर्था वेति। तस्मात्प्रचारार्थैव महावेदिः प्रसङ्गाद्ध-विरासादनस्याप्युपकरोतीति न पृथक्प्राकृती वेदिस्सम्पादनीया॥

इति तृतीयं सोमे महावेदेः प्रसङ्गोपकारकत्वाधिकरणम्॥ ३ ॥

४

सोमे सवनीयः पशुः, सवनीयाः पुरोडाशाः, सौम्यश्चरुरिति* दर्शपूर्णमासविकृतयो यागा अनुष्ठीयन्ते। तेषु सौमिकपात्राणां ग्रहाणां चमसानाञ्च प्रसङ्गोऽस्ति न वेति संशये, पूर्वपक्षयति—

**पात्रेषु च प्रसङ्गस्स्याद्धोमार्थत्वात् ॥ १० ॥**

सोमप्रयोगवचनगृहीतत्वात् पात्रेषु—जुह्वादिषु प्रसङ्गस्स्यात्—ग्रहचमसस्य प्रसङ्गोपकारस्स्यात्। कुतः? होमार्थत्वात्—पात्राणि होमार्थानि, ग्रहचमसेनापि होमस्सम्पादयितुं शक्यते। यथा प्रचारार्थत्वेनापि सिद्धया महावेद्या हविरासादनसिद्धिः, तथा होमार्थत्वेन विद्यमानस्य ग्रहचमसस्य प्रसङ्गः कुतो न स्यात्? यदि साद्गुण्यलिप्सया न प्रसङ्गः, तर्हि तत्रापि प्राकृती वेदिः कर्तव्या स्यात्। तस्माद्ग्रहचमसेन प्रसङ्गोपकारः।

अथ सिद्धान्तयति—

**न्याय्यानि वा प्रयुक्तत्वाद् अप्रयुक्ते प्रसङ्गस्स्यात् ॥ ११ ॥**

वा शब्दः पक्षव्यावृत्तौ। न्यायादनपेतानि न्याय्यानि 'धर्मपथ्यर्थन्यायादनपेतेति यत्' इति यत्प्रत्ययः। दार्शपूर्णमासिकानि पात्राणि स्युः। यदङ्गत्वेन यद् विहितं तेन तत्कर्तव्यमिति न्यायः। आज्यग्रहणे होमे च जुह्वादीनि विहितानि—"चतुर्जुह्वां गृह्णाति" "अष्टावुपभृति गृह्णाति" "जुह्वा जुहोति" इति। जुहूत्वेन जुह्वा विधानमेतेषु वाक्येषु परिज्ञायते। तदिदमाह—प्रयुक्तत्वादिति। दर्शपूर्णमासयोः जुह्वादीनामासादनम्, प्रोक्षणम्, सम्मार्जनम्, आज्यग्रहणमित्यादीन्यङ्गानि विधीयन्ते। एवमाज्यग्रहणादिभिः जुह्वाः प्रयुक्तत्वात् तत्कार्यस्य ग्रहचमसेन प्रसङ्गो न सिध्यति। यत्रैतादृशी प्रयुक्तिर्नास्ति तत्र प्रसङ्ग इत्याह—अप्रयुक्ते प्रसङ्गस्स्यादिति। प्रयुक्तेऽङ्गे न तद्गुणार्थं प्राकृतस्य पुनः प्रयोग उचितः। "वेद्यां हवींष्यासादयति" इति वेदित्वेनैव प्राकृतवेदेरङ्गत्वेन वेदिलक्षणाङ्गाप्रयुक्तौ सत्यां तत्र गुणहानावप्यासादने प्रसङ्गो युक्तः। इह तु जुह्वादीनां चमससाधारणमात्रत्वेन

---

* सवनीयः पशुर्दैक्षपशोर्विकृतिः। दर्शाच्च दैक्षे पशावितराङ्गाणीव जुहूपभृद्ध्रुवादीन्यपि चोदकतः प्राप्नुवन्ति। ततश्च तानि सवनीयपशाविति स्थितानि। अतः परम्परया सवनीयस्य दर्शविकृतित्वव्यवहारः।

नाङ्गत्वम्, किन्तु जुहूत्वादिना "जुह्वा जुहोति" इति वचनात्। ततश्च जुहूरूपाङ्गस्यैवाप्रयुक्तत्वाज्जुह्वादिभिरङ्गैरनुष्ठेयानां कार्याणां सम्पादनाय प्राकृतपात्रप्रयुक्तिः। अतः पात्राणां न प्रसङ्गः॥

इति चतुर्थं सोमे ऐष्टिककार्याणामैष्टिकपात्रैरनुष्ठानाधिकरणम्॥ ४॥

५

अग्नीषोमीयपशौ हविःश्रपणाय शामित्रोऽग्निः श्रुतः। पश्वङ्गानि हृदयादीनि तत्रैव श्रप्यन्ते। पशुपुरोडाशश्च पशुतन्त्रोपजीवीति प्राक् स्थितम्। अतः पुरोडाशश्रपणमपि तत्रैव कर्तव्यं न गार्हपत्य इति प्राप्ते, सिद्धान्तयति—

**शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात्॥ १२॥**

इतरस्य गार्हपत्यस्य पौरोडाशिकविधिना प्रयुक्तत्वाच्छामित्रेऽग्नौ पशुपुरोडाशो न श्रपयितव्यः। शामित्राग्निना न प्रसङ्ग इति यावत्। यदि पश्वङ्गश्रपणेन पुरोडाशश्रपणं सिध्येत्तर्हि प्रसङ्गो भवेत्। पशुश्रपणेन पुरोडाशश्रपणकार्यासिद्धेरवश्यम्भाविनि श्रपणव्यापारे तस्माद्गुण्यार्थं गार्हपत्येऽपि श्रपणव्यापारो न दुष्यतीति न प्रसङ्गः॥

इति पञ्चमं शामित्रे पशुपुरोडाशश्रपणाभावाधिकरणम्॥ ५॥

६

कुण्डपायिनामयनान्तर्गताग्निहोत्रे चिन्त्यते। ज्योतिष्टोमादतिदेशपरम्परया कुण्डपायिनामयने सत्रे शालामुखीयोऽग्निरतिदिष्टः। किं तत्रैव शालामुखीये मासाग्निहोत्रीयं द्रव्यं श्रपयितव्यम्? उत मुख्ये गार्हपत्ये? इति संशयः। अतिदेशप्राप्तशालामुखीय एवाग्नौ श्रपयितव्यम्। शालाया मुखे पूर्वस्मिन् भागे स्थितोऽग्निश्शालामुखीयः। सोमे आहवनीयादुत्तरवेद्यामग्निप्रणयनोत्तरमवशिष्टाहवनीयस्य शालामुखीय इति संज्ञा। तस्य "अत ऊर्ध्वं गार्हपत्यो भवति" इति गार्हपत्ये विधानं श्रूयते। स च ज्योतिष्टोमाद् द्वादशाहं तस्माद् गवामयनं तस्माच्च कुण्डपायिनामयनमिति परम्परया प्राप्तः। ततश्च दर्विहोमेऽस्मिन्नग्निहोत्रे कथं शालामुखीयस्य प्राप्तिरिति शङ्काया नावसरः। अतो गार्हपत्यकार्ये शालामुखीयस्य

विधानात्तस्य च चोदकतोऽत्र प्राप्तत्वात्तत्रैवाग्निहोत्रद्रव्यं श्रपयितव्यमिति प्राप्ते, सिद्धान्तयति—

**श्रपणञ्चाग्निहोत्रस्य शालामुखीये न स्यात्प्राजहितस्य विद्यमानत्वात् ॥ १३ ॥**

शालामुखीयेऽग्नावग्निहोत्रस्य-द्रव्यस्य श्रपणं न स्यात्। कुतः? प्राजहितस्य विद्यमानत्वात्—प्राजहित इति पूर्वाचार्याणां गार्हपत्यसमाख्या। प्रकर्षेण गार्हपत्यकार्ये जहितस्त्यक्तः प्रजहितः, स एव प्राजहित इति समाख्याया अर्थः। प्राजहितस्यात्र विद्यमानत्वात्तत्रैव श्रपणम् ॥

इति षष्ठं कौण्डपायिनामयनेऽग्निहोत्रद्रव्यस्य प्राजहिते श्रपणाधिकरणम् ॥६॥

७

ज्योतिष्टोमे क्रीतायास्सोमलताया धारणार्थं द्वे शकटे स्तो हविर्धानसंज्ञके। तयोस्सोमलतामवस्थाप्य ते समन्त्रकं समानीय हविर्धानमण्डपेऽवस्थापनीये। तदनन्तरमैष्टिककर्मणामुपक्रमः। तत्र दर्शपूर्णमासतो निर्वापोऽतिदिश्यते। स चानोधिकरणकः 'अपरेण गार्हपत्यं प्रागीषमुदगीषं वा नद्धयुगं शकटमवस्थितं भवति व्रीहिमद्यवमद्वा' इत्यवस्थितं शकटमारुह्य 'दशहोतारं व्याख्याय शूर्पे पवित्रे निधाय तस्मिन्नग्निहोत्रहवण्या हवींषि निर्वपति' इति। सोऽयं निर्वापो हविर्धाने कर्तव्यः? उतानोन्तरमुपादेयम्? इति संशये, पूर्वपक्षयति—

**हविर्धाने निर्वपणार्थे साधयेतां प्रयुक्तत्वात् ॥ १४ ॥**

हविर्धाने—सोमलताधारभूते शकटे निर्वपणस्यार्थे-निर्वपणरूपं कार्यम् साधयेताम्। कुतः? प्रयुक्तत्वात्-शकटयोर्विहितत्वादित्यर्थः। परिमाणहानावपि वेदिप्रसङ्गः पूर्वं साधितः, तथैव गार्हपत्यपाश्चात्यलक्षणदेशहानावपि हविर्धानप्रसङ्गो न दोषायेति भावः ॥

अथ सिद्धान्तयति—

**असिद्धिर्वान्यदेशत्वात्प्रधानवैगुण्यादवैगुण्ये प्रसङ्गस्स्यात् ॥१५॥**

वाशब्दः पूर्वपक्षव्यावृत्तौ। निर्वापस्य हविर्धानाभ्यामसिद्धिः—हविर्धानाभ्यां निर्वापो न साधयितव्य इत्यर्थः। कुतः? प्रधानवैगुण्यात्—प्रधानस्य-निर्वा-

पस्य, वैगुण्यात्–गार्हपत्यपाश्चात्यलक्षणदेशरूपेण गुणेन विगुणत्वात्। "अपरेण गार्हपत्यं निर्वपति" इत्यनेन गार्हपत्यापरदेशो निर्वापाङ्गम्, अतो वेदिप्रमाण-वैलक्षण्यम्। ननु महावेद्यामवस्थापितयोर्हविर्धानयोः प्राग्वंशे गार्हपत्यपश्चाद्भागे नयनेन तत्र निर्वापो भवतु, न भवेत्प्रधानवैगुण्यमिति चेन्न; प्राग्वंशे तयोर्नयनस्या-शक्यत्वात्। हविर्धाने हि महावेद्याम् "अत्र रमेथाम्" इति मन्त्रेणानभ्यस्तत्वादि-नियमेन चावस्थापिते। तयोः प्राग्वंशे यदि नयनं स्यात्तर्हि सोमार्थं मन्त्रेण कृतं नयनमवस्थापनञ्चानर्थकं स्यात्, पुनःप्रवर्तनस्थापने चाशास्त्रीये स्याताम्, प्रधान भूतस्सोमो विगुणश्च स्यात्। तदिदमाह–अवैगुण्ये प्रसङ्गस्स्यादिति। एवञ्च प्राग्वंशे हविर्धानयोर्नयने सोमः प्रधानो विगुणो भवेत्, ऐष्टिकनिर्वापे हविर्धानयोः कृते सति प्रधानस्य निर्वापस्य वैगुण्यमापतेत्। यदि चानोन्तरमादाय निर्वापः क्रियेत तर्ह्युभयोरवैगुण्यं सम्पद्यत इति भावः। अतश्च न हविर्धानयोः प्रसङ्गः॥

तदिदमुपष्टम्भयति—

**अनसाश्च दर्शयति ॥ १६ ॥**

"अनांसि प्रवर्तयन्ति" इत्यनोबहुत्वं दृश्यते। तस्मादप्यनोन्तरमुपादेयम्। अतो न हविर्धानयोः प्रसङ्गः॥

**इति सप्तमं सोमे ऐष्टिकनिर्वापायानोन्तरसम्पादनाधिकरणम्॥ ७॥**

८

ज्योतिष्टोमे "यां प्रथमां दीक्षितो रात्रिं जागर्ति तया स्वप्नेन व्यावर्तते" इति दीक्षाकालं जागरणमाम्नातम्। दर्शपूर्णमासयोरपि पूर्वस्यां रात्रौ क्वचिच्छा-खायां जागरणं श्रुतम्। दीक्षानन्तरं प्रायणीयातिथ्यादीष्टयोऽनुष्ठीयन्ते सोमे। आस्विष्टिषु प्रकृतितो जागरणमतिदेशेन प्राप्नोति। तत्र दीक्षाकालजागरणेनैव प्रसङ्गोपकारः? उतातिदिष्टं जागरणं प्रायणीयादिषु पृथक्कर्तव्यम्? इति संशयः। तत्र दीक्षाकाले क्रियमाणं जागरणं सोमाङ्गम्। तच्च कमुपकारं जनयत् सोमस्योप-करोतीति प्रश्ने सोमाङ्गपात्रादिरक्षणार्थमिति वक्तव्यम्। ज्योतिष्टोमप्रयोगश्च पाञ्चरात्रिकः। तथाविधेन प्रयोगविधिना पाञ्चरात्रिकमिदं जागरणमाक्षिप्यते। तत्र दीक्षाकाले यद्विधानं तददृष्टार्थमेवेति गम्यते। यथा चादृष्टार्थपश्वर्थप्रयाजैः

पुरोडाशे प्रसङ्गोपकारः, तथैवादृष्टार्थेन सोमाङ्गजागरणेन प्रसङ्गोपकार इति प्राप्ते, सिद्धान्तयति—

## तद्युक्तश्च कालभेदात् ॥ १७ ॥

चो नेत्यर्थे। तद्युक्तम्—दीक्षायुक्तं जागरणं नेतरेषु प्रायणीयादिषु प्रसज्यते। कुतः? कालभेदात्—दीक्षाकालप्रायणीयादिकालयोर्भेदादित्यर्थः। यदि दीक्षाकालं जागरणं सोमाङ्गपात्रादिरक्षणफलकं तर्हि दीक्षाकाले क्रियमाणेन जागरणेन दीक्षोत्तरानुष्ठीयमानयागसम्बन्धिपात्राणां रक्षणं कथं सिध्येत्? यदि वा तज्जागरणमदृष्टफलकं, तदापि प्रायणीयादीनां भिन्नकालत्वात् तत्र दीक्षाकालजागरणजन्यादृष्टं कथमुपकारकं स्यात्? पशुपशुपुरोडाशयोरेकस्मिन्नेव दिनेऽनुष्ठानमिति पश्वर्थानुष्ठितैः प्रयाजैरदृष्टफलकैः पुरोडाशस्याप्युपकारः कर्तुं शक्यत इति तत्र प्रसङ्गो युक्तः। प्रकृते च भिन्नदिनानुष्ठेयत्वमिष्टीनामिति न प्रसङ्गो युक्तः। अतः प्राकृतं जागरणं पृथक्कर्तव्यमेव। ननु दीक्षाकालजागरणजन्यमदृष्टं ज्योतिष्टोमपरमापूर्वोत्पत्त्यवधिकम्। तेन प्रसङ्गसिद्धेर्नेष्टिषु पृथग्जागरणमिति चेन्न; दार्शिकजागरणस्य दृष्टार्थत्वेन प्रसङ्गानुपपत्तेः। तस्यापि यद्यदृष्टार्थत्वं तदापि विजातीययोर्जागरणयोर्विजातीयादृष्टजनकत्वं स्वीकर्तव्यम्। तथासति न प्रसङ्गः। अतश्चैष्टिकं जागरणं पृथक्कर्तव्यमेव।

वस्तुतस्तु नायं विचारो युक्तः। प्राकृतीष्टिः द्व्यहकाला, विकृतीष्टयश्च सर्वाः सद्यस्कालाः। तत्र विकृतीष्टिषु रात्रेरेवाभावात् प्रयोजनलोपात् चोदकेन जागरणमेव न प्राप्यत इति कथं जागरणस्य पृथक्करणं स्यादिति खण्डदेवाचार्याः॥

### इत्यष्टमं प्रायणीयादिषु दीक्षाजागरणस्याभावाधिकरणम् ॥ ८ ॥

९

चातुर्मास्येषु द्वितीये वरुणप्रघासपर्वणि दक्षिण विहार उत्तर विहारश्चेति विहारद्वयम्। तत्र उत्तरविहारे आग्नेयादिषु यागेष्वष्टानां यागानामध्वर्युः कर्ता, "अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति" इति विधानात्। दक्षिणविहारे "मारुतीमेव दक्षिणस्मिन् प्रतिप्रस्थाता" इति मारुतीयागस्य प्रतिप्रस्थाता कर्तेति स्थितिः। दक्षिणोत्तरविहारयोर्देशभेदस्य कर्तृभेदस्य च सत्त्वात् पदार्थानां न

तन्त्रतेति स्थितमेकादश द्वितीयस्याष्टमे। अतो विहारद्वयेऽपि प्रयाजादीनामावृत्तिरेव। तत्र प्रयोगसमवेतपदार्थस्मारकेषु सन्निपातिषु मन्त्रेषु संशयः—किमध्वर्युणैवैकेन पठनीयाः? उत प्रतिप्रस्थात्रापि? इति। "यदेवाध्वर्युः करोति तत्प्रतिप्रस्थाता करोति" इति वचनेन क्रमबोधनात्प्रतिप्रस्थात्रा क्रियमाणस्य पदार्थस्याध्वर्युकर्तृकपदार्थेनोपस्थितिसिद्धेर्मन्त्रकार्यस्य प्रसङ्गसिद्धिर्भवितुमर्हतीति प्रतिप्रस्थात्रा न पृथङ् मन्त्राः पठनीया इति पूर्वपक्षः। अथ सिद्धान्तयति—

**मन्त्राश्च सन्निपातित्वात् ॥ १८ ॥**

चशब्दो समुच्चयद्योतकः। प्रयाजानूयाजानां यथावृत्तिः तथैव मन्त्रा अपि निर्वपणाज्यग्रहणादिष्वावर्तनीयाः। कुतः? सन्निपातित्वात्—सन्निपत्योपकारित्वादित्यर्थः। 'निर्वपामि' 'गृह्णामि' इत्याद्युत्तमपुरुषघटितेषु मन्त्रेषु स्वस्वकर्तृकक्रियाप्रकाशन एव सामर्थ्यमस्ति। अध्वर्युणा "जुष्टं निर्वपामि" इत्युच्चारितस्य मन्त्रस्याध्वर्युकर्तृकनिर्वापप्रकाशकत्वम्, न तु प्रतिप्रस्थातृकर्तृकनिर्वापप्रकाशकत्वम्। तदर्थं प्रतिप्रस्थात्रावर्तनीया एव मन्त्राः। अतो दक्षिणोत्तरविहारयोर्युगपदेवाध्वर्युप्रतिप्रस्थातृभ्यां समन्त्रकाः पदार्थाः कर्तव्या इति ॥

इति नवमं वरुणप्रघासेषु विहारभेदेन मन्त्रभेदाधिकरणम् ॥ ९ ॥

१०

सोमेऽग्न्यन्वाधानममन्त्रकं क्रियते। दर्शपूर्णमासयोस्तु "ममाग्ने वर्चो विहवेषु" इत्यादिमन्त्रेण तत्क्रियते। अन्वाधानं नामाग्निविहरणानन्तरमाद्यो यो धारणार्थः काष्ठैर्बलवत्करणरूपस्समिन्धनव्यापारस्तदर्थं आद्यः काष्ठाधानात्मकव्यापारः। तदिदं समन्त्रकमन्वाधानं सोमाङ्गेष्वैष्टिकेषु कर्मसु चोदकतः प्राप्तं किमनुष्ठेयम्? उत सौमिकान्वाधानेन प्रसङ्गः? इति संशये, चोदकानुग्रहात्कर्तव्यम्। सौमिकमन्त्ररहितान्वाधानादिदं समन्त्रकमन्यदेव। अतो भिन्नकार्यत्वान्न प्रसङ्ग इति प्राप्ते, सिद्धान्तयति—

**धारणार्थत्वात्सोमेऽग्न्यन्वाधानं न विद्यते ॥ १९ ॥**

अमन्त्रकं समन्त्रकं वान्वाधानमग्निधारणार्थं क्रियत इति नोभयोर्भिन्न-

कार्यत्वम्, उभयोर्धारणार्थत्वात्। धारणञ्च सोमार्थेनैव सिद्धम्। अतस्सोमाङ्गे-ष्टिष्वन्वाधानं न विद्यते। प्रसङ्ग एव युक्तः॥

इति दशमं सोमाङ्गेष्विष्टिष्वन्वाधानाभावाधिकरणम्॥ १०॥

११

सौमिकं व्रतोपायनमैष्टिकं व्रतोपायनमिति द्विविधं व्रतोपायनम्। सौमिकं क्रत्वङ्गभूतयमनियमात्मकव्रतानुष्ठानसङ्कल्परूपं दृष्टफलकम्। ऐष्टिकन्तु "अग्ने व्रतपते व्रतं चरिष्यामि" इति मन्त्रोच्चारणरूपमदृष्टफलम्। अन्वाधानस्य दृष्टफल-कत्वेनाकर्तव्यत्वेऽपि व्रतोपायनस्यादृष्टार्थत्वाद् ऐष्टिकं व्रतोपायनं प्रायणीयादिषु कर्तव्यमेवेति प्राप्ते, पूर्वाधिकरणन्यायमतिदिशति—

**तथा व्रतमुपेतत्त्वात्॥ २०॥**

यथान्वाधानं न कर्तव्यम्, तथैष्टिकं व्रतमपि न कर्तव्यम्। कुतः? उपेतत्वात्—व्रतस्यारब्धत्वात्। दीक्षणीयानन्तरं सौमिकं व्रतमारब्धम्। तच्चाव-भृथपर्यन्तमनपवृक्तम्। ऐष्टिकमपि व्रतोपायनं यमनियमसत्यवदनादिसङ्कल्परूप-मेवेति दृष्टार्थमेव। अतः सौमिकव्रतोपायनेन प्रसङ्ग एव॥

विप्रतिषेधादपि प्रसङ्ग एवेत्याह—

**विप्रतिषेधाच्च॥ २१॥**

"व्रतं चरिष्यामि" इति भविष्यदर्थकमन्त्रोच्चारणं विप्रतिषिद्धमसङ्गत-मित्यर्थः॥

अत्राशङ्क्य परिहरति—

**सत्यवदिति चेन्न संयोगपृथक्त्वात्॥ २२॥**

"सत्यमेव वदेत्" इति शातपथश्रुत्या यावज्जीवं पुरुषार्थत्वेन सत्यवदन-नियमसङ्कल्पे कृतेऽपि दर्शपूर्णमासादौ यथा पुनस्तत्सङ्कल्पकरणमनुमन्यते तथैव सोमार्थत्वेन कृतेऽपि तत्सङ्कल्पे सोमाङ्गेष्टयादिषु पुनस्सङ्कल्पकरणं भवतु, मास्तु प्रसङ्ग इति चेद्ब्रूषे, तन्न; कुतः? संयोगपृथक्त्वात्—संयोगस्य पुरुषार्थत्वेन

क्रत्वर्थत्वेन च संयोगस्य पृथक्त्वात्। प्रकृते तु क्रत्वर्थत्वेन कृतस्सङ्कल्प इतरत्र कार्यप्रसङ्गात्साधयितुं क्षमः ॥

इत्येकादशं दीक्षणीयादिषु व्रतोपायनाभावाधिकरणम् ॥ ११ ॥

१२

'धारणार्थत्वात्सोमेऽग्न्यन्वाधानं न विद्यते' इति सौमिकमन्वाधानं प्रसङ्गादैष्टिकेषु कार्यं साधयतीति यत्पूर्वमुक्तं तदाक्षिप्य समाधीयते। अग्न्यन्वाधानं न धारणार्थम्, किन्तु "देवता एव पूर्वेद्युर्गृहीत्वा श्वोभूते यजते" इत्यर्थवादेन देवतापरिग्रहार्थं तत्। अतः दीक्षणीयाप्रायणीयादिष्वपि देवतापरिग्रहार्थं तदैष्टिकमग्न्यन्वाधानं कर्तव्यमेव न सौमिकाग्न्यन्वाधानेन प्रसङ्गोपकार इत्याक्षेपे प्राप्ते, सिद्धान्तयति—

**ग्रहार्थश्च पूर्वमिष्टेस्तदर्थत्वात् ॥ २३ ॥**

चोऽप्यर्थे। पूर्वम्—अग्न्यन्वाधानम, ग्रहार्थमपि देवतापरिग्रहार्थमपि क्रियते। कुतः? इष्टेस्तदर्थत्वात्—इष्टेः—दीक्षणीयायाः, तदर्थत्वात्—देवतापरिग्रहार्थत्वात्। एवं हि श्रूयते—"आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः, अग्निः प्रथमो देवतानां विष्णुः परमो यदाग्नावैष्णवमेकादशकपालं निर्वपति, देवता यज्ञश्चोभयतः परिगृह्य दीक्षते" इति। अत्राग्नाविष्ण्वोः प्रथमोत्तमयोर्देवतयोः दीक्षणीयेष्टौ परिग्रहे सति प्रत्याहारन्यायेन मध्यवर्तिनां सर्वासां देवतानां परिग्रहो भवतीति देवतापरिग्रहार्था दीक्षणीयैव प्रसङ्गादैष्टिकानां कार्यं साधयतीति न तदैष्टिकमग्न्यन्वाधानं कर्तव्यम् ॥

अत्राशङ्क्य परिहरति—

**शेषवदिति चेन्न वैश्वदेवो हि ॥२४॥**

दीक्षणीयाया देवतापरिग्रहार्थत्वमस्तु, किन्तु सा प्रधानदेवतापरिग्रहार्था। शेषास्त्वङ्गदेवता अङ्गाङ्गदेवताश्च सन्ति। तथा च शेषा अवशिष्टा अङ्गाङ्गदेवता अस्य सन्तीति शेषवत् ऐष्टिकमग्न्यन्वाधानं कर्तव्यमिति चेत्—तन्न; कथम्? वैश्वदेवो हि—दीक्षणीयायाः प्रधानदेवतामात्रार्थत्वेऽपि प्रधानदेवतासु वैश्वदेव-

ग्रहयज्यभ्यासीया विश्वेदेवा अपि ग्राह्याः। तेषु गृहीतेषु विश्वशब्दस्य सर्ववाचित्वादङ्गदेवतानामपि ग्रहणेन प्रसङ्गोपपत्तिस्स्यादेव।

अत्र विश्वेदेवशब्देन "स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुतः" इति सृष्टिप्रकरणगतवाजसनेयिश्रुत्या,

'आदित्य-विश्व-वसवस्तुषिता भास्वरानिलाः।
महाराजिकसाध्याश्च रुद्राश्च गणदेवताः'॥

इत्यमरकोषेण च गणदेवता एव ज्ञायन्ते, न तु सर्वा अङ्गदेवताः। तेन वैश्वदेवग्रहयज्यभ्यासीया देवता गणदेवता एव प्रधानभूतास्सिध्यन्ति। तासामेव दीक्षणीयया परिग्रह इति कथमनेन परिग्रहणेन प्रसङ्गोपपत्तिः? अतो वैश्वदेवपरिग्रहे गणविशेषस्यैव देवताभूतस्य दीक्षणीयया परिग्रहेऽपि प्रायणीयाद्यङ्गदेवतापरिग्रहासम्भवात् न प्रसङ्गसिद्धिरिति दीक्षणीयायाः प्रधानदेवतापरिग्रहार्थत्वे प्रमाणाभावादेव प्रसङ्ग उपपादनीय इति प्रतिपाद्य खण्डदेवाचार्याः 'वस्तुतस्तु' इत्यादिना देवतापरिग्रहवाक्यस्यार्थवादत्वाद् "दीक्षिष्यमाण" इति लृट् श्रुत्या दीक्षणीयाया दीक्षोत्पादकत्वावगतेर्नोभयोरपि देवतापरिग्रहार्थत्वम् किन्त्वर्थवादमात्रमित्युपपादितवन्तः।

शम्भुभट्टास्तु "ये देवासो दिवि" इत्यादिमन्त्रेणाग्रयणस्थाल्या धारातस्सोमं परिगृह्य साऽऽसाद्यते। तत्र "ते देवा यज्ञमिमं जुषध्वम्" इति लिङ्गात् समस्तदेवतासम्बन्धो गृहीतसोमरसे प्रतीयते। आग्रयणस्थालीतश्च वैश्वदेवग्रहे सोमो गृह्यत इति तस्मिन् सोमरसेऽपि समस्तदेवरूपदेवतासम्बन्धोऽस्त्येव। अतस्सर्वदेवतानां देवतात्वप्रतीतेः विश्वेदेवपदेन सूत्रभाष्यकारगृहीतमेवार्थं समर्थयन्ते॥

अत्राशङ्कते—

## स्याद्वा व्यपदेशात्॥ २५॥

वाशब्दश्शङ्कायाम्। ऐष्टिकमन्वाधानं स्यात्। कुतः? व्यपदेशात्—अग्न्यादिभ्योऽर्थान्तरभूतानां विश्वेषां देवानां दर्शनात्। एवं हि श्रूयते—"अग्निर्वसुभिः सोमो रुद्रैः इन्द्रो मरुद्भिः वरुण आदित्यैः बृहस्पतिर्विश्वैर्देवैः" इति। विश्वदेवशब्देन सर्वे देवा यद्युच्येरन् तर्हि तेभ्योऽर्थान्तरभूता अग्न्यादयो न स्युः।

तस्माद्विश्वदेवशब्दो गणदेवतावचनः। एवञ्च दीक्षणीयायाः प्रधानदेवतानामेव परिग्रहादङ्गदेवतानाञ्चापरिग्रहात् तदर्थमैष्टिकमन्वाधानमनुष्ठेयम् ॥

शङ्कां निरस्यति—

**न गुणार्थत्वात् ॥ २६ ॥**

नैतदेवम् वैश्वदेवशब्दो गणदेवतावचन इति। कुतः? गुणार्थत्वात्—बृहस्पतिप्रशंसार्थत्वात्। अग्निर्वसुभिः केवलैर्युक्तः, सोमश्च रुद्रैः केवलैः, बृहस्पतिस्तु सर्वैर्देवैः वस्वादिभिरन्यैश्च। अतश्च "अग्निर्वसुभिः" इत्यादिना विश्वेषां देवानां नार्थान्तरत्वेन व्यपदेशः, किन्तु सर्वदेवतावचनत्वमेव। अतो नैष्टिकमन्वाधानम् ॥

इति द्वादशमैष्टिकेऽग्न्यन्वाधानाननुष्ठानाधिकरणम् ॥ १२ ॥

१३

"योक्त्रेण पत्नीं सन्नह्यति" इति दर्शपूर्णमासयोः श्रुतं पत्नीसन्नहनं प्रायणीयादिषु प्राप्तं कर्तव्यं न वेति संशयः। तत्र दीक्षाकालकृतेन योक्त्रकरणकपत्नीसन्नहनेन प्रसङ्गसिद्धिर्न भवितुमर्हति, सन्नहनस्य वासोधारणरूपदृष्टफलार्थत्वात् तस्य च मध्येऽप्यावश्यकत्वात् प्रायणीयादिषु तत् कर्तव्यमिति प्राप्ते, सिद्धान्तयति—

**संनहनञ्च वृत्तत्वात् ॥ २७ ॥**

चो नेत्यर्थे। सन्नहनं प्रायणीयादिषु न कर्तव्यम्। कुतः? वृत्तत्वात्—"योक्त्रेण पत्नीं सन्नह्यति, मेखलया दीक्षितं मिथुनत्वाय" इति दीक्षायां योक्त्रकरणकपत्नीसन्नहनस्य कृतत्वात्। सोमसमाप्तिपर्यन्तं सन्नहनसाध्यवासोधारणरूपप्रयोजनस्यानुवृत्तेः तत एव प्रायणीयादिषु कार्यसिद्धेः न पृथक्कर्तव्यम् ॥

इति त्रयोदशं सौमिकेष्टिषु पत्नीसन्नहनाननुष्ठानाधिकरणम् ॥ १३ ॥

१४

दर्शपूर्णमासयोरारण्यभोजनमाम्नातं यजमानस्य। तत्प्रायणीयादिषु प्राप्तम्। सोमे च पयो व्रतमाम्नातम्। पयोव्रतेन प्रसङ्गसिद्धिर्भवति न वेति संशये, सिद्धान्तेनोपक्रमते—

**अन्यविधानादारण्यभोजनं न स्यादुभयं वृत्त्यर्थम् ॥ २८ ॥**

चोदकप्राप्तमप्यारण्यभोजनं न कर्तव्यम्। कुतः? अन्यविधानात्—सोमे वृत्त्यर्थत्वेन पयोव्रतस्य प्रत्यक्षविधानात्। उभयोर्वृत्त्यर्थत्वेऽपि सौमिकं पयोव्रतं प्रत्यक्षम्, आरण्याशनञ्च चोदकप्राप्तमानुमानिकम्। पयोव्रतं प्रधानाङ्गम्, आरण्याशनञ्चाङ्गाङ्गम्। अतस्सौमिकेन पयोव्रतेनैव कार्यसिद्धेरारण्याशनं न कर्तव्यम् ॥

इति चतुर्दशं सौमिकेष्टिष्वारण्याशनाभावाधिकरणम् ॥ १४ ॥

१५

सौमिकेष्टिष्वारण्याशनं न कर्तव्यं प्रधानाङ्गेन पयोव्रतेन प्रसङ्गसिद्धिरिति स्थितम्। अनेनैव न्यायेन किं शेषभक्षा अपि लुप्येरन्? उत न? इति सन्देहे लोपमाशङ्क्य परिहरति—

**शेषभक्षास्तथेति चेन्नान्यार्थत्वात् ॥ २९ ॥**

शेषभक्षाः—इडाभक्षणादयः, तथा—आरण्याशनवन्न कर्तव्या इति चेन्न; अन्यार्थत्वात्—प्रतिपत्त्यर्थत्वात्। शेषभक्षा न वृत्त्यर्थाः, किन्तु हुतशिष्टद्रव्य प्रतिपत्त्यर्थाः। "यजमानपञ्चमा इडां भक्षयन्ति" इति द्वितीयानिर्देशात्। 'होमाभिषवञ्च तद्वत्' इति षष्ठे प्रतिपादितोऽयं विषयः, तथापि प्रसङ्गसम्बन्धेन तस्यैव प्रयोजनपरमिदमधिकरणम् ॥

इति पञ्चदशं सौमिकेष्टिषु शेषभक्षानुष्ठानाधिकरणम् ॥ १५ ॥

१६

सौमिकेष्टिषु "तस्य द्वादशशतं दक्षिणा" इति सौमिकदक्षिणया प्राकृतान्वाहार्यदक्षिणायाः प्रसङ्गोऽस्ति न वेति चिन्तायां नास्तीति ब्रूमः। द्वादशशत दक्षिणायाः "तस्य" इति प्रधानमात्रेण सम्बन्धः प्रतीयते। तया दक्षिणया प्रधानमात्रानुष्ठानाय ऋत्विजः क्रीयन्ते। अतो दीक्षणीयाद्यङ्गानुष्ठानाय प्राकृतान्वाहार्यदक्षिणापि दातव्येति प्राप्ते, सिद्धान्तयति—

**भृतत्वाच्च परिक्रयः ॥ ३० ॥**

चो नेत्यर्थे। परिक्रयः—प्राकृतोऽन्वाहार्यपचनो न कर्तव्यः। कुतः? भृतत्वात्—सोमार्थत्वेनर्त्विजां क्रीतत्वात्। यावत्प्रयोगसमाप्त्यनुवृत्तिः सौमिकदक्षिणायाः। प्रयोगश्च साङ्गप्रधानविषयः। द्वादशशतदक्षिणायाः प्रधानानतिमात्रार्थत्वेऽङ्गानुष्ठानायान्ये कर्तारः प्रसज्येरन्। कर्तृभेदश्च प्रायोगभेदकस्स्यात्। एकदेशकालकर्तृत्वमङ्गप्रधानानामुक्तम्। अतो ये सोमार्थं परिक्रीतास्तैरेवाङ्गान्यप्यनुष्ठेयानि। तस्माद्द्वादशशतदक्षिणया प्रसङ्गसिद्धिः॥

इति षोडशं सौमिकेष्टिषु प्राकृतदक्षिणाभावाधिकरणम् ॥ १६ ॥

१७

पूर्वं यजमानभक्षणं जीवननिर्वाहार्थम्। तच्च पयोव्रतेनैव सिद्धत्वात् न पुनश्चोदकप्राप्तमपि प्रायणीयादिषु शेषभक्षणं कर्तव्यमित्याशङ्क्य शेषभक्षस्य वृत्त्यर्थत्वाभावात्संस्कारार्थत्वाच्च कर्तव्यमित्युक्तम्। सम्प्रति ऋत्विग्भक्षाणां वृत्त्यर्थत्वाभावात् परिक्रयार्थत्वाच्च प्रधानदक्षिणया तन्निवृत्तिरित्याशङ्क्य परिहरति—

**शेषभक्षास्तथेति चेन्न कर्मसंयोगात् ॥ ३१ ॥**

शेषभक्षा अपि तथा-निवर्तेरन्, यथा अन्वाहार्यपचन इति चेन्न; कर्मसंयोगात्-शेषभक्षा न परिक्रयार्थाः, किन्तु कर्मसंयोगात् संस्कारार्थाः। अतस्तदर्थं कर्तव्याः। उपयुक्तस्य द्रव्यस्य प्रतिपत्तेरपेक्षितत्वात्तदर्थमेव शेषभक्षाः, आनतिस्तु नियमफलत्वेनानुनिष्पादिनी ऋत्विग्भिरेव शेषो भक्षणीय इति। एवमाश्रीयमाणे प्रतिपत्त्यर्थत्वविरोधिनी नानतिर्भवति। अतश्शेषभक्षाः कर्तव्याः॥

इति सप्तदशं सौमिकेष्टिषु शेषभक्षस्य कर्तव्यत्वाधिकरणम् ॥ १७ ॥

१८

दर्शपूर्णमासयोर्होतृवरणमाम्नातम् 'ऊर्ध्वज्ञुमासीनं होतारं वृणीते—"अग्निर्देवो होता देवान् यक्षद्विद्वांश्चिकित्वान् मनुष्वद्भरतवदमुवदमुवत्" इति यथार्षेयो यजमानः' इति। तदिदमाश्रुतप्रत्याश्रुतातपरं भवति। सोमे च कर्मादौ

"अग्निर्होता स मे होता होतस्त्वं मे होतासि" इति होतृवरणम्। तदनेन सौमिक-होतृवरणेन सौमिकैष्टिककर्मसु दीक्षणीयादिषु दार्शपूर्णमासिकं होतृवरणं किं न कर्तव्यम्? उत कर्तव्यम्? यदि होतृवरणमानत्यर्थं तर्हि न कर्तव्यम्। यदि वादृष्टार्थं तत् तर्हि कर्तव्यम्। तत्र सौमिकेन वरणेनानतेस्सिद्धत्वात् आनतस्यानमनकार्याभावान्न कर्तव्यमिति प्राप्ते, सिद्धान्तयति—

## प्रवृत्तवरणात्प्रतितन्त्रं वरणं होतुः क्रियेत ॥ ३२ ॥

दर्शपूर्णमासयोः वेदिकरणादूर्ध्वमाश्रुतप्रत्याश्रुतात्परं होतृवरणं क्रियते। वरणात्पूर्वं होतुस्सामिधेन्यनुवचनं विहितम्। तदनन्तरं क्रियमाणमिदं वरणं नानत्यर्थम्, किन्त्वदृष्टार्थम्। कर्मण आदौ कृतात्सौमिकवरणादनन्तरं प्रवृत्ते कर्मणि दीक्षणीयादौ, दार्शपूर्णमासिकं वरणं क्रियते। अतस्तन्नानत्यर्थं भवितुमर्हति। अतः प्रतितन्त्रम्—प्रतिकर्म भेदेन वरणं कर्तव्यम् ॥

ननु तर्हि ब्रह्मणोऽपि प्रवृत्तवरणात्प्रतितन्त्रं भेदेन वरणं कर्तव्यं स्यात्। सोऽपि प्रवृत्ते कर्मणि प्रणीताप्रणयनकाले व्रियते। तदिदं ब्रह्मवरणं होतृवरणवददृष्टार्थं स्यात् इत्याशङ्क्य निरस्यति—

## ब्रह्मापीति चेन्न प्राङ्नियमात्तदर्थं हि ॥ ३३ ॥

होतृवरणवन्न ब्रह्मणो वरणं कर्तव्यम्। कुतः? प्राङ्नियमात्—प्राग्वरणादित्यर्थः। हि-यस्माद्वरणादुत्तरकालं ब्रह्मणः कर्म, तस्माद्वरणं तदर्थम्-कर्मार्थं न त्वदृष्टार्थम्, किन्त्वानत्यर्थमेव ब्रह्मवरणमिति। होतृवरणन्त्वन्यादृशम्। सौमिकवरणेन होता प्रागेवानतः। अनन्तरं क्रियमाणमिदमैष्टिकं वरणं होतुरदृष्टार्थमेवेति होतृवरणस्य कर्तव्यता, न ब्रह्मवरणस्य ॥

नन्वमावास्यायां 'पूर्वेद्युरमावास्यायां वेदिं करोति' इत्यमावास्यायां पूर्वेद्युः कर्तव्यत्वेन विहिते वेदिकरणे वरणात्पूर्वमेव ब्रह्मा वेदिपरिग्राहस्य 'ओं परिगृहाण' इति परिग्रहप्रसवं कुर्वन् तस्य वरणात्पूर्वमेव कर्मणि प्रवृत्तिर्दृश्यत इति परेद्युः क्रियमाणस्य ब्रह्मवरणस्याप्यदृष्टार्थत्वमेवेत्याशङ्क्य परिहरति—

## निर्दिष्टस्येति चेन्नाश्रुतत्वात् ॥ ३४ ॥

अत्र वेदिपरिग्राहद्वयम्-पूर्वपरिग्राहः उत्तरपरिग्राहश्चेति। तत्र पूर्वपरिग्राहेऽपि ब्रह्मानुज्ञास्तीति पक्षमवलम्ब्य शङ्का-निर्दिष्टस्येति। 'पूर्वेद्युरमावास्यायां

वेदिं करोति' इति निर्दिष्टस्य वेदिकरणस्य सम्बन्धी वेदिपरिग्रहप्रसवो ब्रह्मणा क्रियत इति ब्रह्मापि होतृवत्प्रवृत्तवरण इति चेन्न; अश्रुतत्वात्—वेदिकरणं श्रुतम्, न वेदिपरिग्रहणम्। अत्रायं विषयः—दर्शपूर्णमासप्रकरणे हविरभिवासानन्तरं वेदिकरणम्, प्रणीताप्रणयनकाले च ब्रह्मवरणम्। तत्र पौर्णमास्यां पूर्वेद्युः कालस्याभावात् यथापाठं ब्रह्मवरणवेदिकरणयोरनुष्ठानम्। अमावास्यायान्तु वचनबलाद्वेदिकरणस्यापकर्षे सति वेदिकरणाङ्गभूतब्रह्मप्रसवसिध्यर्थं ब्रह्मवरणस्यार्थक्रमेण पाठक्रमं बाधित्वापकर्षसम्भवेनाप्रवृत्ताभ्यर्थनरूपतया दृष्टार्थत्वम्। तेन चाङ्गानां प्रधानदेशकालत्वमनुगृहीतं भवति। अतो ब्रह्मवरणवैषम्यं होतृवरणस्येति ॥

न्यायमिमं होतृवरणेऽप्यतिदिश्य निराकरोति—

## होतुस्तथेति चेन्न कर्मसंयोगात् ॥ ३५ ॥

यथा ब्रह्मवरणस्यापकर्षस्तथा होतृवरणस्याप्यपकर्षोऽस्तु। तेन च ब्रह्मतुल्यत्वमेव होतुरपीति चेन्न; कुतः? कर्मसंयोगात्—'अवृतस्सामिधेनीरन्वाह' इति वरणरहितस्य होतुः सामिधेन्यनुवचनरूपकर्मसम्बन्धात्। अतोऽत्र पाठक्रमस्य बाधो नोचित इति न ब्रह्मतुल्यत्वे होतुः। तथा च प्रवृत्ताभ्यर्थनरूपत्वेनादृष्टार्थत्वादैष्टिकेषु दीक्षणीयादिषु कर्मसु होतृवरणं कर्तव्यम्। ब्रह्मवरणन्तु दृष्टार्थम्, तच्च सौमिकेनैव कृतत्वान्न कर्तव्यमिति सिद्धम् ॥

### इत्यष्टादशं सौमिकेष्ट्यादिषु होतृवरणानुष्ठानाधिकरणम् ॥ १८ ॥

### १९

ज्योतिष्टोमे "यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य" इति श्रुतम्। चतुर्थद्वितीयान्ते 'विधेः कर्मापवर्गित्वात्' इत्याधिकरणे बर्हिस्साधारण्यमभिहितम्। सन्ति लूनस्य बर्हिषो धर्माः-प्रोक्षणम् अग्राणामुपपातनम् मूलावसेचनमित्यादयः। आतिथ्योपसदग्नीषोमीयाश्च भिन्नभिन्नकालानुष्ठेयाः। तत्र किं बर्हिर्धर्माणां प्रोक्षणादीनामातिथ्यादिप्रयोगभेदेनावृत्त्यानुष्ठानम्? उत तेषामातिथ्याकालकृतानामुपसत्स्वग्नीषोमीये च प्रसङ्ग इति संशये, पूर्वपक्षयति—

**यज्ञोत्पत्त्युपदेशे निष्ठतकर्म प्रयोगभेदात्प्रतितन्त्रं क्रियेत ।।३६।।**

यज्ञोत्पत्त्युपदेशे—"यदातिथ्यायां बर्हिः" इत्युत्पत्तिदशायामुपदिश्यमाने बर्हिषि निष्ठितकर्म—अनुष्ठितं कर्म प्रोक्षणादिकम्, प्रयोगभेदात्-अतिथ्यापेक्षया उपसदग्नीषोमीयाणां भेदात्, प्रतितन्त्रम्—प्रतिप्रयोगं क्रियेत—भेदेनानुष्ठीयेत। आतिथ्यायामनुष्ठितं प्रोक्षणादिकमातिथ्यार्थमित्यवगतम्, तस्योपसदर्थत्वमग्नीषोमीयार्थत्वञ्च कथं भवितुमर्हति। तस्मादावर्तयितव्यं प्रोक्षणादिकम्। न चात्र प्रसङ्गः, उपसदग्नीषोमीययोः आतिथ्यातन्त्रमध्यपतितत्वाभावात्। बर्हिषस्साधारण्ये सत्यपि तत्र क्रियमाणानां प्रोक्षणादिधर्माणां साधारण्याभावात् प्रतिप्रयोगं प्रोक्षणादेरभ्यास एवेति भावः ।।

अथ सिद्धान्तयति—

**न वा कृतत्वात्तदुपदेशो हि ।। ३७ ।।**

वा शब्दः पक्षव्यावृत्तौ। प्रोक्षणादिकं न कर्तव्यम्। कुतः ? कृतत्वात्—आतिथ्यायां प्रोक्षणादेरनुष्ठितत्वादित्यर्थः। बर्हिरर्थत्वेन प्रोक्षणादयस्संस्कारा अनुष्ठिताः। अनुष्ठितैश्च तैर्बर्हींषि संस्कृतानि। संस्कृतानां पुनस्संस्कारे न हेतुरस्ति। अतः प्रतिप्रयोगं न प्रोक्षणादेरावृत्तिः। ननु प्रोक्षणादय एते कर्मार्थाः। कर्म चातिथ्योपसदादिकं भिन्नम्। यत्र कर्मण्यनुष्ठिताः प्रोक्षणादयस्तत्रैवोपकारकाः, नान्यत्र। न चात्र प्रसङ्गः, बर्हिषस्साधारण्येऽपि आतिथ्याकाले कृतानां संस्काराणाम् आतिथ्यापवर्गे संस्कारापवर्गेणोपसदाद्यर्थं पुनः करणावश्यम्भावात्। अन्यथा द्वादशाहे देवतासंस्कारकत्वेन क्रियमाणस्य सुब्रह्मण्याह्वानस्यापि प्रसङ्गस्स्यात्। प्रथमसुत्याकाले कृतस्य देवतासंस्कारकस्य सुब्रह्मण्याह्वानस्य द्वितीयादिसुत्यासु प्रसङ्गोपकारसम्भवादिति चेन्न; आतिथ्यायां क्रियमाणस्य बर्हिरुपादानस्यातिथ्यामात्रार्थत्वाभावात्। यद् बर्हिरातिथ्यायामुपात्तं तदुपसदग्नीषोमीयार्थमपीति सर्वार्थतयोपात्ते बर्हिषि प्रथमोपनिपातादातिथ्याकाले प्रोक्षणादयस्संस्कारा अनुष्ठिताः। तैरेव संस्कारैस्सर्वार्थं यद्बर्हिस्तत्संस्कृतमिति न पुनस्संस्कारानुष्ठानावश्यकता। अतः प्रयोगभेदोऽकिञ्चित्कर इति तन्त्रमध्यपातेऽसत्यपि प्रसङ्गसिद्धिर्निष्प्रत्यूहैव। यदुक्तं सुब्रह्मण्याह्वानेऽपि प्रसङ्गस्स्यादिति, तन्न सङ्गतम्; तत्र संस्कार्याया देवताया "यदातिथ्यायां बर्हिस्तदुपसदाम्" इति

वत्साधारण्योपपादकप्रमाणाभावात् । सुब्रह्मण्याह्वानेन देवता संस्क्रियते । आह्वानं संस्कारकम् देवता च संस्कार्या । तत्र यत्सुत्याप्रयोगकाले आह्वानं कृतं तत्साधनभावोपयोग्येव देवतासंस्कारस्तेनाधीयत इति कल्पनात्सुत्यान्तरार्थं पुनः प्रयोगावश्यम्भावान्नास्ति प्रसङ्ग इति वैषम्यमिति तात्पर्यम् । यदुक्तम्—आतिथ्यापवर्गे प्रोक्षणादयस्संस्कारा अप्यपवृज्यन्त इति तन्न; बर्हिषोऽनपवृक्तत्वात्, बर्हिरर्थत्वेनैव च संस्काराणां कृतत्वात् । तस्मान्न भेदेन प्रोक्षणादयः कर्तव्याः ॥

इत्येकोनत्रिंशमातिथ्याबर्हिस्संस्काराणां प्रसङ्गोपकारकत्वाधिकरणम् ॥१९॥

२०

दर्शपूर्णमासयोरस्ति स्तरणमन्त्रः—"ऊर्णाम्रदसं त्वा स्तृणामि" इति । स चातिथ्यायामतिदिष्टः । आतिथ्येष्टिश्च ज्योतिष्टोमे प्राग्वंशेऽनुष्ठीयते । तत्र समन्त्रकं बर्हिषस्तरणमनुष्ठितम् । तदेव बर्हिरग्नीषोमीयार्थमपीत्यवधृतम् । अग्नीषोमीययागस्तूत्तरवेद्यामनुष्ठीयते । प्राग्वंशे स्तीर्णं बर्हिरानीयापरेणोत्तरवेदिमग्नीषोमीयार्थेनास्तीर्यत इति स्थितिः । अत्र विचार्यते--किमातिथ्यायां मन्त्रपूर्वकं कृतस्य स्तरणस्याग्नीषोमीये प्रसङ्गः ? उतावृत्तिः ? इति । तत्र बर्हिषस्साधारण्ये स्थिते सति पूर्वाधिकरणन्यायेन प्रसङ्ग इति प्राप्ते सिद्धान्तयति--

**देशपृथक्त्वान्मन्त्रोऽभ्यावर्तते ॥ ३८ ॥**

अग्नीषोमीयस्तरणे मन्त्रोऽभ्यावर्तते—भेदेन कर्तव्यः । कुतः ? देशपृथक्त्वात्—भिन्नाविमौ देशौ स्तरणस्य । आतिथ्यायां प्राग्वंशः, अग्नीषोमीये चोत्तरवेदिसमीपम् । स्तरणञ्चेदं न बर्हिरर्थम्, किन्तु "बर्हिषा वेदिं स्तृणाति" इति द्वितीयया वेदिदेशसंस्कारार्थम् । तौ च देशौ भिन्नौ । देशभेदात्स्तरणमावर्तते, स्तरणाङ्गं मन्त्रोऽप्यावर्तते, प्रधानतन्त्रत्वादङ्गानाम् । यदि मन्त्रावृत्तिर्न स्यात्तर्हि वेदिवैगुण्यात्तत्र क्रियमाणमग्नीषोमीयहविरासादनमपि विगुणं स्यात् । अतो मन्त्रावृत्तिः ॥

इति विंशमातिथ्यायां स्तरणमन्त्रावृत्त्यधिकरणम् ॥ २० ॥

२१

अग्नीषोमीये बर्हिस्तरणमन्त्र आवर्तनीय इति स्थितम् । इमं न्यायं संनहने आहरणे चातिदिश्य निराकरोति—

## संनहनहरणे तथेति चेन्नान्यार्थत्वात् ॥ ३९ ॥

"पूषा ते ग्रन्थिं बध्नातु" इति संनहनमन्त्रः। "बृहस्पते मूर्ध्ना हरामि" इत्याहरणमन्त्रः। यथाग्नीषोमीये स्तरणमावर्तते तन्मन्त्रश्च, तथा संनहनमाहरणञ्चावर्तेते तन्मन्त्रौ च। अतस्तरणतौल्यं संनहने हरणे चेति चेन्न; कुतः? अन्यार्थत्वात्—अन्यकार्यत्वादित्यर्थः। प्रकृतौ बर्हिर्देशे लूनस्य बर्हिषः विहारदेशप्रापणार्थं संनहनं हरणञ्च क्रियेते, तदर्थौ चेमौ मन्त्रौ भवतः। तत्र बर्हिः स्वीक्रियमाणम्, तदर्थौ मन्त्रौ। अत्र चाग्नीषोमीये स्वीकृतं बर्हिः, तस्य देशान्तरप्रापणार्थं संनहनं हरणञ्च। इदञ्च संनहनं हरणञ्चाप्राकृतकार्यं। अत इमे न मन्त्रं गृह्णीतः। यथा—आतिथ्यायामेव गार्हपत्यदेशादाहवनीयदेशं प्रोक्षणाय नीयमाने बर्हिषि हरणमन्त्रो न प्रयुज्यते, तथैवेहापि न मन्त्रः प्रयोक्तव्यः॥

इत्येकविंशमग्नीषोमीये संनहनहरणमन्त्रयोरप्रयोगाधिकरणम् ॥ २१ ॥

इति महामहोपाध्याय-वेदविशारद-शास्त्ररत्नाकर-श्रौतस्मार्तकर्मानुष्ठाननिरत-
वाधूलान्वयवतंसानाम् श्रीचिन्नस्वामिशास्त्रिचरणानामन्तेवासिना
पट्टाभिरामशास्त्रिणा विरचितायाम् अध्वरमीमांसा
द्वादशाध्यायसूत्रवृत्तौ प्रथमः पादः ॥

श्रीः

# द्वितीयः पादः

१

तन्त्रमध्यपातस्थलीयप्रसङ्गः प्रथमपादे व्युत्पादितः। इदानीं तन्त्रमध्यपाताभावस्थलीयः प्रसङ्गः प्राधान्येन प्रतिपाद्यते। तन्त्रमध्यपाते सति प्रसङ्गो झटित्युपतिष्ठते, तदभावे तु विलम्बेनेत्यानन्तर्यं द्वितीयपादस्य। पूर्वं बर्हिस्संस्काराणां साधारण्यासाधारण्ये विचारिते। तत्प्रसङ्गादधुनाग्नीनां गार्हपत्यादीनां लौकिकालौकिकसाधारण्यं विचार्यत इति सङ्गतिः। तत्र गार्हपत्याग्निः किं पार्वणस्थालीपाकादिलौकिकानाम् चरुपुरोडाशहोमादिवैदिकानाञ्च सर्वेषामग्निकार्याणामङ्गम्? उत वैदिकानामेव? इति संशये पूर्वपक्षयति—

**विहारो लौकिकानामर्थं साधयेत्प्रभुत्वात् ॥ १ ॥**

विहरणाद्विहारः—गार्हपत्यादिः श्रौतोऽग्निः, लौकिकानाम्—पार्वणस्थालीपाकादीनामन्येषाञ्च पचनदहनादीनाम् अर्थम्-निर्वृत्तिं साधयेत्—कुर्यात्। कुतः? प्रभुत्वात्—लौकिकवैदिकोभयविधकार्यसाधने समर्थत्वात्। "वसन्ते ब्राह्मणोऽग्नीनादधीत" "गार्हपत्यमादधीत" "आहवनीयमादधीत" इत्यादौ न कोऽपि विशेषः श्रूयते—गार्हपत्यादिनेदमेव कार्यं सम्पादनीयमिति। अतः सामर्थ्याद्यत्र यत्रोपयुज्यतेऽग्निः, तत्र तत्रोपयोज्य इति सर्वेषां लौकिकवैदिकाग्निकार्याणामङ्गं गार्हपत्यादिः ॥

सर्वसाधारण्ये हेतुं दर्शयति—

**मांसपाकप्रतिषेधश्च तद्वत् ॥ २ ॥**

"मांसं न पचेयुस्तस्मिन्नग्नौ, यदि पचेयुः क्रव्यादं कुर्युः" इति गार्हपत्ये मांसपाकप्रतिषेधो दृश्यते। प्रतिषेधश्च प्राप्तिपूर्वकः। गार्हपत्ये लौकिकमांसपाकप्रसक्तौ सत्यां प्रतिषेधोऽयमुपपन्नः। वैदिकमांसपाकप्रसक्तिस्तु गार्हपत्ये नास्त्येव, तदर्थत्वेन शामित्रस्योपदिष्टत्वात्। अतः प्रतिषेधबलात्पाकादिसर्वकार्यार्थत्वमभ्युपगन्तव्यम्। सामर्थ्याद्यद्वन्न्याय उपदिष्टः तद्वत्प्रतिषेधोऽपि लिङ्गमिति सूत्रार्थः ॥

अथ सिद्धान्तयति—

## निर्देशाद्वा वैदिकानां स्यात् ॥ ३ ॥

वैदिकानां वा–वैदिकानामेव कर्मणामर्थं गार्हपत्यादिस्साधयेत्। कुतः? निर्देशात्–कार्यविशेषार्थतया गार्हपत्यादीनां निर्दिष्टत्वात्। उत्पत्तिवाक्ये कार्यविशेषनिर्देशाभावेऽपि गार्हपत्यादय उत्पन्नास्साकाङ्क्षाः "यदाहवनीये जुह्वति" "गार्हपत्ये हवींषि श्रपयति" "दक्षिणाग्नावन्वाहार्यं पचति" इति वाक्यैर्निराकाङ्क्षी क्रियन्ते। न चात्र सामर्थ्येनान्यत्र विनियोगसम्भवः, आधानार्जितानां गार्हपत्यादीनां प्रयोजनापेक्षायां सामर्थ्यापेक्षया प्रत्यक्षवचनेन शीघ्रं प्रवृत्तेन प्रयोजनसमर्पणे सति नैराकाङ्क्ष्यात्। अतएव "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्यत्र मन्त्रगतलिङ्गाद्गर्दभरशनादाने न मन्त्रविनियोगः, किन्तु प्रत्यक्षवचनेनाश्वाभिधान्यादाने मन्त्रस्य विनियोगः। तस्मान्न गार्हपत्यादयो लौकिकाग्निकार्येषु प्रवर्तेरन् ॥

लौकिकाग्निकार्याणामग्न्यन्तरं दर्शयति—

## सति चौपासनस्य दर्शनात् ॥ ४ ॥

सति च गार्हपत्यादौ विहारे लौकिकाग्निकार्याणामर्थं साधयितुम् औपासनस्य–वैवाहिकाग्नेर्दर्शनात्—"यः कामयेत राष्ट्रमस्य प्रजायै स्यादिति तस्यौपासने जुहुयात्' इति। इदञ्च वचनं राजसूयप्रकरणगतम्। तत्र च गार्हपत्यादौ विद्यमानेऽपि औपासनस्य विधानाद्गम्यते-यल्लौकिकाग्निकार्याणि न गार्हपत्यादौ भवेयुरिति ॥

हेत्वन्तरमाह—

## अभावदर्शनाच्च ॥ ५ ॥

मांसपाकस्य वैहारिकेऽग्नावभावदर्शनादित्यर्थः। "मांसीयन्ति ह वा एतस्याजुह्वतो यजमानस्य, ते यजमानमेव ध्यायन्ति, यजमानं सङ्कल्पयन्ति, पचन्ति ह वान्येष्वग्निषु वृथा मांसम्, अथैतेषां नातोऽन्या मांसाशा विद्यते" इति बचनं पशुबन्धादन्यत्र मांसस्पर्शनमेव वैहारिकाणामग्नीनां परिहरति। अतोऽपि न लौकिकेषु विहारप्रसङ्गः ॥

यदुक्तं 'मांसपाकप्रतिषेधश्च' इति, तत्राह—

**मांसपाको विहितप्रतिषेधस्स्यादाहुतिसंयोगात् ॥ ६ ॥**

मांसपाकः—मांसपाकप्रतिषेध इत्यर्थः। "मांसन्तु न पचेयुः" इति मांसपाकप्रतिषेधः, विहितप्रतिषेधस्स्यात्—विहितस्याहवनीये वपाश्रपणस्य प्रतिषेधस्स्यात्। अयं हि मांसपाकप्रतिषेध आहवनीयविषयः। आहवनीये वपाश्रपणं विहितम्। आहुतीनाञ्च प्रायेणाहवनीयाधारत्वादाहवनीये च वपाश्रपणमस्तीति तद्विषयतया मांसपाकप्रतिषेध उपपन्नः। एवं हि श्रूयते—'तस्मिन्नेवाग्नौ न मांसं पचति यस्मिन्नाहुतीर्जुहोति" इति। तदिदमुक्तम्—आहुतिसंयोगादिति। एवञ्च वपाश्रपणस्याहवनीये विहितप्रतिषिद्धत्वाद्विकल्पः।

ननु विकल्पो दोष इति चेदाह—

**वाक्यशेषो वा दक्षिणेऽस्मिन्नारभ्य विधानस्य ॥ ७ ॥**

वा-अथवेत्यर्थः। दक्षिणेऽस्मिन् आरभ्यविधानस्य-दक्षिणाग्न्यधिकरणकपत्नीव्रतश्रपणविधेः, वाक्यशेषः— 'मांसन्तु न पचेयुः" इति। यदा हि रोगादिना मांसमेव व्रतकार्यं उपदीयते तदा तत्पाकस्यायं दक्षिणाग्नौ पर्युदासः। तस्मान्न गार्हपत्यादिः लौकिकाग्निकार्ये प्रवर्तत इति सिद्धम् ॥

इति प्रथमं गार्हपत्यादेर्वैदिककर्ममात्रार्थताधिकरणम् ॥ १ ॥

२

ज्योतिष्टोमेऽस्ति सवनीयः पशुरग्नीषोमीयपशोर्विकृतिः। तत्र प्रकृतितः पशुपुरोडाशश्चोदकतः प्राप्तः। स कर्तव्यो न वेति संशये, पूर्वपक्षयति—

**सवनीये छिद्रापिधानार्थत्वात्पशुपुरोडाशो न स्यादन्येषामेवमर्थत्वात् ॥ ८ ॥**

सवनीये पशुपुरोडाशो न स्यात्—न कर्तव्यः। कुतः? छिद्रापिधानार्थत्वात्-वपोद्धरणकृतछिद्रापिधानप्रयुक्तत्वात्पुरोडाशस्य। एवं हि श्रूयते—"सुषिरो हवा एतर्हि पशुः यर्हि वपामुत्खिदति, तद्व्रीहिमयः पुरोडाशो भवति अपिहत्या अच्छिद्रताया" इति। पशोर्वपायामुद्धृतायां पशुस्सच्छिद्रो भवति। छिद्रस्य तस्य पिधानाय पशुपुरोडाशः क्रियत इति वाक्यस्यार्थः। तच्च छिद्रापिधानं सवनीये

सवनीयपुरोडाशैरेव "अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्ते अपिहत्या अच्छिद्रतायाः" इति विहितैः निष्पद्यत इति नात्र पशुपुरोडाशः कर्तव्यः। तदिदमुक्तम्—अन्येषामेवमर्थत्वादिति। अन्येषाम्—सवनीयपुरोडाशानाम् एवमर्थत्वाच्छिद्रापिधानार्थत्वादित्यर्थः। अतश्छिद्रापिधानकार्यस्य सवनीयपुरोडाशैरेव निष्पन्नत्वान्नात्र पशुपुरोडाशः कर्तव्यः। ननु छिद्रापिधानं प्रत्यक्षविरुद्धम, पुरोडाशयागेन वपोद्धरणकृतछिद्रस्यापिधानानुपलम्भादिति चेत्—न; वपोद्धरणे सति पशोः छिद्रवत् पशुयागस्यापि व्यङ्गतया छिद्रमिवाशङ्क्य तत्समाधानार्थत्वेन पशुपुरोडाशस्य विधीयमानत्वात्। ततश्च न प्रत्यक्षविरोधः। ननु दशमप्रथमे नवमाधिकरणे 'अपि वा शेषभूतत्वात् संस्कारः प्रतीयेत स्वाहाकारवदङ्गानामर्थसंयोगात्' इत्यत्र पशुपुरोडाशयागस्य देवतासंस्कारार्थत्वमुक्तम्, न छिद्रापिधानार्थत्वमिति चेन्न दोषः, देवतासंस्कारार्थत्वं सामर्थ्याद्वक्तव्यम्, छिद्रापिधानार्थत्वन्तु श्रौतम्। सामर्थ्याच्च श्रुतेः प्रबलत्वात्। अतस्सवनीये पशुपुरोडाशो न कर्तव्य इति प्राप्ते, सिद्धान्तयति—

## क्रिया वा देवतार्थत्वात् ॥ ९ ॥

वाशब्दोऽवधारणे। सवनीये पशुपुरोडाशस्य क्रियैव। कुतः? देवतार्थत्वात्—देवतासंस्कारकत्वात्। ननु छिद्रापिधानं श्रौतम् देवतासंस्कारस्तु सामर्थ्यलभ्यः। सामर्थ्याच्च श्रुतिर्बलीयसीत्युक्तम्, सत्यमुक्तं यदि छिद्रापिधानवाक्यं विधायकं स्यात्। तच्चार्थवादमात्रम्। अतः श्रौतविनियोगाभावात्सामर्थ्यात् स्वाहाकारयागवद्देवतासंस्कारार्थत्वमेव। एतेन प्रत्यक्षविरोधोऽपि परिहृतः, वपोद्धरणस्य विहितत्वेन ततः पशुयागस्य व्यङ्गतासद्भावे प्रमाणाभावात् तत्समाधानार्थत्वेन वाक्यस्य नेतुमशक्यत्वात्। अतश्छिद्रापिधानवचनमर्थवादः। तस्माच्च सवनीये पशुपुरोडाशः कर्तव्य एव ॥

अस्मिन्नर्थे लिङ्गं दर्शयति—

## लिङ्गदर्शनाच्च ॥ १० ॥

"वपया प्रातस्सवने चरन्ति, पुरोडाशेन माध्यन्दिने सवने, अङ्गैस्तृतीयसवने" इति। तस्मादपि सवनीये पशुपुरोडाशः कार्यः ॥

इति द्वितीयं सवनीये पशुपुरोडाशकर्तव्यत्वाधिकरणम् ॥ २ ॥

३

दर्शपूर्णमासयोर्हविष्कृदाह्वानमाम्नातम्—"हविष्कृदेहि हविष्कृदेहीति त्रिरवघ्नन्नाह" इति। हविष्कृत्-यजमानपत्नी। तामाह्वयत्यध्वर्युर्व्रीहीणामवहननाय। अतोऽवधातार्थमिदमाह्वानम्। आहूता च हविष्कृत् उत्करदेशमागत्यावहननं करोति। सान्नाय्येऽवहननकार्याभावान्न तत्राह्वानस्य प्रयोजनमिति न हविष्कृदाह्वानं सान्नाय्याद्यर्थमिति स्थितिः। तदिदमाह्वानमाज्यौषधसान्नायानां सर्वेषामङ्गमिति कृत्वा चिन्त्यते। सान्नाय्यविकृतावग्नीषोमीये पशौ पात्रप्रोक्षणानन्तरं प्राकृतं हविष्कुदाह्वानमतिदिष्टम्। ततस्सवनीये तत् चोदकतः प्राप्तम्। सवनीयपश्वर्थेन पात्रप्रोक्षणानन्तरं हविष्कृदाहूता। सवनीयमध्यपातिषु सवनीयपुरोडाशेषु सा किं पृथगाह्वातव्या ? उत सवनीयपश्वर्थेनाहूतायाः प्रसङ्ग इति संशये, कृत्वाचिन्तायां पूर्वपक्षस्यानुपयोगात्सिद्धान्तयति—

**हविष्कृत्सवनीयेषु न स्यात्प्रकृतौ यदि सर्वार्था, पशुं प्रत्याहूता सा कुर्याद्विद्यमानत्वात्॥ ११॥**

हविष्कृत् प्रकृतौ यदि सर्वार्था—आज्यौषधसान्नाय्यार्था तदा, पशुं प्रत्याहूता—पश्वर्थमाहूतैव सा—हविष्कृत् विद्यमानत्वात् सवनीयपुरोडाशेऽप्युपकरिष्यतीति, न स्यात्—न पृथगाह्वातव्येति सूत्रार्थः॥

इति तृतीयं सवनीयपुरोडाशे हविष्कृदाह्वानाभावाधिकरणम्॥ ३॥

४

कृत्वाचिन्तयेदमवधृतम् यत्पश्वर्थेनाहूताया हविष्कृतस्सवनीयपुरोडाशे प्रसङ्ग इति। हविः करोतीति हविष्कृदिति समाख्यया तस्याः हविष्करणं कार्यम्। तस्मिंश्च समाप्ते तदुत्तरभाविनि कर्मकलापे तस्याः प्रसङ्गाप्रसङ्गचिन्ता। तथाहि—ज्योतिष्टोमे तृतीयसवने पशोः पाकानन्तरं सौम्यचर्वाश्विनद्विकपालादीनि सवनीय हवींष्यनुष्ठीयन्ते। एवं क्रियमाणेषु तार्तीयसवनिकसवनीयहविष्षु हविष्कृदाह्वातव्या न वेति संशये, पूर्वपक्षयति—

**पशौ तु संस्कृते विधानात्तार्तीयसवनिकेषु स्यात्सौम्याश्वि-नयोश्चापवृक्तार्थत्वात् ॥ १२ ॥**

तार्तीयसवनिकेषु—तृतीयसवनसम्बन्धिसवनीयपुरोडाशेषु सौम्याश्वि-नयोश्च हविष्कृदाह्वानं स्यात्। कुतः? पशौ तु संस्कृते विधानात्—पशौ पक्वे सति सवनीयपुरोडाशादीनां कर्तव्यतया विधानात्। तस्मिन् काले हविष्कृतः अपवृक्तार्थत्वात्—अपवृक्तः समाप्तोऽर्थः कार्यं यस्याः। समाप्तहविष्करणरूपकार्ये-त्यर्थः। तस्या भावः, तस्मात् अपवृक्तार्थत्वात्। कृतकार्या सा गृहकर्मणि व्यापृता भवेत्। अतस्तस्या आह्वानं भवेत् ॥

अथ सिद्धान्तयति—

**योगाद्वा यज्ञाय तद्विमोके विसर्गस्स्यात् ॥ १३ ॥**

हविष्कृदिति समाख्याया उपलक्षणत्वमेव, साहाय्यकाचरणमेवाह्वानस्य कार्यम्, न तु हविष्करणमेव। अतस्तस्या विद्यमानत्वान्न पुनराह्वानस्य प्रसक्तिः। कुतः? यज्ञाय योगात्—यज्ञाङ्गानि केवलं साधयितुं न हविष्कृत्, किन्तु यज्ञाय यज्ञार्थं योगात् "कस्त्वा युनक्ति सत्वा युनक्ति" इत्यादिमन्त्रेण सम्बन्धात्। तद्विमोके—योगविमोके, विसर्गस्स्यात्—उत्थानं स्यात्। प्रकृतौ पत्नीसंयाजानन्तरं तस्या उत्थानं विहितम्, पशावपि आपत्नीसंयाजेभ्यस्सा सन्निहितैव। अतः पत्नी-संयाजेभ्यः प्रागनुष्ठीयमानेषु सवनीयपुरोडाशेषु हविष्कृदाह्वानं न कर्तव्यम्, हविष्कृतोऽनपवृक्तत्वात् ॥

इति चतुर्थं तार्तीयसवनिकसवनीयपुरोडाशेषु हविष्कृदाह्वाना-भावाधिकरणम् ॥ ४ ॥

५

काम्येष्टिकाण्डे "अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद् यो रक्षोभ्यो बिभीयात्" इति निशीष्टिं विधाय तस्य "अमावास्यायां निशि यजेत" इति कालोऽपि विहितः। तदस्यां निशीष्टौ दार्शिकतन्त्रस्य प्रसङ्गोऽस्ति न वेति चिन्त्यते। तत्र पूर्वपक्षयति—

**निशियज्ञे प्राकृतस्यापवृत्तिस्स्यात् प्रत्यक्षशिष्टत्वात् ॥ १४ ॥**

निशियज्ञे प्राकृतस्याङ्गस्य अपवृत्तिः – अप्रसङ्गस्स्यात्। कुतः ? प्रत्यक्षशिष्टत्वात्—प्राकृतं तन्त्रमनालोच्य प्रकरणान्तरे स्वातन्त्र्येण विहितत्वात्। प्रकृतीष्टिस्स्वस्थाने समाम्नाता, निशीष्टिस्तु काम्येष्टिकाण्ड इति न काम्येष्टेः प्राकृतमध्यपातित्वम्। न हि प्रकृतिविकृतिभावेन प्रकृतितन्त्रमध्यपतित्वं सम्भवति। अतस्स्वतन्त्रेयमिष्टिरिति न प्राकृताङ्गप्रसङ्गः। ननु "अमावास्यायां निशि यजेत" इत्यत्रामावास्याशब्देनामावास्याकर्मणः प्रत्यभिज्ञानात्तत्तन्त्रमध्यपातित्वं ज्ञायत इति चेन्न; निशिपदसामानाधिकरण्यादमावास्यायामित्यस्य कालवचनत्वात्। सप्तम्यन्तं पदं प्रायः कालमेवाचष्टे, न तु कर्म, ' अमास्यायायाममावास्यया यजेत" "अमावास्यायां पौर्णमास्याञ्चाच्युतो भवति" इत्यादौ तथैव ग्रहणात्। अतोऽमावास्यातन्त्रमध्यपतितत्वाभावेन न प्रसङ्गः ॥

हेत्वन्तरेण प्रसङ्गाभावं साधयति—

**कालवाक्यभेदाच्च तन्त्रभेदस्स्यात् ॥ १५ ॥**

कालश्च वाक्यञ्च कालवाक्ये, तयोर्भेदात्। कालभेदात् वाक्यभेदाच्चेत्यर्थः। आमावास्यं कर्म प्रतिपदि पूर्वाह्णे क्रियते। निशीष्टिस्त्वमावास्यायां रात्रौ। अतः कालभेदान्नामावास्यातन्त्रं निशियज्ञस्योपकर्तुं क्षमम्। ननु सत्यपि कालभेदे "तिष्ठति पशौ प्रयजति" इति क्रियमाणाः पाशुकाः प्रयाजाः माध्यन्दिनसवने क्रियमाणानां पुरोडाशानामुपकारका निर्णीताः, तथाऽत्राप्यमावास्यातन्त्रमुपकरोत्विति चेन्न; आमावास्यस्याकृतत्वात्। कृतं हि तन्त्रमुपकरोति, न ह्यकृतम्। अतस्स्वतन्त्रैव निशीष्टिः। वाक्यभेदादपि निशियज्ञः स्वतन्त्रः। वाक्यभेदादित्यस्य वाक्ययोर्भिन्नदेशत्वादित्यर्थः। निशियज्ञस्य दर्शपूर्णमासप्रकरणानधीतत्वादिति यावत्। काम्येष्टिकाण्डे निशियज्ञः, आमावास्यं तन्त्रञ्च दर्शपूर्णमासप्रकरण इति नोभयोस्सम्बन्धः।

किमयमुत्सर्गः—यत्सर्वममावास्यातन्त्राद्भिन्नमिति नेत्याह—

**वेद्युद्धननव्रतं विप्रतिषेधात्तदेव स्यात् ॥ १६ ॥**

दर्शार्थं कृतं वेदेरुद्धननं व्रतञ्च तदेव स्यात्—दार्शिकमेव स्यात्। कुतः ? विप्रतिषेधात्—कृतदूषणत्वादकिञ्चित्करत्वादित्यर्थः। दर्शार्थमुद्धताया वेदेः पुन-

रुद्धनने न किञ्चित्प्रयोजनमस्ति। पुनरुद्धनने क्रियमाणे पूर्वं कृतस्य दूषणं स्यात्। एवं दर्शार्थमुपेतं व्रतमुत्सृज्योपेयमानस्य व्रतान्तरस्य पिष्टपेषणवदकिञ्चित्करत्वं भवेत्। अत उभयमपि तदेव स्यात्॥

अथ सिद्धान्तयति—

**तन्त्रमध्ये विधानाद्वा तत्तन्त्रा सवनीयवत्॥ १७॥**

वाशब्दोऽवधारणार्थकस्तत्तन्त्रेत्यनन्तरं द्रष्टव्यः। तत्तन्त्रैव दर्शतन्त्रैव निशीष्टिः, न स्वतन्त्रा। कुतः? तन्त्रमध्ये विधानात्—दर्शतन्त्रमध्ये विहितत्वान्निशीष्टेः। "अमावास्यायां निशि यजेत" इति वाक्येनामावास्यातन्त्रमध्ये विहितत्वादिति भावः। नन्वत्रामावास्याशब्दः कालवचन इत्युक्तम्। सत्यमुक्तम्, स च कालस्तन्त्रमध्ये विहितः, तस्मिन् काले विधीयमाना निशीष्टिस्तन्त्रमध्यपतितैव, सवनीयवत्—पशुकर्मोद्देशेनाविधीयमाना अपि सवनीयाः पुरोडाशाः पशुतन्त्रमध्यपतिता यथा भवन्ति तथैव निशीष्टिरपीत्यर्थः। अतो निशियज्ञे दर्शतन्त्रप्रसङ्गः॥

सर्वमामावस्यं तन्त्रं निशीष्टिसाधकमिति नोत्सर्गः, किन्त्वस्त्यत्राप्यपवाद इत्याह—

**वैगुण्यादिध्माबर्हिर्न साधयेदग्न्यन्वाधानञ्च यदि देवतार्थम्॥१८॥**

सर्वत्राङ्गविधिषु असत्यपि तन्त्रमध्यपातनियमे प्रकृतौ विकृतौ वा 'अन्यत उपकारालाभे अङ्गानि कुर्यात्' इत्येवमेव विधिः कल्प्यते। अमावास्यायां यैः शक्यप्रसङ्गैरङ्गैरनुष्ठितैर्निशीष्टेरुपकारलाभः तेषां प्रसङ्गोपकारत्वम्। येषु चाशक्यप्रसङ्गेष्वनुष्ठितेष्वपि तज्जन्यमुपकारं न लभते, तानि तत्र पृथगनुष्ठेयान्येव। यथेध्माबर्हिरादयः। इध्मोऽग्निसमिन्धनफलकः। स च दर्शोत्तरप्रतिपदि प्रातराह्रियते। निशीष्टिस्तु रात्रावनुष्ठीयते। एवं बर्हिः वेदिस्तरणफलकम्। तदपि प्रतिपद्येव लवनादिसंस्कारैस्संस्कृत्याह्रियते। तदपि नोपकारकं निशीष्टे रात्रौ क्रियमाणत्वात्। विना इध्मेन बर्हिषा च क्रतुर्विगुणस्स्यात्। तदिदमाह—इध्माबर्हिर्न साधयेत्—दर्शेष्टौ क्रियमाणमिध्माबर्हिर्निशीष्टेरुपकारं न साधयेत्। उभयोरभावे च क्रतोर्वैगुण्याद् भेदेन ते कर्तव्ये। अग्न्यन्वाधानञ्च यदि देवतार्थम्—अग्नेरानुपूर्व्येण बलवदिन्धनम् अग्न्यन्वाधानम्, तद्यदि देवतार्थम्—देवतापरिग्रहार्थं तर्हि निशीष्टौ पृथगनुष्ठेयम्। दर्शेष्टौ पूर्वेद्युरग्न्यन्वाधानमनुष्ठीयते। "देवता एव

तत्पूर्वेद्युः परिगृहीताः, श्वो भूते यजते" इति वाक्यशेषेणाग्न्यन्वाधानेन दर्श-सम्बन्धिन्य एव देवताः परिगृह्णन्ते, न तु निशीष्टेर्देवता रक्षोहाऽग्निः। अतोऽन्वाधानस्य न प्रसङ्गः, पृथगनुष्ठेयमेव तत्॥

इति पञ्चमं निशियज्ञाधिकरणम्॥ ५॥

६

"आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः' इति विहितान्वारम्भणीया दर्शपूर्णमासयोस्सकृदनुष्ठेया न तु प्रतिप्रयोगमावर्तनीयेति नवमप्रथमे दशमाधिकरणे स्थितम्। अप्रवृत्तस्य पुरुषस्याद्या प्रवृत्तिरारम्भशब्देनोच्यते, न तु प्रथमः पदार्थः। 'आरप्स्यमाणः' इति शानचाभिहितस्य दर्शादिकर्तुः पुरुषस्य संस्कारिकेयमारम्भार्थतया लृट् प्रत्ययेन क्रियार्थायां क्रियायामुपपदे विहितेन प्रतिपाद्यते। सेयमन्वारम्भणीया सौर्यादिषु विकृतिषु किं न कर्तव्या? उत कर्तव्या? इति भवति संशयः। तत्र पूर्वपक्षयति—

**अन्वारम्भणीया विकृतौ न स्यात्प्रकृतिकालमध्यत्वात्कृता पुनस्तदर्थेन॥ १९॥**

विकृतावन्वारम्भणीया न स्यात्। कुतः? प्रकृतिकालमध्यत्वात्—प्रकृतिकालमध्यपातित्वादित्यर्थः। 'यावज्जीवं दर्शपूर्णमासाभ्यां यक्ष्ये' इति सङ्कल्प्याहिताग्निर्दर्शपूर्णमासावारभते। आरम्भे च निमित्ते सङ्कल्पयित्रान्वारम्भणीयेष्टिरनुष्ठेया। अनेनानुष्ठानेनारब्धा कर्ता संस्क्रियत इति गम्यते। अन्वारम्भणीयेष्टिजन्यसंस्काराहितः कर्ता प्रतिमासं दर्शपूर्णमासप्रयोगमनुतिष्ठन् नान्वारम्भणीयामनुतिष्ठति, आहितस्य संस्कारस्यानपवृक्तत्वात्। अन्यथा प्रतिदर्शपूर्णमासप्रयोगमन्वारम्भणीयानुष्ठानमवर्जनीयं स्यात्। अतस्सकृदन्वारम्भणीयानुष्ठानेन कर्तुः पुरुषस्य संस्कृतत्वमेष्टव्यम्। सौर्यादिविकृत्यरम्भावसरेऽपि कर्तुराहितसंस्कारवत्त्वस्य सत्त्वात् दर्शतन्त्रमध्यपातित्वे सति नान्वारम्भणीयानुष्ठानप्रसक्तिरिति भावः। तदिदमुच्यते—कृता पुनस्तदर्थेनेति। पुनरिति वाक्यालङ्कारे। तदर्थेन—यावज्जीविकप्रयोगार्थेन कृता सान्वारम्भणीया प्रसङ्गाद्विकृतिष्वप्युपकारमादधातीति न विकृतिषु भेदेन सा कर्तव्या॥

सिद्धान्तयति—

**स्याद्वा कालस्याशेषभूतत्वात् ॥ २० ॥**

स्यादेव विकृतिष्वन्वारम्भणीया। कुतः? कालस्याशेषभूतत्वात्—कालस्य यावज्जीवकालस्य अशेषभूतत्वात्—प्रकृतेरनङ्गत्वात्। न हि यावज्जीवकालः प्रकृतेरङ्गम्, 'कर्तुर्वाश्रुतिसंयोगात्' इति द्वितीयचतुर्थे यावज्जीवाधिकरणे कर्तृधर्मत्वेन तस्य निर्णीतत्वात्। तत्रारम्भनिमित्तकान्वारम्भणीयायाः कर्तृसंस्कारकत्वं भवतु, तथापि पुरुषसंस्कारो न साक्षात्क्रतावुपयुज्यते, किन्त्वारप्स्यमानशब्दबलादारम्भ कर्तृपुरुषसंस्कारत्वावगमादारम्भद्वारा क्रतावुपकरोति। आरम्भश्च क्रतावप्रवृत्तस्य पुरुषस्याद्यप्रवृत्तिलक्षणः सर्वप्रयोगाणामेक एव। एवञ्चारम्भलक्षणकार्येण कार्यनाश्यस्य पुरुसंस्कारस्य नाशाद्विकृतीनामारम्भो भिन्न एवेति तदर्थमन्वारम्भणीया विकृतिषु प्राप्नोत्येव। दर्शपूर्णमासयोः द्वितीयादिप्रयोगेषु नाद्यप्रवृत्तिलक्षण आरम्भो वर्तत इति न तेष्वारम्भणीया। विकृतिषु तु तादृश आरम्भो वर्तत एवेति स्यादेवान्वारम्भणीया॥

विकृतिषु हेत्वन्तरेणान्वारम्भणीयां साधयति—

**आरम्भविभागाच्च ॥ २१ ॥**

आरम्भविभागात्—विभक्तारम्भवत्वादित्यर्थः। प्रकृतिमनुष्ठाय विकृतयोऽनुष्ठेया इति नियमः। विकृतयः काम्या नैमित्तिकाश्च भवन्ति। सत्यां कामनायां सति च निमित्ते ता अनुष्ठीयन्ते, असत्यां कामनायाम् असति च निमित्ते ता नानुष्ठीयन्ते। अतः प्रकृत्यारम्भेण कथं विकृतीनामारम्भस्स्यात्? तस्मादारम्भ भेदाद्विकृतिष्वन्वारम्भणीया स्यादेव॥

इति षष्ठं विकृतिष्वन्वारम्भणीयानुष्ठानाधिकरणम्॥ ६ ॥

७

सहकर्तव्येष्वनेकेषु विकृतियागेषु धर्माणां सति विरोधे को न्याय इति विचार्यते। यथा—काम्येष्टिकाण्डे "अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्" "इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालम्" "दधि मधु घृतमापो धानाः तत्संसृष्टं प्राजापत्यं पशुकामः" इति श्रुतम्। अत्र सन्ति सप्त यागाः। तेषु "दधि मधु घृत-

मापो धानाः" इति सम्प्रतिपन्नदेवताकत्वात् सान्नाय्यवत् चित्रेष्टिवच्च दध्यादिद्रव्यकाः पञ्च यागाः। दातृगुणकाग्निदेवताकाष्टाकपलद्रव्यकस्याद्यस्य प्रजापतिदेवताक धानाद्रव्यकस्यान्त्यस्य च यागस्याग्नेयविकृतित्वम्। आग्नेयश्च कालद्वयसिद्धः इति न विरोधः। द्वितीययागश्चैन्द्राग्नविकृतिः, दधियागश्च सान्नाय्यविकृतिः। 'आज्यं वावर्णसाम्यात्' इत्याष्टमिकन्यायेन मधूदकयोरुपांशुयाजविकृतित्वम्। घृतस्य चोपांशुयाजविकृतित्वं स्पष्टमेव। उपांशुयाजश्च पौर्णमास्यामेवानुष्ठीयत इति स्वीकृत्य विचारः। तत्र सप्तसु यागेषु सहप्रक्रान्तेषु प्रथममन्तिमञ्च यागं विहाय शिष्टेषु पञ्चसु आज्यभागहविरभिमर्शनमन्त्राणां विरोधः प्रसरति। "वार्त्रघ्नी पौर्णमास्यामनूच्येते" "वृधन्वती अमावास्यायाम्" इति पौर्णमास्यां वार्त्रघ्नीमन्त्राभ्याम्, अमावास्यायाञ्च वृधन्वतीमन्त्राभ्यामाज्यभागयोरनुष्ठानम्। "चतुर्होत्रा पौर्णमास्यामभिमृशेत्" "पञ्चहोत्रामावास्यायाम्" इति हविरभिमर्शने पौर्णमास्यां चतुर्होतृमन्त्रः, अमावास्यायाञ्च पञ्चहोतृमन्त्रः। तदत्र ऐन्द्रदधियागयोरमावास्याधर्माः, मधुघृतोदकयागेषु च पौर्णमासीधर्माः प्राप्नुवन्ति। सहानुष्ठीयमानेषु प्रधानेष्वाज्यभागादीनामङ्गानां तन्त्रेण कर्तव्यता प्राप्ता। तत्र किमाज्यभागौ वृधन्वतीमन्त्राभ्यां कर्तव्यौ ? उत वार्त्रघ्नीमन्त्राभ्याम् ? हविरभिमर्शनं किं पञ्च होतृमन्त्रेण ? उत चतुर्होतृमन्त्रेण ? इति सन्देहे, 'मुख्यं वा पूर्वचोदनात्' इति न्यायेनैन्द्रदध्नोः प्रथमपठितत्वादसञ्जातविरोधित्वेन प्रबलत्वात्तद्धर्मानुग्रह एव न्याय्यः। तस्मादमावास्यामन्त्रैरेव पौर्णमासविकृतिष्वाज्यभागहविरभिमर्शनयोः प्रसङ्गत उपकारसिद्धिरिति प्राप्ते, अभिधीयते—

**विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम् ॥ २२ ॥**

विप्रतिषिद्धधर्माणाम्-आज्यभागहविरभिमर्शनसम्बन्धिमन्त्राणाम् समवाये-सह क्रियमाणेषु कर्मसु प्राप्ते सति, भूयसां सधर्मत्वं स्यात्—भूयसां यागानां धर्मवत्वं स्यात्। द्वावमास्याविकारौ त्रयश्च पौर्णमासविकाराः। भूयसां पौर्णमासविकाराणामेव धर्मा अनुष्ठेयाः। तैरेव च प्रसङ्गसिद्धिः। ननूक्तं 'मुख्यं वा पूर्वचोदनात्' इति न्यायेनैन्द्रदध्नोरेवानुग्रहः कर्तव्य इति, सत्यमुक्तम्, यद्यपि मुख्यधर्मः प्रथमवगम्यते, तथापि पश्चाद्भूयोऽनुग्रहमालोच्य प्रथमं प्रवृत्तस्य बाधं स्वीकृत्य पौर्णमासिकमन्त्रैः प्रसङ्गसिद्धिरिति ब्रूमः। ननु पौर्णमासीविकाराणां

वार्त्रघ्नावाज्यभागौ दर्शविकाराणाञ्च वृधन्वत्यौताविति न युक्तम्, "वार्त्रघ्नी पौर्णमास्यामनूच्येते" "वृधन्वती अमावास्यायाम्" इति वाक्यगतपौर्णमास्यमावास्याशब्दयोः कालपरत्वात् पौर्णमासीकाले यावाज्यभागौ तत्र वार्त्रघ्नीमन्त्रौ, यौ च दर्शकाले तत्र वृधन्वतीमन्त्राविति प्रकृतौ व्यवस्थायाः समाश्रितत्वात्, तथैव विकृतावपि व्यवस्थायां सत्यां दर्शविकाराणां पौर्णमास्यनुष्ठाने तत्कालप्रयुक्तौ वार्त्रघ्नावेव प्राप्नुतः, न तु वृधन्वत्यौ। एवं पूर्णमासविकाराणाममावास्यायामनुष्ठाने वृधन्वन्तावेव प्राप्नुतः, न वार्त्रघ्नौ। एकस्मिन् काले सप्तानामपि सह प्रयोगे यदि स कालः पौर्णमासी तर्हि सर्वेषामपि वार्त्रघ्नौ। यदि वा दर्शस्तदा सर्वेषां वृधन्वन्तौ। तस्मात् एकस्मिन् प्रयोगे उभयविधमन्त्राणां प्राप्तिरेव नास्तीति कथं विप्रतिषेध इति चेत्सत्यम्; "वार्त्रघ्नी पौर्णमास्याम्" "वृधन्वती अमावास्यायाम्" इति वाक्ययोः सत्यं कालपरौ पौर्णमास्यमावास्याशब्दौ, तथापि न पूर्णमासत्वादिना कालं प्रतिपादयतः, आज्यभागयोः साक्षात्कालसम्बन्धाभावेन पौर्णमास्यां काले यावाज्यभागौ तयोर्वार्त्रघ्नौ, अमावास्यायां काले यावाज्यभागौ तयोर्वृधन्वन्तौ इत्येवं व्यवस्थानुपपत्तेः। अतः पौर्णमास्यमावास्याशब्दौ प्रथममाग्नेयादिकर्म प्रतिपाद्य तत्र मन्त्रविध्ययोगात् तदीयकालोपलक्षणार्थाविति वक्तव्यम्। अयञ्चार्थो न्यायसुधायां 'मिथश्चानर्थसम्बधः' इत्यत्र तृतीये स्पष्टः। ततश्च प्रकृतौ पौर्णमासीत्वाद्यनादरेण प्रधानाग्नेयादिकालत्वमात्रेण व्यवस्था मन्त्रयोरिति प्रधानकर्मप्रयुक्तत्वाद्व्यवस्थाया विकृतावपि यथाप्रधानं मन्त्रप्राप्तिरुपपद्यते। अतो विप्रतिषिद्धधर्माणां समवाये भूयोऽनुग्रह एवोचितः। तस्मात्पौर्णमासिकौ धर्मावनुग्रहीतव्यौ। सर्वोऽप्ययं विचारोऽमावास्यायामुपांशुयाजो नास्तीति पक्षे सङ्गच्छते। यदि च कौषीतकब्राह्मणवाक्यानुसरेणाभावास्यायामप्युपांशुयाजोऽस्तीति स्वीक्रियते तदोदाहरणान्तरमधिकरणस्य मृग्यमिति खण्डदेवप्रभृतयः॥

इति सप्तमं भूयोऽनुग्रहाधिकरणम्॥ ७॥

८

समसङ्ख्याकेषु प्रधानेषु विप्रतिषिद्धानामङ्गानां समवाये न्याय उच्यतेऽनेनाधिकरणेन। अध्वरकल्पेष्टौ श्रूयते—"आग्नावैष्णवं द्वादशकपालं निर्व-

पेदपराह्णे सरस्वतीमाज्यस्य यजेत" इति आग्नावैष्णवयागः सरस्वतीयागश्चेति द्वौ यागौ। ओषधिप्रभवद्रव्यकत्वम्, द्विदेवताकत्वम्, द्वादशकपालत्वञ्चेति साहश्येनैन्द्राग्नयाग उपमीयते। "ऐन्द्राग्नं द्वादशकपालं निर्वपेदसन्नयतः" इत्यमावास्यायां विहितैन्द्राग्नयागविकृतिराग्नावैष्णवयागः। अत्राज्यभागयोः वृधन्वन्तौ मन्त्रौ प्राप्तौ। आज्यद्रव्यकसरस्वतीयागस्तु उपांशुयाजविकृतिरित्यत्राज्यभागयोः वार्त्रघ्नौ प्राप्तौ। एवं धर्माणां विरोधे सत्यनियमे प्राप्ते, सिद्धान्तयति—

## मुख्यं वा पूर्वचोदनाल्लोकवत् ॥ २३ ॥

वाशब्दो धर्मविप्रतिषेधे भूयसां वा मुख्यस्य वा धर्म इति विकल्पार्थः। स च विकल्पोऽल्पभूयोविरोधे भूयसाम् तुल्यसङ्ख्यविरोधे मुख्यस्येति व्यवस्थया वोध्यः। प्रकृत आज्यभागमन्त्रयोर्विरोधे मुख्यमनुग्राह्यम्। कुतः? पूर्वचोदनात्–प्रथमं विहितत्वात्। प्रथमस्य धर्मो ह्यसञ्जातविरोधी निर्विघ्नमवगम्यते, जघन्यस्य तु तद्विरुद्धत्वान्न धर्मः सङ्ग्रहीतुं शक्यते। लोकवत्—सूचीकटाहन्यायेन लोके प्रथमावगत एव सङ्गृह्यते, तद्वत्॥

अत्रार्थे वैदिकं प्रमाणं दर्शयति—

## तथा चान्यार्थदर्शनम् ॥ २४ ॥

"यथा वै पूर्वावसायिनो जघन्यावसायिनं नोन्नयन्ते एवमेवैतद्" इति पूर्वं प्राप्तस्य बलीयस्त्वं दर्शयति॥

इत्यष्टमं समसङ्ख्याकानां धर्मविरोधे मुख्यधर्मस्यानुष्ठानाधिकरणम्॥ ८॥

९

ज्योतिष्टोमस्य मुख्यमङ्गं दीक्षणीया प्रथमदिनेऽनुष्ठीयते। औपवसथ्येऽह्नि उपसदग्नीषोमीयपशुपुरोडाशादीनि बहून्यङ्गानि क्रियन्ते, प्रधानन्तु जघन्यमेकं सोमयागः पञ्चमदिनेऽनुष्ठीयते। तत्र "य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत" इति वाक्येनेष्टिपशुसोमानामविशेषेण पर्वकालानुष्ठेयत्वं विधीयते। अङ्गभूतायाः दीक्षणीयायाः पर्वकालानुष्ठेयत्वे सति प्रधानस्य सोमस्य तत्कालानुष्ठेयत्वं न प्राप्नोति। प्रधानस्य पर्वकालानुष्ठेयत्वे

सति अविशेषेणेष्टिपशुसोमानां तत्कालानुष्ठेयत्वविधानं निरर्थकं स्यात्। एवं विरोधे सति किं प्राप्तम्? अनियमेनानुष्ठानमिति ब्रूमः, अङ्गगुणस्यापि प्रधानोपकारकत्वाविशेषेण प्रधानगुणतुल्यत्वात्। अथवा, प्रथमोपस्थितत्वात्प्रधानधर्मापेक्षया मुख्यधर्म एव बलवानिति दीक्षणीयाया एव पर्वकालानुष्ठेयत्वमिति प्राप्ते, सिद्धान्तयति—

## अङ्गगुणविरोधे च तादर्थ्यात् ॥ २५ ॥

सर्वाण्यङ्गानि तदङ्गानि च प्रधानसाद्गुण्याय क्रियन्ते। तत्र प्रयोगविधिः प्रथमोपस्थितमपि मुख्यधर्मं न साक्षाद्गृह्णाति, किन्त्वङ्गद्वारैव। ततश्च प्रयोगविधिव्यापारस्याङ्गधर्मापेक्षया प्रधानधर्मे झटिति प्रवृत्तेः तदनुग्रह एव युक्तः। अतः अङ्गगुणविरोधे—अङ्गगुणेन दीक्षणीयायाः पर्वकालानुष्ठेयत्वरूपस्य विरोधे प्रधानगुणानुग्रह एव न्याय्यः। कुतः? तादर्थ्यात्—प्रधानार्थत्वादङ्गानामिति सूत्रार्थः ॥

इति नवममङ्गगुणविरोधाधिकरणम् ॥ ९ ॥

१०

## परिधिर्द्व्यर्थत्वादुभयधर्मा स्यात् ॥ २६ ॥

नवमद्वितीयत्रयोदशाधिकरणे "परिधौ पशुं नियुञ्जीत" इत्यत्र परिधौ यूपधर्माः कर्तव्या इति, 'यूपायाज्यमानायानुब्रूहि' इत्येव प्रैषः, न तु 'परिधयेऽज्यमानायानुब्रूहि' इति च निर्णीतम्, तदुत्तरविवक्षया स्मार्यते—परिधिरिति। परिधेर्नैजं कार्यमग्नेः परिधानम्, पशुनियोजनञ्च विशेषकार्यम् इति द्व्यर्थत्वात् परिधिः उभयधर्मा स्यात्—परिधिधर्मान् सम्मार्जनादीन् यूपधर्मांश्च परिव्याणादीन् लभेतेत्यर्थः ॥

इति दशमं परिधौ धर्मद्वयानुष्ठानाधिकरणम् ॥ १० ॥

११

अविरुद्धेषु यूपधर्मेषु परिधौ सम्भवत्स्वपि विरुद्धधर्माणामनुष्ठाने कः प्रकारः? यथा—पशुनियोजनार्थं तक्षणाष्टाश्रीकरणनिखननोच्छ्रयणादयो यूपधर्माः,

परिधिधर्माश्च सत्वक्त्वोत्तराग्रत्वादयः। परिधेः तक्षणे सति सत्वक्त्वम्, निखनने च सत्युत्तराग्रत्वं विरुध्येत। अत्र किं यूपधर्माः कर्तव्याः? उत परिधिधर्माः? इति सन्देहे, पूर्वपक्षयति—

**यौप्यस्तु विरोधे स्यान्मुख्यानन्तर्यात् ॥ २७ ॥**

तुस्सम्भावनायाम्। धर्माणां विरोधे सति यौप्यस्स्यात्—यूपधर्मस्स्यात्। कुतः? मुख्यानन्तर्यात्—मुख्यस्य प्रधानस्याव्यवहितत्वादित्यर्थः। यागस्य यूपधर्मा अन्तरङ्गाः यागीयद्रव्येण पशुना यूपस्य साक्षात्सम्बन्धः। यूपद्वारा च यूपधर्मा यागस्याव्यवहिता अन्तरङ्गाः। परिधिस्त्वग्निपरिधानार्थः। अग्निश्च यागीय हविर्धारकः। अतः परिधिधर्मा व्यवहिता बहिरङ्गाः। ततश्चान्तरङ्गाणां प्रथममुपस्थितत्वात्तेषामेव परिग्रह इति भावः।

अथ सिद्धान्तयति—

**इतरो वा तस्य तत्र विधानात् ॥ २८ ॥**

इतरो वा—विरुद्धो यूपधर्मो न भवति किन्तु परिधिधर्म एव। कुतः? तस्य तत्र विधानात्—तस्य-यूपकार्यस्य तत्र-परिधौ विधानात् 'परिधौ पशुं नियुञ्जीत" इति। परिधित्वानुपमर्देन यूपधर्माः कर्तव्या इति भावः। पशुनियोजन कार्यं पुरस्कृत्यैव यूपधर्माः प्रवर्तन्ते। नियोजनञ्च यूपस्थानापन्नं परिधिमपेक्षते। परिधिश्च स्वधर्मविशिष्टतयैव प्राप्नोति। अतः परिधिधर्मा एव प्रथमोपस्थिता इति प्रयोगविधिः परिधिधर्मानेव प्रथमं गृह्णातीति वक्तव्यम्। किञ्च "परिधौ पशुं नियुञ्जीत" इति नियोजनं वाचनिकम्, तक्षणादयस्तु स्थानापत्त्यतिदेशविषया इति ते दुर्बलाः। एतेन "यो होता सोऽध्वर्युः" इत्यत्र होतुस्ततोऽध्वर्युकार्ये विधानाद्विप्रतिषेधे होतृकार्यमेव स्यान्नाध्वर्युकार्यमिति शङ्का निरस्ता वेदितव्या, "यो होता सोऽध्वर्युः" इत्यत्राध्वर्यूपलक्षितेषु कार्येषु होतुः प्रत्यक्षविधानात्। अत एव तत्र चोदकप्राप्तहोतृकार्यनिवृत्तिः। अत्र तु यूपधर्मेषु तक्षणादिषु न परिधिविधिः, किन्तु नियोजनमात्रे। यूपधर्मास्त्वानुमानिका एव। यद्यपि परिधिधर्मा अप्यानुमानिका एव, तथापि परिधित्वानुपमर्देन नियोजनविधानात्परिधिधर्मा एव प्रबला इति भावः॥

नन्वङ्गगुणविरोधन्यायेन यूपस्य यागीयद्रव्येण साक्षात्सम्बन्धः, परिधेस्तु हविर्धारकाग्निद्वारेत्युक्तम्, इत्यत्राह—

उभयोश्चाङ्गसंयोगः ॥ २९ ॥

परम्परया साद्गुण्यलिप्सया साक्षाद्वैगुण्यमन्याय्यमित्यङ्गगुणविरोधन्यायविषयः। अत एव पर्वकालानुष्ठेयत्वं साक्षात्प्रधानस्योचितमिति व्यवस्थापितम्। इह तूभयोरप्यङ्गसंयोगः—यूपपरिधिधर्मयोः उभयोरप्यङ्गसम्बन्ध एवेति नाङ्गगुणविरोधन्यायप्रसक्तिरित्यर्थः ॥

इत्येकादशं परिधौ विरोधियूपधर्माननुष्ठानाधिकरणम् ॥ ११ ॥

१२

ज्योतिष्टोमे "वपया प्रातस्सवने चरन्ति पुरोडाशेन माध्यन्दिनेऽङ्गैस्तृतीयसवने" इति प्रातस्सवन उपक्रम्य तृतीयसवने सवनीयः पशुस्समाप्यते। "अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्ते" इति प्रतिसवनं सवनीयपुरोडाशानुष्ठानम्। तत्र प्रातरनुवाकोपक्रमानन्तरं 'प्रतिप्रस्थातः सवनीयान्निर्वप' इत्यध्वर्युणा प्रेषितः प्रतिप्रस्थाता 'प्रतिप्रस्थाता सवनीयानां पाणिप्रक्षालनादि कर्म प्रतिपद्यत' इति प्रातस्सवनसम्बन्धिसवनीयपुरोडाशार्थं पाणिप्रक्षालनादि कर्म प्रारभते। अनन्तरं सोमाभिषवग्रहग्रहणबहिष्पवमानप्रसर्पणस्तुतशस्त्रानुमन्त्रणादिषु पदार्थेष्वनुष्ठितेषु 'प्रतिप्रस्थातः पशुनोदेहि' इत्यध्वर्युप्रैषानुसारेण सवनीयपशोरारम्भ इति स्थितिः। तत्र माध्यन्दिनीयानां तार्तीयसवनिकानाञ्च पुरोडाशानां पशुतन्त्रमध्यपातादसन्दिग्धं प्रसङ्गित्वम्। प्रातस्सवनिकानां पुरोडाशानां पशोश्च मिथश्चिन्ता—किं पुरोडाशानां पशोश्च नियतस्तन्त्रिप्रसङ्गिभावो नास्ति ? उतास्ति ? इति। तत्र पूर्वपक्षयति—

पशुसवनीयेषु विकल्पस्स्याद्वैकृतश्चेदुभयोरश्रुतिभूतत्वात् ॥ ३० ॥

सवनीयपशौ सवनीयपुरोडाशेषु च विकल्पस्स्यात्—अनियतस्तन्त्रिप्रसङ्गिभावस्स्यात्। यस्य पूर्वमुपक्रमो यस्य वा पश्चात् समाप्तिस्स तन्त्री, इतरस्तु प्रसङ्गी। प्रातरनुवाककालेऽविशेषेणोभयोरुपक्रमो दृश्यते। ततश्चोपक्रमपूर्वभावः कस्यापि

नावगम्यते। तस्माद्विकल्पः। ननु सत्यप्युपक्रमतौल्ये समाप्तावस्ति विशेषः—पशुस्तृतीयसवने समाप्यते, पुरोडाशास्तु "अनुसवनं पुरोडाशाः" इति वचनेन प्रातस्सवन एव समाप्यन्ते। अतस्सवनीयानां प्रसङ्गित्वमिति चेत्—सत्यम्; "आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति" इति वचनेन पौरोडाशिकानूयाजानामुत्कर्षः तार्तीयसवनिकाग्निमारुतशस्त्रोर्ध्वमित्यङ्गीकारे सवनीयपुरोडानां प्रातस्सवने समाप्त्यसम्भवः। "अनुसवनं सवनीयाः" इति वचनन्तु तस्मिन् सवने प्रधानकर्तव्यतामात्रपरम्। अतस्सवनीयानां प्रसङ्गित्वं नोपपद्यते। तदिदमुच्यते—वैकृतश्चेदुभयोरश्रुतिभूतत्वादिति। यतः पशुरयं वैकृतः, ततश्च पुरोडाशानामपि वैकृतत्वेनोभयोः—पशुसवनीयपुरोडाशयोः प्रत्यक्षश्रुतधर्मकत्वाभावेनाविशेषादेकस्य तन्त्रेऽपरस्य विधिरित्यत्र प्रमाणाभावात्॥

अथ सिद्धान्तयति—

**पाशुकं वा तस्य वैशेषिकाम्नानात् तदनर्थकं विकल्पे स्यात्॥ ३१॥**

वाशब्दः पक्षव्यावृत्तौ। सवनीयपुरोडाशेषु पाशुकं तन्त्रं स्यान्न विकल्पः। कुतः? तस्य-पशोः, वैशेषिकाम्नानात्—विशेष एव वैशेषिकः। वैशेषिकस्य धर्मस्याम्नानात्। दार्शिकस्सूक्तवाकप्रैषः "इषिता दैव्या होतारः" इति चोदकेनाग्नीषोमीयपशौ समागतः विक्रियते—"अग्निमद्य होतारमवृणीत" इति। सोऽयमग्नीषोमीयात्पशोः सवनीये पशावतिदिष्टः "अग्निमद्य होतारमवृणीतायं यजमानस्सुतासुती" इति विक्रियते। यदि पौरोडाशिकं तन्त्रं सवनीये पशौ स्यात्तदा तत्—सवनीयपशौ नित्यवत्प्रैषाम्नानम् अनर्थकं विकल्पे स्यात्। तस्मादाम्नानसामर्थ्यान्नित्यमसौ प्रयोक्तव्यः। सोऽयं प्रैषो मैत्रावरुणकर्तृकः। सवनीयपुरोडाशेषु च मैत्रावरुणो नास्ति, तेषां दर्शपूर्णमासविकारात्, तयोश्च मैत्रावरुणाभावात्। पशौ तु मैत्रावरुण उपदिष्टः। सवनीयपुरोडाशेषु पशुतन्त्रे प्रवर्तमाने न किञ्चिद्वैगुण्यम्, पुरोडाशतन्त्रे पशौ प्रवर्तमाने ऋत्विक्प्रयुक्तवैगुण्यं प्रसज्येत। अतः पाशुकं तन्त्रमेव प्रसज्यते॥

ननु यथा पाशुकं तन्त्रं सवनत्रये विततम्, तथैव "आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति" इति वचनबलेन पौरोडाशिकतन्त्रमपि सवनत्रये विततमिति कथं पशुतन्त्रमध्यपातित्वं पुरोडाशानामिति चेदाह—

**पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात् ॥ ३२ ॥**

चशब्दोऽवधारणे। पशोस्तन्त्रस्यैव विप्रकर्षः—विततिः, न पौरोडाशिकतन्त्रस्य। "वपया प्रातस्सवने चरन्ति" इत्यादिवाक्येन आ च प्रातस्सवनात् आ च तृतीयसवनात् पशुतन्त्रमेव विततमवगम्यते। नैतादृशं वचनं सवनीयपुरोडाशविततिबोधकमस्ति, "अनुसवनं पुरोडाशा निरुप्यन्ते" इति वचनेन ते प्रातस्सवन एव प्रक्रम्यन्ते परिसमाप्यन्ते च। अतो न पशुवत्ते दीर्घकालाः। "आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति" इति वचनं पाशुकानूयाजानामेवोत्कर्षबोधकम्, न पौरोडाशिकानूयाजानाम्। "आग्निमारुतादूर्ध्वम्" इति वाक्यं पौरोडाशिकानूयाजोत्कर्षविधायकं यदि स्यात्तर्हि 'अनुयाजास्तृतीयसवने कर्तव्याः' इति विधातव्यं स्यात्। "अङ्गैस्तृतीयसवने" इत्यङ्गप्रचारोत्कर्षादनूयाजा उत्कृष्यन्त एव। तत्र तेषामनियतकाले प्राप्ते "आग्निमारुतादूर्ध्वम्" इति कालविशेषमात्रं विधीयते। तस्मात् तन्त्रमध्ये—पाशुकन्त्रमध्ये विधानात् पशुस्तन्त्री सवनीयपुरोडाशाश्च प्रसङ्गिनः॥

इति द्वादशं सवनीयपशोरेव तन्त्रिताधिकरणम्॥ १२ ॥

१३

"यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" इति प्रकृतिः नित्या द्व्यहकाला। कामेन निमित्तेन वा प्रवर्तमाना विकृतिरनित्या सद्यस्काला च। पर्वणि विकृतिं प्रथमं सद्यः परिसामाप्यानन्तरं परेद्युः प्रकृतिस्समाप्यत इति स्थितौ सत्यामपि प्रकृतिविकृत्योस्तन्त्रेण प्रयोग इति कृत्वा चिन्त्यते—कः प्रसङ्गी कश्च तन्त्रीति। यथा पशोः प्रवृत्ततन्त्रत्वात्तन्त्रित्वम्, तथा यावज्जीविककर्मण एकत्वेन प्रक्रान्तायां प्रकृतौ क्रियमाणाया विकृतेः प्रयोगमध्यपातात्प्रसङ्गित्वम्, प्रकृतेश्च तन्त्रित्वम्। यद्यपि कर्मण एकत्वेऽपि प्रतिपर्व प्रयोगाणामस्ति भेदस्तथापि नित्यत्वेन प्रकृतेरवश्यकर्तव्यता प्रथमोपस्थितत्वात्प्रकृतिरेव तन्त्रिणीति प्राप्तेऽभिधीयते—

**अपूर्वश्च प्रकृतौ समानतन्त्रा चेदनित्यत्वादनर्थकं हि स्यात् ॥३३॥**

प्रकृतौ विकृतिस्समानतन्त्रा चेत्—प्रकृतिप्रयोगपातित्वात्तत्तन्त्रा यदि, अपूर्वम्—वैकृतं स्वीकर्तव्यम्, विकृतेरनित्यत्वात्—कामेन निमित्तेन वा प्रवर्त-

मानत्वात् । नित्यतया प्रकृतेः क्रियमाणाया मध्ये आपतन्त्या विकृतेः तद्बाधं विना निवेशासम्भवात् बाधित्वैव विकृतिर्निविशते । अन्यथा वैकृतविशेषाम्नानमनर्थकं स्यात् । तस्माद्वैकृतमेव तन्त्रं प्रकृतौ प्रसज्यते ॥

इति त्रयोदशं प्रकृतिविकृत्योस्समानतन्त्रत्वे विकृतितन्त्रानुष्ठानाधिकरणम् ॥ १३ ॥

१४

आग्रयणेष्ट्याम्—"ऐन्द्राग्नो द्वादशकपालः, वैश्वदेवश्चरुः, द्यावापृथिव्य एककपाल" इति त्रीणि हवींषि । तत्र द्यावापृथिव्य एककपालः वैश्वदेविकैककपालविकृतिरित्युक्तं 'स्वरसामैककपालामिक्षञ्च लिङ्गदर्शनात्' इत्यत्र सप्तमे । ततः "प्रसूनं बर्हिः" इत्यतिदिष्टम् । प्रसूनं पुष्पितमित्यर्थः । ऐन्द्राग्ने वैश्वदेवे च प्रसूनमप्रसूनं वा बर्हिर्मात्रम् । समानतन्त्राणीमानि कर्माणि । तेष्वेकरूपमेव बर्हिर्न बर्हिर्द्वयम् । तत्र किं प्रसूनमप्रसूनं वेत्यनियमः ? उत प्रसूनमेव ? इति संशये, मुख्यत्वाद्भूयस्त्वाच्चानियम इति प्राप्तम् । एवं प्राप्ते सिद्धान्तयति –

**अधिकश्च गुणस्साधारणेऽविरोधात्कांस्यभोजिवदमुख्येऽपि ॥३४॥**

साधारणे—समानतन्त्रे योऽधिको गुणः 'प्रसूनं बर्हिः' इत्यादिः, सोऽविरोधाद् अमुख्येऽपि—द्यावापृथिव्येककपाले नियम्येत, कांस्यभोजिवत्—अमुख्यस्यापि शिष्यस्य धर्मोऽनुगृह्यते तद्वदित्यर्थः । आचार्यस्य भोजनपात्रमनियतम्, शिष्यस्य तु गुरूच्छिष्टभोजनेन सह कांस्यपात्रे भोजनं नियतम् । अमुख्यस्यापि शिष्यस्य कांस्यपात्रभोजनगुरूच्छिष्टभोजननियमं रक्षितुमाचार्योऽपि कांस्यपात्रमेव भोजन उपयुङ्क्ते, तथैवैन्द्राग्नवैश्वदेवयोः प्रसूनमप्रसूनं वेत्यनियमे सत्यपि जघन्यस्य द्यावापृथिव्यैककपालस्य प्रसूनबर्हिर्नियमस्य ग्रहणे तयोर्न कोऽपि विरोधः । अतः प्रसूनं बर्हिरेवाग्रयणे स्यात् ॥

इति चतुर्दशमाग्रयणे प्रसूनबर्हिषामेव ग्रहणाधिकरणम् ॥ १४ ॥

( कांस्यभोजिन्यायः )

१५

आग्रयणे द्यावापृथिवीयप्रसूनबर्हिषो ग्रहणमिति स्थितम् । एवञ्चेद् विरुद्धेष्वपि धर्मेषु नवप्रयाजादिषु द्यावापृथिव्य एव धर्मः स्यादैन्द्राग्नवैश्वदेवयोगयोरिति पूर्वपक्षयति—

**तत्प्रवृत्त्या तु तन्त्रस्य नियमस्स्याद्यथा पाशुकं सूक्तवाकेन ॥३५॥**

तत्प्रवृत्त्या—तस्य द्यावापृथिवीयप्रसूनस्य प्रवृत्त्या, तन्त्रस्य-वैश्वदेविकतन्त्रस्य नियमस्स्यात्-द्यावापृथिवीयधर्मनियमस्स्यात् । अत्र दृष्टान्तः—यथा पाशुकं सूक्तवाकेनेति । यथा सवनीयस्य पशोः वैशेषिकसूक्तवाकदर्शनात्तन्त्रित्वम् एवं द्यावापृथिव्यवैशेषिकप्रसूनदर्शनात्तस्यैव तन्त्रित्वमितरेषाञ्च प्रसङ्गित्वमिति स्यात् । ततश्चासत्यपि तन्त्रमध्यपाते प्रसङ्ग एवात्र न तु समानतन्त्रतेति भावः ॥

सिद्धान्तयति—

**न वाविरोधात् ॥ ३६ ॥**

न वात्र नियमस्स्यात् । कुतः ? अविरोधात्—प्रसूनग्रहणेऽप्यैन्द्राग्नादेर्वैगुण्याभावात् । "अग्निमद्य" इत्यादिसूक्तवाकस्य पुरोडाशसाधारण्याभावात्तद्बलेन पशोस्तन्त्रित्वं युक्तम्, अत्र तु प्रसूनग्रहणेऽप्यैन्द्राग्नादेर्वैगुण्याभावेन तत्साधारणत्वान्न तद्बलेन द्यावापृथिव्यस्य तन्त्रित्वम्, किन्त्वेकोपक्रमावसानात् समानतन्त्रत्वमेव । विरुद्धेषु धर्मेषु ऐन्द्राग्नादिधर्मोऽनुष्ठेयः मुख्यभूयस्त्वाभ्याम् ॥

किञ्च—

**अशास्त्रलक्षणाच्च ॥ ३७ ॥**

"प्रसूनं बर्हिः" इति न शास्त्रेण विहितम्, किन्त्वतिदिष्टम् । प्रसूनस्य न वैशेषिकत्वमिति भावः । पाशुकतन्त्रे सूक्तवाकस्य वैशेषिकत्वात्तस्य नियन्तृत्वमुपपद्यते, प्रसूनस्यावैशेषिकत्वात् चोदकप्राप्तत्वेन शास्त्रलक्षणत्वाभावान्नास्ति तन्त्रस्य नियमः ॥

**इति पञ्चदशमाग्रयणे द्यावापृथिव्यादीनां तन्त्रित्वाधिकरणम् ॥ १५ ॥**

इति महामहोपाध्यायानां वेदविशारद-शास्त्ररत्नाकर-श्रौतस्मार्तनित्यकर्मानुष्ठान
निरत-वाधूलान्वयवतंस श्रीमच्चिन्नस्वामिशास्त्रिचरणानामन्तेवासिना
श्रीपट्टाभिरामशास्त्रिणा विरचितायां जैमिनीयद्वादशाध्याय-
सूत्रवृत्तौ द्वितीयः पादः ॥

❀ श्रीः ❀

# तृतीयः पादः

## १

इदानीं विकल्पसमुच्चयमुखेन प्रसङ्गकथा प्रस्तूयते। तत्रास्मिन् पादे प्राधान्येन समुच्चयः प्रतिपाद्यते। ततश्च प्रसङ्गापवादनिरूपणपर्यवसानात् पादान्तरत्वम्। अस्त्यष्टरात्रोऽहीनः। तत्र प्रथममहः विश्वजित्, ततोऽभिप्लवः षडहः, ततश्चाभिजित्। प्रथमेऽहनि विश्वजिति एकाहविश्वजिद्धर्मो नाम्नातिदिश्यते, इतरेषु चाहस्सु ज्योतिष्टोमाच्चोदनालिङ्गातिदेशः। एकाहे विश्वजिति "अवभृथादुदेत्य वत्सत्वचं परिधत्ते" इति यजमानस्य वत्सत्वक्परिधानं विहितम्, तदत्र नामातिदेशेन समागतम्। अहतवासःपरिधानं ज्योतिष्टोमे, तदत्र चोदनालिङ्गातिदेशेनेतरेष्वहस्सु प्राप्तम्। चोदकाच्च नाम बलवदिति सप्तमचतुर्थद्वितीये प्रसाधितम्। अस्यां स्थितौ किमहतवत्सत्वचोर्विकल्पः? उत वत्सत्वगेव? अथवोभयोस्समुच्चयः? इति सन्देहे, परिधानरूपकार्यैकत्वाद् 'एकार्थास्तु विकल्पेरन्' इति न्यायेन विकल्पः प्राप्तः, स च नोचितः, तुल्यबलत्वाभावात्। नामधेयेन वत्सत्वक्, चोदनालिङ्गातिदेशेन चाहतं वासः। तत्र नाम्नः प्रबलत्वात् चोदनालिङ्गस्य च दुर्बलत्वाद्विकल्पपक्षोऽस्ति मन्द इति द्वितीयपक्षयति—

**विश्वजिति वत्सत्वङ् नामधेयादितरथा तन्त्रभूयस्त्वादहतं स्यात् ॥ १ ॥**

विश्वजिति वत्सत्वक् स्यान्न विकल्पः। कुतः? नामधेयात्—नामधेयस्य बलवत्त्वादित्यर्थः। नामधेयाद्वत्सत्वक् प्राप्ता चोदकाच्चाहतं वासः प्राप्तम्। विषमशिष्टयोश्च न विकल्पः। इतरथा—यदि नामधेयतः प्राप्तिर्न स्यात् तदा तन्त्रभूयस्त्वात्—'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्स्वधर्मत्वम्' इति न्यायेन तन्त्रभूयस्त्वेन अहतं स्यात्—ज्योतिष्टोमप्रकृतीनामहतं स्यात्। किन्तु वत्सत्वगत्रास्त्येवेति नाहतं वासः। यद्यप्यहतं वासोऽपि वत्सत्वगिव ज्योतिर्नामविषयं

भवितुमर्हति, तथापि मुख्यत्वाद्विश्वजित एव बलवत्वम् 'मुख्यं वा पूर्वचोदनाल्लोकवत्' इति न्यायात्। अतो वत्सत्वगेव, तयैव प्रसङ्गसिद्धिः। एवं प्राप्ते, सिद्धान्तयति—

## अविरोधो वा उपरि वासो हि वत्सत्वक् ॥ २ ॥

वाशब्दो निषेधार्थकः। वत्सत्वगेवेति न नियमः। किन्तूभयोस्समुच्चयः। ननु नामधेयस्य बलवत्त्वमुक्तम्, तेनाहतं बाध्यत इत्यत्राह—अविरोधः—विरोधे खलु बाध्यबाधकभावः। प्रबलं प्रमाणमित्येव न दुर्बलं बाधते, किन्तु सति विरोधे। न चात्र विरोधोऽस्ति अहतवत्सत्वचोः। तदिदमाह—उपरिवासो हि वत्सत्वक् इति। उपरि वासःकार्ये वत्सत्वक्, अधोवासः कार्येऽहतम्। न हि वत्सत्वचा कौपीनधारणकार्यं साधयितुं शक्यते, तच्चाहतेन वाससैव भवितुमर्हति। अतो भिन्नकार्यत्वादुभयोस्समुच्चय एव ॥

## इति प्रथमं वत्सत्वगहतवाससोस्समुच्चयाधिकरणम् ॥ १ ॥

### २

चयनादौ "अग्नीषोमीयं पशुमालभते तस्य वपया प्रचर्याग्नीषोमीयमेकादशकपालं पुरोडाशं निर्वपति, तदनु देवसुवां हवींषि निरुप्यन्ते" इति देवसूहवींषि विहितानि। पशुपुरोडाशनिर्वपणमनु निरुप्यन्त इतीमान्यनुनिर्वाप्याणीति कथ्यन्ते। तानि—"सवित्रे सत्यप्रसवाय द्वादशकपालमष्टाकपालं वा पुरोडाशं निर्वपति प्लाशुकानां व्रीहीणाम्" "अग्नये गृहपतयेऽष्टाकपालं पुरोडाशं निर्वपत्याशूनाम्" "सोमाय वनस्पतये श्यामाकं चरुं निर्वपति" "बृहस्पतये वाचे नैवारं चरुं निर्वपति" "इन्द्राय ज्येष्ठाय हायनानां चरुं निर्वपति" "रुद्राय पशुपतये गावेधुकं चरुं निर्वपति" "मित्राय सत्याय नाम्बानां चरुं निर्वपति" "वरुणाय धर्मपतये यवमयं चरुं निर्वपति" इत्यष्टौ भवन्ति। पुनः प्ररूढा व्रीहयः प्लाशुकाः। अकृष्टपच्या व्रीहयो नाम्बाः।

अत्रानुनिर्वाप्याणां तन्त्रित्वमुत पुरोडाशस्येत्येवं न विचारः, बहूनामप्यनुनिर्वाप्याणां तन्त्रमध्यपातेन प्रसङ्गित्वस्य विचारं विनैव सिद्धत्वात्; किन्तु

धर्मविप्रतिषेधे किं भूयसां प्रसङ्गिनां धर्मो ग्राह्यः ? उतैकस्यापि तन्त्रिणो धर्मः ? इति विचारः। तत्र पूर्वपक्षयति—

**अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमस्स्यात् स्विष्टकृद्दर्शनाच्च ॥३॥**

अनुनिर्वाप्येषु-देविकाहविष्षु तन्त्रनियमस्स्यात्—तन्त्रस्यानुष्ठेयधर्मस्य नियमः-तत्सम्बन्धिधर्मनियमस्स्यात्। स्वाधर्म्यं स्यादित्यर्थः। अत्र हेतुः-भूयस्त्वेनेति। भूयांसि ह्यनुनिर्वाप्याणि, तेषां धर्म एव ग्राह्य इति भावः। हेत्वन्तरमाह— स्विष्टकृद्दर्शनाच्चेति। पशुपुरोडाशप्रचारानन्तरं देविकाहवींषि विधाय तत्र "अग्नये स्विष्टकृतेऽनुब्रूहि" इति वचनं दृश्यते। पशुपुरोडाशे च स्विष्टकृतोऽनिरुक्तत्वम्। यदि तन्त्रिणः पुरोडाशस्य धर्मः तर्हि स्विष्टकृच्छब्दकं वचनमिदमनुपपन्नं स्यात्। अतः स्विष्टकृद्दर्शनाद्देविकाहविष्षु तत्सम्बन्धिधर्मनियमः॥

सिद्धान्तयति—

**आगन्तुकत्वाद्वा स्वधर्मा स्याच्छ्रुतिविशेषादितरस्य च मुख्यत्वात् ॥ ४ ॥**

वाशब्दः पक्षव्यावृत्तौ। पुरोडाशमनु 'देविकाहवींपि निर्वपति' इति श्रुतिविशेषात् पुरोडाशानन्तर्यं देविकाहविषां प्रतीयते। पूर्वं पशुपुरोडाशः पश्चादनुनिर्वाप्याः। अतोऽनुनिर्वाप्या आगन्तुकाः जघन्याः। आगन्तुकत्वात् तेषां न स्वाधर्म्यम्। इतरस्य च पशुपुरोडाशस्य मुख्यत्वात् स एव स्वधर्मा स्यात्॥

अत्र हेत्वन्तरमाह—

**स्वस्थानत्वाच्च ॥ ५ ॥**

"वपया प्रातस्सवने पुरोडाशेन माध्यन्दिनसवनेऽङ्गैस्तृतीयसवने" इति पशुपुरोडाशस्य स्थानं वपाप्रचारात्परतो विहितम्। स्वस्थाने पशुपुरोडाशः कर्तव्यः, स च साङ्गः, प्रधानदेशत्वादङ्गानामिति नियमात्। "पुरोडाशमनु निर्वपति" इत्यनुशब्देन पुरोडाशतन्त्रमध्यपातित्वमनुनिर्वाप्याणां स्पष्टमवगम्यते। तेन पुरोडाशस्तन्त्री, अनुनिर्वाप्याश्च प्रसङ्गिन इति सिध्यति। तन्त्रिधर्मश्च प्रसङ्गिनोपजीवनीयः। अतः स्वस्थानत्वात् पुरोडाश एव स्वधर्मा, नानुनिर्वाप्यास्स्वधर्माणः। तथा च धर्माणां विप्रतिषेधे यथा पशुतन्त्रमध्यपातित्वात्पुरोडाशस्य पशौ ये धर्मा न सन्ति तेष्वेव पुरोडाशस्य स्वाधर्म्यम्, न तु पशौ विद्यमानप्रयाजादिष्वपि,

तेषु पशोरेव प्रयोजकत्वात्, तथा पुरोडाशतन्त्रमध्यपातित्वेनानुनिर्वाप्याणां पुरोडाशे ये धर्मा न सन्ति तेष्वेव तेषां स्वाधर्म्यम्, न तु पुरोडाशे विद्यमानेष्वपीति विवेको बोध्यः ॥

'स्विष्टकृद्दर्शनात्' इति पूर्वपक्ष्यभिहितमनूद्य परिहरति—

## स्विष्टकृच्छ्रवणाच्चेति चेद्विकारः पवमानवत् ॥ ६ ॥

अनुनिर्वाप्याणां बहुत्वात्तत्तन्त्रमेव पशुपुरोडाशे प्रसज्यते, न पुरोडाशः स्वधर्मा, यतः स्विष्टकृच्छ्रवणात्—"अग्नये स्विष्टकृतेऽनुब्रूहि" इति स्विष्टकृच्छब्दकस्य वचनस्य श्रवणादिति चेद् आह—विकारः पवमानवदिति। शतपथब्राह्मणे "अथाग्नीषोमीयेण पुरोडाशेन प्रचरति, तस्यानिष्ट एव स्विष्टकृद्भवति, अथैतैर्हविर्भिः प्रचरति" इत्यग्नीषोमीयपशुपुरोडाशप्रचारं तत्र स्विष्टकृतोऽनिष्टगुणवत्त्वञ्च प्रदर्श्य देविकाहविषां प्रचारो विहितः। तत्र "सविता त्वा सवानाम्" इत्यादिमन्त्रजपं तत्प्राशस्त्यञ्चाभिधायानन्तरं "अग्नये स्विष्टकृतेऽनुब्रूहि" इति पुरोनुवाक्याप्रैषम् "अग्नये स्विष्टकृते प्रेष्य" इति मैत्रावरुणं प्रति प्रैषञ्च विधाय "वषट्कृते जुहोति" इति च स्विष्टकृद्धोमो विहितः। अनेन सन्दर्भेण पशुपुरोडाशे स्विष्टकृतोऽनिरुक्तत्वम्, तथैव च देविकाहविष्षु प्राप्ते तस्मिन् "अग्नये स्विष्टकृते" इत्यादिना स्विष्टकृत्प्रतिप्रसव इत्यवगम्यते। तदिदं देविकाहविष्षु स्विष्टकृद्दर्शनं पशुपुरोडाशतः प्रसक्तस्यानिरुक्तस्विष्टकृतो विकारार्थमेवेति स्वीकर्तव्यम्। यथा "अग्नये निर्वपति" इति निर्गुणकाग्निशब्दस्य प्रयोगे प्रकृतितः पवमानेष्टौ प्राप्ते सति "अग्नये पवमानाय निर्वपति" इति विकारो भवति, तथैवानिरुक्तस्विष्टकृतः पशुपुरोडाशतः प्राप्तौ सत्याम् "अग्नये स्विष्टकृते" इति स्विष्टकृद्दर्शनं नेतव्यमित्यर्थः। किञ्चात्र मैत्रावरुणं प्रति "अग्नये स्विष्टकृते प्रेष्य" इति प्रैषदर्शनात् पशुतन्त्रित्वमेवेति ज्ञायते, अनुनिर्वाप्यतन्त्रित्वेऽनुनिर्वाप्याणां दर्शपूर्णमासविकृतित्वेन 'अग्निं स्विष्टकृतं यज" इति होतारं प्रत्येव प्रैषः स्यात्। अतः पशुपुरोडाशतन्त्रित्वेन स्विष्टकृति निर्गुणस्यैवाग्नेः प्राप्तौ स्विष्टकृच्छब्दप्रतिप्रसवार्थत्वेन "अग्नये स्विष्टकृते" इति देविकाहविष्षु दर्शनमुपपन्नमिति सिद्धम् ॥

प्रकारान्तरमाह—

**अविकारो वा प्रकृतिवच्चोदनां प्रति भावाच्च ॥ ७ ॥**

वाशब्दः प्रकारान्तरे । अविकारः—अनिरुक्तः स्विष्टकृत् । अस्विष्टकृच्छब्दक-मेव वचनं कर्तव्यमित्यर्थः । प्रकृतिवत्—यथा दर्शपूर्णमासयोः प्रकृतौ स्विष्ट-कृच्छब्दकं वचनं तद्वदिदमित्युपलक्षणार्थं वचनम् । अर्थात्—"अग्नये स्विष्टकृते समवद्यति" इत्यत्र स्विष्टकृच्छब्दोऽविवक्षितार्थः । अनेन वाक्येन समवदाने विकारे च विधीयमाने वाक्यं भिद्येत । अतः दर्शपूर्णमासयोः या स्विष्टकृच्चोदनास्ति तां प्रति भावाच्च—तत्प्रत्येतद्वचनं तदुपलक्षणायेति सूत्रार्थः । यथा "शरमयं बर्हिर्भवति" इत्यादौ द्रव्यशब्देन प्राकृतं कार्यं लक्ष्यते, तद्वदत्र स्विष्टकृच्छब्देन प्राकृती देवता लक्षणयानूद्यत इति भावः ॥

इति द्वितीयमनुनिर्वाप्येषु पशुपुरोडाशतन्त्रस्यैव प्रसङ्गोपकर-कत्वाधिकरणम् ॥ २ ॥

३

दर्शपूर्णमासयोः "आघारावाघारयति" इति विहितावाघारौ प्रकृत्य "ऊर्ध्वमाघारयति" "ऋजुमाघारयति" "सन्ततमाघारयति" इति श्रुतम् । अत्र किमूर्ध्वत्वादीनां विकल्पेन निवेशः ? उत समुच्चयेन ? इति सन्देहे 'एकार्थास्तु विकल्पेरन्' इत्यग्रिमाधिकरणन्यायेनाघाराख्यं कर्म उद्दिश्य विधीयमानानामूर्ध्व त्वादीनामेकप्रयोजनजनकत्वेन व्रीहियववद्विकल्प एवेति प्राप्ते, सिद्धान्तयति—

**एककर्मणि शिष्टत्वाद्गुणानां सर्वकर्म स्यात् ॥ ८ ॥**

एककर्मणि-आघाराख्यकर्मणि गुणानाम्—ऊर्ध्वत्वादीनां शिष्टत्वात्-उपदिष्टत्वात् सर्वकर्म स्यात्—सर्वेषामूर्ध्वत्वादीनां कर्म—अनुष्ठानं स्यात् । समुच्चयस्स्यादित्यर्थः । न चात्र व्रीहियववद्विकल्पस्सङ्गच्छते । पुरोडाशनिष्पत्ति-रूपप्रधानक्रियाया एकत्वमात्रेण व्रीहियवयोर्न विकल्पः, किन्तु तत्र तण्डुलनिष्पत्ति-लक्षणद्वारकार्यमप्येकमिति एकार्थत्वाद्विकल्पः, अत्र तु आघारक्रियाया एकत्वेऽपि ऊर्ध्वत्वादीनां द्वारकार्याणि भिन्नानि । ऊर्ध्वत्वं यत्कार्यं दृष्टविधया सम्पाद्यते न

तदृजुत्वेन सन्ततत्वेन वा। अतोऽत्र द्वारैक्याभावात् युगपत्सर्वोपसङ्ग्राहकप्रयोगवचनपरिग्रहबलेन विरोधाभावेन समुच्चयसम्भवात्समुच्चय एव॥

इति तृतीयमूर्ध्वत्वादिगुणानां समुच्चयाधिकरणम् ॥ ३ ॥

४

"व्रीहिभिर्यजेत" "यवैर्यजेत" इत्यादौ व्रीहियवादीनां समुच्चयो विकल्पो वेति विचार्यते। सर्वोपसङ्ग्राहकप्रयोगवचनपरिग्रहाद् विरोधाभावाच्च समुच्चयः। प्रयोगवचनो हि युगपदेव नित्यवदाम्नातौ व्रीहियवौ गृह्णाति, न तु पर्यायेण। अतो यागाभ्यासेन वा द्रव्ययोर्मिश्रणेन वा व्रीहियवयोस्समुच्चय इति प्राप्ते, सिद्धान्तयति—

**एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिस्स्यात्प्रधानस्य ॥ ९ ॥**

एकोऽर्थः प्रयोजनं येषान्त एकार्थाः—एककार्यकरा इत्यर्थः। व्रीहयो यवा वा यागीयहविष्प्रकृतितया तत्तद्विनियोगविधिना विधीयन्त इति तावत्स्पष्टम्। "यदाग्नेयोऽष्टाकपालः" इत्युत्पत्तिवाक्येनाग्निदेवताकपुरोडाशद्रव्यको यागो विहितः। पुरोडाशः पिष्टमयः। पिष्टस्य च प्रकृतिद्रव्यापेक्षायां "व्रीहिभिर्यजेत" "यवैर्यजेत" इति विनियोगविधिर्मिथो निरपेक्षो व्रीहीन् यवांश्च विदधाति। तत्र तृतीयाविभक्तिः व्रीहिनिष्ठं यवनिष्ठञ्चाङ्गत्वं निरपेक्षा सती ग्राहयति। व्रीहिभिरित्यत्र तृतीयायाः यवसापेक्षत्वे यवैरित्यत्र तस्या व्रीहिसापेक्षत्वे वा सामर्थ्याभावात्तृतीयैव न स्यात्, 'समर्थः पदविधिः' इत्यनुशासनात्। यवनिरपेक्षव्रीहिशास्त्रेण प्रकृतिद्रव्ये समर्पिते तेनैव प्रकृतिद्रव्यप्राप्तौ, प्रयोगवचनो निराकाङ्क्षस्सन् न यवानुपसङ्गृह्णीयात्। एवं व्रीहिनिरपेक्षेण यवशास्त्रेण यवेषु समर्पितेषु प्रयोगवचनो न व्रीहीन् गृह्णीयात्। उत्पत्तिविध्याकाङ्क्षानुरोधेन विनियोगविधिः पदार्थान् समर्पयति, यथाविनियोगञ्च प्रयोगविधिः, नान्यः कश्चन। अतः प्रयोगविधिना युगपदुभयोपसङ्ग्रहाभावान्न व्रीहियवयोस्समुच्चयः। न च प्रयाजवत्समुच्चयो वर्ततामिति वाच्यम्, विनियोगविधिवेलायां प्रमाणान्तरेणावान्तरकार्यैक्यस्यानिर्णीतत्वात्प्रयाजादौ साहित्यावगमात्समुच्चयसत्वेऽपि प्रकृते तादृशकार्यैक्यस्य पुरोडाशप्रकृतित्वस्य निर्णीतत्वेन समुच्चयासम्भवात्। अत एकार्था विकल्पेरन्।

यदि व्रीहियवयोस्समुच्चयस्तर्हि प्रधानस्य—आग्नेयादेरावृत्तिस्स्यात्। तच्च नोचितमिति भावः ॥

आवृत्तिमाशङ्क्य निराकरोति—

**अभ्यस्येतार्थवत्त्वादिति चेन्नाश्रुतित्वात् ॥ १० ॥**

विकल्पे सत्यन्यतरस्य नैरर्थक्यं स्यात्। अतः अर्थवत्वात्—प्रयोजनवत्त्वाद्यागोऽभ्यस्येतेति चेन्न; कुतः? अश्रुतित्वात्—प्रमाणाभावात् नाभ्यास इत्यर्थः ॥

अभ्यासाभावे हेतुमाह—

**सति चाभ्यासशास्त्रत्वात् ॥ ११ ॥**

"संसव उभे कुर्यात्" "गोसव उभे कुर्यात्" "उभे बृहद्रथन्तरे कुर्यात्" इत्याद्यभ्यासशास्त्राण्यनुपपन्नानि भवेयुस्सति च समुच्चये। तस्माद्व्रीहियवयोर्विकल्पः ॥

**विकल्पवच्च दर्शयति ॥ १२ ॥**

विकल्प इव दर्शनं भवति—"बैल्वो वा खादिरो वा पालाशो वान्येषां यज्ञक्रतूनां यूपा भवन्ति, अथैतस्य खादिर एव कार्यः" इति वाजपेये खादिरं नियच्छन् अन्यत्र विकल्पं बोधयति। तस्मादपि विकल्पः ॥

विकल्पेऽन्यतरस्यानर्थक्यमिति शङ्कां निरस्यति—

**कालान्तरेऽर्थवत्त्वं स्यात् ॥ १३ ॥**

कालान्तरे—प्रयोगान्तरेऽर्थवत्त्वं प्रयोजनवत्त्वं स्यात्। एकस्मिन् प्रयोगे व्रीहीणां ग्रहणम्, प्रयोगान्तरे च यवानामिति प्रयोजनवत्त्वमित्यर्थः ॥

इति चतुर्थमेकार्थानां विकल्पाधिकरणम् ॥ ४ ॥

५

विहितानामननुष्ठानेन निषिद्धानाञ्च सेवनेन निमित्तैश्च कर्मणां वैगुण्ये प्राप्ते तन्निबर्हणाय प्रायश्चित्तकर्माणि शाखाभेदेन विधीयन्ते। तेषु एकस्मिन्नेव वैगुण्ये निरपेक्षेषु नाना प्रायश्चित्तेषु प्राप्तेषु किं समुच्चयः? उत विकल्पः? इति

सन्देहः। यथा—"यदि सामतो यज्ञ आर्तिमियात् सुवरित्याहवनीये जुहुयात्" इत्यध्वर्युकर्तृको होमः। "यदि सामतो यज्ञ आर्तिमियात् स्वरित्याहवनीये जुहुयात्" इति ब्रह्मकर्तृको होमः। एवं दर्शपूर्णमासातिक्रमेण क्वचित्पाथिकृतीष्टिः क्वचिच्च वैश्वानरेष्टिः। प्राय इति विनाशे वर्तते। चित्तमिति सन्धाने। विनष्टस्य सन्धानार्थतया विधीयमानानि प्रायश्चित्तानि कर्माणि। केन कर्मणा विनष्टस्य सन्धानमित्यज्ञातत्वेन सर्वेषां समुच्चय इति प्राप्ते सिद्धान्तयति—

**प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात्सर्वस्य निर्घातः॥ १४॥**

प्रायश्चित्तेषु सत्यप्यदृष्टार्थत्वे व्रीहियववद्विकल्प एव, न समुच्चयः। कर्मणः कस्मिंश्चन वैगुण्ये जाते विनियोगविधिस्तन्निर्हरणाय किञ्चिदेकं प्रायश्चित्तं कर्म गृह्णाति तद्विनियुङ्क्ते च। तद्बलाद्वैगुण्यध्वंसो जायत इति निश्चये सत्यन्यत् प्रायश्चित्तं कर्म विनियोगविधिः कथं गृह्णीयात्? प्रायश्चित्तानां वैगुण्यध्वंस एवावान्तरं कार्यम्। एतदर्थेनैव प्रायश्चित्तान्यन्यनिरपेक्षाणि विधीयन्ते। तदा प्रायश्चित्तानामेकार्थत्वं सिध्यतीति विकल्प एव प्रसज्यते, न समुच्चय इति भावः। ननु कथं तर्हि प्रयाजादीनां समुच्चयः। तत्रापि प्रधाननिष्ठपरमापूर्वजननयोग्यताधायकत्वरूपमवान्तरकार्यमेकमेव। तदर्थत्वेन विहितानां पञ्चानां प्रयाजानामेकार्थत्वमिति तेषां विकल्पः कुतो न स्यादिति चेन्न; प्रधानोपकाराख्ये महाकार्ये जननीये प्रयाजादीनां सर्वेषामारादुपकारकाणामङ्गानां प्रयोगविधिपरिगृहीतत्वेन साहित्यावगमाद् एवमवान्तरकार्ये साहित्यानवगमात्। तथा सत्युत्पत्तिविनियोगावगतनैरपेक्ष्यस्य बाधापत्तेः। अतो न प्रयाजादिषु विकल्पः, प्रायश्चित्तकर्मसु च विकल्पः। कुतः? ऐकार्थ्यात्-कर्मवैगुण्यजन्यदोषनिर्हरणरूपकार्यैक्यात्। ऐकार्थ्यस्यैव हेतुः—निष्पन्नेनाभिसंयोग इति। निष्पन्नेन कर्मवैगुण्येन तस्य तस्य प्रयश्चित्तस्याभिसंयोगः-सम्बन्धः। तस्मादेकेन सर्वस्य वैगुण्यस्य निर्घात इति सूत्रार्थः॥

इति पञ्चमं दोषनिर्घातार्थप्रायश्चित्तानां विकल्पाधिकरणम्॥ ५॥

६

## समुच्चयस्त्वदोषार्थेषु ॥ १५ ॥

यानि प्रायश्चित्तानि दोषनिर्घातार्थानि न भवन्ति, यथा—अन्वाधानोत्तरं चन्द्रसूर्योपरागे इडाभक्षणात्पूर्वमपि 'उदुत्यम्' 'उद्वयम्' 'चित्रम्' इति मन्त्रत्रयकरणकहोमत्रयविधिः, तत्र समुच्चयः ॥

इति षष्ठमदोषार्थेषु प्रायश्चित्तेषु समुच्चयाधिकरणम् ॥ ६ ॥

७

'पर्वणि नाध्येयम्' 'स्तनयित्नौ नाध्येयम्' इत्यादयोऽध्यायानध्यायधर्मास्ते किं कर्मकालेऽपि स्युः ? उत न स्युः ? इति सन्देहे पूर्वपक्षयति—

## मन्त्राणां कर्मसंयोगात्स्वधर्मेण प्रयोगस्स्यात् धर्मस्य तन्निमित्तत्वात् ॥ १६ ॥

इमे धर्माः कर्मकाले क्रियमाणमन्त्रप्रयोगरूपाध्ययनेऽपि स्युः। कुतः ? मन्त्राणां कर्मसंयोगात्—कर्मभिस्सम्बन्धात्। अतस्तेषां स्वधर्मेण प्रयोगस्स्यात्। मन्त्राणां धर्मा अध्यायानध्यायपरिपालनरूपाः। ते यदा कर्मकाले प्रयुज्यन्ते तदा स्वधर्मेण तेषां प्रयोगस्स्यात्। अत्र हेतुः—धर्मस्य तन्निमित्तत्वात्—धर्मोऽयं मन्त्रप्रयोगनिमित्तः। मन्त्रप्रयोगश्च कर्मकालेऽस्तीति तैर्धर्मैरत्रापि भवितव्यम्। अतः पर्वप्रतिपदादौ कर्मकाले मन्त्रा न प्रयोक्तव्याः ॥

अथ सिद्धान्तयति—

## विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगस्स्यात् कर्मार्थत्वात्प्रयोगस्य ॥ १७ ॥

त्रिविधमध्ययनं भवति—ग्रहण-धारण-जपरूपेण। अधिपूर्वकेङ्धातोः गुरुमुखोच्चारणमनूच्चारणमर्थः। तच्च ग्रहणाध्ययन एव न धारणजपाध्ययनयोः। अयमध्ययनपदार्थः प्रयोगकाले नास्ति। उच्चारणमात्रञ्च नाध्ययनमिति परिगण्यते। अतस्सर्वकालम्—अध्यायेऽनध्याये च प्रयोगस्स्यात्। कुतः ? विद्यां प्रति विधा-

नात्—ग्रहणाध्ययनं प्रत्येव धर्माणां विधानात्। एते चाध्यायानध्यायधर्माः निर्विघ्नेन वेदाध्ययनपरिसमाप्त्यर्थं परिपाल्यन्ते।

'तपो विशेषैर्विविधैर्व्रतैश्च श्रुतिचोदितैः।
वेदः कृत्स्नोऽधिगन्तव्यस्सरहस्यो द्विजन्मना'॥

इति स्मृत्यापि धर्माणां ग्रहणाध्ययनमात्राङ्गत्वं बोध्यते। कर्मानुष्ठानकाले न मन्त्रा गुरुमुखोच्चारणानूच्चारणरूपेण गृह्यन्ते। ते च गुरुकुलवासावसरे गृहीताः, तदा नियमाश्च परिपालिताः। अतः कर्मकाले मन्त्राणां प्रयोगः कर्मार्थः। तस्मान्नादर्तव्या अध्यायानध्यायनियमाः कर्मकाले॥

इति सप्तमं कर्मकालेऽनध्यायेऽपि मन्त्राणां प्रयोगाधिकरणम्॥ ७॥

८

मन्त्रसमाम्नाये मन्त्रा उदात्तादिस्वरयुक्ताः पठिताः। ब्राह्मणे च भाषिकस्वरेणाधीताः।

'छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः।
उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते'॥

इति भाषिकस्वरः। कर्मानुष्ठानकाले किं ब्राह्मणस्वरेण मन्त्राः प्रयोक्तव्याः? उत समाम्नायस्वरेण? इति सन्देहः। तत्र पूर्वपक्षयति—

**भाषास्वरोपदेशादैरवत् प्रावचनप्रतिषेधस्स्यात्॥ १८॥**

भाषिकस्वर एव प्रयोक्तव्यः। कुतः? भाषास्वरोपदेशात्—वाचनिकत्वाद्भाषास्वरस्येत्यर्थः। कर्मकाले मन्त्रगतसामर्थ्यादेव मन्त्राणां प्राप्तौ सत्यां पुनर्ब्राह्मणेन "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति मन्त्रविधानं स्वरविधानार्थमेवेति भाषिकस्वरो वाचनिक इति गम्यते। अथवा भाषिकस्वरविशिष्टमन्त्रविधानं वा ब्राह्मणेन क्रियत इति स्वीकर्तव्यम्। अतो ब्राह्मणस्वरो वाचनिक उपदेशात्प्राप्तः। एवञ्च प्रावचनप्रतिषेधः—प्रावचनस्य मन्त्राम्नानस्वरस्य प्रतिषेधस्स्यादित्यर्थः। अत्र दृष्टान्तः—ऐरवदिति। "न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयम्" इत्यत्र गिरा गिरेत्युपदेशे सत्यपि ऐरमिति विधानेन तन्निषेधो यथा तथैव भाषिकस्वरेण प्रावचनस्य प्रतिषेध इत्यर्थः॥

अथ सिद्धान्तयति—

**मन्त्रोपदेशो वा न भाषिकस्य प्रायापत्तेर्भाषिकश्रुतिः ॥ १९ ॥**

वाशब्दः पक्षव्यावृत्तौ। मन्त्रोपदेशः—मन्त्रस्यैवायमुपदेशः, न भाषिकस्य स्वरस्य। मन्त्रस्तर्हि ब्राह्मणभागे कुतः पठ्यत इति चेदाह—प्रायापत्तेर्भाषिकश्रुतिः—भाषिकस्वरयुक्ते ब्राह्मणे प्रावचनस्य स्वरस्य पाठे भाषिकस्वरसन्तानविच्छेदस्स्यादित्यर्थः। ब्राह्मणवाक्यं मन्त्रभागगतं मन्त्रं विनियोक्तुं प्रवृत्तम्। मन्त्रभागगतस्वरः शाब्दः। शाब्दस्य तस्यैव विनियोगः कर्तव्यः। ब्राह्मणस्वरस्त्वशाब्दः, पूर्वस्वराविच्छेदार्थत्वेनान्यथासिद्धः। मन्त्राम्नानस्वरस्यानन्यथासिद्धतया तस्यैव क्रतुमध्येऽपि प्रयोज्यत्वमिति भावः॥

यदुक्तमिरावदिति तत्राह—

**विकारः कारणाग्रहणात् ॥ २० ॥**

इरापदेन गिरापदस्य विकारो—बाधो युक्तः। कुतः? कारणाग्रहणात्—यथा भाषिकस्वरस्य प्रतिषेधः मन्त्राम्नायकारणेन भवति, नैवमिरापदस्योपदेशे किञ्चित्कारणं गृह्यते। अतस्तत्र विकारो युक्तः॥

इत्यष्टमं मन्त्राम्नानस्वरस्यैव कर्मकाले नियमनाधिकरणम्॥ ८ ॥

९

**तन्न्यायत्वाददृष्टेऽप्येवम् ॥ २० ॥**

यो न्यायो मन्त्रसमाम्नायस्वर एव ग्राह्य इति ब्राह्मणपठितस्य मन्त्रस्योक्तः, स एव न्यायः मन्त्रसमाम्नायेऽदृष्टेऽपि मन्त्रे द्रष्टव्यः। केचन मन्त्रा ब्राह्मण एव पठ्यन्ते, न मन्त्रसमाम्नाये, यथा—"प्रोहेद्वानस्पत्योऽसि" इत्यादयः। तेष्वपि पूर्वोक्तो न्यायो ग्राह्यः। अर्थात् मन्त्रसमाम्नातत्रैस्वर्येण पाठः कर्तव्यः। एवं प्राप्ते, सिद्धान्तयति—

**तदुत्पत्तेर्वा प्रवचनलक्षणत्वात् ॥ २१ ॥**

मन्त्रस्य ब्राह्मणोत्पत्तेः भाषिकस्वरप्रयोगः कर्तव्यः। कुतः? प्रवचनलक्षणत्वात्—प्रवचनं मन्त्राणां लक्षणम्। यथा प्रोच्यन्ते तथा ते विज्ञायन्ते। ब्राह्मणेन प्रोच्यन्ते ये ते भाषिकस्वरेणैव प्रयोक्तव्या इत्यर्थः॥

इति नवमं ब्राह्मणोत्पन्नमन्त्राणां भाषिकस्वरवत्वाधिकरणम्॥ ९ ॥

१०

ये करणमन्त्राः "इषे त्वा" "ऊर्जे त्वा" "स्योनं ते" इत्यादयः, तेषु विचारः— किं मन्त्रोच्चारणादौ मध्येऽन्ते वेत्यनियमेन कर्मणः प्रयोगः? उत मन्त्रमध्य एव? अथवा मन्त्रान्त एव? इति। मन्त्रादौ मन्त्रमध्ये वा यत्र कुत्रापि कर्मणः प्रयोगे सति मन्त्रस्य कर्मसमवेतार्थप्रकाशकत्वं सिध्यतीत्यनियम इति प्रथमः पक्षः। कर्मसमवेतार्थप्रकाशनं स्मरणं क्रियापदेनैव सिध्यति। मन्त्रादौ च तन्नास्ति, मन्त्रमध्ये यत्र कुत्र वा तत्पदं भवति। अतोऽनियमो नोचितः, किन्तु क्रियापदं यत्र मध्ये भवति तत्र कर्मप्रयोग इति द्वितीयः पक्षः। यथा "स्योनन्ते सदनं कृणोमि" इत्यत्र कृणोमिपदेन सदनकरणेऽर्थे प्रकाशिते तत्र सदनकरणम्, सीद पदेन सादने प्रकाशिते पुरोडाशसादनम् इति प्राप्ते सिद्धान्तयति—

**मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसन्निपातः स्यात्सर्वस्य वचनार्थत्वात् ॥ २२ ॥**

मन्त्रान्तेन कर्मादिसन्निपातः—मन्त्रान्तेन सह कर्मादेः सन्निपातः प्रयोगः कर्तव्यः। कुतः? मन्त्राणां करणार्थत्वात्—मन्त्राणां क्रियानुष्ठानार्थत्वात्। मन्त्रादौ मन्त्रमध्ये वा कर्मादिश्चेत्सन्निपात्यते तर्हि तावतैव समवेतार्थप्रकाशने सिद्धेऽवशिष्टमन्त्रभागस्यानर्थक्यमापतेत्-कृणोमिपदोत्तरभागस्यार्थवत्वं न सिध्येत्। अतः सर्वस्य—सकलस्य मन्त्रस्य, वचनार्थत्वात्-वचनेन विनियोजकवचनेन स्मृत्यर्थत्वावगमात् मन्त्रान्तेन कर्मादिसन्निपातः॥

इति दशमं करणमन्त्रान्ते पदार्थानुष्ठानाधिकरणम् ॥ १० ॥

११

अग्नौ शतरुद्रियहोमान्ते "सन्ततां वसोर्धारां जुहोति" इति वसोर्धाराहोमे सान्तत्यं विहितम्। "द्वादश द्वादशानि जुहोति" इति द्वादशसङ्ख्यानि वसोर्धारा-संज्ञकानि कर्माणि विहितानि। "यं कामयेत प्राणानस्यान्नाद्यं सन्तनुयामिति सन्ततां तस्य जुहुयात्" इति प्रकृतसर्वकर्माश्रितं सान्तत्यं विहितम्। सान्तत्य-शब्दस्य साहित्ये प्रयोगः, अविच्छेदेऽपि। यदि साहित्यमर्थस्तर्हि मन्त्रकर्मणोः, यदि चाविच्छेदस्तर्हि कर्मणाम्। कतरः पक्षः परिग्राह्य इति सन्देहे पूर्वपक्षयति—

**सन्ततवचनाद्धारायामादिसंयोगः ॥ २३ ॥**

धारायाम्—साहित्यसिध्यर्थं कर्मादिः मन्त्रादिश्च सन्निपात्यः। कुतः? सन्ततवचनात्—समित्येकीभावे तनोतिश्च विस्तारे। द्वयोर्यत्र सहतननं भवति तत्र सन्ततशब्दः प्रवर्तत इति हेतोः मन्त्रकर्मादी सन्निपात्यावित्यर्थः ॥

अथ सिद्धान्तयति—

**कर्मसन्तानो वा नानाकर्मत्वादितरस्याशक्यत्वात् ॥ २४ ॥**

कर्मसन्तानः—कर्मणाम् "द्वादश द्वादशानि जुहोति" इति विहितकर्मणां सन्तानः-सान्तत्यम्। सान्तत्यञ्चाविच्छेदरूपम्। होमस्यात्र नैकत्वम, किन्तु नानात्वं सूचयति—नानाकर्मत्वादिति। द्वादशसङ्ख्यया कर्मभेदाद् द्वादश-कर्माणि। तेषामनुपरमेण क्रियासन्तान एवात्राभिप्रेतः। मन्त्रकर्मणोस्सान्तत्यं कुतो नाभिप्रेयत इत्यत आह—इतरस्याशक्यत्वात् इतरस्य—मन्त्रकर्मसान्तत्यस्य अशक्यत्वात्—क्षणिकं कर्म न मन्त्रेण सह तनितुं शक्यमित्यर्थः ॥

इत्येकादशं वसोर्धाराकर्मसु मन्त्रकर्मादिसन्निपातित्वाधिकरणम् ॥ ११ ॥

१२

दर्शपूर्णमासयोः "आघारमाघारयति" इति प्रकृत्य "सन्ततमाघारयति" इति श्रुतम्। अत्रापि पूर्वन्यायेन कर्मसान्तत्ये प्राप्ते सिद्धान्तमाह—

**आघारे च दीर्घधारत्वात् ॥ २५ ॥**

चकारो वैलक्षण्ये। "आघारमाघारयति" इत्येकमाघाराख्यं कर्म। तस्यैक-त्वात्कर्मसन्तान आघारे नास्ति। अतोऽयं द्रव्याभिप्रायः। आघ्रियत इत्याघार आज्यम्। तद् दीर्घधारया जुहुयादित्यर्थः ॥

इति द्वादशमाघारे मन्त्रान्तेन कर्मादिसन्निपाताधिकरणम् ॥ १२ ॥

१३

**मन्त्राणां सन्निपातित्वादेकार्थानां विकल्पस्स्यात् ॥ २६ ॥**

ये करणमन्त्रा एकक्रियाप्रकाशनार्थाः "भगो वां विभजतु" "पूषा वां विभजतु" "अर्यमा वां विभजतु" इत्यनेके, तेषां मन्त्राणाम् एकार्थानाम्—एककार्य-

प्रकाशकानाम् सन्निपातित्वात् -कर्मादिसन्निपतनशीलत्वात् विकल्पस्स्यात् । प्राप्तिसूत्रमेतदुत्तरविवक्षया ॥

इति त्रयोदशमेककार्याणां मन्त्राणां विकल्पाधिकरणम् ॥ १३ ॥

१४

**सङ्ख्याविहितेषु समुच्चयोऽसन्निपातित्वात् ॥ २७ ॥**

सङ्ख्याविहितेषु—सङ्ख्यया विहिता मन्त्राः, यथा—"तां चतुर्भिरभ्रिमादत्ते" "द्वाभ्यां खनति" "षड्भिराहरति" इत्यादयः । तेषु करणमन्त्रेषु समुच्चयः । सङ्ख्यायाश्शब्देनोच्यमानत्वात्समुच्चय इत्यर्थः । विना समुच्चयेन सङ्ख्याया उपपत्तिर्न भवतीति भावः । ननु बहुषु मन्त्रेष्वेकस्यैव कर्मादिसन्निपातो भवेत्, न तु सर्वेषाम । तदा कथं समुच्चय इति चेदाह—असन्निपातित्वात् । अपिशब्दोऽध्याहार्यः । कर्मादिसन्निपाताभावेऽपि सङ्ख्याविधिबलेन समुच्चयोपपत्तेरित्यर्थः । सङ्ख्यावचनबलेन पूर्वेषां मन्त्राणां संस्कारद्वारा, अन्त्यस्य तु साक्षादेवानुष्ठानोपयोग इति भावः ॥

इति चतुर्दशं सङ्ख्याविहितमन्त्राणां समुचयाधिकरणम् ॥ १४॥

१५

ये मन्त्राः ब्राह्मणेनैव विहिताः, यथा—"उरु प्रथा उरु प्रथस्व" इति पुरोडाशं प्रथयति" "उरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयति" इत्यादयः, तेषु समुचयो विकल्पो वेति सन्देहः । तत्र पूर्वपक्षयति—

**ब्राह्मणविहितेषु च सङ्ख्यावत् सर्वेषामुपदिष्टत्वात् ॥ २८ ॥**

ब्राह्मणविहितेषु मन्त्रेषु समुच्चयस्स्यात् । कुतः ? सर्वेषामुपदिष्टत्वात्—यथा "उरु प्रथा" इति मन्त्रस्योपदेशः, तथा "उरु ते यज्ञपतिः" इत्यस्याप्युपदेशः । तत्र य एव न प्रयुज्येत, तस्योपदेशो बाध्येत । अत उपदिष्टत्वात्सर्वेषां समुच्चयः । अत्र दृष्टान्तः—सङ्ख्यावदिति । चतुर्भिः द्वाभ्यामित्यादिसङ्ख्यायुक्तवचनेन विनियुक्तानां मन्त्राणां यथा समुच्चयस्तथात्रापि समुच्चयः ॥

दृष्टान्तान्तरेण पूर्वपक्षं घटयति—

## याज्यावषट्कारयोश्च समुच्चयदर्शनं तद्वत् ॥ २९ ॥

"याज्याया अधि वषट्करोति" इति याज्यामन्त्रस्य वषट्कारस्य च समुच्चयो दृश्यते। समुच्चये च पौर्वापर्यं भवति। तद्वद् अत्रापि समुच्चयः॥

अथ सिद्धान्तयति—

## विकल्पो वा समुच्चयस्याश्रुतित्वात् ॥ ३० ॥

वाशब्दः पक्षव्यावृत्तौ। ब्राह्मणविहितानां मन्त्राणां विकल्पस्स्यात्। नन्वेकार्थानां सङ्ख्याविहितेष्विवात्र समुच्चयः कुतो नेत्यत्राह—समुच्चयस्याश्रुतित्वात्—यथा तत्र 'चतुर्भिः' 'द्वाभ्याम्' इति सङ्ख्याश्रवणेनासकृदभिधानसमुच्चय आश्रितस्तथा नात्र समुच्चयश्रुतिरस्तीत्यर्थः॥

यदुक्तं 'सर्वेषामुपदिष्टत्वात्' इति तत्राह—

## गुणार्थत्वादुपदेशस्य ॥ ३१ ॥

येषां मन्त्राणां लिङ्गविनियोगो नास्ति तत्र ब्राह्मणविनियोगो मन्त्रस्वरूपविनियोगार्थः। येषान्तु लिङ्गविनियोगोऽस्ति तत्रार्थवादादिगुणार्थ उपदेश इत्यर्थः। तदुक्तं मन्त्राधिकरणे सूत्रकारेण—'गुणार्थेन पुनः श्रुतिः' 'परिसङ्ख्या' 'अर्थवादो वा' इति॥

ननु यदि "इति पुरोडाशं प्रथयति" इत्यादेरुपदेशस्यार्थवादादिगुणार्थत्वे, न तर्हि मन्त्रोपदेश इत्यायाति। तथा सति 'सर्वेषामुपदिष्टत्वात्' इति कथं सङ्गच्छेतेति चेदुदाहरणान्तरमाह—

## वषट्कारे नानार्थत्वात्समुच्चयः ॥ ३२ ॥

याज्यामन्त्रान्ते प्रदानार्थत्वेन योज्यमानश्शब्दो वषट्कारः। तत्र मन्त्रस्य देवताप्रकाशनार्थत्वम् वषट्कारस्य प्रदानार्थत्वमिति नानार्थत्वात् तयोः समुच्चय इत्यर्थः॥

इति पञ्चदशं ब्राह्मणविहितमन्त्राणां विकल्पाधिकरणम् ॥ १५ ॥

१६

इदानीं क्रियमाणानुवदिमन्त्रा हौत्राश्चिन्त्यन्ते। ये "उच्छ्रयस्व वनस्पते" "युवा सुवासाः" इत्यादयस्तेषु किं करणमन्त्रवद्विकल्पः? उत समुच्चयः? इति। तत्र पूर्वपक्षयति—

**हौत्रास्तु विकल्पेरन् एकार्थत्वात् ॥ ३३ ॥**

हौत्रा मन्त्राः करणमन्त्रवद्विकल्पेरन्। कुतः ? एकार्थत्वात्—करणमन्त्रा यथा कर्मसमवेतपदार्थस्मारकतयैकार्था विकल्पन्ते, तथा क्रियमाणकर्मस्मृति जनकत्वेनैकार्थाः क्रियमाणानुवादिमन्त्रा अपि विकल्पन्ते। इयांस्तु भेदः—अध्वर्युः कर्म कुर्वन् करणमन्त्रान् पठति, अध्वर्युणा क्रियमाणान्युच्छ्रयणादीन्यनुवदन्ति होत्रा पठ्यमाना मन्त्राः। अतोऽध्वर्युणा क्रियमाणोच्छ्रयणस्मृतिलक्षणैककार्यकरत्वाद्विकल्पः ॥

अथ सिद्धान्तयति—

**समुच्चयो वा क्रियमाणानुवादित्वात् ॥ ३४ ॥**

हौत्राणां क्रियमाणानुवादिमन्त्राणां समुच्चय एव स्यात्। कुतः ? क्रियमाणानुवादित्वात् - करणमन्त्राः कर्मानुष्ठानकरणभूतां स्मृतिं जनयन्ति। एकेन तादृशस्मृतेस्सिद्धावितरस्य वैयर्थ्यात्तत्र विकल्पो युक्तः। क्रियमाणानुवादिमन्त्रेषु तु अध्वर्युणा क्रियमाणस्योच्छ्रयणादेः बहुक्षणव्यासक्तस्य स्मृत्यविच्छेदार्थं पुनः पुनः स्मरणमावश्यकम्, एककालावच्छिन्नानेकक्षणनिचयरूपत्वादुच्छ्रयणादिक्रियायाः। तत्र चरमक्षणपर्यन्तस्मृतेरपेक्षितत्वात् स्मृत्यविच्छेदस्सप्रयोजन इति समुचय एव हौत्राणाम् ॥

इति षोडशं हौत्राणां मन्त्राणां समुच्चयाधिकरणम् ॥ १६ ॥

इति महामहोपाध्यायानां वेदविशारद-शास्त्ररत्नाकर-श्रौतस्मार्त-नित्यकर्मानुष्ठाननिरत-वाधूलान्वयवतंस-श्रीचिन्नस्वामिशास्त्रिचरणानाम्
अन्तेवासिना पट्टाभिरामशास्त्रिणा विरचितायाम्
अध्वरमीमांसाद्वादशाध्यायसूत्रवृत्तौ
तृतीयः पादः ॥

❀ श्रीः ❀

# चतुर्थः पादः

१

तृतीयपादेऽस्फुटविषयौ विकल्पसमुच्चयौ निरूपितौ। चतुर्थ इदानीं स्फुट-विषयौ तौ प्राधान्येन निरूप्येते। सन्ति जपसंज्ञका मन्त्राः "वैष्णवीमृचं जपति" "वैष्णवीमनूच्य वाग्यन्तव्या" इति विहिताः। अत्र जपत्वं नाम जपतिचोदना-चोदितत्वमेव, न तूपांशूच्चार्यमाणत्वम्। तथा सति उपांशुयाजीययाज्यायां चातु-स्स्वर्यापत्तेः। अर्थाविवक्षयादृष्टार्थोच्चारणकत्वं जपत्वमिति पार्थसारथिमिश्रः। गुणतात्पर्येण येषां मन्त्राणामभिधानमदृष्टार्थतया ते मन्त्राः "अग्निर्मूर्धा दिवः" इत्यादयः स्तुतयः। एवमाशीर्मन्त्राः "आयुर्मे देहि" "वर्चो मे देहि" इत्यादयः। अभीष्टप्रार्थनमाशीः। गुणविशिष्टस्य गुणिनोऽदृष्टार्थतया प्रकाशनम् अभिधानम्। एतेषां जपस्तुत्याशीरभिधानानां मन्त्राणां विकल्पस्समुच्चयो वेति सन्देहे सिद्धान्ते-नोपक्रमते—

**जपाश्चाकर्मसंयुक्ताः स्तुत्याशीरभिधानश्च याजमानेषु समुच्चयस्स्यादाशीःपृथक्त्वात् ॥ १ ॥**

याजमानेषु मन्त्रेषु अकर्मसंयुक्ताः—कर्मणि करणत्वेन संयोगरहिता ये जपाः ये चाशीरादयस्तेषु समुच्चयस्स्यात्। कुतः? आशीःपृथक्त्वात्—आशीरादिभिस्सा-ध्यानामदृष्टानां भिन्नत्वादित्यर्थः। भिन्नादृष्टजनकानां समुच्चय एव, एकेन जाय-मानमदृष्टं तदन्येनोत्पादयितुमशक्यत्वात्। जपादीनां नानार्थत्वाद् अदृष्टार्थत्वाच्च समुच्चयः। ननु कथं जपादीनां नानार्थत्वम्? जपव्यक्तायां वाचीति जपशब्दो जप्यत इति निष्पन्नः। "अग्निर्मूर्द्धा दिवः" इत्यत्रापि जप्यत इति जप एव, तत्रापि व्यक्ताया वाचस्सत्त्वात्। एवं स्तुतिमन्त्रे आशीर्मन्त्रेऽभिधाने च व्यक्ताया वाचस्सत्त्वात् जपातिरिक्तत्वं स्तुत्यादीनां कथमिति चेन्न; स्तुत्यादिषु जपतिचोदना-चोदितत्वाभावात्। व्यक्ताया वाचस्सर्वत्र सत्त्वेऽपि कार्यभेदेन स्तुत्यादीनां भेदः। स्तुतिमन्त्रेषु स्तुतिबुद्धिः, आशीर्मन्त्रेषु फलाशासनबुद्धिः, अभिधानेषु च सद्भिर-

सद्भिश्च गुणैर्गुणिनोऽवगतिरिति कार्यभेदेनैतेषां भेदः। एवञ्च सूत्रगतमाशीः पृथक्त्वादिति पदमुपलक्षकम्–आशीः पृथक्त्वात्, जपपृथक्त्वात्, स्तुतिपृथक्त्वात्, अभिधानपृथक्त्वाच्चेति। तस्मान्नानार्था एते। तस्मात्तेषां समुच्चयः। सूत्रे 'याजमानेषु' इति निर्देशः प्रायिकः। जपादीनां क्वचित्साङ्कर्येऽपि न दोषः, पूर्वाभिहितोपाधीनामसाङ्कर्यात्॥

इतोऽप्येषां समुच्चय इत्याह—

**समुच्चयश्च दर्शयति॥ २॥**

"त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इत्यत्र प्रथमेत्युत्तमेति च निर्देशस्समुच्चयस्य साधकः, न तु विकल्पस्य॥

इति प्रथमं जपादीनां समुच्चयाधिकरणम्॥ १॥

२

ऐन्द्राबार्हस्पत्ये कर्मणि द्वे याज्यापुरोनुवाक्यायुगले स्तः—"इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती" "अयं वां परिषिच्यते सोम इन्द्राबृहस्पती" इत्येकम्। "अस्मे इन्द्राबृहस्पती" "बृहस्पतिर्नः परिपातु पश्चात्" इत्यपरम्। अनयोः किं समुच्चयः? उत विकल्पः? इति भवति संशयः। पूर्वाधिकरणन्यायेन समुच्चये प्राप्ते, सिद्धान्तयति—

**याज्यानुवाक्यासु तु विकल्पस्स्याद्देवतोपलक्षणार्थत्वात्॥ ३॥**

तुरवधारणे। विकल्प एव याज्यापुरोनुवाक्यासु स्यात्। कुतः? देवतोपलक्षणार्थत्वात्—याज्यायाः पुरोनुवाक्यायाश्च कर्मसमवेतदेवतोपलक्षणार्थत्वम्। एकेन युगलेन देवताया उपलक्षणे जाते उपलक्षणकार्याभावाद्द्वितीयं युगलं प्रयोगान्तरार्थं भविष्यति। न ह्येकेन युगलेन कृतादुपलक्षणादधिकं द्वितीययुगलेन क्रियते। अतो विकल्पः। नन्वेवं युगलान्तर्गतयाज्यापुरोनुवाक्ययोरपि विकल्पः किमिति न स्यात्, तयोरपि देवतोपलक्षणार्थत्वात्, एकेन मन्त्रेण देवतोपलक्षणे सति मन्त्रान्तरस्याधिकफलाधायकत्वाभावादिति चेन्न; पुरोनुवाक्येति समाख्यया विकल्पासिद्धेः। पुरः पूर्वमनूच्यत इति पुरोनुवाक्या। कस्मात्पुर इत्याकाङ्क्षायां

समानजातीययाज्यापेक्षया पूर्वभावं विना समाख्या न सम्भवतीति तद्वलात्स-मुच्चय इत्यर्थः । युगलस्य तु विकल्पः ॥

लिङ्गदर्शनमपीममर्थमुपष्टम्भयति—

**लिङ्गदर्शनाच ॥ ४ ॥**

"ऊरू वै देवानां याज्यानुवाक्ये, एकया प्रत्यागच्छति गमयत्यन्यया" इति लिङ्गं याज्यानुवाक्ययोस्समुच्चयदर्शनपरम्, युगलयोश्च विकल्पदर्शनपरम् "याज्यानु-वाक्ये" इति द्विवचननिर्देशात् ॥

**इति द्वितीयमैन्द्राबार्हस्पत्ये याज्यानुवाक्यायुगलद्वयस्य विकल्पाधिकरणम् ॥२॥**

३

सोमक्रयसाधनेषु दश द्रव्येषु "एकहायन्या क्रीणाति" "अजया क्रीणाति" "हिरण्येन क्रीणाति" "वाससा क्रीणाति" इत्यादिभिर्विहितेषु चिन्ता—किमिमानि द्रव्याणि विकल्प्यन्ते ? उत समुच्चीयन्ते ? इति । तत्र पूर्वपक्षयति—

**क्रयणेषु तु विकल्पस्स्यादेकार्थत्वात् ॥ ५ ॥**

क्रयणेषु-क्रयसाधनेषु द्रव्येषु विकल्पस्स्यात् । कुतः ? एकार्थत्वात्—एकसोम-प्राप्त्यर्थत्वात् । ननु कथं पुनरेकार्थत्वम् ? भिन्ना हीमे क्रयाः । "एकहायन्या क्रीणाति" इत्यादिष्वेकेन वाक्येन विहितं क्रयमनूद्यान्यैः गुणान्तरं न हि शक्यते विधातुम्, उत्पत्तिशिष्टगुणावरोधात् । अतस्तैरपि गुणविशिष्टानि क्रयणानि विधा-तव्यानि । तथा च विधिभेदात्क्रयभेदः । तस्मान्नानाक्रयसाधनत्वाद्द्रव्याणां नास्त्यैकार्थ्यमिति चेत्सत्यम्; सर्वे क्रयास्सोमप्राप्त्यर्थाः, तद्द्वारेण द्रव्याण्यपि तत्प्राप्त्यर्थानीति न दोषः । अथ वा क्रयाणामेव विकल्पसमुच्चयचिन्ता । क्रयाणां विकल्पे विकल्प्यन्ते । तेषां समुच्चये तान्यपि समुच्चीयन्ते । अतस्सोमप्राप्तिरूपैक-कार्यकरत्वात्क्रयाणां वा विकल्पः द्रव्याणां वेति ॥

सिद्धान्तयति—

**समुच्चयो वा प्रयोगे द्रव्यसमवायात् ॥ ६ ॥**

वाशब्दः पक्षव्यावृत्तौ । समुच्चय एव, न विकल्पः । कुतः ? प्रयोगे द्रव्यसमवायात्—क्रयणस्य प्रयोगे द्रव्यस्याधिकस्य समवाय उपपद्यते । विक्रेतुरा-

नमनाय द्रव्याणि प्रदाय क्रयणं क्रियते। तत्र यावत्सु द्रव्येषु दीयमानेषु तस्यानमनं भवेत्तावन्ति दातव्यानि भवन्ति। बहुभिश्च तत् सुकरम्। अतस्समुच्चयः॥

किञ्च—

## समुच्चयश्च दर्शयति ॥ ७ ॥

"दशभिः क्रीणाति" इति प्रमाणादपि समुच्चयः। यद्यपीदं वाक्यं विध्यन्तरैकवाक्यतापन्नत्वादनुवादसरूपम्, तथाप्येतत्तात्पर्यग्राहकानुरोधेन यावता विक्रेतुरानतिस्तावतां समुच्चयः॥

## इति तृतीयं सोमक्रयणद्रव्याणां समुच्चयाधिकरणम्॥ ३ ॥

४

दैक्षपशौ "गुदेनोपयजति" इत्युपयजनं श्रुतम्। तत्पशुगणेऽतिदिष्टम्। तत्र गुदानां बहुत्वात्किं विकल्पः? उत समुच्चयः? इति भवति संशयः। यदीदमुपयजनमर्थकर्म तर्हि विकल्पः, यदि चेदं संस्कारकर्म तर्हि समुच्चयः। तत्र 'गुदेन' इति तृतीयासंयोगादर्थकर्मेति ब्रूमः। गुदेनेत्युपादेयगतसङ्ख्याया विवक्षितत्वेनैकनापि गुदेनोपयागे निर्वृत्ते प्रयोजनस्य सिद्धेर्नान्येषां प्रसक्तिरिति विकल्प एवेति प्राप्ते, अभिधीयते—

## संस्कारे च तत्प्रधानत्वात् ॥ ८ ॥

संस्कारः प्रतिपत्तिरित्यर्थः। तत्प्रधानत्वात्—सः पशुः प्रधानं येषां ते तत्प्रधानाश्शेषाः, तेषां भावस्तस्मात्। उपयुक्तशेषत्वादित्यर्थः। उपयुक्तः पशुः, तच्छेषत्वाद्गुदस्य प्रतिपत्त्यर्हत्वम्। अतः प्रतिपत्तिकर्मोपयजनम्। पशुगणे नानात्वात्पशूनां तदवयवा अपि गुदा बहवः। सर्वेऽपि प्रतिपत्त्यपेक्षा इति समुच्चयः। ननु 'गुदेन' इति तृतीयासंयोगेनोपादेयत्वात तद्गतसङ्ख्याया विवक्षितत्वे समुच्चयो न स्यादिति चेन्न; प्रतिपत्तित्वेऽपि तृतीयाया उपपत्तेः। "प्रयाजशेषेण हवींष्यभिघारयति" इत्यत्र 'प्रयाजशेषेण' इति तृतीयेव 'गुदेन' इति तृतीया प्रतिपत्तिपक्षेऽप्युपपद्यते। तत्र हि 'प्रयाजशेषं हविष्षु क्षारयेत्' इति वाक्यान्तरकल्पनया प्रयाज-

शेषस्य प्रतिपत्तिरुपपादिता। तथैव प्रकृतेऽपि प्रतिपत्तित्वोपपत्तेः तत्रत्यसङ्ख्याया अविवक्षितत्वात् सर्वेषामेव गुदानां समुच्चयः ॥

इति चतुर्थमुपयजनाधिकरणम् ॥ ४ ॥

५

अग्न्याधाने दक्षिणामधिकृत्य श्रूयते--"एका देया" "षड् देया" "द्वादश देया" "शतं देयम्" "सहस्रं देयम्" "अपरिमितं देयम्" इति। एतेषां विधीनां समुच्चयः ? उत विकल्पः ? इति भवति विचारणा। दक्षिणा ह्यानत्यर्थाः। अधिकासु दक्षिणासु दीयमानास्वानतिस्सुकरा। तथा च यथानतिसौकर्यात्क्रयाणामानत्यर्थानां समुच्चयस्तथा दक्षिणानामपि समुच्चय इति प्राप्तेऽभिधीयते—

## सङ्ख्यासु तु विकल्पस्स्याच्छ्रुतिविप्रतिषेधात् ॥ ९ ॥

"एका देया" "षड् देया" इत्यादिषु सङ्ख्यासु विकल्पस्स्यात्। कुतः? श्रुतिविप्रतिषेधात्–एकया षड्भिश्च सप्तसङ्ख्योपजननाच्छ्रुताया एकत्वसङ्ख्यायाः षट्त्वसङ्ख्यायाश्च हानिस्स्यादित्यर्थः। ननु "एका देया" "षड् देया" इत्यादिवाक्येषु एकत्वादिसङ्ख्यावच्छिन्नदानक्रिया विधीयन्ते। भिन्ना इमा दानक्रियाः। यदि एकस्यां दानक्रियायामेकाद्यन्वयस्स्यात्तदा स्यात् श्रुतसङ्ख्याया विप्रतिषेधः। एकदानमन्यत् षडादिदानानि चान्यानि। अनेकेषां दानक्रियाणामनुष्ठाने श्रुतहानिर्नास्ति, समुच्चयश्च सिध्यति। तस्मादिदमनुपपन्नमिति चेत्सत्यम्; अत्र यदि दक्षिणादानं विवक्षितमभविष्यत् तदा भेदेन दाने प्रयोजनाभावात्समुदायसङ्ख्यावच्छिन्नदानमेकमेवाश्रोष्यत। न तथा श्रूयते। तस्मात्पृथक्सङ्ख्यावच्छिन्नदानश्रवणबलात्तत्तत्सङ्ख्यावच्छिन्नदानानां विकल्प एव। न च यथा "एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते" इत्यत्र महत्यास्सङ्ख्यायाः श्रूयमाणत्वात् तत्रैव विधिः, "एकं वृणीते" इत्यादौ चावयुत्यानुवादः स्वीकृतः, तथात्रापि महती सङ्ख्या यत्र श्रूयते तत्रैव विधिरन्यत्र चावयुत्यानुवादो भवत्विति वाच्यम्, वैषम्यात्। "एकं वृणीते" इत्यादौ सर्वत्र वर्तमाननिर्देशेन प्रत्यक्षविधेरश्रवणाद्विधिः कल्पनीयः। कल्पनायाञ्च लाघवादेकत्रैव कल्प्यते। तच्च "त्रीन् वृणीते" इत्यत्रैव कल्प्यते, महत्यास्सङ्ख्यायास्सत्त्वात्, अन्यत्र चावयुत्यानुवादः।

प्रकृते च सर्वत्र "देया" "देयम्" इति प्रत्यक्षविधिः श्रूयते। स च विधिर्विनिगमनाविरहेण सर्वत्रैव न्याय्य इति वैषम्यम्। ननूपांशुयाजाधिकरणन्यायेन सत्यपि प्रत्यक्षविधिश्रवणेऽर्थवादत्वमेवाश्रीयताम्। तत्र हि "विष्णुरुपांशु यष्टव्यः" इत्यादावर्थवादत्वमेवाश्रितं न विधिरिति चेन्न; तत्रोपक्रमे जामितादोषं प्रदर्श्य तत्परिहाराय मध्ये किञ्चित्कर्तव्यमुपदिश्याजामित्वोपसंहारः कृत इति सर्वस्यैकवाक्यत्वम्। अतोऽर्थवादत्वमाश्रितम्। अत्र तु नैकवाक्यता। भिन्नानीमानि वाक्यानि विधायकानि। विनिगमनाविरहाच्च सर्वत्र विधिः, स च सङ्ख्यापर इति विकल्प एवोचितः॥

## इति पञ्चममग्न्याधेये दक्षिणानां विकल्पाधिकरणम्॥ ५॥

### ६

दर्शपूर्णमासयोः पत्नीसंयाजेषु आज्येन सह विकल्प्यमाना जाघनी विहिता—"जाघन्या पत्नीस्संयाजयन्ति" इति। पशोः पुच्छवाची जाघनीशब्दः। जाघन्या पत्नीसंयाजाख्यानि कर्माणि कुर्यादिति वाक्यस्यार्थः। अत्र जाघनी गुणभूता, कर्म च प्रधानमितीदमर्थकर्मेत्यविवादम्। दर्शाच्च पशुप्रभवत्वसामान्येनाग्नीषोमीयपशौ चोदकतः प्राप्ता सती जाघनी गुणभूतैवावतिष्ठते। अत्राप्याज्येन सह विकल्प्यमाना सा प्राकरणिकेन "जाघन्या पत्नीस्संयाजयन्ति" इति पुनः श्रवणेन जाघनी गुणभूतैव नियम्यते—जाघन्यैव पत्नीसंयाजान् कुर्यादिति। अग्नीषोमीयपशोश्च पशुगणेषु चोदकतः प्राप्नोति जाघनी। तत्र बह्वीनां जाघनीनां सत्त्वात् किं समुच्चयः उत विकल्पः? इति भवति संशयः। हृदयाद्यवदानानुनिष्पन्नानां जाघनीनां प्रतिपत्त्यपेक्षाणां गुणकर्मतया यदि पत्नीसंयाजानां विधानं तर्हि समुच्चयः। प्रकृताविवात्रापि यद्यर्थकर्मत्वं तर्हि विकल्पः। तत्र यद्यपि दर्शपूर्णमासयोः पत्नीसंयाजानां गुणभूता जाघनी। ततश्चाज्येन सह विकल्पेन प्राप्तायास्तस्याः पशौ पुनःश्रवणान्नियमो यथाप्राप्ताया एव वक्तव्य इति पशावपि गुणभूतैव सा न तु प्रतिपाद्या, तथापि नियमस्य प्रयोजनापेक्षायां तथाभूतयापि तया यागे निर्वर्त्यमाने हृदयाद्यर्थविशसनादिनानुनिष्पन्नानां जाघनीनां प्रतिपत्त्यपेक्षत्वाद् अपेक्षितं दृष्टं प्रयोजनं प्रतिपत्तिरूपं कल्पयितुमुचितम्। तेन च

प्रतिपत्तिविधानमेव पर्यवस्यति। ततश्च दृष्टार्थत्वात्पशुगणे समुच्चय इति प्राप्ते, सिद्धान्तयति—

**द्रव्यविकारन्तु पूर्ववदर्थकर्म स्यात्तथा विकल्पे नियमः प्रधानत्वात् ॥ १० ॥**

नास्ति समुच्चयो जाघनीनाम्। "जाघन्या पत्नीस्संयाजयन्ति" इत्येकेन वाक्येन विवक्षाद्वयं न लभ्यते—अपूर्वार्थो यागः द्रव्यं दृष्टार्थम्, नियमाच्च यागस्संस्कारक इति। जाघन्या यागस्साध्यते यागश्चापूर्वं जनयति, स एव यागो जाघन्यास्संस्कारकश्चेति यागस्य द्वैरूप्यं स्यात्। ततश्च वाक्यभेदः। दर्शपूर्णमासयोर्जाघनी लौकिकी, तस्यास्तत्राज्येन सह विकल्पः। स चाग्नीषोमीयं पशुं प्राप्तः। तत्र प्राकरणिकवाक्येन विकल्पेन प्राप्तयोराज्यजाघन्योः गुणभूतयोर्मध्ये जाघनी नियम्यते। प्रकृतौ तन्नियमादृष्टं कदाचिदाज्येनापि साधितम्, पशौ तु पुनर्विधानात्तज्जाघन्यैव साधनीयम्। यथाग्नीषोमीये तथा पशुगणेषु। तस्मात्तत्राप्यर्थकर्म। तत्र च जाघनीनां समुच्चयो न युक्तः। किन्तु यथाप्राप्ताया एव नियमनेन प्रतिपत्त्यर्थत्वाभावाद्विकल्प एव। सूत्रार्थस्तु—द्रव्यस्य जाघन्याख्यद्रव्यस्य विकारः नियमलक्षणस्तद्युक्तं पूर्ववत्-प्रकृतिवदर्थकर्मेदं पत्नीसंयाजाख्यं स्यात्। प्रकृतिवद्विकल्पे प्राप्ते नियमार्थत्वात्पुनर्विधानस्य, नियमस्य च यथाप्राप्तिवक्तव्यत्वादिति ॥

अर्थकर्मत्वेऽपि समुच्चय एवेति शङ्कते—

**द्रव्यत्वेऽपि समुच्चयो द्रव्यस्य कर्मनिष्पत्तेः प्रतिपशु कर्मभेदादेवं सति यथाप्रकृति ॥ ११ ॥**

द्रव्यत्वेऽपि-द्रव्यस्य जाघन्या गुणभूतत्वेऽपि समुच्चयः। कुतः? द्रव्यस्य कर्मनिष्पत्तेः—जाघन्या विशसनादिकर्मणा निष्पत्तेरित्यर्थः। विशसनेन हृदयादीनि निष्पद्यन्ते, तदनुनिष्पत्तिर्जाघन्याः। अनुनिष्पन्नेयं प्रयोजनमपेक्षते। तच्च प्राकरणिकं "जाघन्या पत्नीस्संयाजयन्ति" इति वाक्यं पूरयति। तथा च पशुगणे प्रतिपशु कर्मभेदात् तस्य तस्य पशोः कर्मनिष्पन्नं जाघनीद्रव्यं पत्नीसंयाजान् साधयति। एवं सति यथाप्रकृति-प्रकृतिमनतिक्रम्य कर्म कृतं भवति। अतोऽर्थकर्मण्यपि समुच्चय एव ॥

इमं न्यायमन्यत्राप्यतिदिश्य निराकरोति—

**कपालेऽपि तथेति चेन्न कर्मणः परार्थत्वात् ॥ १२ ॥**

अनेन न्यायेन कपालेऽपि—"पुरोडाशकपालेन तुषानुपवपति" इति विहित-कपालेऽपि तथा—समुच्चयस्स्यात्। "कपालेषु श्रपयति" इति कपालानां श्रपणे विनियोगः। श्रपणार्थेषु कपालेष्वन्यतमेन तुषोपवापः क्रियते दर्शपूर्णमासयोः। सोऽयं पुरोडाशगणं प्राप्तः। पुरोडाशगणे तस्य तस्य पुरोडाशस्य कपालेन तुषोपवापः कर्तव्य इति कपाले समुच्चयस्स्यादिति चेन्न; कुतः? कर्मणः परार्थत्वात्—कपालानामुपादानस्य श्रपणार्थत्वादित्यर्थः। श्रपणार्थमुपात्ते कपाले तुषोपवपनमप्यन्वासज्यते। काष्ठान्याहर्तुं प्रस्थितः पुरुषः शाकमप्याहरति, तद्वत्तुषोपवापार्थत्वमपि कपालस्य सिध्यति। दर्शपूर्णमासयोः पात्रासादनकाल एव पुरोडाशात्मकं प्रयोजनं मनसि निधाय तन्निर्वृत्तीच्छया कपालानामासादितत्वात्तत्प्रयुक्तत्वमेव। तादृशं कपालं तुषोपवापे चोद्यत इति न तुषोपवापप्रयुक्तत्वं कपालस्येति चतुर्थप्रथमैकादशे निरूपितम्—'अर्थाभिधानकर्म च' इत्यत्र। तथा च कपालानां तुषोपवापार्थत्वाभावे सति न सर्वैः कपालैस्तुषोपवापः कर्तव्य इति न समुच्चयः।

'न कर्मणः परार्थत्वात्' इति सूत्रं कपाले समुच्चयं यथा प्रतिषेधति, तथा जाघन्यामपि। अग्नीषोमीये पशौ हृदयादीनां निष्प्रत्यर्थं विशसनकर्म न जाघन्याः। हृदयादिभिर्यष्टुं पशोरालब्धस्य विशसनं कर्म तदर्थमेव। जाघन्या निष्पत्तये न खलु विशसनं क्रियते। हृदयाद्यनुनिष्पादिनी जाघनी प्रयोजनमाकाङ्क्षति। अतस्सा पत्नीसंयाजनिर्वृत्त्यर्थमुपदिष्टा। एकया जाघन्या ते निर्वर्त्यन्ते। तस्मात्पशुगणे जाघनीनां विकल्पः॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**प्रतिपत्तिस्तु शेषत्वात् ॥ १३ ॥**

तुः प्रत्यवस्थाने। न विकल्पो जाघन्याः, अपि तु प्रतिपत्तिः। कुतः? शेषत्वात्—पशोर्हृदयादिभिर्यागेऽनुष्ठिते शेषभूता जाघनी प्रयोजनरहिता क्वचिन्निक्षेपार्हा। क्व निक्षिप्यतामित्यपेक्षायां पत्नीसंयाजेषु निक्षेपः क्रियते। "जाघन्या पत्नीस्संयाजयन्ति" इत्यत्र न जाघनी विधीयते, नापि पत्नीसंयाजा विधीयन्ते, उभयोरपि प्रकृतौ विहितत्वात्। जाघनीपत्नीसंयाजयोस्सम्बन्धमात्रमत्र विधीयते।

तदा जाघन्याः प्राधान्यमापतति न गुणभावः। तस्मात्प्रतिपत्तिः। प्रतिपत्तौ च यैव जाघनी न प्रतिपाद्यते सा संस्कारवर्जिता स्यादिति समुच्चयः॥

उदाहरणान्तरे प्रतिपत्तिं शङ्कते—

**शृतेऽपि पूर्ववत्त्वात्स्यात्॥ १४॥**

"यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्स त्रेधा तण्डुलान्विभजेद्ये मध्यमास्स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधँश्चरुम् येऽणिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुम्" इति चतुर्दश्याममावास्याभ्रान्त्या प्रक्रान्ते दर्शे प्रायश्चित्तमभ्युदयेष्टिरूपमाम्नातम्। अत्र प्रक्रान्तस्यैव दर्शस्य पूर्वदेवताभ्योऽपनयो देवतान्तरसंयोगश्च विधीयते न कर्मान्तरम्। तत्रापि त्रेधावाक्येनापनयो मध्यमादिवाक्येन च प्रक्रान्तप्रयोगसम्बन्धिनो हविषो देवतान्तरसम्बन्धश्च चोद्यते, मध्यमादिवाक्ये देवतान्तरसंयोग इत्येव सिद्धान्तकोटिरपनयविधिस्तु तद्धेतुतया प्रवृत्त इति विवेकः। तत्र "दधँश्चरुम्" "शृते चरुम्" इत्यत्र दधिशृतयोः प्रणीताकार्ये हविर्निष्पत्त्यनुगुणपाकलक्षणे विधानमिति स्थितिः। अत्रापि दधिशृतयोः प्रतिपत्तिस्स्यात्। कुतः? पूर्ववत्त्वात्—दधिशृते पूर्वमिन्द्रदेवताकत्वेनोत्पन्ने "ऐन्द्रं दधि" "ऐन्द्रं पयः" इति। तत्र शृतस्य "विष्णवे शिपिविष्टाय" इति देवतान्तरसम्बधश्चोदितः। तस्य 'उत्पत्तौ येन संयुक्तं तदर्थं तच्छ्रुतिहेतुत्वात्तस्यार्थान्तरगमने शेषत्वात्प्रतिपत्तिस्स्यात्' इति चातुर्थिकन्यायेन प्रतिपत्तिः प्राप्नोति। तथाहि—उत्पत्तिसमये यद्धविर्येन संयुक्तं तत् तदर्थमेव स्यात्, तादर्थ्यंस्य "ऐन्द्रं पयः" इति श्रुतिहेतुकत्वात्। तस्योत्पत्तिसंयुक्तकार्योपयुक्तत्वादर्थान्तरसम्बन्धे तदर्थान्तरं कर्म प्रतिपत्तिस्स्यात्। प्रतिपत्तिर्नाम सत्कारः। स च निक्षेपरूपः देशान्तरसम्बन्धरूपः यथेष्टविनियोग्यरूपो वा भवति। इडाया विहितदेशे निक्षेपरूपः, सोमलिप्तस्यावभृथदेशनयनम्, कृष्णविषाणायाः प्रासनरूपो यथेष्टविनियोगः। अत्र शृतस्यार्थान्तरगमनं प्रतिपत्तिरिति॥

समाधत्ते—

**विकल्पे त्वर्थकर्म नियमप्रधानत्वाच्छेषे च कर्मकार्यसमवायात्तस्मात्तेनार्थकर्म स्यात्॥ १५॥**

'प्रतिपत्तिस्तु शेषत्वात्' 'शृते च पूर्ववत्त्वात्स्यात्' इत्युभयोः परिहारोऽनेन सूत्रेणोच्यते। 'नियमप्रधानत्वात्' इति प्रथमस्य परिहारः, 'शेषे च कर्मकार्य-

समवायात्' इत्युत्तरस्य परिहारः। प्रकृतौ जाघन्या आज्येन सह विकल्पो दृष्टः। पशावपि चोदकप्राप्तायास्तस्या विकल्प एव, "जाघन्या पत्नीस्संयाजयन्ति" इति पुनःश्रवणस्य नियमप्रधानत्वात्-आज्यनिवृत्तिपूर्वकं जाघन्यैव पत्नीसंयाजा अनुष्ठेया इति। शेषस्यापि सतो वचनादनेकत्र गुणभावो भवितुमर्हति।

"शृते चरुम्" इत्यत्र शृतमिन्द्रदेवताकयागायोत्पन्नम्, स यागस्तेन न निर्वर्तितः। यः शेषः क्वचनोपयुक्तः तत्रैव कर्मकार्यसमवायः-कर्मकार्यस्य संस्कारस्य प्रतिपत्तेः समवायस्सम्बन्धो भवति। न चैतच्छृतं क्वचिदुपयुक्तम्, अतः दध्ना शृतेन चार्थकर्म स्यात्। तथैव तेन जाघनीद्रव्येणाप्यर्थकर्मैव स्यादिति न समुच्चयः, किन्तु विकल्प एव॥

## इति षष्ठं पशुगणे जाघनीनां विकल्पाधिकरणम्॥ ६॥

७

चयनेऽस्त्युख्योऽग्निः। उखायां भव उख्यः। अग्निधारणार्थं मृदा सम्पादितं पात्रमुखा। तामाहवनीये सम्यक् परितप्य ततस्सञ्जातोऽग्निरुख्यः, "सन्तापेनाग्निं जनयति" इति विधेः। तदिदमाहवनीयाग्निधारणपात्रमुखा यजमानगले शिक्येनाब्दमात्रं ध्रियते। अस्मिन्नग्नौ दीक्षितेनाग्निहोत्रादिकं न क्रियते, क्रत्वर्था होमाः परं क्रियन्ते। तत्रोख्यमग्निं प्रकृत्य श्रूयते—"वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्याहृत्यावदध्यात्, भ्राष्ट्रादन्नाद्यकामस्य, वैद्युताद्वृष्टिकामस्य" इति। तत्र नित्यस्योख्यस्य काम्यस्य च वार्क्षादेस्समुच्चयः? उत नित्यस्य विकारः? इति संशयः। यदि समुच्चयस्तर्हि न प्रसङ्गः, यदि वा विकारस्तर्हि प्रसङ्ग इति निष्कर्षः। तत्र पूर्वपक्षयति—

### उखायां काम्यनित्यसमुच्चयो नियोगे कामदर्शनात्॥ १६॥

काम्यनित्ययोरग्न्योरुखायां समुच्चयः। अत्र कामश्रुताववधानमात्रं श्रुतम् "ब्रह्मवर्चसकामस्याहृत्यावदध्यात्" इति। ततश्च प्रकृतमाग्निकं कर्माश्रित्य वार्क्षाद्यग्न्यन्तरविशिष्टमवधानं फलाय विधीयते, न होमः। तेन 'काम्यं नित्यस्य बाधकम्' इति तार्तीयन्यायस्य () नात्र प्रसक्तिः द्वयोरेकार्थत्वाभावात्। उख्यस्य होमार्थत्वात् कामस्य चावधानमात्रार्थत्वाद् उभयोर्भिन्नार्थतया न काम्येन

नित्योख्यस्य बाधः। तदिदमाह—नियोगे कामदर्शनादिति। "आहृत्यावदध्यात्' इत्यवधानमात्रे कामः श्रूयत इत्यर्थः। 'वार्क्षाग्रमग्निं होमार्थं कुर्यात्' इति वचनाभावात् होमो न श्रूयत इति भावः। अतस्समुच्चयः॥

अत्र 'काम्यं नित्यस्य बाधकम्' इति स्वीकारेऽनिष्टं दर्शयति—

**असति चासंस्कृतेषु कर्म स्यात् ॥ १७ ॥**

असति—नित्योख्याग्नावसति, काम्येन बाधे सति, असंस्कृतेषु-आधानादि-संस्काररहितेष्वग्निषु भ्राष्ट्रादिषु कर्म स्यात्॥

अनिष्टान्तरमाह—

**तस्य च देवतार्थत्वात् ॥ १८ ॥**

तस्य-अग्न्यन्वाधानस्य देवतार्थत्वात्—देवतापरिग्रहार्थत्वात्, उख्यस्याग्नेर्बाधे सति देवतापरिग्रहणं न स्यादित्यर्थः। यद्यपि द्वादशप्रथमे दशमाधिकरणे 'धारणार्थत्वात्सोमेऽग्न्यन्वाधानं न विद्यते' इत्यग्निधारणार्थत्वमिष्यते, न देवतापरिग्रहार्थत्वम्, तथापि धारणस्यैव देवतापरिग्रहार्थतेत्यभिप्रायेण 'देवतार्थत्वात्' इत्युक्तम्। ततश्चाग्न्यन्वाधानेनाग्निर्धार्यते, तत्कृतादग्निधारणाद् देवतापरिग्रह इति भावः। तस्मादुख्यस्य न बाधः॥

सिद्धान्तयति—

**विकारो वा तदुक्तहेतुः ॥ १९ ॥**

वाशब्दः पक्षव्यावृत्तौ। काम्येन नित्यस्याग्नेर्विकारः—बाधः। अत्र हेतुरुक्त इत्याह—तदुक्तहेतुरिति। 'नैमित्तिकन्तु प्रकृतौ तद्विकारस्संयोगविशेषात्' इति तृतीयषष्ठतृतीये साप्तदश्याधिकरणे बाधहेतुरुक्त इत्यर्थः। तत्र हि पाञ्चदश्यसाप्तदश्ययोर्नित्यनैमित्तिकसंयोगभेदात् नैमित्तिकं साप्तदश्यं प्रकृतौ पाञ्चदश्यस्य बाधकमित्युक्तम्। स एव हेतुरत्रापि काम्येन नित्यस्य बाधने, नित्यानित्यसंयोगकृतवैलक्षण्यस्यात्रापि सत्त्वात्। ननु साप्तदश्याधिकरणस्य नित्यनैमित्तिकविषयत्वम, अत्र तु काम्यनित्ययोर्विषयत्वात्कथं साप्तदश्यन्यायस्य प्रवृत्तिरिति चेन्न; तदधिकरणस्य वार्तिककारैः "चमसेनापः प्रणयति" "गोदोहनेन पशुकामस्य प्रणयेत्" इत्युदाहृत्य नित्यकाम्यविषयकत्वस्वीकारात्। यदुक्तं 'नियोगे कामदर्शनात्' इति तत्रेदमुच्यते—"वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्याहृत्यावदध्यात्"

इत्यत्र अवधाने न कामश्रुतिः प्रवृत्ता, यद्येवमवधानमत्र विधीयेत। न चात्र तद्विधीयते, किन्त्वग्निविशेषविधानाय तदनूद्यते। न ह्यविधीयमानं क्वचित्कामस्य साधनं भवितुमर्हति। धारणाक्षिप्तावधानस्यार्थप्राप्तत्वेनोपस्थितत्वाद्गुणफल-सम्बन्ध एवायमिति नित्यस्योख्यस्य बाध एव, न समुच्चय इति॥

यदुक्तम् 'असति चासंस्कृतेषु कर्म स्यात्' इति तत्रोच्यते—

**वचनादसंस्कृतेषु कर्म स्यात्॥ २०॥**

"पदे जुहोति" इत्यादौ पदं न संस्कृतम्, तथापि तत्र होमः क्रियत एव। अतो वचनादसंस्कृतेष्वपि कर्म प्रवर्तत एवेत्यर्थः॥

समुच्चये दोषमाह—

**संसर्गे चापि दोषस्स्यात्॥ २१॥**

नित्यकाम्ययोरग्न्योस्संसर्गे दोषः श्रूयते—"अग्नये शुचयेऽष्टाकपालं निर्वपे-द्यस्याग्निः प्रादाव्येन सह संसृज्यते, अशुचितर एष योऽग्निः प्रादाव्यः" इति। प्रादाव्यः—दावाग्निः। अतो न समुच्चयः॥

वचनात्संसर्गो न दोषायेत्याशङ्क्य परिहरति—

**वचनादिति चेत्तथेतरस्मिन्॥ २२॥**

वाचनिके संसर्गे क्रियमाणे न दोष इति चेत्–इतरस्मिन्–पक्षे, तथा–असं-स्कृतेषु होमो न दुष्यति। एवञ्च पक्षद्वयेऽपि वाचनिकत्वाद्दोषाभावे सति नैमित्ति-कत्वाद्विकार आश्रीयते न समुच्चय इत्यर्थः॥

'तस्य देवतार्थत्वात्' इति यदुक्तं तत्राह—

**उत्सर्गेऽपि कर्मणः कृतत्वात्॥ २३॥**

अन्वाधानेन देवताः परिगृह्यन्ते। अन्वाधानञ्च कृतं देवताश्च परिगृहीताः। नित्यस्योख्यस्याग्नेरुत्सर्गेऽपि–बाधेऽपि देवतापरिग्रहस्य कृतत्वान्न दोषः। अग्निना न देवताः परिगृह्यन्ते, किन्त्वन्वाधानेन। अतो न दोषः॥

इति सप्तमं काम्येन नित्यस्य बाधाधिकरणम्॥ ७॥

८

स चायं काम्योऽग्निराहवनीयपदवाच्यो भवति न वेति संशये, पूर्वपक्षयति—

**स आहवनीयस्स्यादाहुतिसंयोगात् ॥ २४ ॥**

सः काम्योऽग्निर्भ्राष्ट्रादिः, आहवनीयस्स्यात्–आहवनीयपदवाच्यस्स्यात्। कुतः ? आहुतिसंयोगात्–नायमाहवनीयशब्दः क्वचिद्रूढः, होमाधिकरणप्रवृत्तिनिमित्तकः—एत्य हूयते यस्मिन्निति व्युत्पत्तेः। हूयते चास्मिन्नग्नौ। अतोऽयमाहवनीयो भवति। ननु-आधानपवमानजन्यसंस्काराहितेऽग्नावाहवनीयशब्दो रूढः, कथं तद्रहितकाम्याग्निवाचित्वमस्येति चेन्न; आधानपवमानजन्यसंस्कारस्थलेऽपि पूर्वोक्तयोगादेव प्रयोगोपपत्तेर्न तत्र रूढिः ॥

सिद्धान्तयति—

**अन्यो वोद्धृत्याहरणात् ॥ २५ ॥**

अन्य एवाहवनीयस्स्यात् न काम्यः। कुतः ? उद्धृत्याहरणात्–लौकिकोऽग्निः वृक्षाग्राद् भ्राष्ट्राद्वाह्रियते। आहवनीयशब्दश्चालौकिकसंस्कारनिमित्तः। विहितसंस्कारेषु कृतेष्वाहवनीयशब्दः प्रयुज्यते। काम्ये च न ते संस्काराः क्रियन्ते। अतः काम्योऽग्निर्नाहवनीयः। यदुक्तम्—आहुतिसंयोगादिति तत्रोच्यते—होमाधारतयाहवनीयत्वे "यदाहवनीये जुहोति" इत्याहवनीयस्य सतो होमे विधिः, होमाधारत्वाच्चाहवनीयत्वमिति परस्पराश्रयदोषात् प्रसङ्गाद्धोमाधारत्वेऽपि पदादिषु तत्प्रयोगाभावाच्च रूढ एवायं न यौगिकः। तेन काम्येऽग्नौ 'धार्यो गतश्रिय आहवनीयः' इत्यादयो धर्मा न भवन्ति। तस्माद्रूढ एवायमाहवनीयशब्दो न यौगिकः ॥

इत्यष्टमं काम्यस्याग्नेराहवनीयत्वाभावाधिकरणम् ॥ ८ ॥

९

काम्येऽग्नावाधानादयस्संस्काराः कर्तव्या न वेति संशये, पूर्वपक्षयति—

**तस्मिन् संस्कारकर्म शिष्टत्वात् ॥ २६ ॥**

तस्मिन् संस्कारकर्म–आधानादिकं कर्तव्यम्। कुतः ? शिष्टत्वात्—सर्वहोमार्थतयोपदिष्टत्वात्। आधानं यद्यप्याहवनीयाद्यर्थं न होमार्थम्, तथापि

"आहवनीये जुहोति" इत्याहवनीयस्य होमे विनियोगात् संस्काराणाञ्च साक्षाद्धोमाधारत्वानुपपत्त्या होमाधारभूताग्न्यर्थत्वं स्वीकर्तव्यम्। तथा च काम्यस्याप्यग्नेर्होमार्थत्वात् तत्रापि संस्काराः कर्तव्या इति भावः ॥

सिद्धान्तयति—

**स्थानाद्वा परिलुप्येरन् ॥ २७ ॥**

वाशब्दः पक्षव्यावृत्तौ। परिलुप्येरन् आधानादिकास्संस्काराः। कुतः? स्थानात्—संस्कृतस्याग्नेः स्थानेऽस्यासंस्कृतस्य काम्यस्य विधानात्। अयं भावः—आधानादयस्संस्कारा वाक्यान्तरप्राप्तं होमाधारमुद्दिश्य यदि विधीयेरन् तदा ते काम्यसाधारणा भवेयुः। "यदाहवनीये जुहोति" इति वाक्यमेव संस्कारं होमे विदधत्संस्कृतस्याग्नेरपि होमार्थत्वमापादयति। ततश्च संस्कृताग्निबाधनेन काम्योऽग्निर्निविशमानः कथं संस्कारान् लभेत। तस्मात्तत्र संस्कारा लुप्यन्त इति ॥

इति नवमं काम्याग्नेराधानिकसंस्कारलोपाधिकरणम् ॥ ९ ॥

१०

इदानीं काम्याग्निप्रसङ्गं परिसमाप्य नित्य उख्याग्निश्चिन्त्यते—किमयमग्निर्नित्यं धारयितव्यो न वेति विकल्पः? उताधारणीय एव? इति। तत्र पूर्वपक्षयति—

**नित्यधारणे विकल्पो न ह्यकस्मात्प्रतिषेधस्स्यात् ॥ २८ ॥**

नित्यधारणे विकल्पः—धार्यो वा न वेति। "न प्रतिसमिध्येद्यत्प्रतिसमिध्येत् भ्रातृव्यमस्मै जनयेत्" इति धारणप्रतिषेधः श्रूयते। प्रतिषेधश्च प्राप्तिपूर्वकः, असत्यां प्राप्तौ प्रतिषेधानुपपत्तेः। अतः प्रतिषेधबलात्प्रापको विधिरनुमीयते। ततश्च विहितप्रतिषिद्धत्वाद्विकल्पः। न च, प्रापको विधिरनुमीयते, निषेधश्च प्रत्यक्षः इति कथमनयोस्तुल्यबलत्वमिति वाच्यम्, प्रतिषेधस्य प्रत्यक्षत्वेऽपि प्राप्तिसापेक्षत्वात्। तदिदमुक्तम्—न ह्यकस्मात्प्रतिषेधस्स्यादिति ॥

अथ सिद्धान्तयति—

**नित्यधारणाद्वा प्रतिषेधो गतश्रियः ॥ २९ ॥**

आहवनीयस्याजस्रधारणं गतश्रियस्सामान्यतः प्राप्तम्। तत्रोख्यस्याहवनीयस्थानापन्नत्वे आहवनीयधर्मो धारणमपि सामान्यवचनप्रसादादेव

प्राप्नोति। यदि वोख्यस्याहवनीयसन्तापसञ्जातत्वेनाहवनीयत्वे, साक्षात्सामान्यवचनेन तत्प्राप्नोति। तत्र च "न प्रतिसमिध्येत्" इति निषेधप्रवृत्तिः। न चैवं निषेधप्रवृत्तौ विकल्पो दुर्वार इति वाच्यम्, पर्युदासाङ्गीकारात्। ननु कथं पर्युदासः? 'नित्यो गतश्रियो धार्यते' इति सामान्यवचनमग्निहोत्रप्रकरणगतम्। 'न प्रतिसमिध्येत्' इति निषेधश्चोख्याग्निसन्निधौ श्रूयते। विधिनिषेधयोर्भिन्नप्रकरणगतत्वात्कथं पर्युदासः? इति चेन्न; आहवनीयस्थानापन्नमग्न्यन्तरमुख्याग्निरिति पक्षे-उख्याग्नावाहवनीयधर्मसामान्यप्रापकवचनस्योख्यविधिशेषतया कल्पनीयत्वेन तस्य सन्निहिततया पर्युदासत्वसम्भवात्। आहवनीय एवोख्यो न त्वन्य इति पक्षेऽपि कथञ्चिदाहवनीयधारणगोचरसामान्यवचनं हृदयमागमय्य पर्युदासत्वस्य समर्थनीयत्वात्। विकल्पापेक्षया पर्युदासत्वस्वीकारस्योचितत्वादिति भावः। अत उख्ये गतश्रीत्वे निमित्ते आहवनीयत्वादेव प्राप्तमजस्रधारणं 'न प्रतिसमिध्येत्' इति पर्युदस्तत्वान्न कर्तव्यमिति सिद्धम्॥

इति दशममुख्याग्नेर्नित्यं धारणाभावाधिकरणम्॥ १०॥

११

सत्रे यजमानानां गणे परार्थानि यानि कर्माणि "शुक्रं यजमानोऽन्वारभते" "यजमानसम्मितौदुम्बरी भवति" इत्यादीनि तानि किमेकेन यजमानेन कर्तव्यानि? उत सर्वैर्यजमानैः? इति सन्देहे, प्राप्तिसूत्रत्वात्पूर्वपक्षस्य नातीव प्रयोजनमिति सिद्धान्तयति---

**परार्थान्येको यजमानगणे॥ ३०॥**

परार्थानि यानि कर्माणि शुक्रान्वारम्भणादीनि तानि यजमानगणे एकः कुर्यात्। शुक्रान्वारम्भणौदुम्बरीसम्माननादिकर्माणि न कञ्चिद्यजमानस्योपकारं जनयन्ति। यद्युपाकारस्स्यात्तर्हि सर्वे कुर्युः। तादृशोपकाराभावादेक एव तानि कुर्यात्॥

इत्येकादशं सत्रे शुक्रान्वारम्भणादीनामेककर्तृकत्वाधिकरणम्॥ ११॥

१२

अहीने स चैकः कः ? किमनियमः ? उत नियमः ? इति सन्देहे सिद्धान्तयति–

**अनियमोऽविशेषात् ॥ ३१ ॥**

यः कश्चिदेकः कुर्यादित्यनियमः। कुतः ? अविशेषात्—'यजमानः' 'यजमानसम्मिता' इत्यत्र यजमानपदमेव श्रुतम्। न त्वत्र कश्चन विशेषः श्रुतः। तस्माद्यः कश्चिदित्यनियमः ॥

इति द्वादशमहीने शुक्रान्वारम्भादीनामनियतयजमानकर्तृकत्वाधिकरणम् ॥ १२ ॥

१३

सत्रेऽपि किमनियमः ? उत नियमः ? इति सन्देहे, पूर्ववदनियमे प्राप्ते, सिद्धान्तयति—

**मुख्यो वाविप्रतिषेधात् ॥ ३२ ॥**

सत्रे तु मुख्यः—गृहपतिः कुर्यात्। कुतः ? अविप्रतिषेधात्—गृहपतेरार्त्विज्याभावेन विप्रतिषेधाभावात्। ऋत्विजामार्त्विज्यस्य शुक्रान्वारम्भणादियाजमानस्य च सन्निपाते युगपत्कर्तुमशक्यत्वाद्विप्रतिषेधो भवेत्। गृहपतिः परार्थानि कर्माणि कुर्वन् न विप्रतिषेधस्यावसरः, तस्यार्त्विज्याभावात्। अतस्स एव परार्थानि याजमानानि कुर्यादिति ॥

इति त्रयोदशं सत्रे शुक्रान्वारम्भणादौ गृहपतेरेव कर्तृत्वाधिकरणम् ॥ १३ ॥

१४

सत्रे यानि याजमानानि संस्कारकर्माणि, तान्यपि किं गृहपतिरेव कुर्यात् ? उत सर्वे ? इति संशयः। तत्र पूर्वपक्षयति—

**सत्रे गृहपतिस्संयोगाद्धौत्रवत् ॥ ३३ ॥**

सत्रे गृहपतिरेव स्वामिसंस्कारानपि कुर्यात् गृहपतिसमाख्यानात्। गृहपतिसमाख्यायाः किं प्रवृत्तिनिमित्तम ? किं गृहस्य शालायाः पतिरिति ? उत गृहस्य

कर्मणः पतिरिति ? तत्र शालापतित्वस्य सर्वसाधारण्यान्न गृहशब्दः शालापरः। किन्तु गृहशब्देनात्र कर्मोच्यते—कर्मणः पतिः स्वामीत्यर्थः। ननु कर्मस्वामित्वमपि सर्वसाधारणमिति चेत्सत्यम्; "ये यजमानास्त ऋत्विजः" इति सर्वेषां यजमानत्वेऽपि फलविशेषसम्बन्धादेकस्यैव गृहस्वामित्वम्-कर्मस्वामित्वमिति समाख्योपपत्तेः। फलभूयस्त्वन्तु—"आम्नायवचनाच्च" इत्युत्तरसूत्रे प्रदर्शयिष्यते। एवञ्च कर्मजन्यफलभोक्तृत्वरूपे कर्मस्वामित्व एव गृहपतिशब्दः, न तु शालापतित्वे। न च फलिसंस्काराभावे इतरेषां फलमेव न स्यादिति वाच्यम्, "अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" इत्यादिवाक्यैस्सत्रे ब्रह्मादीनामुपदिष्टसंस्कारैरेव फलसिध्युपपत्तेः। अतो गृहपतिरेव याजमानसंस्कारकर्माणि कुर्यात्। सूत्रार्थस्तु—सत्रे गृहपतिरेव यजमानसंस्कारान् कुर्यात्, गृहस्य कर्मणः पतिरिति समाख्यायाः संयोगात्। 'असंयोगात्' इति पाठे गृहपतिरिति समाख्याया असंयोगो न भविष्यतीति नञमध्याहृत्यार्थो वर्णनीयः। तथैव भाष्यकारा वर्णयाञ्चक्रुः। हौत्रवत्-हौत्रसमाख्यानाद्धोता हौत्रकर्मसु कर्ता तद्वदिति ॥

गृहपतेः फलभूयस्त्वं दर्शयति—

**आम्नायवचनाच्च ॥ ३४ ॥**

गृहपतेः फलभूयस्त्वे वचनं भवति—"यो वै सत्रे बहूनां यजमानानां गृहपतिः सत्रस्य प्रत्येता। स हि भूयिष्ठामृद्धिमाप्नोति" इति ॥

अथ सिद्धान्तयति—

**सर्वे वा तदर्थत्वात् ॥ ३५ ॥**

सर्वे यजमानाः याजमानसंस्कारकर्माणि कुर्युः। कुतः ? तदर्थत्वात्—कर्मणस्सर्वार्थत्वात्। "द्वादशाहमृद्धिकामा उपेयुः" इति सर्वेषामविशेषेण कर्म श्रूयते। य एव यजमानस्संस्कारैर्न युज्यते तस्य गुणहीनमफलं कर्म भवेत्। अतस्सर्वे यजमानाः कुर्युः ॥

यदुक्तं फलभूयस्त्वाद्गृहपतिरेव कुर्यादिति, तत्रोच्यते—

**गृहपतिरिति च समाख्यासामान्यात् ॥ ३६ ॥**

यथा लोके गृहपतिः स्वयं न करोति किञ्चित्, अन्ये तस्य कर्मकराः भवन्ति, तथैवात्रापि गृहपतेः समाख्यासामान्यात् स्वामित्वप्रकर्षः, न फलभूय-

स्त्वप्रयुक्तः प्रकर्षः । किञ्च फलभूयस्त्वेन न संस्काराधिक्यसिद्धिः, विनापि संस्काराधिक्यं वचनबलात्फलभूयस्त्वोपपत्तेः । अतस्सर्वे याजमानं कुर्युः ॥

ननु सर्वेषामविशेषेण यजमानसंस्कारकर्मण्यधिकारे सति ते क्रत्वर्थान् पदार्थान् न कुर्युरित्यत आह—

**विप्रतिषेधे परम् ॥ ३७ ॥**

यत्र त्वार्त्विज्यसंस्कारयोर्विप्रतिषेधः—विरोधः तत्र संस्कारस्यार्त्विज्यं प्रति गुणत्वादङ्गगुणविरोधन्यायेन क्रत्वर्थो बलवान् । क्रत्वर्थे ह्यक्रियमाणे क्रतुरेव न सम्पद्येत । तस्मात्सर्वे कुर्युः ॥

यदुक्तं हौत्रवदिति तत्राह—

**हौत्रे परार्थत्वात् ॥ ३८ ॥**

हौत्रे कर्मणि पुरुषोऽङ्गम्, न हौत्रं पुरुषार्थम् । येन केनचित्पुरुषेण तत्कर्तव्यम्, न सर्वैः । तत्र च नियामिका समाख्या होतुस्तत्कर्तृत्वमवबोधयति, न सर्वेषाम् । हौत्रमिति समाख्या होतारं विहायान्यान् हौत्रकर्मणि निवर्तयितुं शक्नोति । एवं गृहपतिरिति समाख्या नान्येषां निवृत्तिं शक्नोति कर्तुम् । सर्वे यजमानाः, होता चैकः । यथा गृहपतिर्यजमानस्संस्कारान् लभते तथान्येऽपि यजमाना एव । अतस्तेऽपि संस्कारान् लभेरन् । अतस्सर्वे कुर्युः ॥

'आम्नायवचनाच्च' इति यदुक्तं तत्राह—

**वचनं परम् ॥ ३९ ॥**

"स सत्रस्य प्रत्येता" इति केवलं वचनं तत्, न फलभूयस्त्वप्रापकमित्यर्थः ॥

**इति चतुर्दशं सत्रे संस्काराणां सर्वार्थत्वाधिकरणम् ॥ १४ ॥**

१५

ब्राह्मणक्षत्रियवैश्यानां त्रयाणामार्त्विज्येऽधिकारः, उत ब्राह्मणस्यैवेति चिन्त्यते । तत्र पूर्वपक्षयति—

**प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ॥ ४० ॥**

सर्ववर्णानामार्त्विज्यं स्यात् । कुतः ? प्रभुत्वात्—अधिकृतत्वात् । कर्मस्वधिकारिविशेषणानि त्रीणि—उपनयनम् विद्या सामर्थ्यञ्चेति । त्रैवर्णिकानां समान-

मिदम्। "जायमानो वै ब्राह्मणः त्रिभिः ऋण वा जायते, ब्रह्मचर्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः" इति ऋणापाकरणश्रुतौ ब्राह्मणग्रहणं क्षत्रवैश्ययोरुपलक्षणमित्युक्तं षष्ठे। तैरप्यपाकृतऋणैर्भवितव्यम्। अत एव तेषामुपनयने दर्शपूर्णमासादिकर्मस्वधिकारस्स्थापितः। त्रयोऽप्युपनीता अध्ययनविधिलब्धविद्याश्च। अतस्त्रयाणामपि वर्णानामार्त्विज्याहर्त्वम्। यद्यपि 'षण्णान्तु कर्मणामस्य त्रीणि कर्माणि जीविका' इति स्मृतिर्ब्राह्मणस्यैवाध्यापनयाजनप्रतिग्रहेष्वधिकारमवबोधयति, तथापि प्रकरणाम्नानात्पुरुषार्थत्वमेव न क्रत्वर्थत्वम्। अतः याजयन्तौ क्षत्रियवैश्यौ विध्युल्लङ्घनेन प्रत्यवेतौ भवेताम्, न तेन क्रतोर्वैगुण्यमापद्येत। ननु याजनादयो ब्राह्मणानामेव न क्षत्रियवैश्ययोः, जयवाणिज्यादयः क्षत्रियवैश्ययोरेवेति लिप्साधिकरणे द्रव्यार्जननियमस्य सिद्धान्तितत्वात्कथमार्त्विज्ये क्षत्रियवैश्ययोः प्रवृत्तिरिति चेत्सत्यम्; अर्थलोभेन स्वधर्ममप्यतिक्रम्यार्त्विज्ये प्रवृत्तिसम्भवात्। ब्राह्मणानामार्त्विज्यस्मरणञ्च न्यायाभासमूलकम्। अतस्त्रयाणामप्यार्त्विज्येऽधिकारः॥

सिद्धान्तयति—

**स्मृतेर्वा स्याद्ब्राह्मणानाम् ॥ ४१ ॥**

'याजनाध्यापनप्रतिग्रहा ब्राह्मणस्यैव वृत्त्युपायाः' इति स्मृतेः ब्राह्मणानामेवार्त्विज्येऽधिकारः। न च न्यायाभासमूलकमिदं स्मरणमिति युक्तम्, 'अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्' इत्यत्रैतादृश्यस्स्मृतयः प्रमाणमिति साधितत्वात्। क्रतुविधयो ह्यार्त्विज्यकर्तृत्वेन त्रैवर्णिकानाक्षेप्तुं प्रवर्तमाना येषां पुरुषाणां याजनं वृत्त्युपायतया स्मृतं तैरेव स्वसिध्युपपत्तौ सत्यां तानेव कर्तृत्वेन स्वीकुर्वन्ति। अतो ब्राह्मणानामेवाधिकारः॥

इतोऽप्येवमित्याह—

**फलचमसविधानाच्चेतरेषाम् ॥ ४२ ॥**

इतरेषाम्—राजन्यवैश्यानाम् फलचमसविधानादपि ब्राह्मणानामेवार्त्विज्येऽधिकारः। "स यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं बिभक्षयिषेत् न्यग्रोधस्तिभिनीराहृत्य तास्सम्पिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्" इति श्रुतौ 'स याजयेत्' 'स बिभक्षयिषेत्' इति तच्छब्देन ब्राह्मणस्यैव

परामर्शः, राजन्यवैश्ययोः पृथङ् निर्देशात्, 'अस्मै' इतीदंशब्देन क्षत्रियवैश्ययोः परामर्श इति च निर्विवादम्। तेन च ब्राह्मणस्यैवाधिकार इति स्पष्टम्। किञ्चानया श्रुत्या क्षत्रियवैश्ययोरसोमपत्वं विज्ञायते। सोमपत्वञ्चार्त्विज्ये नियतम्। ब्राह्मणस्य च सोमपत्वस्य सत्त्वात्स एवार्त्विज्येऽधिकुर्यादिति भावः॥

किञ्च—

## साान्नाय्येऽप्येवं प्रतिषेधोऽसोमपीथहेतुत्वात्॥ ४३॥

एवम्—यथा क्षत्रियवैश्ययोस्सोमे प्रतिषेधः, तथा सान्नाय्येऽपि स श्रूयते—"न राजन्यो न वैश्यो वा सान्नाय्यं पिबेत् असोमपीथो ह्येषः" इति। सान्नाय्य-भक्षप्रतिषेधेऽसोमपीथत्वं हेतुः। सोमपीथत्वाभावे च नार्त्विज्येऽधिकारः॥

इतोऽप्येवमित्याह—

## चतुर्धाकरणे च निर्देशात्॥ ४४॥

दर्शपूर्णमासयोः "पुरोडाशं चतुर्धा करोति" इति चतुर्धाकरणं विहितम्। चतुर्धाकरणानन्तरमयं निर्देशमन्त्रः—"ब्राह्मणानामिदं हविः सौम्यानां सोम-पीथिनाम् नेहाब्राह्मणस्यास्ति" इति। इदं चतुर्धाकृतं हविः सोमपीथिनां ब्राह्म-णानामिति निर्देशः क्रियते। तत्र चतुर्धाकरणस्य ऋत्विक्कर्तृकशेषभक्षणार्थत्वम्। तत्र च 'ब्राह्मणानाम्' इत्यनेन ऋत्विजामेव निर्देश इति ब्राह्मणानामेवार्त्विज्येऽ-धिकारः प्रतीयते। अत्रैव मन्त्रे "नेहाब्राह्मणस्यास्ति" इत्यब्राह्मणस्य भागनिषेधोऽपि ब्राह्मणानामेवाधिकार इत्यवगमयति॥

इतोऽप्येवमित्याह—

## अन्वाहार्ये च दर्शनात्॥ ४५॥

दर्शपूर्णमासयोर्दक्षिणात्वेनान्वाहार्यपचनं श्रुतम्। तत्र ब्राह्मणानामेव श्रवणमस्ति—"एते वै देवा अहुतादो यद्ब्राह्मणा यदन्वाहार्यमाहरन्ति तानेव तेन

प्रीणाति'' इति। दक्षिणा च ऋत्विग्भ्यो दीयते। अतो ब्राह्मणानामेवार्त्विज्येऽधिकार इति सिद्धम्॥

इति पञ्चदशं ब्राह्मणानामेवार्त्विज्याधिकाराधिकरणम्॥ १५॥

इति महामहोपाध्याय-वेदविशारद-शास्त्ररत्नाकर-श्रौतस्मार्तकर्मानुष्ठाननिरत-
वाधूलान्वयवतंसानाम् श्रीचिन्नस्वामिशास्त्रिचरणानाम्
अन्तेवासिना पट्टाभिरामशास्त्रिणा विरचितायाम्-
मध्वरमीमांसाद्वादशाध्यायसूत्रवृत्तौ
चतुर्थः पादः॥

॥ समाप्तश्चाध्यायः॥

: श्री :

# अध्वरमीमांसाकुतूहलवृत्तिगतजैमिनिसूत्रपाठः

## प्रथमाध्याये प्रथमः पादः

१

अथातो धर्मजिज्ञासा ॥ १ ॥

२

चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥

३

तस्य निमित्तपरीष्टिः ॥ ३ ॥

४

सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥ ४ ॥

५

औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ ५ ॥

६

कर्मैके तत्र दर्शनात् ॥ ६ ॥ अस्थानात् ॥ ७ ॥ करोतिशब्दात् ॥ ८ ॥ सत्त्वान्तरे च यौगपद्यात् ॥ ९ ॥ प्रकृतिविकृत्योश्च ॥ १० ॥ वृद्धिश्च कर्तृभूम्नास्य ॥ ११ ॥ समन्तु तत्र दर्शनम् ॥ १२ ॥ सतः परमदर्शनं विषयानागमात् ॥ १३ ॥ प्रयोगस्य परम् ॥ १४ ॥ आदित्यवद्यौगपद्यम् ॥ १५ ॥ शब्दान्तरमविकारः ॥ १६ ॥ नादवृद्धिः परा ॥ १७ ॥ नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥ १८ ॥ सर्वत्र यौगपद्यात् ॥ १९ ॥ सङ्ख्याभावात् ॥ २० ॥ अनपेक्षत्वात् ॥ २१ ॥ प्रख्याभावाच्च संयोगस्य ॥ २२ ॥ लिङ्गदर्शनाच्च ॥ २३ ॥

७

उत्पत्तौ वावचनाः स्युरर्थस्यातन्निमित्तत्वात् ॥ २४ ॥ तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ॥ २५ ॥ लोके सन्नियमात्प्रयोगसन्निकर्षः स्यात् ॥ २६ ॥

८

वेदांश्चैके सन्निकर्षं पुरुषाख्याः ॥ २७ ॥ अनित्यदर्शनाच्च ॥ २८ ॥ उक्तन्तु शब्दपूर्वत्वम् ॥२९॥ आख्या प्रवचनात् ॥३०॥ परन्तु श्रुतिसामान्यमात्रम् ॥३१॥ कृते वाविनियोगः स्यात्कर्मणः समत्वात् ॥ ३२ ॥

इति प्रथमाध्याये प्रथमः पादः ॥ ( तत्राधिकरणानि ८, सूत्राणि ३२ )

## द्वितीयः पादः

१

आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥ १ ॥ शास्त्रदृष्टविरोधाच्च ॥ २ ॥ तथा फलाभावात् ॥ ३ ॥ अन्यानर्थक्यात् ॥ ४ ॥ अभागिप्रतिषेधात् ॥ ५ ॥ अनित्यसंयोगात् ॥ ६ ॥ विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः ॥ ७ ॥ तुल्यञ्च साम्प्रदायिकम् ॥ ८ ॥ अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्यते ॥ ९ ॥ गुणवादस्तु ॥ १० ॥ रूपात्प्रायात् ॥ ११ ॥ दूरभूयस्त्वात् ॥ १२ ॥ स्त्र्यपराधात् कर्तुश्च पुत्रदर्शनात् ॥ १३ ॥ आकालिकेप्सा ॥ १४ ॥ विद्याप्रशंसा ॥ १५ ॥ सर्वत्वमाधिकारिकम् ॥ १६ ॥ फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषः स्यात् ॥ १७ ॥ अन्त्ययोर्यथोक्तम् ॥ १८ ॥

२

विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥ *लोकवदिति चेन्न पूर्ववत्वात् ॥ २० ॥ उक्तन्तु वाक्यशेषत्वम् ॥ २१ ॥ विधिश्चानर्थकः कचित्तस्मात्स्तुतिः

---

* भाष्यादौ चेदन्तानि सूत्राणि व्याख्यासौकर्याय पृथक्सूत्रत्वेन परिगणितानि, अत्र चैकसूत्रत्वेन श्रीवासुदेवविदुषा सर्वत्र व्याख्यातानि ।

प्रतीयेत तत्सामान्यादितरेषु तथात्वम् ॥ २२ ॥ प्रकरणे च सम्भवन्नपकर्षो न कल्पेत विध्यानर्थक्यं हि तं प्रति ॥ २३ ॥ विधौ च वाक्यभेदः स्यात् ॥ २४ ॥

३

हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ २५ ॥ स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य ॥ २६ ॥ व्यर्थे स्तुतिरन्याय्येति चेदर्थस्तु विधिशेषत्वात् यथा लोके ॥ २७ ॥ यदि च हेतुरवतिष्ठेत निर्देशात् सामान्यादिति चेदव्यवस्था विधीनां स्यात् ॥ २८ ॥

४

*तदर्थशास्त्राद्वाक्यनियमाद् बुद्धशास्त्रादविद्यमानवचनादचेतनेऽर्थबन्धनादर्थविप्रतिषेधात्स्वाध्यायवदवचनादविज्ञेयादनित्यसंयोगान्मन्त्रानर्थक्यम् ॥ २९ ॥ अविशिष्टस्तु वाक्यार्थः ॥ ३० ॥ गुणार्थेन पुनः श्रुतिः ॥ ३१ ॥ परिसंख्या ॥ ३२ ॥ अर्थवादो वा ॥ ३३ ॥ अविरुद्धं परम् ॥ ३४ ॥ सम्प्रैषकर्मगर्हानुपालम्भः संस्कारत्वात् ॥ ३५ ॥ अभिधानेऽर्थवादः ॥ ३६ ॥ गुणादविप्रतिषेधः स्यात् ॥ ३७ ॥ विद्यावचनमसंयोगात् ॥ ३८ ॥ सतः परमविज्ञानम् ॥ ३९ ॥ उक्तश्चानित्यसंयोगः ॥ ४० ॥ लिङ्गोपदेशश्च तदर्थवत् ॥ ४१ ॥ ऊहः ॥ ४२ ॥ विधिशब्दाश्च ॥ ४३ ॥

इति प्रथमाध्याये द्वितीयः पादः ॥ ( तत्राधिकरणानि ४, सूत्राणि ४३ )

## तृतीयः पादः

१

धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात् ॥ १ ॥ अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् ॥ २ ॥

२

विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम् ॥ ३ ॥

३

हेतुदर्शनाच्च ॥ ४ ॥

---

* अस्यैकसूत्रत्वेऽपि पञ्चम्यन्तानि पृथक्कृत्य व्याख्यातानि ।

४

शिष्टाकोपेऽविरुद्धमिति चेन्न शास्त्रपरिमाणत्वात् ॥ ५ ॥ अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥ ६ ॥

५

तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात् ॥ ७ ॥ शास्त्रस्था वा तन्निमित्तत्वात् ॥ ८ ॥

६

चोदितन्तु प्रतीयेताविरोधात्प्रमाणेन ॥ ९ ॥

७

प्रयोगशास्त्रमिति चेन्नासन्नियमात् ॥ १० ॥ अवाक्यशेषात् ॥ ११ ॥ सर्वत्र च प्रयुक्तत्वात् सन्निधानशास्त्राच्च ॥ १२ ॥

८

अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥ १३ ॥ अपि वा सर्वधर्मः स्यात्तन्न्यायत्वाद्विधानस्य ॥ १४ ॥ दर्शनाद्विनियोगस्य ॥ १५ ॥ लिङ्गाभावाच्च नित्यस्य ॥ १६ ॥ आख्या हि देशसंयोगात् ॥ १७ ॥ न स्याद्देशान्तरेष्विति चेत्स्याद्योगाख्या हि माथुरवत् ॥ १८ ॥ कर्मधर्मो वा प्रवणवत् ॥ १९ ॥ तुल्यन्तु कर्तृधर्मेण ॥ २० ॥

९

प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥ २१ ॥ शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ॥ २२ ॥ अन्यायश्चानेकशब्दत्वम् ॥ २३ ॥ तत्र तत्त्वमभियोगविशेषात् स्यात् ॥ २४ ॥ तदशक्तिश्चानुरूपत्वात् ॥ २५ ॥ एकदेशाच्च विभक्तिव्यत्यये प्रत्ययः स्यात् ॥ २६ ॥

१०

प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ २७ ॥

११

प्रयोगचोदनाभावादर्थैकत्वमविभागात् ॥ २८ ॥ अद्रव्यशब्दत्वात् ॥ २९ ॥ अन्यदर्शनाच्च ॥ ३० ॥ आकृतिस्तु क्रियार्थत्वात् ॥ ३१ ॥ न क्रिया स्यादिति चेन्नार्थान्तरे विधानं न द्रव्यमिति चेत्तदर्थत्वात्प्रयोगस्याविभागः ॥ ३२ ॥

इति प्रथमाध्याये तृतीयः पादः ॥ ( तत्राधिकरणानि ११, सूत्राणि ३२ )

## चतुर्थः पादः

१

उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात् ॥ १ ॥

२

अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात् ॥ २ ॥

३

यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः ॥ ३ ॥

४

तत्प्रख्यं चान्यशास्त्रम ॥ ४ ॥

५

तद्व्यपदेशच्च ॥ ५ ॥

६

नामधेये गुणश्रुतेः स्याद्विधानमिति चेत्तुल्यत्वात् क्रिययोर्न ॥ ६ ॥ ऐकशब्द्ये परार्थवत ॥ ७ ॥

७

तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न चेदन्येन शिष्टाः ॥ ८ ॥

८

बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः ॥ ९ ॥

९

प्रोक्षणीष्वर्थसंयोगात् ॥ १० ॥

१०

तथा निर्मन्थ्ये ॥ ११ ॥

११

वैश्वदेवे विकल्प इति चेन्न प्रकरणात्प्रत्यक्षविधानाच्च न हि प्रकरणं द्रव्यस्य ॥ १२ ॥ मिथश्चानर्थसम्बन्धः ॥ १३ ॥ परार्थत्वाद् गुणानाम् ॥ १४ ॥

१२

पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥ १५ ॥ गुणस्य तु विधानार्थे तद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्तास्ति ॥ १६ ॥ तच्छेषो नोपपद्यत इति चेदविभागाद्विधानार्थे स्तुत्यर्थेनोपपद्येरन् ॥ १७ ॥ कारणं स्यादिति चेदानर्थक्यादकारणं कर्तुर्हि कारणानि गुणार्थो हि विधीयते ॥ १८ ॥

१३–१८

*तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रयाः ॥ १९ ॥ तत्सिद्धिर्गुणाश्रयः, जातिर्गुणाश्रयः, सारूप्यं गुणाश्रयः, प्रशंसा गुणाश्रयः, भूमा गुणाश्रयः, लिङ्गसमवायो गुणाश्रयः ॥

१९

सन्दिग्धे तु वाक्यशेषात ॥ २० ॥

२०

अर्थाद्वा कल्पैनैकदेशत्वात् ॥ २१ ॥

इति प्रथमाध्याये चतुर्थः पादः ॥ ( तत्राधिकरणानि २०, सूत्राणि २१ )

आहत्य प्रथमाध्यायेऽधिकरणानि ४३, सूत्राणि च १२८ ॥

---

* एकसूत्रमपि उदाहरणभेदेन पृथक्कृत्य व्याख्यातम् । अतोऽधिकरणभेदः प्रदर्शितः ।

॥ श्रीः ॥

# द्वितीयाध्याये प्रथमः पादः

१

उत्सूत्रं प्रतिपदाधिकरणम्

२

भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ॥ १ ॥ सर्वेषां भावोऽर्थ इति चेद्येषामुत्पत्तौ स्वे प्रयोगे रूपोपलब्धिस्तानि नामानि, तस्मात्तेभ्यः पराकाङ्क्षा भूतत्वात् स्वे प्रयोगे; येषान्तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि, तस्मात्तेभ्यः क्रिया प्रतीयेताश्रितत्वात्प्रयोगस्य ॥ २ ॥

३

चोदना पुनरारम्भः ॥ ३ ॥

४

तानि द्वैधं गुणप्रधानभूतानि ॥ ४ ॥ यैर्द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् ॥ ५ ॥ यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात् ॥ ६ ॥

५

धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥ ७ ॥ तुल्यश्रुतित्वाद्वेतरैः सधर्म स्यात् ॥ ८ ॥ द्रव्योपदेश इति चेन्न तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वात् ॥ ९ ॥

६

स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् ॥ १० ॥ अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात् ॥ ११ ॥ वशावद्वा गुणार्थं स्यात् ॥ १२ ॥ न श्रुतिसमवायित्वात् ॥ १३ ॥ व्यपदेशभेदाच्च ॥ १४ ॥ गुणश्चानर्थकः स्यात् ॥ १५ ॥ तथा याज्यापुरोरुचोः ॥ १६ ॥ वशायामर्थसमवायात् ॥ १७ ॥

यत्रेति वार्थवत्त्वात् स्यात् ॥ १८ ॥ न त्वाम्नातेषु ॥ १९ ॥ दृश्यते ॥ २० ॥ अपि वा श्रुतिसंयोगात् प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम ॥ २१ ॥ शब्द-पृथक्त्वाच्च ॥ २२ ॥ अनर्थकञ्च तद्वचनम् ॥ २३ ॥ अन्यश्चार्थः प्रतीयते ॥ २४ ॥ अभिधानञ्च कर्मवत् ॥ २५ ॥ फलनिर्वृत्तिश्च ॥ २६ ॥

७

विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात ॥ २७ ॥ अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् ॥ २८ ॥

८

तच्चोदकेषु मन्त्राख्या ॥ २९ ॥

९

शेषे ब्राह्मणशब्दः ॥ ३० ॥

१०

अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात् ॥ ३१ ॥

११

तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ ३२ ॥

१२

गीतिषु समाख्या ॥ ३३ ॥

१३

शेषे यजुःशब्दः ॥ ३४ ॥

१४

निगदो वा चतुर्थं स्याद्धर्मविशेषात् ॥ ३५ ॥ व्यपदेशाच्च ॥ ३६ ॥ यजूंषि वा तद्रूपत्वात् ॥ ३७ ॥ वचनाद्धर्मविशेषः ॥ ३८ ॥ अर्थाच्च ॥ ३९ ॥ गुणार्थो व्यपदेशः ॥ ४० ॥ सर्वेषामिति चेन्नव्यपदेशात ॥ ४१ ॥

१५

अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥ ४२ ॥

१६

समेषु वाक्यभेदः स्यात् ॥ ४३ ॥ अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्य-योगित्वात् ॥ ४४ ॥

१७

व्यवायान्नानुषज्यते ॥ ४५ ॥

इति द्वितीयाध्याये प्रथमः पादः ॥ ( तत्राधिकरणानि १७, सूत्राणि ४५ )

## द्वितीयः पादः

१

शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात् ॥ १ ॥

२

एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्यात् ॥ २ ॥

३

प्रकरणन्तु पौर्णमास्यां रूपावचनात् ॥ ३ ॥ विशेषदर्शनाच्च पूर्वेषां समेषु ह्यप्रवृत्तिः स्यात् ॥ ४ ॥ गुणस्तु श्रुतिसंयोगात् ॥ ५ ॥ चोदना वा गुणानां युग-पच्छास्त्राच्चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत ॥ ६ ॥ व्यपदेशश्च तद्वत् ॥ ७ ॥ लिङ्गदर्शनाच्च ॥ ८ ॥

४

पौर्णमासीवदुपांशुयाजः स्यात् ॥ ९ ॥ चोदना वाप्रकृतत्वात् ॥ १० ॥ गुणोपबन्धात् ॥ ११ ॥ प्राये वचनाच्च ॥ १२ ॥

५

आघाराग्निहोत्रमरूपत्वात् ॥ १३ ॥ संज्ञोपबन्धात् ॥ १४ ॥ अप्रकृतत्वाच्च ॥ १५ ॥ चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्तत्सन्निधेर्गुणार्थेन पुनः श्रुतिः ॥१६॥

६

द्रव्यासंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणार्थेन ॥ १७ ॥ अचोदकाश्च संस्काराः ॥ १८ ॥ तद्भेदात्कर्मणोऽभ्यासो

द्रव्यपृथक्त्वादनर्थकं हि स्याद्भेदो द्रव्यगुणभावात् ॥ १९ ॥ संस्कारस्तु न भिद्यते परार्थत्वाद्द्रव्यस्य गुणभूतत्वात् ॥ २० ॥

७

पृथक्त्वनिवेशित्वात्सङ्ख्यया कर्मभेदः स्यात् ॥ २१ ॥

८

सञ्ज्ञा चोत्पत्तिसंयोगात् ॥ २२ ॥

९

गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् ॥ २३ ॥

१०

अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत ॥ २४ ॥

११

फलश्रुतेस्तु कर्म स्यात्फलस्य कर्मयोगित्वात् ॥ २५ ॥ अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत ॥ २६ ॥

१२

समेषु कर्मयुक्तं स्यात् ॥ २७ ॥

१३

सौभरे पुरुषश्रुतेर्निधने कामसंयोगः ॥ २८ ॥ सर्वस्य वोक्तकामत्वात्तस्मिन् कामश्रुतिः स्यान्निधनार्था पुनः श्रुतिः ॥ २९ ॥

इति द्वितीयाध्याये द्वितीयः पादः ॥ ( तत्राधिकरणानि १३, सूत्राणि २९ )

## तृतीयः पादः

१

गुणस्तु क्रतुसंयोगात्कर्मान्तरं प्रयोजयेत्संयोगस्याशेषभूतत्वात् ॥ १ ॥ एकस्य तु लिङ्गभेदात्प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वात् ॥ २ ॥

२

अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यते ॥ ३ ॥

३

आधानेऽसर्वशेषत्वात् ॥ ४ ॥

४

अयनेषु चोदनानन्तरं संज्ञोपबन्धात् ॥ ५ ॥ अगुणा च कर्मचोदना ॥ ६ ॥ समाप्तञ्च फले वाक्यम् ॥ ७ ॥ विकारो वा प्रकरणात् ॥ ८ ॥ लिङ्गदर्शनाच्च ॥९॥ गुणात्संज्ञोपबन्धः ॥ १० ॥ समाप्तिरविशिष्टा ॥ ११ ॥

५

संस्काराश्चाप्रकरणेऽकर्मशब्दत्वात् ॥ १२ ॥ यावदुक्तं वा कर्मणः श्रुतिमूलत्वात् ॥ १३ ॥ यजिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसम्बन्धात् ॥ १४ ॥ लिङ्गदर्शनाच्च ॥ १५ ॥

६

विशये प्रायदर्शनात् ॥ १६ ॥ अर्थवादोपपत्तेश्च ॥ १७ ॥

७

संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ॥ १८ ॥

८

पात्नीवते तु पूर्ववत्त्वादपच्छेदः ॥ १९ ॥

९

अद्रव्यत्वात्केवले कर्मशेषः स्यात् ॥ २० ॥

१०

अग्निस्तु लिङ्गदर्शनात्क्रतुशब्दः प्रतीयेत ॥ २१ ॥ द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् ॥ २२ ॥ तत्संयोगात्क्रतुस्तदाख्यः स्यात्तेन धर्मविधानानि ॥ २३ ॥

११

प्रकरणान्तरे प्रयोजनान्यत्वम् ॥ २४ ॥

१२

फलं चाकर्मसन्निधौ ॥ २५ ॥

१३

सन्निधौ त्वविभागात्फलार्थे न पुनः श्रुतिः ॥ २६ ॥

१४

आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयते ॥ २७ ॥ अविभागात्तु कर्मणो द्विरुक्तो न विधीयेत ॥ २८ ॥ अन्यार्था वा पुनः श्रुतिः ॥ २९ ॥

इति द्वितीयाध्याये तृतीयः पादः ॥ ( तत्राधिकरणानि १४, सूत्राणि २९ )

## चतुर्थः पादः

१

यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् ॥ १ ॥ कर्तुर्वा श्रुतिसंयोगात् ॥ २ ॥ लिङ्गदर्शनाच्च कर्मधर्मे हि प्रक्रमेण नियम्येत तत्रानर्थकमन्यत्स्यात् ॥ ३ ॥ व्यपवर्गञ्च दर्शयति कालश्चेत्कर्मभेदः स्यात् ॥ ४ ॥ अनित्यत्वात्तु नैवं स्यात् ॥ ५ ॥ विरोधश्चापि पूर्ववत् ॥ ६ ॥ कर्तुस्तु धर्मनियमात्कालशास्त्रं निमित्तार्थं स्यात् ॥ ७ ॥

२

नाम-रूप-धर्मविशेष-पुनरुक्ति-निन्दा-शक्ति-समाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरे कर्मभेदः स्यात् ॥ ८ ॥ एकं वा संयोगरूपचोदनाख्याविशेषात् ॥ ९ ॥ न नाम्ना स्यादचोदनाभिधानत्वात् ॥ १० ॥ सर्वेषां चैककर्म्यं स्यात् ॥ ११ ॥ कृतकञ्चाभिधानम् ॥ १२ ॥ एकत्वेऽपि परम् ॥ १३ ॥ विद्यायां धर्मशास्त्रम् ॥ १४ ॥ आग्नेयवत्पुनर्वचनम् ॥ १५ ॥ अद्विर्वचनं वा श्रुतिसंयोगाविशेषात् ॥ १६ ॥ वाक्यासमवायात् ॥ १७ ॥ अर्थासन्निधेश्च ॥ १८ ॥ न चैकं प्रति शिष्यते ॥ १९ ॥ समाप्तिवच्च सम्प्रेक्षा ॥ २० ॥ एकत्वेऽपि पराणि ॥ २१ ॥ प्रायश्चित्तं निमित्तेन ॥ २२ ॥ प्रक्रमाद्वा नियोगेन ॥ २३ ॥ समाप्तिः पूर्ववत्त्वात् यथाज्ञाते प्रतीयेत ॥ २४ ॥ लिङ्गमविशिष्टं सर्वशेषत्वान्न हि तत्र कर्मचोदना तस्माद्द्वादशाहस्याहारव्यपदेशः स्यात् ॥ २५ ॥ द्रव्ये वा अचोदितत्वाद्विधीनामव्यवस्था स्यान्निर्देशाद्व्यवतिष्ठेत तस्मान्नित्यानुवादः स्यात् ॥ २६ ॥ विहितप्रतिषेधात्पक्षेऽ-

तिरेकः स्यात् ॥ २७ ॥ सारस्वते विप्रतिषेधाद्यदेति स्यात् ॥ २८ ॥ हव्येऽप्रति- प्रसवः ॥ २९ ॥ गुणार्था वा पुनः श्रुतिः ॥ ३० ॥ प्रत्ययं चापि दर्शयति ॥ ३१ ॥ अपिवा श्रुतिसंयोगाद्विधिपृथक्त्वमेकैकस्यां शाखायां व्यवतिष्ठेत ॥ ३२ ॥ विरो- धिना त्वसंयोगादैककर्म्ये तत्संयोगाद्विधीनां सर्वप्रत्ययः ॥ ३३ ॥

इति द्वितीयाध्याये चतुर्थः पादः ॥ ( तत्राधिकरणानि २, सूत्राणि ३३ )

( आहत्य द्वितीयाध्यायेऽधिकरणानि ४६, सूत्राणि १३६ )

इति द्वितीयोऽध्यायः ॥

❀ श्रीः ❀

# तृतीयाध्याये प्रथमः पादः

१

अथातः शेषलक्षणम् ॥ १ ॥

२

शेषः परार्थत्वात् ॥ २ ॥

३

द्रव्यगुणसंस्कारेषु बादरिः ॥ ३ ॥ कर्माण्यपि जैमिनिः फलार्थत्वात् ॥ ४ ॥ फलञ्च पुरुषार्थत्वात् ॥ ५ ॥ पुरुषश्च कर्मार्थत्वात् ॥ ६ ॥

४

तेषामर्थेन सम्बन्धः ॥ ७ ॥ विहितस्तु सर्वधर्मः स्यात्संयोगतोऽविशेषात्प्रकरणाविशेषाच्च ॥ ८ ॥ अर्थलोपादकर्म स्यात् ॥ ९ ॥ फलन्तु सह चेष्टया शब्दार्थोऽभावाद्विप्रयोगे स्यात् ॥ १० ॥

५

द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत ॥ ११ ॥

६

अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् ॥ १२ ॥

७

एकत्वयुक्तमेकस्य श्रुतिसंयोगात् ॥ १३ ॥ सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम् ॥ १४ ॥ चोदिते परार्थत्वाद्यथाश्रुति प्रतीयेत ॥ १५ ॥

८

संस्काराद्वा गुणानामव्यवस्था स्यात ॥ १६ ॥ व्यवस्था वार्थस्य श्रुतिसंयोगात्तस्य शब्दप्रमाणत्वात् ॥ १७ ॥

९

आनर्थक्यात्तदङ्गेषु ॥ १८ ॥

१०

कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः स्यात् ॥ १९ ॥ साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण ॥ २० ॥

११

सन्दिग्धे तु व्यवायाद्वाक्यभेदः स्यात् ॥ २१ ॥ गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात् ॥ २२ ॥

१२

गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात् ॥ २२ ॥

१३

मिथश्चानार्थसम्बन्धः ॥ २३ ॥

१४

आनन्तर्यमचोदना ॥ २४ ॥ वाक्यानाञ्च समाप्तत्वात् ॥ २५ ॥

१५

शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत मिथस्तेषामसम्बन्धात् ॥ २६ ॥ व्यवस्था वार्थसंयोगाल्लिङ्गस्यार्थेन सम्बन्धाल्लक्षणार्था गुणश्रुतिः ॥ २७ ॥

**इति तृतीयाध्याये प्रथमः पादः ॥ ( तत्राधिकरणानि १५, सूत्राणि २७ )**

## द्वितीयः पादः

१

अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तस्मादुत्पत्तिसम्बन्धोऽर्थेन-नित्यसंयोगात् ॥ १ ॥ संस्कारकत्वादचोदितेन स्यात् ॥ २ ॥

२

वचनात्त्वयथार्थमैन्द्री स्यात् ॥ ३ ॥ गुणाद्वाप्यभिधानं स्यात्सम्बन्धस्याशास्त्रहेतुत्वात् ॥ ४ ॥

३

तथाह्वानमपीति चेन्न कालविधिश्चोदितत्वात् ॥ ५ ॥ गुणाभावात् ॥ ६ ॥ लिङ्गाच्च ॥ ७ ॥ विधिकोपश्चोपदेशे स्यात् ॥ ८ ॥

४

तथोत्थानविसर्जने ॥ ९ ॥

५

सूक्तवाके च कालविधिः परार्थत्वात् ॥ १० ॥ उपदेशो वा याज्याशब्दो हि नाकस्मात् ॥ ११ ॥ स देवतार्थस्तत्संयोगात् ॥ १२ ॥ प्रतिपत्तिरिति चेत्स्विष्टकृदुभयसंस्कारः स्यात् ॥ १३ ॥

६

कृत्स्नोपदेशादुभयत्र सर्ववचनम् ॥ १४ ॥ यथार्थं वा शेषभूतसंस्कारत्वात् ॥ १५ ॥ वचनादिति चेत्प्रकरणाविभागादुभे प्रति कृत्स्नशब्दः ॥ १६ ॥

७

लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नानम् ॥ १७ ॥

८

अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात् ॥ १८ ॥ तदाख्यो वा प्रकरणोपपत्तिभ्याम् ॥ १९ ॥ अनर्थकश्चोपदेशः स्यादसम्बन्धात्फलवता ॥ २० ॥ सर्वेषां चोपदिष्टत्वात् ॥ २१ ॥

अथ भक्षपेटिका

९

लिङ्गसमाख्यानाभ्यां भक्षार्थतानुवाकस्य ॥ २२ ॥ तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात् ॥ २३ ॥

१०

गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगात् ॥ २४ ॥

११

लिङ्गविशेषनिर्देशात्समानविधानेष्वनैन्द्राणाममन्त्रत्वम् ॥ २५ ॥ यथा देवतं वा तत्प्रकृतित्वं हि दर्शयति ॥ २६ ॥

१२

पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् ॥ २७ ॥ अपनयाद्वा पूर्वस्यानुपलक्षणम् ॥ २८ ॥ अग्रहणाद्वानपायः स्यात् ॥ २९ ॥

१३

पात्नीवते तु पूर्ववत् ॥ ३० ॥ ग्रहणाद्वापनीतः स्यात् ॥ ३१ ॥

१४

त्वष्टारं तूपलक्षयेत्पानात् ॥ ३२ ॥ अतुल्यत्वात्तु नैवं स्यात् ॥ ३३ ॥

१५

त्रिंशच्च परार्थत्वात् ॥ ३४ ॥

१६

अनुवषट्कारश्च कर्तृवत् ॥ ३५ ॥

१७

छन्दः प्रतिषेधस्तु सर्वगामित्वात् ॥ ३६ ॥

१८

ऐन्द्राग्ने तु लिङ्गभावात्स्यात् ॥३७॥ एकस्मिन्वा देवतान्तराद्विभागवत् ॥३८॥

१९

छन्दश्च देवतावत् ॥ ३९ ॥ सर्वेषु वाभावादेकच्छन्दसः ॥ ४० ॥

२०

सर्वेषां त्वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात्सवनाधिकारो हि ॥ ४१ ॥

इति भक्षपेटिका समाप्ता

इति तृतीयाध्याये द्वितीयः पादः ॥ ( तत्राधिकरणानि २०, सूत्राणि ४१ )

## तृतीयः पादः

१

श्रुतेर्जाताधिकारः स्यात् ॥ १ ॥ वेदो वा प्रायदर्शनात् ॥ २ ॥ लिङ्गाच्च ॥ ३ ॥ धर्मोपदेशाच्च नहि द्रव्येण सम्बन्धः ॥ ४ ॥ त्रयीविद्याख्या च तद्विदि ॥ ५ ॥ व्यतिक्रमे यथाश्रुतीति चेन्न सर्वस्मिन्निवेशात् ॥ ६ ॥ वेदसंयोगात्प्रकरणं बाध्येत ॥ ७ ॥

२

गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥ ८ ॥

३

भूयस्त्वेनोभयश्रुति ॥ ९ ॥

४

असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात् ॥ १० ॥

५

क्रमश्च देशसामान्यात् ॥ ११ ॥

६

आख्या चैवं तदर्थत्वात् ॥ १२ ॥

७

श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ॥ १३ ॥

८-९-१०-११-१२

एतानि लिङ्गप्राबल्यप्रभृतिबाधयोग्यतापर्यन्तान्यधिकरणानि ॥

१३

अहीनो वा प्रकरणाद् गौणः ॥ १४ ॥ असंयोगात्तु मुख्यस्य तस्मादपकृष्येत ॥ १५ ॥

१४

द्वित्वबहुत्वयुक्तं चाचोदनात्तस्य ॥ १६ ॥ पक्षेणार्थकृतस्येति चेन्न प्रकृतेरेक-संयोगात् ॥ १७ ॥

१५

जाघनी चैकदेशत्वात् ॥ १८ ॥ चोदना वापूर्वत्वात् ॥ १९ ॥ एकदेश इति चेन्न प्रकृतेरशास्त्रनिष्पत्तेः ॥ २० ॥

१६

सन्तदर्शनं प्रकृतौ क्रयणवदनर्थलोपात्स्यात् ॥ २१ ॥ उत्कर्षो वा ग्रहणा-द्विशेषस्य ॥ २२ ॥ कर्तृतो वा विशेषस्य सन्निमित्तत्वात् ॥ २३ ॥ क्रतुतो वार्थ वादानुपपत्तेः स्यात् ॥ २४ ॥ *संस्थासु च कर्तृवद्धारणार्थाविशेषात् ॥ २५ ॥ स्याद-नित्यत्वात् ॥ २६ ॥

१७

संख्यायुक्तं क्रतोः प्रकरणात्स्यात् ॥ २७ ॥ नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात् ॥ २८ ॥

१८

पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ ॥ २९ ॥

१९

तत्सर्वार्थमविशेषात् ॥ ३० ॥ चरौ वार्थोक्तं पुरोडाशेऽर्थविप्रतिषेधात्पशौ न स्यात् ॥ ३१ ॥ चरावपीति चेन्न पक्तिनामत्वात् ॥ ३२ ॥

२०

एकस्मिन्नेकसंयोगात् ॥ ३३ ॥ धर्मविप्रतिषेधाच्च ॥ ३४ ॥ अपि वा सद्वितीये स्याद्देवतानिमित्तत्वात् ॥ ३५ ॥ लिङ्गदर्शनाच्च ॥ ३६ ॥ वचनात्सर्वपेषणं तं प्रति शास्त्रवत्त्वादर्थाभावाद्धि चरावपेषणं भवति ॥ ३७ ॥ एकस्मिन्वार्थधर्म-त्वादैन्द्राग्नवदुभयोर्न स्यादचोदितत्वात् ॥ ३८ ॥ हेतुमात्रमदन्तत्वम् ॥ ३९ ॥ वचनं परम् ॥ ४० ॥

## इति तृतीयाध्याये तृतीयः पादः ॥ ( तत्राधिकरणानि २०, सूत्राणि ४० )

---

* वार्तिककाररीत्या 'संस्थासु च कर्तृवद्धारणार्थाविशेषात्' 'उक्थ्यादिषु वार्थस्य विद्यमानत्वात्' 'अविशेषात्स्तुतिर्व्यर्थेति चेत्स्यादनित्यत्वात्' इति त्रीणि सूत्राणि व्याख्यातानि ।

## चतुर्थः पादः

१

निवीतमिति मनुष्यधर्मः शब्दस्य तत्प्रधानत्वात् ॥ १ ॥ अपदेशो वार्थस्य विद्यमानत्वात् ॥ २ ॥ विधिस्त्वपूर्ववत्त्वात्स्यात् ॥ ३ ॥ स प्रायात्कर्मधर्मः स्यात् ॥ ४ ॥ वाक्यशेषवत्त्वात् ॥ ५ ॥ तत्प्रकरणे यत्तत्संयुक्तमविप्रतिषेधात् ॥ ६ ॥ तत्प्रधाने वा तुल्यवत्प्रसङ्ख्यानादितरस्य तदर्थत्वात् ॥ ७ ॥ अर्थवादो वा प्रकरणात् ॥ ८ ॥ विधिना चैकवाक्यत्वात् ॥ ९ ॥

२

उपवीतं लिङ्गदर्शनात्सर्वधर्मः स्यात् ॥ १० ॥ न वाप्रकरणात्तस्य दर्शनम् ॥ ११ ॥

३

विधिर्वा स्यादपूर्वत्वात् ॥ १२ ॥

४

उदक्त्वं चापूर्वत्वात् ॥ १३ ॥ सतो वा लिङ्गदर्शनम् ॥ १४ ॥

५

विधिस्तु धारणेऽपूर्वत्वात् ॥ १५ ॥

६

दिग्विभागश्च तद्वत् ॥ १६ ॥

७

परुषि दिनपूर्णघृतविदग्धञ्च तद्वत् ॥ १७ ॥

८

अकर्म क्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यात् ॥ १८ ॥ विधिर्वा संयोगान्तरात् ॥ १९ ॥

९

अहीनवत्पुरुषधर्मस्तदर्थत्वात् ॥ २० ॥ प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत् ॥ २१ ॥ व्यपदेशादपकृष्येत ॥ २२ ॥

१०

शंयौ सर्वपरिदानात् ॥ २३ ॥

११

प्रागपरोधान्मलवद्वाससः ॥ २४ ॥ अन्नप्रतिषेधाच्च ॥ २५ ॥

१२

अप्रकरणे तु तद्धर्मस्ततो विशेषात् ॥ २६ ॥ अद्रव्यत्वात्तु शेषः स्यात् ॥ २७॥ वेदसंयोगात् ॥ २८ ॥ द्रव्यपरत्वाच्च ॥ २९ ॥ स्याद्वा संयोगवत्फलेन सम्बन्धस्त-स्मात्कर्मैतिशायनः ॥ ३० ॥

१३

शेषोऽप्रकरणेऽविशेषात्सर्वकर्मणाम् ॥ ३१ ॥ होमास्तु व्यवतिष्ठेरन्नाहवनीय-संयोगात् ॥ ३२ ॥ शेषश्च समाख्यानात् ॥ ३३ ॥

१४

दोषात्त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषः स्यात् ॥ ३४ ॥ अर्थ-वादो वानुपपातात्तस्माद्यज्ञे प्रतीयेत ॥ ३५ ॥ अचोदितश्च कर्म भेदात् ॥ ३६ ॥ सा लिङ्गादार्त्विजे स्यात् ॥ ३७ ॥

१५

पानव्यापच्च तद्वत् ॥ ३८ ॥ दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न स्यात् ॥ ३९ ॥

१६

तत्सर्वत्राविशेषात् ॥ ४० ॥ स्वामिनो वा तदर्थत्वात् ॥ ४१ ॥ लिङ्ग-दर्शनाच्च ॥ ४२ ॥

१७

सर्वप्रदानं हविषस्तदर्थत्वात् ॥ ४३ ॥ निरवदानात्तु शेषः स्यात् ॥ ४४ ॥ उपायो वा तदर्थत्वात् ॥ ४५ ॥ कृतत्वात्तु कर्मणः सकृत्स्याद्द्रव्यस्य गुणभूत-त्वात् ॥ ४६ ॥ शेषदर्शनाच्च ॥ ४७ ॥

१८

अप्रयोजकत्वादेकस्मात्क्रियेरन् शेषस्य गुणभूतत्वात् ॥ ४८ ॥ संस्कृत-त्वाच्च ॥ ४९ ॥ सर्वेभ्यो वा कारणाविशेषात्संस्कारस्य तदर्थत्वात् ॥ ५० ॥ लिङ्गदर्शनाच्च ॥ ५१ ॥

१९

एकस्माच्चेद्याथाकाम्यमविशेषात् ॥ ५२ ॥ मुख्याद्वा पूर्वकालत्वात ॥ ५३ ॥

२०

भक्षाश्रवणाद्दानशब्दः परिक्रये ॥ ५४ ॥ तत्संस्तवाच्च ॥ ५५ ॥ भक्षार्थो वा द्रव्ये समत्वात् ॥ ५६ ॥ व्यादेशाद्दानसंस्तुतिः ॥ ५७ ॥

इति तृतीयाध्याये चतुर्थः पादः ॥ ( तत्राधिकरणानि २०, सूत्राणि ५७ )

## पञ्चमः पादः

१

आज्याच्च सर्वसंयोत् ॥ १ ॥ कारणाच्च ॥ २ ॥ एकस्मिन् समवत्तशब्दात् ॥ ३ ॥ आज्ये च दर्शनात्स्विष्टकृदर्थवादस्य ॥ ४ ॥ अशेषत्वात्तु नैवं स्यात्सर्वदानादशेषता ॥ ५ ॥ साधारण्यान्न ध्रुवायां स्यात् ॥ ६ ॥ अवत्तत्वाच्च जुह्वां तस्य च होमसंयोगात् ॥ ७ ॥ चमसवदिति चेन्न चोदनाविरोधाद्धविःप्रकल्पनत्वाच्च ॥ ८ ॥ उत्पन्नाधिकारात्सति सर्ववचनम ॥ ९ ॥ जातिविशेषात्परम ॥ १० ॥ अन्त्यमरेकार्थे ॥ ११ ॥

२

साकम्प्रस्थायीये स्विष्टकृदिडञ्च तद्वत् ॥ १२ ॥

३

सौत्रामण्याञ्च ग्रहेषु ॥ १३ ॥ तद्वच्च शेषवचनम ॥ १४ ॥

४

द्रव्यैकत्वे कर्मभेदात् प्रतिकर्म क्रियेरन ॥ १५ ॥ अविभागात्तु शेषस्य सर्वान प्रत्यविशिष्टत्वात् ॥ १६ ॥ ऐन्द्रवायवे तु वचनात् प्रतिकर्म भक्षस्स्यात् ॥ १७ ॥

५

सोमेऽवचनाद्भक्षो न विद्यते ॥ १८ ॥ स्याद्वान्यार्थदर्शनात् ॥ १९ ॥ वचनानि त्वपूर्वत्वात्तस्माद्यथोपदेशं स्युः ॥ २० ॥ चमसेषु समाख्यानात्संयोगस्य तन्निमित्तत्वात् ॥ २१ ॥ तस्माद्यात्राह्मणस्य सोमभक्षणं प्रतिषेधति ॥ २२ ॥

६

उद्गातृचमसमेकस्य श्रुतिसंयोगात् ॥ २३ ॥ सर्वे वा सर्वसंयोगात् ॥ २४॥ स्तोत्रकारिणो वा तत्संयोगाद् बहुत्वश्रुतेः ॥ २५ ॥ सर्वे तु वेदसंयोगात्कारणादेकदेशः स्यात् ॥ २६ ॥

७

ग्रावस्तुतो भक्षो न विद्यतेऽनाम्नानात् ॥ २७ ॥ हारियोजने वा सर्वसंयोगात् ॥ २८ ॥ चमसिनो वा सन्निधानात् ॥ २९ ॥ सर्वेषान्तु विधित्वात्तदर्थाः चमसिश्रुतिः ॥ ३० ॥

८

वषट्काराच्च भक्षयेत् ॥ ३१ ॥

९

होमाभिषवाभ्याञ्च ॥ ३२ ॥

१०

प्रत्यक्षोपदेशाच्चमसिनामव्यक्तश्शेषे ॥ ३३ ॥ स्याद्वा कारणभावादनिर्देशश्चमसानां कर्तुस्तद्वचनात् ॥ ३४ ॥ चमसेषु चान्यदर्शनात् ॥ ३५ ॥

११

एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत् ॥ ३६ ॥ होता वा मन्त्रवर्णात् ॥ ३७ ॥ वचनात् ॥ ३८ ॥ कारणानुपूर्व्याच्च ॥ ३९ ॥

१२

वचनादनुज्ञातभक्षणम् ॥ ४० ॥ तदुपहूत उपह्वयस्वेत्यनेनानुज्ञापयेल्लिङ्गात् ॥ ४१ ॥ तत्रार्थात्प्रतिवचनम् ॥ ४२ ॥

१३

तदेकपात्राणां समवायात् ॥ ४३ ॥

१४

याज्यापनये नापनीतो भक्षः प्रवरवत् ॥ ४४ ॥ यष्टुर्वा कारणागमात् ॥४५॥ प्रवृत्तत्वात्प्रवरस्यानपायः ॥ ४६ ॥

१५

फलचमसो नैमित्तिको भक्षविकारः श्रुतिसंयोगात् ॥ ४७ ॥ इज्याविकारो वासंस्कारस्य तदर्थत्वात् ॥ ४८ ॥ होमात् ॥ ४९ ॥ चमसैस्तुल्यकालत्वात् ॥ ५० ॥ लिङ्गदर्शनाच्च ॥ ५१ ॥

१६

अनुप्रसर्पिषु सामान्यात् ॥ ५२ ॥ ब्राह्मणा वा तुल्यशब्दत्वात् ॥ ५३ ॥

**इति तृतीयाध्याये पञ्चमः पादः ॥ ( तत्राधिकरणानि १६, सूत्राणि ५३ )**

## षष्ठः पादः

१

सर्वार्थमप्रकरणात् ॥ १ ॥ प्रकृतौ वा द्विरुक्तत्वात् ॥ २ ॥ तद्वचनन्तु वचनप्राप्तेः ॥ ३ ॥ दर्शनादिति चेन्न चोदनैकार्थ्यात् ॥ ४ ॥ उत्पत्तिरिति चेन्न तुल्यत्वात् ॥ ५ ॥ चोदनार्थकार्त्स्न्यात्तु मुख्यविप्रतिषेधात्प्रकृत्यर्थः ॥ ६ ॥

२

प्रकरणविशेषात्तु विकृतौ विरोधि स्यात् ॥ ७ ॥

३

नैमित्तिकन्तु प्रकृतौ तद्विकारः संयोगविशेषात् ॥ ८ ॥

४

इष्ट्यर्थमग्न्याधेयं प्रकरणात् ॥ ९ ॥ न वा तासां तदर्थत्वात् ॥ १० ॥ लिङ्गदर्शनाच्च ॥ ११ ॥

५

तत्प्रकृत्यर्थं यथान्येऽनारभ्यवादाः ॥ १२ ॥ सर्वार्थं वाधानस्य स्वकालत्वात् ॥ १३ ॥

६

तासामग्निः प्रकृतितः प्रयाजवत् ॥ १४ ॥ न वा तासां तदर्थत्वात् ॥ १५ ॥

७

तुल्यस्सर्वेषां पशुविधिः प्रकरणाविशेषात् ॥ १६ ॥ स्थानाच्च पूर्वस्य ॥ १७ ॥ श्वस्त्वेकेषां तत्र प्राक् श्रुतिर्गुणार्था ॥ १८ ॥ तेनोत्कृष्टस्य कालविधिरिति चेन्नैकदेशत्वात् ॥ १९ ॥ अर्थेनेति चेन्न श्रुतिविप्रतिषेधात् ॥ २० ॥ स्थानात्तु पूर्वस्य संस्कारस्य तदर्थत्वात् ॥ २१ ॥ लिङ्गदर्शनाच्च ॥ २२ ॥ अचोदना गुणार्थेन ॥ २३ ॥

८

दोहयोः कालभेदादसंयुक्तं शृतं स्यात् ॥ २४ ॥ प्रकरणाविशेषाद्वा संयुक्तस्य कालशास्त्रम् ॥ २५ ॥

९

तद्वत्सवनान्तरे ग्रहाम्नानम् ॥ २६ ॥

१०

रशना च लिङ्गदर्शनात् ॥ २७ ॥

११

आराच्छिष्टमसंयुक्तमितरैस्सन्निधानात् ॥ २८ ॥ संयुक्तं वा तदर्थत्वाच्छेषस्य तन्निमित्तत्वात् ॥ २९ ॥ निर्देशाद्व्यवतिष्ठेत ॥ ३० ॥

१२

अग्न्यङ्गमप्रकरणे तद्वत् ॥ ३१ ॥

१३

नैमित्तिकमतुल्यत्वादसमानविधानं स्यात् ॥ ३२ ॥

१४

प्रतिनिधिश्च तद्वत् ॥ ३३ ॥ न, तद्वत्प्रयोजनैकत्वात् ॥ ३४ ॥ अशास्त्रलक्षणत्वाच्च ॥ ३५ ॥

१५

नियमार्था पुनः श्रुतिः ॥ ३६ ॥

१६

संस्थास्तु समानविधानाः प्रकरणाविशेषात् ॥ ३७ ॥ व्यपदेशस्तुल्यवत् ॥ ३८ ॥ विकारास्तु कामसंयोगे सति नित्यस्य समत्वात् ॥ ३९ ॥ वचनात्तु

समुच्चयः ॥ ४० ॥ प्रतिषेधाच्च पूर्वलिङ्गानाम् ॥ ४१ ॥ गुणविशेषादेकस्य व्यपदेशः ॥ ४२ ॥

इति तृतीयाध्याये षष्ठः पादः ॥ ( तत्राधिकरणानि १६, सूत्राणि ४२ )

## सप्तमः पादः

१

प्रकरणविशेषादसंयुक्तं प्रधानस्य ॥ १ ॥ सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात् ॥ २ ॥ आरादपीति चेन्न तद्वाक्यं हि तदर्थत्वात् ॥ ३ ॥ लिङ्गदर्शनाच्च ॥ ४ ॥

२

फलसंयोगात्तु स्वामिसंयुक्तं प्रधानस्य ॥ ५ ॥

३

चिकीर्षया च संयोगात् ॥ ६ ॥ तथाऽभिधानेन ॥ ७ ॥ तद्युक्ते तु फलश्रुतिस्तस्मात्सर्वचिकीर्षा स्यात् ॥ ८ ॥ गुणाभिधानात्सर्वार्थमभिधानम ॥ ९ ॥

४

दीक्षादक्षिणन्तु वचनात्प्रधानस्य ॥ १० ॥ निवृत्तिदर्शनाच्च ॥ ११ ॥

५

तथा यूपस्य वेदिः ॥ १२ ॥ देशमात्रं वाऽशिष्येणैकवाक्यत्वात् ॥ १३ ॥

६

सामिधेनीस्तदन्वाहुरिति हविर्द्धानयोर्वचनात्सामिधेनीनाम् ॥ १४ ॥ देशमात्रं वा प्रत्यक्षं ह्यर्थकर्म सोमस्य ॥ १५ ॥ समाख्यानञ्च तद्वत् ॥ १६ ॥

७

शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात्स्वयं प्रयोगे स्यात् ॥ १७ ॥ उत्सर्गे तु प्रधानत्वाच्छेषकारी प्रधानस्य तस्मादन्यः स्वयं वा स्यात् ॥ १८ ॥ अन्यो वा स्यात्परिक्रयाम्नानाद्विप्रतिषेधात्प्रत्यगात्मनि ॥ १९ ॥

८

तत्रार्थात्कर्तृपरिमाणं स्यादनियमोऽविशेषात् ॥२०॥ अपिवा श्रुतिभेदात्प्रतिनामधेयं स्युः ॥ २१ ॥ एकस्य कर्मभेदादिति चेन्नोत्पत्तौ हि ॥ २२ ॥

९

चमसाध्वर्यवश्च तैर्व्यपदेशात् ॥ २३ ॥

१०

उत्पत्तौ तु बहुश्रुतेः ॥ २४ ॥

११

दशत्वं लिङ्गदर्शनात् ॥ २५ ॥

१२

शमिता च शब्दभेदात् ॥ २६ ॥ प्रकरणाद्वोत्पत्त्यसंयोगात् ॥ २७ ॥

१३

उपगाश्च लिङ्गदर्शनात् ॥ २८ ॥

१४

विक्रयी त्वन्यः कर्मणोऽचोदितत्वात् ॥ २९ ॥

१५

कर्मकार्यात्सर्वेषाम् ऋत्विक्त्वमविशेषात् ॥ ३० ॥ न वा परिसङ्ख्यानात् ॥ ३१ ॥ पक्षेणेति चेन्न सर्वेषामनधिकारात् ॥ ३२ ॥

१६

नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् ॥ ३३ ॥ उक्त्वा च यजमानत्वं (तेषां) दीक्षाविधानात् ॥ ३४ ॥

१७

स्वामिसप्तदशाः कर्मसामान्यात् ॥ ३५ ॥

१८

ते सर्वार्थाः प्रयुक्तत्वात् ॥ ३६ ॥ अग्नयश्च स्वकालत्वात् ॥ ३७ ॥ तत्संयोगात्कर्मणो व्यवस्था स्यात्संयोगस्यार्थवत्वात् ॥ ३८ ॥ तस्योपदेशसमाख्यानेन निर्देशः ॥ ३९ ॥ तद्वच्च लिङ्गदर्शनम् ॥ ४० ॥

१९

प्रैषानुवचनं मैत्रावरुणस्योपदेशात् ॥ ४१ ॥ पुरोऽनुवाक्याधिकारो वा प्रैषसन्निधानात् ॥ ४२ ॥ प्रातरनुवाके च होतृदर्शनात् ॥ ४३ ॥

२०

चमसांश्चमसाध्वर्यवस्समाख्यानात् ॥ ४४ ॥ अध्वर्युर्वा तन्न्यायत्वात् ॥ ४५ ॥ चमसे चान्यदर्शनात् ॥ ४६ ॥ अशक्तौ हि ते प्रतीयेरन् ॥ ४७ ॥

२१

वेदोपदेशात्पूर्ववद्वेदान्यत्वे यथोपदेशं स्युः ॥ ४८ ॥ तद्ग्रहणाद्वा स्वधर्म स्यादधिकारसामर्थ्यात् सहाङ्गैरव्यक्तश्शेषे ॥ ४९ ॥

इति तृतीयाध्याये सप्तमः पादः ॥ ( तत्राधिकरणानि २१, सूत्राणि ४९ )

# अष्टमः पादः

१

स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात् ॥ १ ॥ वचनादितरेषां स्यात् ॥ २ ॥

२

संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्मवद्व्यवतिष्ठेरन् ॥ ३ ॥ याजमानास्तु तत्प्रधानत्वात् कर्मवत् ॥ ४ ॥ व्यपदेशाच्च ॥ ५ ॥ गुणत्वे तस्य निर्देशः ॥ ६ ॥ चोदनां प्रतिभावाच्च ॥ ७ ॥ अतुल्यत्वादसमानविधानास्स्युः ॥ ८ ॥

३

तपश्च फलसिद्धत्वाल्लोकवत् ॥ ९ ॥ वाक्यशेषश्च तद्वत् ॥ १० ॥ वचनादितरेषां स्यात् ॥ ११ ॥

४

गुणत्वाच्च वेदेन न व्यवस्था स्यात् ॥ १२ ॥

५

तथा कामोऽर्थसंयोगात् ॥ १३ ॥ व्यपदेशादितरेषां स्यात् ॥ १४ ॥

६

मन्त्राश्चाकर्मकरणास्तद्वत् ॥ १५ ॥ विप्रयोगे च दर्शनात् ॥ १६ ॥

७

द्व्याम्नातेषूभौ द्व्याम्नानस्यार्थवत्त्वात् ॥ १७ ॥

८

ज्ञाते च वाचनं न ह्यविद्वान्विहितोऽस्ति ॥ १८ ॥

९

याजमाने समाख्यानात्कर्माणि याजमानानि स्युः ॥ १९ ॥ अध्वर्युर्वा तदर्थो हि न्यायपूर्वं समाख्यानम् ॥ २० ॥

१०

विप्रतिषेधे करणः समवायविशेषादितरमन्यस्तेषां यतो विशेषस्स्यात् ॥२१॥

११

प्रैषेषु पराधिकारात् ॥ २२ ॥

१२

अध्वर्युस्तु दर्शनात् ॥ २३ ॥ गौणो वा कर्मसामान्यात् ॥ २४ ॥

१३

ऋत्विक्फलं करणेष्वर्थवत्त्वात् ॥ २५ ॥ स्वामिनो वा तदर्थत्वात् ॥ २६ ॥ लिङ्गदर्शनाच्च ॥ २७ ॥

१४

कर्मार्थन्तु फलं तेषां स्वामिनं प्रत्यर्थत्वात् ॥ २८ ॥

१५

व्यपदेशाच्च ॥ २९ ॥

१६

द्रव्यसंस्काराः प्रकरणाविशेषात्सर्वकर्मणाम् ॥ ३० ॥ निर्देशात्तु विकृतावपूर्वस्यानधिकारः ॥ ३१ ॥

१७

विरोधे च श्रुतिविशेषादव्यक्तः शेषे ॥ ३२ ॥

१८

अपनयस्त्वेकदेशस्य विद्यमानसंयोगात् ॥ ३३ ॥

१९

विकृतौ सर्वार्थः शेषः प्रकृतिवत् ॥ ३४ ॥ मुख्यार्थो वाङ्गस्याचोदितत्वात् ॥ ३५ ॥

२०

सन्निधानविशेषादसम्भवे तदङ्गानाम् ॥ ३६ ॥ आधानेऽपि तथेति चेन्न अप्रकरणत्वादङ्गस्यातन्निमित्तत्वात् ॥ ३७ ॥

२१

तत्काले वा लिङ्गदर्शनात् ॥ ३८ ॥ सर्वेषां वाऽविशेषात् ॥ ३९ ॥ न्यायोक्ते लिङ्गदर्शनम् ॥ ४० ॥

२२

मांसन्तु सवनीयानां चोदनाविशेषात् ॥ ४१ ॥ भक्तिरसन्निधावन्याय्येति चेत्स्यात् प्रकृतिलिङ्गत्वाद्वैराजवत् ॥ ४२ ॥

**इति तृतीयाध्यायेऽष्टमः पादः ॥ ( तत्राधिकरणानि २२, सूत्राणि ४२ )**

**( आहत्य तृतीयाध्यायेऽधिकरणानि १५०, सूत्राणि ३५१ )**

तृतीयाध्यायः समाप्तः ॥

॥ श्रीः ॥

# चतुर्थाध्याये प्रथमः पादः

१

अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ॥ १ ॥ यस्मिन् प्रीतिः पुरुषस्य तल्लिप्सार्थलक्षणाविभक्तत्वात् ॥ २ ॥

२

यस्मिन् प्रीतिः पुरुषस्य तल्लिप्सार्थलक्षणाविभक्तत्वात् ॥ २ ॥

३

यस्मिन् प्रीतिः पुरुषस्य तल्लिप्सार्थलक्षणाविभक्तत्वात् ॥ २ ॥

४

यस्मिन् प्रीतिः पुरुषस्य तल्लिप्सार्थलक्षणाविभक्तत्वात् ॥ २ ॥

५

तदुत्सर्गे कर्माणि पुरुषार्थाय शास्त्रस्यानतिशङ्क्यत्वान्न च द्रव्यं चिकीर्ष्यते तेनार्थेनाभिसम्बन्धात् क्रियायां पुरुषश्रुतिः ॥ ३ ॥ अविशेषात्तु शास्त्रस्य यथाश्रुति फलानि स्युः ॥ ४ ॥ अपि वा कारणाग्रहणेऽतदर्थमर्थस्यानभिसम्बन्धात् ॥ ५ ॥ तथा च लोकभूतेषु ॥ ६ ॥

६

द्रव्याणि त्वविशेषेणानर्थक्यात् प्रदीयेरन् ॥ ७ ॥ स्वेन त्वर्थेन सम्बन्धो द्रव्याणां पृथगर्थत्वात्तस्माद्यथाश्रुति स्युः ॥ ८ ॥ चोद्यन्ते चार्थकर्मसु ॥ ९ ॥ लिङ्गदर्शनाच्च ॥ १० ॥

७

तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात् ॥ ११ ॥ अश्रुतत्वाच्च ॥ १२ ॥ प्रतीयत इति चेन्नाशब्दं तत्प्रमाणत्वात् पूर्ववत् ॥ १३ ॥ शब्दस्तूपलभ्यते तदागमे हि दृश्यते तस्य ज्ञानं यथान्येषाम् ॥ १४ ॥ तद्वच्च लिङ्गदर्शनम् ॥ १५ ॥ तथा लिङ्गम् ॥ १६ ॥

८

तथा लिङ्गम् ॥ १६ ॥

९

आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत ॥ १७ ॥ चोदनायान्त्वनारम्भोऽविभक्तत्वान्न ह्यन्येन विधीयते ॥ १८ ॥ स्याद्वा द्रव्यचिकीर्षायां भावेऽर्थे गुणभूतताश्रयाद्धि गुणभावः ॥ १९ ॥

१०

अर्थे समवैषम्यमतो द्रव्यकर्मणाम् ॥ २० ॥

११

एकनिष्पत्तेस्सर्वं समं स्यात् ॥ २१ ॥ संसर्गरसनिष्पत्तेरामिक्षा वा प्रधानं स्यात् ॥ २२ ॥ मुख्यशब्दाभिसंस्तवाच्च ॥ २३ ॥

१२

पदकर्माप्रयोजकं नयनस्य परार्थत्वात् ॥ २४ ॥

१३

अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तत्वात्तदर्थो हि विधीयते ॥ २५ ॥

१४

पशावनालम्भाल्लोहितशकृतोरकर्मत्वम् ॥ २६ ॥

१५

एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात् ॥ २७ ॥ निर्देशात्तस्यान्यदर्थादिति चेन्न शेषसन्निधानात् ॥ २८ ॥ कर्मकार्याच्च ॥ २९ ॥ लिङ्गदर्शनाच्च ॥ ३० ॥

१६

अभिघारणे विप्रकर्षादनूयाजवत् पात्रभेदस्स्यात् ॥ ३१ ॥ न वाऽपात्रत्वादपात्रतैकदेशत्वात् ॥ ३२ ॥ हेतुत्वाच्च सह प्रयोगस्य ॥ ३३ ॥ अभावदर्शनाच्च ॥३४॥ सति च शब्यवचनम् ॥ ३५ ॥ न तस्येति चेत् स्यात्तस्य मुख्यत्वात् ॥ ३६ ॥

१७

समानयनन्तु मुख्यं स्याल्लिङ्गदर्शनात् ॥३७॥ वचने हि हेत्वसामर्थ्यम् ॥३८॥

१८

तत्रोत्पत्तिरविभक्ता स्यात् ॥ ३९ ॥ तत्र जौहवमनूयाजप्रतिषेधार्थम् ॥४०॥ औपभृतन्तथेति चेत् स्याज्जुहूप्रतिषेधानित्यानुवादः ॥ ४१ ॥

१९

तदष्टसङ्ख्यं श्रवणात् ॥ ४२ ॥ अनुग्रहाच्च जौहवस्य ॥ ४३ ॥ द्वयोस्तु हेतुसामर्थ्यं श्रवणाच्च समानयने ॥ ४४ ॥

**इति चतुर्थाध्याये प्रथमः पादः ॥ ( तत्राधिकरणानि १९, सूत्राणि ४४ )**

## द्वितीयः पादः

१

स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ॥ १ ॥ जात्यन्तराच्च शङ्क्यते ॥ २ ॥ तदेकदेशो वा स्वरुत्वस्य तन्निमित्तत्वात् ॥ ३ ॥ शकलश्रुतेः ॥ ४ ॥ प्रतियूपञ्च दर्शनात् ॥ ५ ॥ आदाने करोतिशब्दः ॥ ६ ॥

२

शाखायां तत्प्रधानत्वात् ॥ ७ ॥

३

शाखायान्तत्प्रधानत्वादुपवेषेण विभागस्स्याद्वैषम्यात् ॥ ८ ॥ श्रुत्यपायाच्च ॥ ९ ॥

४

हरणे तु जुहोतिर्योगसामान्याद् द्रव्याणाञ्चार्थशेषत्वात् ॥ १० ॥ प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वात् ॥ ११ ॥ अर्थेऽपीति चेन्न तस्यानधिकारादर्थस्य च कृतत्वात् ॥ १२ ॥

५

उत्पत्त्यसंयोगात् प्रणीतानामाज्यवद्विभागस्स्यात् ॥ १३ ॥ संयवनार्थानां वा प्रतिपत्तिरितरा तत्प्रधानत्वात् ॥ १४ ॥

६

प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात् ॥ १५ ॥ अर्थकर्म वा कर्तृसंयोगात्स्रग्वत् ॥ १६ ॥ कर्मसंयुक्ते च दर्शनात् ॥ १७ ॥

७

उत्पत्तौ येन संयुक्तन्तदर्थं श्रुतिहेतुत्वात्तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिस्स्यात् ॥ १८ ॥

८

सोमिके च कृतार्थत्वात् ॥ १९ ॥ अर्थकर्म वाभिधानसंयोगात् ॥ २० ॥ प्रतिपत्तिर्वा तन्न्याय्यत्वाद्देशार्थावभृथश्रुतिः ॥ २१ ॥

९

कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात् ॥ २२ ॥ नियमार्था वा श्रुतिरुच्यते ॥ २३ ॥

१०

तथा द्रव्ये गुणश्रुतिरुत्पत्तिसंयोगात् ॥ २४ ॥

११

संस्कारे च तत्प्रधानत्वात् ॥ २५ ॥

१२

यजतिचोदनाद्द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् ॥ २६ ॥ तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकस्स्यात् ॥ २७ ॥

१३

विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशस्स्यात् ॥ २८ ॥ अपिवोत्पत्तिसंयोगादर्थसम्बन्धोऽविशिष्टानां प्रयोगैकत्वहेतुस्स्यात् ॥ २९ ॥

**इति चतुर्थाध्याये द्वितीयः पादः ॥ तत्राधिकरणानि १३, सूत्राणि २९ )**

## तृतीयः पादः

१

द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादस्स्यात् ॥ १ ॥ उत्पत्तेश्चातत्प्रधानत्वात् ॥ २ ॥ आनर्थक्यमक्रियार्थत्वात् ॥३॥ फलन्तु तत्प्रधानायाम ॥४॥

२

नैमित्तिके विकारत्वात् क्रतुसाधनमन्यत् स्यात् ॥ ५ ॥

३

एकस्य तूभयत्वे संयोगपृथक्त्वम् ॥ ६ ॥ शेष इति चेन्नार्थपृथक्त्वात् ॥ ७ ॥

४

द्रव्याणान्तु क्रियार्थानां संस्कारः क्रतुधर्मस्स्यात् ॥ ८ ॥ पृथक्त्वाद् व्यवतिष्ठेत ॥ ९ ॥

५

चोदनायां फलाश्रुतेः कर्ममात्रं प्रतीयेत न ह्यशब्दं प्रतीयते ॥ १० ॥ अपि वाम्नानसामर्थ्याच्चोदनार्थेन गम्येतार्थानां ह्यर्थवत्वेन वचनानि प्रतीयन्ते अर्थतोऽह्यसमर्थानामानन्तर्येऽप्यसम्बन्धः, तस्मात् श्रुत्येकदेशः सः ॥ ११ ॥ वाक्यार्थश्च गुणार्थवत् ॥ १२ ॥

६

तत् सर्वार्थमनादेशात् ॥ १३ ॥ एकं वा चोदनैकत्वात् ॥ १४ ॥

७

सः स्वर्गस्स्यात् सर्वान् प्रत्यविशिष्टत्वात् ॥ १५ ॥ प्रत्ययाच्च ॥ १६ ॥

८

क्रतौ फलार्थवादमङ्गवत् कार्ष्णाजिनिः ॥ १७ ॥ फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात् ॥ १८ ॥ अङ्गे स्तुतिः परार्थत्वात् ॥ १९ ॥

९

काम्ये कर्मणि नित्यस्स्वर्गो यथा यज्ञाङ्गे क्रत्वर्थः ॥ २० ॥ वीते च कारणे नियमात् ॥ २१ ॥ कामो वा तत्संयोगेन चोद्यते ॥ २२ ॥ अङ्गे गुणभूतत्वात् ॥ २३ ॥ वीते नियमात्तदर्थम् ॥ २४ ॥

१०

सार्वकाम्यमङ्गकामैः प्रकरणात् ॥ २५ ॥ फलोपदेशो वा प्रधानशब्द-संयोगात् ॥ २६ ॥

११

तत्र सर्वेऽविशेषात् ॥ २७ ॥ योगसिद्धिर्वार्थस्योत्पत्त्ययोगित्वात् ॥ २८ ॥

१२

तत्र सर्वेऽविशेषात् ॥ योगसिद्धिर्वार्थस्योत्पत्त्ययोगित्वात् ॥

१३

समवाये चोदना संयोगस्यार्थवत्त्वात् ॥ २९ ॥ कालश्रुतौ काल इति चेन्ना-समवायात्प्रयोजनेन स्यात् ॥ ३० ॥

१४

उभयार्थमिति चेत्तन्न शब्दैकत्वात् ॥ ३१ ॥ प्रकरणादिति चेन्नोत्पत्ति-संयोगात् ॥ ३२ ॥

१५

अनुत्पत्तौ तु कालस्स्यात् प्रयोजनेन सम्बन्धात् ॥ ३३ ॥

१६

उत्पत्तिकालविशये कालस्स्याद्वाक्यस्य तत्प्रधानत्वात् ॥ ३४ ॥

१७

फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात् ॥ ३५ ॥ अङ्गानान्तूपपात-संयोगो निमित्तार्थः ॥ ३६ ॥

१८

अङ्गानान्तूपपातसंयोगो निमित्तार्थः ॥ ३७ ॥

१९

अङ्गानान्तूपपातसंयोगो निमित्तार्थः ॥ ३८ ॥

२०

प्रधानेनाभिसंयोगादङ्गानां मुख्यकालत्वम् ॥ ३९ ॥ अयवृते तु चोदनात्त-त्सामान्यात्स्वकाले स्यात् ॥ ४० ॥

इति चतुर्थाध्याये तृतीयः पादः ॥ ( तत्राधिकरणानि २०, सूत्राणि ४० )

## चतुर्थः पादः

१

प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम् ॥ १ ॥ अपि वाङ्गमनिज्याः स्युः ततो विशिष्टत्वात् ॥ २ ॥

२

मध्यस्थं यस्य तन्मध्ये ॥ ३ ॥ सर्वासां वा समत्वाच्चोदनातस्तस्मान्न हि तस्य प्रकरणं देशार्थमुच्यते मध्ये ॥ ४ ॥

३

प्रकरणविभागे च विप्रतिषिद्धं ह्युभयम् ॥ ५ ॥ अपिवा कालमात्रं स्याद-दर्शनाद्विशेषस्य ॥ ६ ॥

४

फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात् ॥ ७ ॥

५

दधिग्रहो नैमित्तिकश्श्रुतिसंयोगात् ॥ ८ ॥ नित्यश्च ज्येष्ठशब्दात् ॥ ९ ॥ नित्य एव स्यादर्थवादात् तयोः कर्मण्यसम्बन्धात् भागित्वाच्चान्तरायस्य ॥ १० ॥

६

वैश्वानरश्च नित्यस्स्यान्नित्यैस्समानसङ्ख्यात्वात् ॥ ११ ॥ पक्षे वोत्पन्न-संयोगात् ॥ १२ ॥

७

षट्चितिः पूर्ववत् स्यात् ॥ १३ ॥ ताभिश्च तुल्यसङ्ख्यानात् ॥ १४ ॥ अर्थ-वादोपपत्तेश्च ॥ १५ ॥ एकचितिर्वा स्यादपवृक्ते हि चोद्यते निमित्तेन ॥ १६ ॥ विप्रतिषेधात्ताभिस्समानसङ्ख्यात्वम् ॥ १७ ॥

८

पितृयज्ञस्स्वकालत्वादनङ्गं स्यात् ॥ १८ ॥ तुल्यवच्च प्रसङ्ख्यानात् ॥ १९ ॥ प्रतिषिद्धे च दर्शनात् ॥ २० ॥

९

पश्वङ्गं रशना स्यात्तदागमे विधानात् ॥ २१ ॥ यूपाङ्गं वा तत्संस्कारत्वात् ॥ २२ ॥ अर्थवादश्च तदर्थवत् ॥ २३ ॥

१०

स्वरुश्चाप्येकदेशत्वात् ॥ २४ ॥ निष्क्रयश्च तदङ्गवत् ॥ २५ ॥ पश्वङ्गं वार्थकर्मत्वात् ॥ २६ ॥ भक्त्या निष्क्रयवादस्स्यात् ॥ २७ ॥

११

दर्शपूर्णमासयोरिज्याप्राधान्यमविशेषात् ॥ २८ ॥ अपि वाङ्गानि कानिचिद्येष्वङ्गत्वेन संस्तुतिस्सामान्याद्धथभिसंस्तवः ॥२९॥ तथाचान्यार्थदर्शनम् ॥३०॥ अविशिष्टन्तु कारणं प्रधानेषु गुणस्य विद्यमानत्वात् ॥ ३१ ॥ नानुक्तेऽन्यार्थदर्शनं परार्थत्वात् ॥ ३२ ॥ पृथक्त्वेन त्वभिधानयोर्निवेशः श्रुतितो व्यपदेशाच्च तत् पुनर्मुख्यलक्षणं तत्सन्निधावसंयुक्तन्तदङ्गं स्यात् भागित्वात् कारणस्याश्रुतश्चान्यसम्बन्धः ॥ ३३ ॥ गुणाश्च नामसंयुक्ता विधीयन्ते नाङ्गेषूपपद्यते ॥ ३४ ॥ तुल्या च कारणश्रुतिरन्यैरङ्गाभिधानैः ॥ ३५ ॥ उत्पत्तावपि सम्बन्धस्तस्मादङ्गोपदेशस्स्यात् ॥ ३६ ॥ तथाचान्यार्थदर्शनम ॥ ३७ ॥

१२

ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम् ॥ ३८ ॥ गुणानान्तूत्पत्तिवाक्येन संयोगात् कारणं श्रुतिः तस्मात् सोमप्रधानं स्यात् ॥ ३९ ॥ तथा चान्यार्थदर्शनम् ॥ ४० ॥

इति चतुर्थाध्याये चतुर्थः पादः ॥ ( तत्राधिकरणानि १२, सूत्राणि ४० )

( आहत्य चतुर्थाध्यायेऽधिकरणानि ६४, सूत्राणि १५३ )

समाप्तश्चतुर्थोऽध्यायः ॥

❀ श्रीः ❀

# पञ्चमाध्याये प्रथमः पादः

१

श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात् ॥ १ ॥

" " " ॥ १ ॥

" " " ॥ १ ॥

२

अर्थत्वाच्च ॥ २ ॥

३

अनियमोऽन्यत्र ॥ ३ ॥

४

क्रमेण वा नियम्येत क्रत्वेकत्वे तद्गुणत्वात् ॥ ४ ॥ अशब्द इति चेत् स्याद्वाक्यशब्दत्वात् ॥ ५ ॥ अर्थकृतो वानुमानं स्यात् क्रत्वेकत्वे परार्थत्वात् स्वेन त्वर्थेन सम्बन्धस्तस्मात् स्वशब्द उच्यते ॥ ६ ॥ तथा चान्यार्थदर्शनम् ॥ ७ ॥

५

प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् ॥ ८ ॥ सर्वमिति चेन्नाकृतत्वात् ॥ ९ ॥ क्रत्वन्तरवदिति चेन्नासमवायात् ॥ १० ॥

६

स्थानोच्चोत्पत्तिसंयोगात् ॥ ११ ॥

७

मुख्यक्रमेण चाङ्गानान्तदर्थत्वात् ॥ १२ ॥

८

प्रकृतौ तु स्वशब्दत्वाद् यथाक्रमं प्रतीयेत ॥ १३ ॥

९

मन्त्रतस्तु विरोधे स्यात् प्रयोगसामर्थ्यात्तस्मादुत्पत्तिदेशस्सः ॥ १४ ॥

१०

तद्वचनात्तु विकृतौ यथाप्रधानं स्यात् ॥ १५ ॥ विप्रतिपत्तौ प्रकृत्यन्वयाद् यथाप्रकृति ॥ १६ ॥

११

विकृतिः प्रकृतिधर्मत्वात्तत्काला स्याद् यथाशिष्टम् ॥१७॥ अपिवा क्रमकाल-संयुक्ता सद्यः क्रियेत तत्र विधेरनुमानात् प्रकृतिधर्मलोपस्स्यात् ॥ १८ ॥ कालोत्कर्षः इति चेन्न सम्बन्धात् ॥ १९ ॥

१२

अङ्गानां मुख्यकालत्वाद् यथोक्तमुत्कर्षे स्यात् ॥२०॥ तदा दिवाभिसम्बन्धात् तदन्तमपकर्षे स्यात् ॥ २१ ॥

१३

प्रवृत्त्या कृतकालानाम् ॥ २२ ॥ शब्दविप्रतिषेधाच्च ॥ २३ ॥

१४

असंयोगात्तु वैकृतन्तदेव प्रतिकृष्येत ॥ २४ ॥

१५

प्रासङ्गिकञ्च नोत्कर्षेदसंयोगात् ॥ २५ ॥

१६

तथापूर्वम् ॥ २६ ॥

१७

सान्तपनीया तूत्कर्षेदग्निहोत्रं सवनवद्वैगुण्यात् ॥ २७ ॥ अव्यवायाच्च ॥२८॥ असम्बन्धान्नोत्कर्षेत् ॥ २९ ॥ प्रापणाच्च निमित्तस्य ॥ ३० ॥ सम्बन्धात् सवनोत्कर्षः ॥ ३१ ॥

१८

षोडशी चोक्थ्यसंयोगात् ॥ ३२ ॥

इति पञ्चमाध्याये प्रथमः पादः ॥ ( तत्राधिकरणानि १८, सूत्राणि ३२ )

## द्वितीयः पादः

१

सन्निपाते प्रधानानामेकैकस्य गुणानां सर्वकर्म स्यात् ॥ १ ॥ सर्वेषां वैक-जातीयः कृतानुपूर्व्यात् ॥ २ ॥

२

कारणादभ्यावृत्तिः ॥ ३ ॥

३

मुष्टिकपालावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन ॥ ४ ॥ सर्वाणि त्वैक-कर्म्यादेतेषान्तद्गुणत्वात् ॥ ५ ॥

४

संयुक्ते तु प्रक्रमात्तदन्तं स्यादितरस्य तदर्थत्वात् ॥ ६ ॥

५

वचनात्तु परिव्याणान्तमञ्जनादि ॥ ७ ॥ कारणाद्वा नवसर्गस्स्याद्यथा पात्र विवृद्धिः ॥ ८ ॥ न वा शब्दकृतत्वान्न्यायमात्रमितरदर्थात् पात्रविवृद्धिः ॥ ९ ॥

६

पशुगणे तस्य तस्यापवर्जयेत् पश्वेकत्वात् ॥ १० ॥ दैवतैर्वैककर्म्यात् ॥ ११ ॥ मन्त्रस्य चार्थवत्वात् ॥ १२ ॥

७

नानाबीजेष्वेकमुलूखलं विभवात् ॥ १३ ॥ विवृद्धिर्वा नियमादानुपूर्व्यस्य तदर्थत्वात् ॥ १४ ॥ एकं वा तण्डुलभावाद्धन्तेस्तदर्थत्वात् ॥ १५ ॥

८

विकारे त्वनूयाजानां पात्रभेदोऽर्थभेदात् स्यात् ॥ १६ ॥

९

प्रकृतेः पूर्वोक्तत्वादपूर्वमन्ते स्यान्न ह्यचोदितस्य शेषाम्नानम् ॥ १७ ॥ मुख्यानन्तर्यमात्रे यस्तेन तुल्यश्रुतित्वादशब्दत्वात् प्राकृतानां व्यवायः स्यात् ॥ १८ ॥ अन्ते तु बादरायणस्तेषां प्रधानशब्दत्वात ॥ १९ ॥ तथाचान्यार्थदर्शनम् ॥ २० ॥

१०

कृतदेशात्तु पूर्वेषां स देशस्स्यात्तेन प्रत्यक्षसंयोगान्न्यायमात्रमितरत् ॥ २१ ॥

११

प्राकृताच्च पुरस्ताद्यत् ॥ २२ ॥

१२

सन्निपातश्चेत् यथोक्तमन्ते स्यात् ॥ २३ ॥

इति पञ्चमाध्याये द्वितीयः पादः ॥ ( तत्राधिकरणानि १२, सूत्राणि २३ )

## तृतीयः पादः

१

विवृद्धिः कर्मभेदात् पृषदाज्यवत्तस्य तस्योपविश्येत ॥ १ ॥ अपि वा सर्वसङ्ख्या तद्विकारः प्रतीयेत ॥ २ ॥

२

स्वस्थानात्तु विवर्द्धेरन् कृतानुपूर्व्यत्वात् ॥ ३ ॥

३

समिद्धयमानवती समिद्धवतीञ्चान्तरेण धाय्याः स्युर्द्यावापृथिव्योरन्तरालसमर्हणात् ॥ ४ ॥

४

तच्छब्दो वा ॥ ५ ॥ उष्णिक्ककुभोश्चान्ते दर्शनात् ॥ ६ ॥

५

स्तोमविवृद्धौ बहिष्पवमाने पुरस्तात्पर्यासादागन्तवस्स्युस्तथा हि दृष्टं द्वादशाहे ॥ ७ ॥ अन्ते वा तदुक्तं स्यात् ॥ ८ ॥ वचनाद् द्वादशाहे ॥ ९ ॥ अतद्विकारश्च ॥ १० ॥ तद्विकारेऽप्यपूर्वत्वात् ॥ ११ ॥

६

अन्ते तूत्तरयोर्निदध्यात् ॥१२॥ अपिवा गायत्रीबृहत्यनुष्टुप्सुवचनात् ॥१३॥

७

ग्रहेष्टकमौपानुवाक्यं सवनचितिशेषस्स्यात् ॥ १४ ॥ क्रत्वग्निशेषो वा चोदितत्वादचोदना च पूर्वस्य ॥ १५ ॥

८

अन्ते स्युरव्यवायात् ॥ १६ ॥ लिङ्गदर्शनाच्च ॥ १७ ॥ मध्यमायान्तु वचनाद् ब्राह्मणवत्यः ॥ १८ ॥

९

प्राग्लोकम्पृणायाः तस्यास्सम्पूरणार्थत्वात् ॥ १९ ॥

१०

संस्कृतेषु कर्म संस्काराणां तदर्थत्वात् ॥ २० ॥ अनन्तरं व्रतं तद्भूतत्वात् ॥ २१ ॥ पूर्वञ्च लिङ्गदर्शनात् ॥ २२ ॥ अर्थवादो वार्थस्य विद्यमानत्वात् ॥ २३ ॥ न्यायविप्रतिषेधाच्च ॥ २४ ॥

११

सञ्चिते त्वग्निचिद्युक्तं प्रापणान्निमित्तस्य ॥ २५ ॥ क्रत्वन्ते वा प्रयोगवचनाभावात् ॥ २६ ॥

१२

परेणावेदनात् दीक्षितस्स्यात् सर्वैर्दीक्षाभिसम्बन्धात् ॥ २७ ॥ इष्ट्यन्ते वा तदर्था ह्यविशेषाच्चार्थसंयोगात् ॥ २८ ॥ समाख्यानञ्च तद्वत् ॥ २९ ॥

१३

अङ्गवत् क्रतूनामानुपूर्व्यम् ॥ ३० ॥ न वासम्बन्धात् ॥ ३१ ॥ काम्यत्वाच्च ॥ ३२ ॥ आनर्थक्यादिति चेत्स्याद्विद्यार्थत्वाद्यथा परेषु सर्वस्वारात् ॥ ३३ ॥

१४

य एतेनेत्यग्निष्टोमः प्रकरणात् ॥ ३४ ॥ लिङ्गाच्च ॥ ३५ ॥

१५

अथान्येनेति संस्थानां वादस्सन्निधानात् ॥ ३६ ॥ तत्प्रकृतेर्वापत्तिविहारौ हि न तुल्येषूपपद्यते ॥ ३७ ॥ प्रशंसा वा विहरणाभावात् ॥३८॥ विधिप्रत्ययाद्वा न ह्यकस्मात् प्रशंसास्यात् ॥ ३९ ॥

१६

एकस्तोयो वा क्रतुसंयोगात् ॥ ४० ॥ सर्वेषां वा चोदनाविशेषात् प्रशंसार्थ-स्तोमानाम् ॥ ४१ ॥

इति पञ्चमाध्याये तृतीयः पादः ॥ ( तत्राधिकरणानि १६, सूत्राणि ४१ )

## चतुर्थः पादः

१

क्रमकोपोऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च ॥ १ ॥

२

अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् ॥ २ ॥ यथाप्रधानं वा तदर्थत्वात् ॥ ३ ॥ लिङ्गदर्शनाच्च ॥ ४ ॥

३

वचनादिष्टिपूर्वत्वम् ॥ ५ ॥ सोमश्चैकेषामग्न्याधेयस्यर्तुनक्षत्रातिक्रम-वचनात्तदर्थे नानर्थकं हि स्यात् ॥ ६ ॥ तदर्थवचनाच्च नाविशेषात्तदर्थकम् ॥ ७ ॥ अयक्ष्यमाणस्य पवमानहविषां कालनिर्देशानन्तर्याद्विशेषस्स्यात् ॥ ८ ॥ इष्टिरयक्ष्य-माणस्य तादर्थ्ये सोमपूर्वत्वम् ॥ ९ ॥

४

उत्कर्षाद् ब्राह्मणस्य तु सोमस्स्यात् ॥ १० ॥ पौर्णमासी वा श्रुतिसंयोगात ॥ ११ ॥ सर्वस्य वैककर्म्यात् ॥ १२ ॥ स्याद्वा विधिस्तदर्थेन ॥ १३ ॥ प्रकारणात्तुल्य-कालस्स्यात् ॥ १४ ॥ स्वकालस्स्यादविप्रतिषेधात् ॥ १५ ॥ अपनयो वाधानस्य सर्वकालत्वात् ॥ १६ ॥ पौर्णमास्यूर्ध्वं सोमाद् ब्राह्मणस्य वचनात् ॥ १७ ॥ एकं वा शब्दसामर्थ्यात् प्राक् कृत्स्नविधानात् ॥ १८ ॥

५

पुरोडाशस्त्वनिर्देशे तद्युक्ते देवताभावात ॥ १९ ॥ आज्यमपीति चेन्न मिश्रदेवतात्वादैन्द्राग्नवत् ॥ २० ॥

६

विकृतेः प्रकृतिकालत्वात् सद्यस्कालोत्तरा ततिस्तयोः प्रत्यक्षशिष्टत्वात् ॥२१॥ द्वैयहकाल्ये वा यथान्यायम् ॥ २२ ॥ वचनाद्वैककाल्यं स्यात् ॥ २३ ॥

७

सान्नाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात् प्रकृतिवत् ॥ २४ ॥

८

तथासोमविकारा दर्शपूर्णमासाभ्याम् ॥ २५ ॥

इति पञ्चमाध्याये चतुर्थः पादः ॥ ( तत्राधिकरणानि ८, सूत्राणि २५ )

( आहृत्य पञ्चमाध्यायेऽधिकरणानि ५४, सूत्राणि १११ )

पञ्चमाध्यायः समाप्तः ॥

* श्रीः *

# षष्ठाध्याये प्रथमः पादः

१

द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः ॥१॥ असाधकन्तु तादर्थ्यात् ॥२॥ प्रत्यर्थञ्चाभिसंयोगात् कर्मतो ह्यभिसम्बन्धस्तस्मात् कर्मोपदेशस्स्यात् ॥ ३ ॥

२

फलार्थित्वात्तु कर्मणश्शास्त्रम् सर्वाधिकारं स्यात् ॥ ४ ॥ कर्तुर्वा श्रुतिसंयोगाद्विधिः कार्त्स्न्येन गम्येत ॥ ५ ॥ नर्षीणामार्षेयाभावात् ॥ ६ ॥ न देवतानां देवतान्तराभावात् ॥ ७ ॥

३

लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः ॥ ८ ॥ तद्वत्त्वाच्च दोषश्रुतिरविज्ञाते ॥ ९ ॥ जातिन्तु बादरायणोऽविशेषात्तस्मात् स्त्र्यपि प्रतीयेत जात्यर्थस्याविशिष्टत्वात् ॥ १० ॥ चोदितत्वाद्यथाश्रुति ॥ ११ ॥ द्रव्यवत्वात्तु पुंसां स्यात् द्रव्यसंयुक्तं क्रयविक्रयाभ्यामद्रव्यत्वं स्त्रीणां द्रव्यैस्समानयोगित्वात् ॥ १२ ॥ तथा-चान्यार्थदर्शनम् ॥ १३ ॥ तादर्थ्यात् कर्मतादर्थ्यम् ॥ १४ ॥ फलोत्साहाविशेषात ॥ १५ ॥ अर्थे च समवेतत्वात् ॥ १६ ॥ क्रयस्य धर्ममात्रत्वम् ॥ १७ ॥ स्ववत्ता-श्चापि दर्शयति ॥ १८ ॥

४

स्ववतोस्तु वचनादैककर्म्यं स्यात् ॥ १९ ॥ लिङ्गदर्शनाच्च ॥ २० ॥

तृतीयाधिकरणशेषः

क्रीतत्वात्तु भक्त्या स्वामित्वमुच्यते ॥ २१ ॥ फलार्थित्वात्तु स्वामित्वेनाभिसम्बन्धः ॥ २२ ॥ फलवत्ताञ्च दर्शयति ॥ २३ ॥

॥ इति ॥

५

द्व्याधानञ्च द्वियज्ञवत् ॥ २४ ॥ गुणस्य तु विधानत्वात् पत्न्या द्वितीयशब्दस्स्यात ॥ २५ ॥

६

तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात् ॥ २६ ॥

७

चातुर्वर्ण्यमविशेषात् ॥ २७ ॥ निर्देशाद्वा त्रयाणां स्यादग्न्याधेयेऽप्य सम्बन्धात् क्रतुषु ब्राह्मणश्रुतिरित्यात्रेयः ॥ २८ ॥ निमित्तार्थेन वादरस्तस्मात् सर्वाधिकारं स्यात् ॥ २९ ॥ अपि वान्यार्थदर्शनाद्यथाश्रुति प्रतीयेत ॥ ३० ॥ निर्देशात्तु पक्षे स्युः ॥ ३१ ॥ वैगुण्यान्नेति चेन्न काम्यत्वात् ॥ ३२ ॥ संस्कारे च तत्प्रधानत्वात् ॥ ३३ ॥ अपिवा वेदनिर्देशादपशूद्रं प्रतीयेत ॥ ३४ ॥ गुणार्थित्वान्नेति चेत् संस्कारस्य तदर्थत्वाद्विद्यायां पुरुषश्रुतिः ॥ ३५ ॥ विद्यानिर्देशान्नेति चेदवैद्यत्वादभावः कर्मणि स्यात् ॥ ३६ ॥ तथाचान्यार्थदर्शनम् ॥ ३७ ॥

८

त्रयाणां द्रव्यसम्पन्नः कर्मणो द्रव्यसिद्धत्वात् ॥ ३८ ॥ अनित्यत्वात्तु नैवं स्यादर्थाद्धि द्रव्यसंयोगः ॥ ३९ ॥

९

अङ्गहीनश्च तद्धर्मा ॥ ४० ॥

१०

उत्पत्तौ नित्यसंयोगात् ॥ ४१ ॥

११

अत्र्यार्षेयस्य हानं स्यात् ॥ ४२ ॥

१२

वचनाद्रथकारस्याधानस्य सर्वशेषत्वात् ॥ ४३ ॥ न्यायो वा स्यात् कर्मसंयोगाच्छूद्रस्य प्रतिषिद्धत्वात् ॥ ४४ ॥ अकर्मत्वात्तु नैवं स्यात् ॥ ४५ ॥ आनर्थक्यञ्च संयोगात् ॥ ४६ ॥ गुणार्थेनेति चेदुक्तमनिमित्तत्वम् ॥ ४७ ॥ सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात् प्रतीयेरन् ॥ ४८ ॥

१३

स्थपतिर्निषादस्स्याच्छब्दसामर्थ्यात् ॥ ४९ ॥ लिङ्गदर्शनाच्च ॥ ५० ॥

इति षष्ठाध्याये प्रथमः पादः ॥ ( तत्राधिकरणानि १३, सूत्राणि ५० )

## द्वितीयः पादः

१

पुरुषार्थैकसिद्धित्वात्तस्य तस्याधिकारस्स्यात् ॥ १ ॥ अपिचोत्पत्तिसंयोगाद्यथा स्यात् सत्वदर्शनं तथा भावे विभागस्स्यात् ॥ २ ॥

२

प्रयोगेऽपुरुषश्रुतेर्यथाकामी प्रयोगे स्यात् ॥ ३ ॥ प्रत्यर्थं श्रुतिभाव इति चेत्तादर्थ्येन गुणार्थो नानुक्तेऽर्थान्तरत्वात् कर्तुः प्रधानभूतत्वात् ॥ ४ ॥ चोदनैकत्वात् ॥ ५ ॥ अपिवा कामसंयोगे सम्बन्धात् प्रयोगायोपदिश्येत प्रत्यर्थं हि विधिश्रुतिर्विषाणवत् ॥ ६ ॥ अन्यस्य स्यादिति चेन्नार्थाभिसम्बन्धः ॥ ७ ॥ फलकामो निमित्तमिति चेन्न नित्यत्वात् ॥ ८ ॥ कर्म तथेति चेन्न समवायात् ॥ ९ ॥

३

प्रक्रमात्तु नियम्येतारम्भस्य तन्निमित्तत्वात् ॥ १० ॥ फलार्थित्वाद्वा नियमो यथानुपक्रान्ते ॥ ११ ॥ नियमो वा कर्मनिमित्तत्वात् कर्तुस्तत्कारणं स्यात् ॥ १२ ॥

४

लोके कर्माणि वेदवत्ततोऽधिपुरुषज्ञानम् ॥१३॥ अपराधे च तैश्शास्त्रम् ॥१४॥ अशास्त्रात्तूपसम्प्राप्तिः शास्त्रं स्यादप्रकल्पकं तस्मादर्थेन गम्येताप्राप्ते शास्त्रमर्थवत् ॥ १५ ॥

५

प्रतिषेधेष्वकर्मत्वात् क्रिया स्यात् प्रतिषिद्धानां विभक्तत्वादकर्मणाम् ॥ १६ ॥ शास्त्राणान्त्वर्थवत्वेन पुरुषार्थो विधीयते तयोरसमवायत्वात्तादर्थ्ये विध्यतिक्रमः ॥ १७ ॥

६

तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन् ॥ १८ ॥ अपि वा देवतुल्यत्वादुपायेन प्रवर्तेरन् ॥ १९ ॥

७

अभ्यासो वा कर्मशेषत्वात् पुरुषार्थो विधीयते ॥ २० ॥ तस्मिन्नसम्भवन्नार्थात् ॥ २१ ॥ कालो ह्युपदिश्यते ॥ २२ ॥ दर्शनात् काललिङ्गानाम् ॥ २३ ॥

८

तेषामौत्पत्तिकत्वादागमेन प्रवर्तेरन् ॥ २४ ॥ तथा च लिङ्गदर्शनम् ॥ २५ ॥

९

तथान्तः क्रतुसंयुक्तानि ॥ २६ ॥

१०

आचाराद् गृह्यमाणेषु तथा स्यात् पुरुषार्थत्वात् ॥ २७ ॥

११

ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात् ॥ २८ ॥

इति षष्ठाध्याये द्वितीयः पादः ॥ ( तत्राधिकरणानि ११, सूत्राणि २८ )

## तृतीयः पादः

१

सर्वशक्तौ प्रवृत्तिस्स्यात्तथाभूतोपदेशात् ॥ १ ॥ अपि वाप्येकदेशेन स्यात् प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत्तदर्थत्वात् ॥ २ ॥ तदकर्मणि च दोषस्तस्मात्ततो विशेषस्स्यात् प्रधानेनाभिसम्बन्धात् ॥ ३ ॥ कर्मभेदन्तु जैमिनिः प्रयोगवचनैकत्वात् सर्वेषामुपदेशस्स्यात् ॥ ४ ॥ अर्थव्यपवर्गित्वादेकस्यापि प्रयोगे स्याद्यथा क्रत्वन्तरेषु ॥ ५ ॥ विध्यपराधे च दर्शनात् समाप्तेः ॥ ६ ॥ प्रायश्चित्तविधानाच्च ॥ ७ ॥

२

काम्येषु चैवमर्थित्वात् ॥ ८ ॥ असंयोगात्तु नैवं स्याद्विधेश्शब्दप्रमाणत्वात् ॥ ८ ॥

३

क्रियाणामाश्रितत्वाद् द्रव्यान्तरे विभागस्स्यात् ॥ १० ॥ अपि वाव्यतिरेकाद्रूपशब्दाविभागाच्च सत्त्ववदैककर्म्यं स्यान्नामधेयश्च सत्त्ववत् ॥ ११ ॥

४

श्रुतिप्रमाणत्वाच्छिष्टाभावेऽनागमोऽन्यस्याशिष्टत्वात् ॥ १२ ॥ क्वचिद् विधानाच्च ॥ १३ ॥ आगमो वा चोदनार्थाविशेषात् ॥ १४ ॥ नियमार्थः क्वचिद्विधिः ॥ १५ ॥ तन्नित्यं तच्चिकीर्षा हि ॥ १६ ॥

५

न देवताग्निशब्दक्रियमन्यार्थसंयोगात् ॥ १७ ॥ देवता च तदर्थत्वात् ॥१८॥

६

प्रतिषिद्धश्चाविशेषेण हि तच्छ्रुतिः ॥ १९ ॥

७

तथा स्वामिनः फलसमवायात् फलस्य कर्मयोगित्वात् ॥ २० ॥

८

बहूनान्तु प्रवृत्तेऽन्यमागमयेदवैगुण्यात् ॥ २१ ॥

९

स स्वामी स्यात्संयोगात् ॥ २२ ॥ कर्मकरो वाक्रुतत्वात् ॥ २३ ॥ तस्मिंश्च फलदर्शनात् ॥ २४ ॥

१०

स तद्धर्मा स्यात्तत्संयोगात् ॥ २५ ॥

११

सामान्यं तच्चिकीर्षा हि ॥ २६ ॥

१२

निर्देशात्तु विकल्पे यत्प्रवृत्तम् ॥ २७ ॥ अशब्दमपीति चेन्नानङ्गत्वात् ॥ २८॥

१३

वचनाच्चान्याय्यमभावे तत्सामान्येन प्रतिनिधिरभावादितरस्य ॥ २९ ॥

१४

न प्रतिनिधौ समत्वात् ॥ ३० ॥

१५

स्याच्चतिश्च लक्षणात् ॥ ३१ ॥ न तदीप्सा हि ॥ ३२ ॥

१६

मुख्याधिगमे मुख्यमागमो हि तदभावात् ॥ ३३ ॥

१७

प्रवृत्तेऽपीति चेन्नानर्थकत्वात् ॥ ३४ ॥

१८

द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात् ॥ ३५ ॥

१९

अर्थद्रव्यविरोधेऽर्थो द्रव्याभावे तदुत्पत्तिर्द्रव्याणामर्थशेषत्वात् ॥ ३६ ॥

२०

विधेरप्येकदेशे स्यात् ॥ ३७ ॥ अपि वार्थस्य शक्यत्वादेकदेशेन वर्तेतार्थानां विभक्तत्वात् गुणमात्रमितरत्तादर्थ्यत्वात् ॥ ३८ ॥ तथाचान्यार्थदर्शनम् ॥ ३९ ॥

इति षष्ठाध्याये तृतीयः पादः ॥ ( तत्राधिकरणानि २०, सूत्राणि ३९ )

## चतुर्थः पादः

१

शेषाद् द्व्यवदाननाशे स्यात्तादर्थ्यत्वात् ॥ १ ॥ निर्देशाद्वान्यदागमयेत् ॥ २ ॥

२

अपि वा शेषभाजां स्याद्विशिष्टकारणत्वात् ॥ ३ ॥

३

निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत् ॥ ४ ॥ सर्वैर्वा समवायात् स्यात् ॥ ५ ॥ निर्देशस्यगुणार्थत्वात् ॥ ६ ॥ प्रधाने श्रुतिलक्षणम् ॥ ७ ॥ पूर्ववदितिचेन्न चोदना-विरोधात् ॥ ८ ॥

४

अर्थसमवायात् प्रयश्चित्तमेकदेशेऽपि ॥ ९ ॥ न त्वशेषवैगुण्यात्तदर्थं हि ॥ १० ॥ स्याद्वा प्राप्तनिमित्तत्वान्न तद्धोमो नित्यसंयोगान्न हि तस्य गुणार्थेना-

नित्यत्वात् ॥ ११ ॥ गुणानाश्च परार्थत्वाद्वचनाद्व्यपाश्रयस्स्यात् ॥ १२ ॥ भेदनार्थमिति चेन्नाशेषभूतत्वात् ॥ १३ ॥ अनर्थकश्चासर्वनाशे स्यात् ॥ १४ ॥

५

क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात् ॥ १५ ॥ दर्शनाद्वैकदेशे स्यात् ॥ १६ ॥ अन्येन वैतच्छास्त्राद्धि कारणप्राप्तिः ॥ १७ ॥ तद्धविश्शब्दान्नेति चेत् स्यादन्याय्यत्वादिज्यागामी हविश्शब्दस्तल्लिङ्गसंयोगात् ॥ १८ ॥

६

यथाश्रुतीति चेन्न लक्षणत्वादुपपातो हि कारणम् ॥ १९ ॥

७

होमाभिषवभक्षणञ्च तद्वत् ॥२०॥ उभाभ्यां वा न हि तयोर्धर्मशास्त्रम् ॥२१॥

८

पुनराधेयमोदनवत् ॥ २२ ॥ द्रव्योत्पत्तेर्वोभयोस्स्यात् ॥ २३ ॥

९

पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिस्स्यात् ॥ २४ ॥ चोदना वा कर्मदेवताविधेरवाच्ये हि ॥ २५ ॥

१०

स प्रत्यामनेत् स्थानात् ॥ २६ ॥ अङ्गविधिर्वा निमित्तसंयोगात् ॥ २७ ॥

११

विश्वजित्त्वप्रवृत्ते भावः कर्मणि स्यात् ॥ २८ ॥ निष्क्रयवादाच्च ॥ २९ ॥

१२

वत्ससंयोगे व्रतचोदना स्यात् ॥३०॥ कालो वोत्पन्नसंयोगाद्यथोक्तस्य ॥३१॥ अर्थापरिमाणाच्च ॥ ३२ ॥ वत्सस्तु श्रुतिसंयोगात्तदङ्गं स्यात् ॥ ३३ ॥ कालस्तु स्यादचोदनात् ॥३४॥ अनर्थकश्च कर्मसंयोगात् ॥ ३५॥ अवचनाच्च स्वशब्दस्य ॥ ३६॥

१३

कालस्सन्नयत्पक्षे तल्लिङ्गसंयोगात् ॥३७॥ कालार्थित्वाद्वोभयोः प्रतीयेत ॥३८॥ असन्नयतोऽपि कालाहानात् ॥ ३९ ॥

१४

प्रस्तरे शाखा श्रयणवत् ॥ ४० ॥ कालविधेर्वोभयोर्विद्यमानत्वात् ॥ ४१ ॥ अतत्संस्काराच्च ॥ ४२ ॥ तस्माच्च विप्रयोगे स्यात् ॥४३॥ उपवेषश्च पक्षे स्यात् ॥४४॥

इति षष्ठाध्याये चतुर्थः पादः ॥ ( तत्राधिकरणानि १४, सूत्राणि ४४ )

## पञ्चमः पादः

१

अभ्युदये कालापराधादिज्याचोदना स्याद्यथा पञ्चशरावे ॥ १ ॥ अपनयो वा विद्यमानत्वात् ॥ २ ॥ तद्रूपत्वाच्च शब्दानाम् ॥ ३ ॥ आतञ्चनाभ्यासस्य च दर्शनात् ॥ ४ ॥ अपूर्वत्वाद्विधानं स्यात् ॥ ५ ॥ पञ्चशरावे दुष्टं हीतरत् ॥ ६ ॥ सान्नाय्येऽपि तथेति चेन्न तस्यादुष्टत्वादविशिष्टं हि कारणम् ॥ ७ ॥ लक्षणार्था शृतश्रुतिः ॥ ८ ॥

२

उपांशुयाजेऽवचनाद्यथाप्रकृति ॥९॥ अपनयो वा प्रवृत्त्या यथेतरेषाम् ॥१०॥

३

निरुप्ते स्यात्तत्संयोगात् ॥ ११ ॥ प्रवृत्तौ वा प्रापणान्निमित्तस्य ॥ १२ ॥ लक्षणमात्रमितरत् ॥ १३ ॥ तथा चान्यार्थदर्शनम् ॥ १४ ॥

४

अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यस्तण्डुलभूतेष्वपनयात् ॥ १५ ॥ व्यृद्धभागभ्यस्त्वालेखनस्तत्कारितत्वाद्देवतापनयस्य ॥ १६ ॥

५

विनिरुप्ते चतुर्मुष्टीनामनपनयस्तद्गुणत्वात् ॥ १७ ॥ अप्रकृतेन हि संयोगस्तत्स्थानीयत्वात् ॥ १८ ॥ अभावाच्चेतरस्य स्यात् ॥ १९ ॥

६

सान्नाय्यसंयोगान्नासन्नयतस्स्यात् ॥ २० ॥ औषधसंयोगाद्वोभयोः ॥ २१ ॥ वैगुण्यान्नेति चेन्नातत्संस्कारार्थत्वात् ॥ २२ ॥

७

साम्युत्थाने विश्वजित् क्रीते विभागसंयोगात् ॥ २३ ॥ प्रवृत्तौ वा प्रापणान्निमित्तस्य ॥ २४ ॥ आदेशार्थेतरश्रुतिः ॥ २५ ॥

८

दीक्षापरिमाणे याथाकाम्यमविशेषात् ॥ २६ ॥ द्वादशाहस्तु लिङ्गात् स्यात् ॥ २७ ॥

९

पौर्णमास्यामनियमोऽविशेषात् ॥ २८ ॥ आनन्तर्याच्चु चैत्री स्यात् ॥ २९ ॥ माघी वैकाष्टकाश्रुतेः ॥ ३० ॥ अन्यापीति चेन्न भाक्तत्वादेषा हि लोके ॥ ३१ ॥ दीक्षापराधे चानुग्रहात् ॥ ३२ ॥ उत्थाने चानुप्ररोहात् ॥ ३३ ॥ तस्याञ्च सर्वलिङ्गानि ॥ ३४ ॥

१०

दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात् ॥ ३५ ॥ उत्कर्षो वा दीक्षितत्वादविशिष्टं कारणम् ॥ ३६ ॥

११

तत्र प्रतिहोमो न विद्यते यथा पूर्वेषाम् ॥ ३७ ॥ कालप्राधान्याच्च ॥ ३८ ॥

१२

प्रतिषेधाच्चोर्ध्वमवभृथादेष्टेः ॥ ३९ ॥

१३

प्रतिहोमाश्चेत् सायमग्निहोत्रप्रभृति हूयेरन् ॥ ४० ॥ प्रातस्तु षोडशिनि ॥४१॥ प्रायश्चित्तमधिकारे सर्वत्र दोषसामान्यात् ॥ ४२ ॥

१४

प्रकरणे वा शब्दहेतुत्वात् ॥ ४३ ॥ अतद्विकाराच्च ॥ ४४ ॥ व्यापन्नस्याप्सु हृतौ यदभोज्यमार्याणान्तत्प्रतीयेत ॥ ४५ ॥

१५

विभागश्रुतेः प्रायश्चित्तं यौगपद्ये न विद्यते ॥ ४६ ॥ स्याद्वा प्राप्तनिमित्तत्वात् कालमात्रमेके ॥ ४७ ॥

१६

तत्र विप्रतिषेधाद्विकल्पस्स्यात् ॥ ४८ ॥ प्रयोगान्तरेण वोभयोरनुग्रहः स्यात् ॥ ४९ ॥ न वैकत्वसंयोगात् ॥ ५० ॥

१७

पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् ॥ ५१ ॥

१८

यद्युद्गाता जघन्यस्स्यात् पुनर्यज्ञे सर्ववेदसं दद्याद्यथेतरस्मिन् ॥ ५२ ॥

१९

अहर्गणे यस्मिन्नपच्छेदस्तदावर्तेत कर्मणां पृथक्त्वात् ॥ ५३ ॥

इति षष्ठाध्याये पञ्चमः पादः ॥ ( तत्राधिकरणानि १९, सूत्राणि ५३ )

## षष्ठः पादः

१

सन्निपाते वैगुण्यात् प्रकृतिवत्तुल्यकल्पा यजेरन् ॥ १ ॥ वचनाद्वा शिरोवत् स्यात् ॥ २ ॥ न वानारभ्यवादत्वात् ॥ ३ ॥ स्याद्वा यज्ञार्थत्वादौदुम्बरीवत् ॥ ४ ॥ न तत्प्रधानत्वात् ॥ ५ ॥ औदुम्बर्यां परार्थत्वात् कपालवत् ॥ ६ ॥ अन्येनापीति चेन्नैकत्वात्तस्य चानधिकाराच्छब्दस्य चाविभक्तत्वात् ॥ ७ ॥ सन्निपातात्तु निमित्त विघातस्स्यात् बृहद्रथन्तरवद्विभक्तशिष्टत्वाद्वासिष्ठनिर्वर्त्ये ॥ ८ ॥ अपि वा कृत्स्न-संयोगादविघातः प्रतीयेत स्वामित्वेनाभिसम्बन्धात् ॥ ९ ॥ साम्नोः कर्मवृद्धिरेक-देशेन संयोगे गुणत्वेनाभिसम्बन्धस्तस्मात्तत्र विघातस्स्यात् ॥ १० ॥

२

वचनात्तु द्विसंयोगस्तस्मादेकस्य पाणिवत् ॥ ११ ॥ अर्थाभावात्तु नैवं स्यात् ॥ १२ ॥ अर्थानाञ्च विभक्तत्वात्ततश्च तेन सम्बन्धः ॥ १३ ॥ पाणेः प्रत्यङ्ग-भावात् सम्बन्धः प्रतीयेत ॥ १४ ॥

३

सत्राणि सर्ववर्णानामविशेषात् ॥ १५ ॥ लिङ्गदर्शनाच्च ॥ १६ ॥ ब्राह्मणानां वेतरयोरार्त्विज्याभावात् ॥ १७ ॥ वचनादिति चेन्न स्वामित्वं हि विधीयते ॥ १८ ॥ गार्हपते वा स्यातामविप्रतिषेधात् ॥ १९ ॥ न वा कल्पविरोधात् ॥ २० ॥ स्वामित्वादितरेषामहीने लिङ्गदर्शनम् ॥ २१ ॥

४

वासिष्ठानां ब्रह्मत्वस्य नियमात् ॥ २२ ॥ सर्वेषां वा प्रतिप्रसवात् ॥ २३ ॥ वैश्वामित्रस्य हौत्रनियमाद् भृगुशुनकवसिष्ठानामनधिकारः ॥ २४ ॥

५

विहारस्य प्रभुत्वादनग्नीनामपि स्यात् ॥ २५ ॥ सारस्वते च दर्शनात् ॥२६॥ प्रायश्चित्तविधानाच्च ॥ २७ ॥ साग्नीनां वेष्टिपूर्वत्वात् ॥ २८ ॥ स्वार्थेन च प्रयुक्तत्वात् ॥ २९ ॥ सन्निवापञ्च दर्शयति ॥ ३० ॥

६

जुह्वादीनामप्रयुक्तत्वाद्याथाकामी प्रतीयेत ॥ ३१ ॥ अपि वान्यानि पात्राणि साधारणानि कुर्वीरन्विप्रतिषेधाच्छास्त्रकृतत्वाच्च ॥ ३२ ॥ प्रायश्चित्तमापदि स्यात् ॥ ३३ ॥

७

पुरुषकल्पेन विकृतौ कर्तृनियमस्स्यात् यज्ञस्य तद्गुणत्वादभावादितरान् प्रत्येतस्मिन्विधिकात्स्न्र्यात् ॥ ३४ ॥ लिङ्गाच्चेज्याविशेषवत् ॥ ३५ ॥ न वा संयोगपृथक्त्वाद् गुणस्येज्याप्रधानत्वादसंयुक्ता हि चोदना ॥ ३६ ॥ इज्यायां तद्ग्रहणाद्विशेषेण नियम्येत ॥ ३७ ॥

इति षष्ठाध्याये षष्ठः पादः ॥ ( तत्राधिकरणानि ७, सूत्राणि ३७ )

## सप्तमः पादः

१

स्वदाने सर्वमविशेषात् ॥ १ ॥ यस्य वा प्रभुत्वमितरस्याशक्यत्वात् ॥ २ ॥

२

न भूमिस्स्यात् सर्वान्प्रत्यविशिष्टत्वात् ॥ ३ ॥

३

अकार्यत्वाच्च ततः पुनर्विशेषस्स्यात् ॥ ४ ॥

४

नित्यत्वाच्चानित्यैर्नास्ति सम्बन्धः ॥ ५ ॥

५

शूद्रश्च धर्मशास्त्रत्वात् ॥ ६ ॥

६

दक्षिणाकाले यत्स्वं तत्प्रतीयेत तद्दानसंयोगात् ॥ ७ ॥

७

अशेषत्वात्तदन्तं स्यात् कर्मणो द्रव्यसिद्धित्वात् ॥ ८ ॥ अपि वा शेषकर्म स्यात् क्रतोः प्रत्यक्षशिष्टत्वात् ॥ ९ ॥ तथा चान्यार्थदर्शनम् ॥ १० ॥ अशेषे तु समञ्जसमादानेन शेषकर्म स्यात् ॥ ११ ॥ नादानस्यानित्यत्वात् ॥ १२ ॥ दीक्षासु तु विनिर्देशादक्रत्वर्थेन संयोगस्तस्मादविरोधस्स्यात् ॥ १३ ॥

८

अहर्गणे तद्धर्मस्सर्वेषामविशेषात् ॥ १४ ॥ द्वादशशतं वा प्रकृतिवत ॥ १५ ॥ अतद्गुणत्वात्तु नैवं स्यात् ॥ १६ ॥ लिङ्गदर्शनाच्च ॥ १७ ॥

९

विकारस्सन्नुभयतोऽविशेषात् ॥ १८ ॥ अधिकं वा प्रतिप्रसवात् ॥ १९ ॥ अनुग्रहाच्च पादवत् ॥ २० ॥

१०

अपरिमाणे शिष्टस्य सङ्ख्याप्रतिषेधस्तच्छ्रुतित्वात् ॥ २१ ॥ कल्पान्तरं वा तुल्यवत् प्रसङ्ख्यानात् ॥ २२ ॥

११

अनियमोऽविशेषात् ॥ २३ ॥ अधिकं वा स्याद् बह्वर्थत्वादितरैस्सन्निधानात् ॥ २४ ॥ अर्थवादश्च तदर्थवत् ॥ २५ ॥

१२

परक्रतिपुराकल्पं मनुष्यधर्मस्स्यादर्थाय ह्यनुकीर्तनम् ॥ २६ ॥ निर्देशाद्वा तद्धर्मस्स्यात् पञ्चावत्तवत् ॥ २७ ॥ विधौ तु वेदसंयोगादुपदेशस्स्यात् ॥ २८ ॥ यद्युक्ते च प्रतिषेधात् ॥ २९ ॥ अर्थवादो वा विधिशेषत्वात् ॥ ३० ॥

१३

सहस्रसंवत्सरन्तदायुषामसम्भवान्मनुष्येषु ॥ ३१ ॥ अपि वा तदधिकारात् स मनुष्यधर्मस्स्यात् ॥ ३२ ॥ नासामर्थ्यात् ॥ ३३ ॥ स कुलकल्पस्स्यादिति कार्ष्णाजिनिरेकस्मिन्नसम्भवात् ॥ ३४ ॥ अपि वा कृत्स्नसंयोगादेकस्यैव प्रयोगस्स्यात् ॥ ३५ ॥ विप्रतिषेधात्तु गौणोऽन्यतरस्स्यादिति लावुकायनः ॥ ३६ ॥ संवत्सरो विचालित्वात् ॥ ३७ ॥ स प्रकृतस्स्यादधिकारात् ॥ ३८ ॥ अहानि वाभिसङ्ख्यानात् ॥ ३९ ॥

इति षष्ठाध्याये सप्तमः पादः ॥ ( तत्राधिकरणानि १३, सूत्राणि ३९ )

## अष्टमः पादः

१

इष्टिपूर्वत्वादक्रतुशेषो होमस्संस्कृतेष्वग्निषु स्यादपूर्वोऽप्याधानस्य सर्वशेषत्वात् ॥ १ ॥ इष्टित्वेन तु संस्तवश्चतुर्होतॄनसंस्कृतेषु दर्शयति ॥ २ ॥ उपदेशस्त्वपूर्वत्वात् ॥ ३ ॥ सर्वेषामविशेषात् ॥ ४ ॥ अपि वा क्रत्वभावादनाहिताग्नेरशेषभूतनिर्देशः ॥ ५ ॥ जपो वानग्निसंयोगात् ॥ ६ ॥ इष्टित्वेन तु संस्तुते होमस्स्यादनारभ्याग्निसंयोगादितरेषामवाच्यत्वात् ॥ ७ ॥ उभयोःपितृयज्ञवत् ॥ ८ ॥ निर्देशो वानाहिताग्नेरनारभ्याग्निसंयोगात् ॥ ९ ॥ पितृयज्ञे संयुक्तस्य पुनर्वचनम् ॥ १० ॥

२

उपनयन्नादधीत होमसंयोगात् ॥ ११ ॥ स्थपतीष्टिवल्लौकिके वा स्याद्विद्याकर्मानुपूर्व्यात् ॥ १२ ॥ आधानञ्च भार्यासंयुक्तम् ॥ १३ ॥ अकर्म चोर्ध्वमाधानात् समवायो हि कर्मभिः ॥ १४ ॥ श्राद्धवदिति चेन्न श्रुतिविप्रतिषेधात् ॥ १५ ॥ सर्वार्थ-

त्वाच्च पुत्रार्थो न प्रयोजयेत् ॥ १६ ॥ सोमपानात्तु प्रापणं द्वितीयस्य तस्मादुप-यच्छेत् ॥ १७ ॥ पितृयज्ञे तु दर्शनात् प्रागाधानात् प्रतीयेत ॥ १८ ॥

३

स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्तादर्थ्याच्चापवृज्येत ॥ १९ ॥ अपि वा लौकिकेऽग्नौ स्यादाधानस्यासर्वशेषत्वात् ॥ २० ॥

४

अवकीर्णि पशुश्च तद्वदाधानस्य प्राप्तकालत्वात् ॥ २१ ॥

५

उदगयनपूर्वपक्षाहःपुण्याहेषु दैवानि स्मृतिरूपान्यार्थदर्शनात् ॥ २२ ॥ अहनि च कर्मसाकल्यम् ॥ २३ ॥

६

इतरेषु तु पित्र्याणि ॥ २४ ॥

७

याच्ञाक्रयणमविद्यमाने लोकवत् ॥ २५ ॥ नियतं वा अर्थवत्वात् स्यात् ॥ २६ ॥

८

तथा भक्षप्रैषाच्छादनसंज्ञप्तहोमद्वेषम् ॥ २७ ॥ अनर्थकन्त्वनित्यं स्यात् ॥ २८ ॥

९

पशुचोदनायामनियमोऽविशेषात् ॥ २९ ॥ छागो वा मन्त्रवर्णात् ॥ ३० ॥ न चोदनाविरोधात् ॥ ३१ ॥ आर्षेयवदिति चेन्न तत्राप्यचोदितत्वात् ॥ ३२ ॥ नियमो वैकार्थ्यं ह्यर्थभेदाद् भेदः पृथक्त्वेनाभिधानात् ॥ ३३ ॥ अनियमो वार्थान्तरत्वादन्यत्वं व्यतिरेकशब्दाभ्याम् ॥ ३४ ॥ न वा प्रयोगसमवायित्वात् ॥ ३५ ॥

इति षष्ठाध्याये अष्टमः पादः ॥ ( तत्राधिकरणानि ९, सूत्राणि ३५ )

( आहत्य षष्ठाध्यायेऽधिकरणानि १०६, सूत्राणि ३२५ )

समाप्तश्चाध्यायः ॥

❀ श्रीः ❀

# सप्तमाध्याये प्रथमः पादः

१

श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावस्स्यात् ॥ १ ॥ उत्पत्त्यर्थाविभागाद्वा सत्ववदैकधर्म्यं स्यात् ॥ २ ॥ चोदनाशेषभावाद्वा तद्भेदाद्व्यवतिष्ठेरन्नुत्पत्तेर्गुणभूतत्वात् ॥ ३ ॥ सत्वे लक्षणसंयोगात् सार्वत्रिकं प्रतीयेत ॥ ४ ॥ अविभागात्तु नैवं स्यात् ॥ ५ ॥ द्व्यर्थत्वञ्च विप्रतिषिद्धम् ॥ ६ ॥ उत्पत्तौ विध्यभावाद् वा चोदनायां प्रवृत्तिस्स्यात् ततश्च धर्मभेदस्स्यात् ॥ ७ ॥ यदि वाप्यभिधानवत् सामान्यात् सर्वधर्मस्स्यात् ॥ ८ ॥ अर्थस्य त्वविभक्तत्वात्तथा स्यादभिधानेषु पूर्ववत्त्वात् प्रयोगस्य कर्मणश्शब्दभाव्यत्वात्तद्विभागाच्छेषाणामप्रवृत्तिः स्यात् ॥ ९ ॥ स्मृतिरिति चेन्न पूर्ववत्त्वात् ॥ १० ॥ अर्थस्य शब्दभाव्यत्वात् प्रतिप्रकरणञ्च निबन्धनाच्छब्दादेवान्यत्र भावस्स्यात् ॥ ११ ॥

२

समाने पूर्ववत्वादुत्पन्नाधिकारस्स्यात् ॥ १२ ॥ श्येनस्येति चेन्नासन्निधानात् ॥ १३ ॥ अपि वा यद्यपूर्वत्वादितरदधिकार्थं ज्योतिष्टोमिकाद्विधेस्तद्वाचकं समानं स्यात् ॥ १४ ॥

३

पञ्चसञ्चरेष्वर्थवादातिदेशस्सन्निधानात् ॥ १५॥ सर्वस्य वैकशब्द्यात् ॥ १६॥ लिङ्गदर्शनाच्च ॥ १७ ॥ विहिताम्नानान्नेति चेन्नेतरार्थत्वात् ॥ १८ ॥

४

एककपालैन्द्राग्नौ च तद्वत् ॥ १९ ॥

५

एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहोमापर्यावृत्तिदर्शनादवभृथे च सकृद् द्व्यवदानस्य वचनात् ॥ २० ॥

इति सप्तमाध्याये प्रथमः पादः ॥ ( तत्राधिकरणानि ५, सूत्राणि २० )

## द्वितीयः पादः

१

साम्नोऽभिधानशब्देन प्रवृत्तिस्स्याद्यथाशिष्टम् ॥ १ ॥ शब्दैस्त्वर्थविधित्वादर्थान्तरेऽप्रवृत्तिस्स्यात् पृथग्भावान् क्रियायां ह्यभिसम्बन्धः ॥ २ ॥ स्वार्थे वा स्यात् प्रयोजनं क्रियायास्तदङ्गभावेनातिदिश्येरन् ॥ ३ ॥ शब्दमात्रमिति चेन्नौत्पत्तिकत्वात् ॥ ४ ॥ शास्त्रञ्चैवमनर्थकं स्यात् ॥ ५ ॥ स्वरस्स्यादिति चेन्नार्थाभावाच्छ्रुतेरसम्बन्धः ॥ ६ ॥ स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात् ॥ ७ ॥ लिङ्गदर्शनाच्च ॥ ८ ॥ अश्रुतेस्तु विकारस्योत्तरासु यथाश्रुति ॥ ९ ॥ शब्दानाञ्चासामञ्जस्यम् ॥ १० ॥ अपि तु कर्मशब्दस्स्याद् भावोऽर्थः प्रसिद्धग्रहणत्वाद् विकारो ह्यविशिष्टोऽन्यैः ॥ ११ ॥ अद्रव्यञ्चापि दृश्यते ॥ १२ ॥ तस्य च क्रिया ग्रहणार्था नानार्थेषु विरूपितत्वादर्थोऽप्यासां न लौकिको विधानात् ॥ १३ ॥ तस्मिन् संज्ञाभेदास्स्युर्विकारपृथक्त्वात् ॥ १४ ॥ योनिशंस्या च तुल्यवदितराभिर्विधीयते ॥१५॥ अयोनौ चापि दृश्यते ॥ १६ ॥ ऐश्वर्य्ये नास्ति वैरूप्यमिति चेत्, स्यादर्थान्तरेषु निष्पत्तेर्यथा पाके ॥ १७ ॥ शब्दानाञ्चासामञ्जस्यम् ॥ १८ ॥

इति सप्तमाध्याये द्वितीयः पादः ॥ ( तत्राधिकरणम् १, सूत्राणि १८ )

## तृतीयः पादः

१

उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशस्स्यात् ॥ १ ॥ अपूर्वे वापि भागितत्वात् ॥ २ ॥ नाम्नस्त्वौत्पत्तिकत्वात् ॥ ३ ॥ प्रत्यक्षात् गुणसंयोगात्क्रियाभिधानं स्यात् तदभवेऽप्रसिद्धं स्यात् ॥ ४ ॥

२

अपि वा सत्रकर्मणि गुणार्थैषा श्रुतिस्स्यात् ॥ ५ ॥ वाक्यशेषाच्च ॥ ६ ॥

३

विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वात् ज्यौतिष्टोमिकानि पृष्ठान्यस्ति च पृष्ठशब्दः ॥ ७ ॥ षडहाद्वा तत्र हि चोदना ॥ ८ ॥ लिङ्गदर्शनाच्च ॥ ९॥ उत्पन्नाधिकारो ज्योतिष्टोमे ॥ १० ॥ द्वयोरिति चेन्न व्यर्थत्वात् सर्वशब्दस्य ॥ ११ ॥

४

तथाऽवभृथस्सोमात् ॥ १२ ॥ प्रकृतिरिति चेन्न भक्तित्वात् ॥ १३ ॥ लिङ्गदर्शनाच्च ॥ १४ ॥

५

द्रव्यादेशे तद्द्रव्यं श्रुतिसंयोगात् पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥ १५ ॥

६

गुणविधिस्तु न गृह्णीयात् समत्वात् ॥ १६ ॥

७

निर्मन्थ्यदिषु चैवम् ॥ १७ ॥

८

सौमिकन्तु प्रणयनमवाच्यं हीतरत् ॥ १८॥ उत्तरवेदिप्रतिषेधश्च तद्वत् ॥१९॥ प्राकृतं वानामत्वात् ॥ २० ॥ परिसंख्यार्थं श्रवणं गुणार्थमर्थवादो वा ॥ २१ ॥

९

प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् ॥ २२ ॥ मध्यमयोर्वा गत्यर्थवादात् ॥ २३ ॥ औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः ॥ २४ ॥

१०

स्वरसामैककपालामिक्षञ्च लिङ्गदर्शनात् ॥ २५ ॥

११

कर्मजे कर्म यूपवत् ॥ २६ ॥ यथासिद्धं वाशेषभूतत्वात् ॥ २७ ॥

१२

विशये लौकिकं स्यात् सर्वार्थत्वान्न वैदिकमर्थनिर्देशात् ॥ २८ ॥ तथोत्पत्तिरितरेषां समत्वात् ॥ २९ ॥

१३

संस्कृतस्स्यात् तच्छब्दत्वात् ॥ ३० ॥ भक्त्या वा यज्ञशेषत्वाद् गुणानभिधायकत्वात् ॥ ३१ ॥

१४

कर्मणः पृष्ठशब्दः स्यात्तथाभूतोपदेशात् ॥ ३२ ॥ अभिधानोपदेशाद्वा विप्रतिषेधाद्द्रव्येषु पृष्ठशब्दस्स्यात् ॥ ३३ ॥

इति सप्तमाध्याये तृतीयः पादः ॥ ( तत्राधिकरणानि १४, सूत्राणि ३३ )

## चतुर्थः पादः

१

इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम् ॥ १ ॥

२

स लौकिकः स्याद् दृष्टप्रवृत्तित्वात् ॥ २ ॥ वचनात्तु ततोऽन्यत्वम् ॥ ३ ॥ लिङ्गेन वा नियम्येत लिङ्गस्य तद्गुणत्वात् ॥ ४ ॥ अपि वा न्यायपूर्वत्वाद्यत्र नित्यानुवादवचनानि स्युः ॥ ५ ॥ मिथो विप्रतिषेधाच्च गुणानां यथार्थं कल्पना स्यात् ॥ ६ ॥ भागित्वात्तु नियुज्येत गुणानामभिधानत्वात् सम्बन्धादभिधानवद्यथा किशोरेण ॥ ७ ॥ उत्पत्तीनां समत्वाद्वा यथाधिकारं भावस्स्यात् ॥ ८ ॥ विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत तथाहि लिङ्गदर्शनम् ॥ ९ ॥ लिङ्गहेतुत्वादलिङ्गे लौकिकं स्यात् ॥ १० ॥ लिङ्गस्य पूर्ववत्वाच्चोदनाशब्दसामान्यादेकेनापि निरुच्येत यथा स्थालीपुलाकेन ॥ ११ ॥

३

द्वादशाहिकमहर्गणे तत्प्रकृतित्वाद् ऐकाहिकमधिकागमात् तदाख्यं स्यादेकाहवत् ॥ १२ ॥ लिङ्गाच्च ॥ १३ ॥ न वा क्रत्वभिधानादधिकानामशब्दत्वम् ॥ १४ ॥ लिङ्गं सङ्घातधर्मस्स्यात् तदर्थापत्तेर्द्रव्यवत् ॥ १५ ॥ न वाऽर्थगुणत्वात् सङ्घातस्य गुणत्वात् ॥ १६ ॥ प्रवृत्त्या तु नियतस्य लिङ्गदर्शनम् ॥ १७ ॥

इति सप्तमाध्याये चतुर्थः पादः ॥ ( तत्राधिकरणानि ३, सूत्राणि १७ )

( आहृत्य सप्तमाध्यायेऽधिकरणानि २३, सूत्राणि ८८ )

समाप्तश्चाध्यायः ॥

* श्रीः *

# अष्टमाध्याये प्रथमः पादः

१

अथ विशेषलक्षणम् ॥ १ ॥

२

यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥ २ ॥

३

प्रवृत्तत्वादिष्टेस्सोमेऽपि प्रवृत्तिस्स्यात् ॥ ३ ॥ लिङ्गदर्शनाच्च ॥ ४ ॥ कृत्स्नविधानाद्वापूर्वत्वम् ॥ ५ ॥ स्रुगभिघारणाभावस्य च नित्यानुवादात् ॥ ६ ॥ विधिरिति चेन्न वाक्यशेषत्वात् ॥ ७ ॥ शङ्कते चानुपोषणात् ॥ ८ ॥

४

इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिस्स्यात् ॥ ९ ॥

५

पशौ च लिङ्गदर्शनात् ॥ १० ॥

६

दैक्षस्य चेतरेषु ॥ ११ ॥

७

ऐकादशिनेषु सौत्यस्य द्वैरशन्यदर्शनात् ॥ १२ ॥

८

तत्प्रवृत्तिर्गणेषु स्यात् प्रतिपशु यूपदर्शनात् ॥ १३ ॥

९

अव्यक्तासु तु सोमस्य ॥ १४ ॥

१०

गणेषु द्वादशाहस्य ॥ १५ ॥

११

गन्यस्य च तदादिषु ॥ १६ ॥

१२

निकायिनान्तु पूर्वस्योत्तरेषु प्रवृत्तिस्स्यात् ॥ १७ ॥

१३

कर्मणस्त्वप्रवृत्तित्वात् फलनियमकर्तृसमुदायानन्वयस्तत्सम्बन्धत्वात् ॥ १८ ॥ अश्रुतत्वाच्च ॥ १९ ॥

१४

गुणकामेष्वाश्रितत्वात् प्रवृत्तिस्स्यात् ॥ २० ॥ निवृत्तिर्वा कर्मभेदात् ॥ २१ ॥ अपि वातद्विकारत्वात् क्रत्वर्थत्वात् प्रवृत्तिस्स्यात् ॥ २२ ॥

१५

एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् ॥ २३ ॥

१६

लिङ्गसाधरण्याद्विकल्पस्स्यात् ॥ २४ ॥ ऐकार्थ्याद्वा नियम्येत पूर्ववत्त्वाद् विकारो हि ॥ २५ ॥ अश्रुतत्वान्नेति चेत् स्याल्लिङ्गभावात् ॥ २६ ॥ तथा चान्यार्थ-दर्शनम् ॥ २७ ॥

१७

विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात् ॥ २८ ॥ तेन च कर्मसंयोगात् ॥ २९ ॥ गुणत्वेन देवताश्रुतिः ॥ ३० ॥

१८

हिरण्यमाज्यधर्मं तेजस्त्वात् ॥ ३१ ॥ धर्मानुग्रहाच्च ॥ ३२ ॥ औषधाद्वा विशदत्वात् ॥ ३३ ॥ चरुशब्दाच्च ॥ ३४ ॥ तस्मिंश्च श्रपणश्रुतेः ॥ ३५ ॥

१९

मधूदके द्रवत्वसामान्यात पयोविकारस्स्यात् ॥ ३६ ॥ आज्यं वा वर्ण-सामान्यात् ॥ ३७ ॥ धर्मानुग्रहाच्च ॥ ३८ ॥ पूर्वस्य चाविशिष्टत्वात् ॥ ३९ ॥

इति अष्टमाध्याये प्रथमः पादः ॥ ( तत्राधिकरणानि १९, सूत्राणि ३९ )

## द्वितीयः पादः

१

वाजिने सोमपूर्वत्वं सौत्रामण्याञ्च ग्रहेषु ताच्छब्द्यात् ॥ १ ॥ अनुवषट्काराच्च ॥ २ ॥ समुपहूय भक्षणाच्च ॥ ३ ॥ क्रयणश्रयणपुरोरुगुपयामग्रहणासादनोपवासोपनहनञ्च तद्वत् ॥ ४ ॥ हविषा वा नियम्येत तद्विकारत्वात् ॥ ५ ॥ प्रशंसा सोमशब्दः ॥ ६ ॥ वाचनिकानीतराणि ॥ ७ ॥ व्यपदेशश्च तद्वत् ॥ ८ ॥ पशुपुरोडाशस्य च लिङ्गदर्शनम् ॥ ९ ॥

२

पशुः पुरोडाशविकारस्स्याद्देवतासामान्यात् ॥ १० ॥ प्रोक्षणाच्च ॥ ११ ॥ पर्यग्निकरणाच्च ॥ १२ ॥ सान्नाय्यं वा तत्प्रभवत्वात् ॥ १३ ॥ तस्य च पात्रदर्शनात् ॥ १४ ॥

३

दध्नस्स्यान्मूर्तिसामान्यात् ॥ १५ ॥ पयो वा कालसामान्यात् ॥ १६ ॥ पश्वानन्तर्यात् ॥ १७ ॥ द्रव्यत्वञ्चाविशिष्टम् ॥ १८ ॥

४

आमिक्षोभयभाव्यत्वादुभयविकारस्स्यात् ॥ १९ ॥ एकं वा चोदनैकत्वात् ॥ २० ॥ दधिसङ्घातसामान्यात् ॥ २१ ॥ पयो वा तत्प्रधानत्वाल्लोकवद्दध्नस्तदर्थत्वात् ॥ २२ ॥ धर्मानुग्रहाच्च ॥ २३ ॥

५

सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ २४ ॥ अपि वा यजतिश्रुतेरहीनभूतप्रवृत्तिस्स्यात् प्रकृत्या तुल्यशब्दत्वात् ॥ २५ ॥ द्विरात्रादीनामैकादशरात्रादहीनत्वं यजतीति चोदनात् ॥ २६ ॥ लिङ्गाच्च ॥ २७ ॥

६

अन्यतरतोऽतिरात्रत्वात् पञ्चदशरात्रस्याहीनत्वम् कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वस्य दर्शनात् ॥ २८ ॥ अहीनवचनाच्च ॥ २९ ॥ सत्रे वोपेयिचोदनात् ॥ ३० ॥ सत्रलिङ्गञ्च दर्शयति ॥ ३१ ॥

इति अष्टमाध्याये द्वितीयः पादः ॥ ( तत्राधिकरणानि ६, सूत्राणि ३१ )

# तृतीयः पादः

१

हविर्गणे परमुत्तरस्य सामान्यात् ॥ १ ॥ देवतया वा नियम्येत शब्दवत्वादितरस्याश्रुतित्वात् ॥ २ ॥

२

गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताग्नेयवत् ॥ ३ ॥ नानाह्यानि वा सङ्घातत्वप्रकृतिलिङ्गेन चोदनात् ॥ ४ ॥ तथा चान्यार्थदर्शनम् ॥ ५ ॥

३

कालाभ्यासेऽपि बादरिः कर्मभेदात् ॥ ६ ॥ तदावृत्तिन्तु जैमिनिरह्नामप्रत्यक्षसङ्ख्यात्वात् ॥ ७ ॥

४

संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् ॥ ८ ॥ अधिकाराद्वा प्रकृतिस्तद्विशिष्टा स्यादभिधानस्य तन्निमित्तत्वात् ॥ ९ ॥

५

गणादुपचयस्तत्प्रकृतित्वात् ॥ १० ॥ एकाहाद्वा तेषां समत्वात्स्यात् ॥ ११ ॥

६

गायत्रीषु प्राकृतीनामपच्छेदः प्राकृत्यधिकारात् सङ्ख्यात्वादग्निष्टोमवदव्यतिरेकात्तदाख्यत्वम् ॥ १२ ॥ तन्नित्यवच्च पृथक्सतीषु तद्वचनम् ॥ १३ ॥ न विंशतौ दशेति चेदेकसङ्ख्यमेवस्यात् ॥ १४ ॥ गुणाद्वा द्रव्यशब्दस्स्यादसर्वविषयत्वात् ॥ १५ ॥ गोत्ववच्च समन्वयः ॥ १६ ॥ सङ्ख्यायाश्च शब्दवत्वात् ॥ १७ ॥ इतरस्य त्वश्रुतित्वात् ॥ १८ ॥ द्रव्यान्तरे निवेशादुक्थ्यलोपैर्विशिष्टं स्यात् ॥ १९ ॥ अशास्त्रलक्षणत्वाच्च ॥ २० ॥ उत्पत्तिनामधेयत्वाद् भक्त्या पृथक्सतीषु स्यात् ॥ २१ ॥ वचनमिति चेद्यावदर्थमिहैवैकत्र सङ्ख्यार्थो नान्यत्र कचिद्दर्शनात् ॥ २२ ॥ अपूर्वे च विकल्पस्स्याद्यदि सङ्ख्याविधानम् ॥ २३ ॥ ऋग्गुणत्वान्नेति चेत् तथा पूर्ववति स्यात् ॥ २४ ॥ गुणावेशश्च सर्वत्र ॥ २५ ॥ निष्पन्नग्रहणान्नेति चेत्तथेहापि

स्यात् ॥२६॥ यदि वाविशये नियमः प्रकृत्युपबन्धनाच्छरेष्वपि प्रसिद्धस्स्यात् ॥२७॥ दृष्टः प्रयोग इति चेत्तथा शरेष्वपि ॥ २८ ॥ भक्त्येति चेत्तथेतरस्मिन् ॥ २९ ॥ अर्थस्य चासमाप्तत्वान्न तासामेकदेशस्स्यात् ॥ ३० ॥

इति अष्टमाध्याये तृतीयः पादः ॥ ( तत्राधिकरणानि ६, सूत्राणि ३० )

# चतुर्थः पादः

१

दर्विहोमो यज्ञाभिधानं होमसंयोगात् ॥ १ ॥

२

स लौकिकानां स्यात् कर्तुस्तदाख्यत्वात् ॥ २ ॥ सर्वेषां वा दर्शनाद्वास्तुहोमे ॥ ३ ॥

३

जुहोतिचोदितानां वा तत्संयोगात् ॥ ४ ॥ गुणाभिधानं स्यात् द्रव्योपदेशात् ॥ ५ ॥ न लौकिकानामाचारग्रहणत्वाच्छब्दवताञ्चान्यार्थविधानात् ॥ ६ ॥ दर्शनाच्चान्यपात्रस्य ॥ ७ ॥ तथाग्निहविषोः ॥ ८ ॥ उक्तश्चार्थसम्बन्धः ॥ ९ ॥

इति प्रथमाधिकरणशेषः ॥

४

तस्मिन्सोमः प्रवर्तेताव्यक्तत्वात् ॥ १० ॥ न वा स्वाहाकारेण संयोगाद् वषट्कारस्य च निर्देशात्तत्रैतेन विप्रतिषेधात् ॥ ११ ॥ शब्दान्तरत्वाच्च ॥ १२ ॥ लिङ्गदर्शनाच्च ॥ १३ ॥ उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यं तत्राविप्रतिषिद्धा पुनः प्रवृत्तिलिङ्गदर्शनात् पशुवत् ॥ १४ ॥ अनुत्तरार्थो वार्थवत्वादानर्थक्याद्धि प्राकृतस्योपरोधस्स्यात् ॥१५॥ न प्रकृतावपीति चेदुक्तं समवाये पारदौर्बल्यम् ॥१६॥ तच्चोदना वेष्टेः प्रवृत्तित्वात्तद्विधिस्स्यात् ॥ १७ ॥ शब्दसामर्थ्याच्च ॥ १८ ॥ लिङ्गदर्शनाच्च ॥ १९ ॥ तत्राभावस्य हेतुत्वाद् गुणार्थे स्याददर्शनम् ॥ २० ॥ विधिरिति चेन्न वाक्यशेषत्वाद्गुणार्थे च समापनं नानार्थे नोपपद्यते ॥ २१ ॥ येषां वापरयोर्होमस्तेषां स्यादविरोधात् ॥२२॥ तत्रौषधानि चोद्यन्ते तत्स्थाने न गम्येरन् ॥२३॥

लिङ्गाद्वा शेषहोमयोः ॥ २४ ॥ प्रतिपत्ती तु तौ तस्मादतद्विकारत्वम् ॥ २५ ॥ सन्निपाते विरोधिनामप्रवृत्तिः प्रतीयेत विध्युत्पत्तिव्यवस्थानादर्थस्यापरिणेयत्वाद्वचनादतिदेशस्स्यात् ॥ २६ ॥

इति अष्टमाध्याये चतुर्थः पादः ॥ ( तत्राधिकरणानि ४, सूत्राणि २६ )

( आहत्य अष्टमाध्यायेऽधिकरणानि ३५, सूत्राणि १२६ )

समाप्तश्चाध्यायः ॥

: श्री :

# नवमाध्याये प्रथमः पादः

१

यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥

२

संस्कारे युज्यामानानां तादर्थ्यात् तत्प्रयुक्तता स्यात् ॥ २ ॥ तेन त्वर्थेन यज्ञसंयोगाद्धर्मसम्बन्धस्तस्माद् यज्ञप्रयुक्तं स्यात् संस्कारस्य तदर्थत्वात् ॥ ३ ॥

३

फलदेवतयोश्च ॥ ४ ॥ न, चोदनातो हि ताद्गुण्यम् ॥ ५ ॥

४

देवता वा प्रयोजयेदतिथिवद् भोजनस्य तदर्थत्वात् ॥ ६ ॥ अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्यात् गुणत्वेन देवताश्रुतिः ॥ ७ ॥ अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात् तस्य प्रीतिविधानत्वात् ॥ ८ ॥

५

द्रव्यसङ्ख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥ ९ ॥ अर्थकारिते च द्रव्येण न व्यवस्था स्यात् ॥ १० ॥ अर्थो वा स्यात् प्रयोजनमितरेषामचोदनार्थस्य गुणभूतत्वात् ॥ ११ ॥ तत्प्रयुक्तत्वे च धर्मस्य सर्वविषयत्वम् ॥ १२ ॥ तद्युक्तस्येति चेन्नाश्रुतत्वात् ॥ १३ ॥ अधिकारादिति चेत् तुल्येषु नाधिकारस्स्यादचोदितश्च सम्बन्धः पृथक्सतां यज्ञार्थेन सम्बन्धः तस्माद्यज्ञः प्रयोजनम् ॥ १४ ॥

६

देशबद्धमुपांशुत्वं तेषां स्यात् श्रुतिनिर्देशात् तस्य च तत्र भावात् ॥ १५ ॥ यज्ञस्य वा तत्संयोगात् ॥ १६ ॥ अर्थवादश्च तदर्थवत् ॥ १७ ॥ प्रणीतादि तथेति चेन्न यज्ञस्याश्रुतित्वात् ॥ १८ ॥ तद्देशानां वा सङ्घातस्याचोदितत्वात् ॥ १९ ॥

७

अग्निधर्मः प्रतीष्टकं सङ्घातात् पौर्णमासीवत् ॥ २० ॥ अग्नेर्वास्याद्द्रव्यैकत्वादितरासां तदर्थत्वात् ॥ २१ ॥ चोदनासमुदायात्तु पौर्णमास्यां तथात्वं स्यात् ॥ २२ ॥

८

पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् ॥ २३ ॥ लिङ्गाद्वा प्रागुत्तमात् ॥ २४ ॥ अर्थवादो वा यथा दीक्षा नक्तं संस्थापनस्य ॥ २५ ॥ स्याद्वानारभ्य विधानादन्त्ये लिङ्गविरोधात् ॥ २६ ॥

९

अभ्यासस्सामिधेनीनां प्राथम्यात् स्थानधर्मस्स्यात् ॥ २७ ॥

१०

इष्ट्यावृत्तौ प्रयाजवदावर्तेतारम्भणीया ॥ २८ ॥ सकृद्वारम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात् ॥ २९ ॥

११

अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावस्स्यात् तत्राचोदितमप्राप्तञ्चोदिताभिधानात् ॥ ३० ॥ ततश्चावचनं तेषामितरार्थं प्रयुज्येत ॥ ३१ ॥

१२

गुणशब्दस्तथेति चेन्न समवायात् ॥ ३२ ॥

१३

चोदिते तु परार्थत्वाद्विधिवदविकारस्स्यात् ॥ ३३ ॥ विकारस्तत्प्रधाने स्यात् ॥ ३४ ॥

१४

विकारस्तत्प्रधाने स्यात् ॥ ३५ ॥

१५

असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥ ३६ ॥ कर्माभावादेवमिति चेन्न परार्थत्वात् ॥ ३७ ॥

१६

लिङ्गविशेषनिर्देशात् समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात् ॥ ३८ ॥ पश्वभिधानाद्वा तद्धि चोदनाभूतं पुंविषयं पुनः पशुत्वम् ॥ ३९ ॥ विशेषो वा तदर्थनिर्देशात् ॥ ४० ॥ पशुत्वं चैकशब्द्यात् ॥४१॥ यथोक्तं वा सन्निधानात् ॥ ४२॥

१७

आम्नातादन्यदधिकारे वचनात्तद्विकारस्स्यात् ॥ ४३ ॥ द्वैधं वा तुल्यहेतुत्वात् सामानाध्यौद्विकल्पस्स्यात् ॥ ४४ ॥ उपदेशाच्च साम्नः ॥ ४५ ॥ नियमो वा श्रुतिविशेषादितरत्साप्तदश्यवत् ॥ ४६ ॥

१८

अप्रगाणाच्छब्दान्यत्वे तथाभूतोपदेशात् ॥ ४७ ॥ यत्स्थाने वा तद्गीतिस्स्यात् पदान्यत्वप्रधानत्वात् ॥ ४८ ॥ गानसंयोगाच्च ॥ ४९ ॥ वचनमिति चेन्न तत्प्रधानत्वात् ॥ ५० ॥

इति नवमाध्याये प्रथमः पादः ॥ ( तत्राधिकरणानि १८, सूत्राणि ५० )

## द्वितीयः पादः

१

सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ १ ॥ तदुक्तदोषम् ॥ २ ॥

इति प्रथमं वर्णकम् ॥

द्वितीयं वर्णकम् ॥

सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ तदुक्तदोषम् ॥

इति द्वितीयं वर्णकम् ॥

३

कर्म वा विधिलक्षणम् ॥ ३ ॥ तदृग्द्रव्यं वचनात् पाकयज्ञवत् ॥ ४ ॥ तत्राविप्रतिषिद्धो द्रव्यान्तरे व्यतिरेकः प्रदेशश्च ॥ ५॥ शब्दार्थत्वात्तु नैवं स्यात् ॥ ६॥ असम्बन्धश्च कर्मणा शब्दयोः पृथगर्थत्वात् ॥ ७ ॥ संस्कारस्त्वप्रकरणेऽग्निवत्स्यात्

प्रयुक्तत्वात् ॥ ८ ॥ अकार्यत्वाच्च शब्दानामप्रयोगः प्रतीयेत ॥ ९ ॥ आश्रितत्वाच्च ॥ १० ॥ प्रयुज्यत इति चेद् ग्रहणार्थं प्रयुज्येत ॥ ११ ॥

४

तृचे स्याच्छ्रुतिनिर्देशात् ॥ १२ ॥ शब्दार्थत्वाद्विकारस्य ॥ १३ ॥ वाक्यानान्तु विभक्तत्वात्प्रतिशब्दं समाप्तिस्स्यात् संस्कारस्य तदर्थत्वात् ॥ १४ ॥ तथाचान्यार्थदर्शनम् ॥ १५ ॥ उपदेशश्च तद्वत् ॥ १६ ॥ अभ्यासेनेतरा श्रुतिः ॥ १७ ॥

५

तदभ्यासस्समासु स्यात् ॥ १८ ॥ लिङ्गदर्शनाच्च ॥ १९ ॥

६

नैमित्तिकन्तूत्तरात्वमानन्तर्यात् प्रतीयेत ॥२०॥ ऐकार्थ्याच्च तदभ्यासः ॥२१॥

७

प्रागाथिकन्तु स्वे प्रगाथे ॥ २२ ॥ लिङ्गदर्शनाव्यतिरेकाच्च ॥ २३ ॥

८

एकार्थत्वाद्विकल्पस्स्यात् ॥ २४ ॥

९

अर्थैकत्वाद्विकल्पस्स्यात् ऋक्सामयोस्तत्परत्वात् ॥ २५ ॥ वचनाद्विनियोगस्स्यात् ॥ २६ ॥

१०

सामप्रदेशे विकारस्तदपेक्षस्स्याच्छास्त्रकृतत्वात् ॥ २७ ॥ वर्णे तु बादरिर्यथाद्रव्यं व्यतिरेकात् ॥ २८ ॥

११

स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् ॥ २९ ॥ सर्वातिदेशात्तु सामान्यात् लोकवद्विकारस्स्यात् ॥ ३० ॥ अन्वयञ्चापि दर्शयति ॥ ३१ ॥ निवृत्तिर्वार्थलोपात् स्यात् ॥ ३२ ॥ अन्वयो वार्थवादत्वात् ॥ ३३ ॥

१२

अधिकञ्च विवर्णञ्च जैमिनिस्तोभशब्दत्वात् ॥ ३४ ॥

१३

धर्मस्यार्थकृतत्वाद् द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनानुबन्धस्समवायात् ॥ ३५ ॥

१४

तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात् स्यात् ॥ ३६ ॥ आवेशो वार्थधर्मत्वात् संस्कारस्य तदर्थत्वात् ॥ ३७ ॥ आख्या चैवं तदावेशाद् विकृतौ स्यादपूर्ववत् ॥ ३८ ॥

१५

परार्थे त्वर्थासामान्यात् संस्कारस्य तदर्थत्वात् ॥ ३९ ॥ क्रियेरन्वार्थनिर्वृत्तेः ॥ ४० ॥

१६

एकार्थत्वादविभागस्स्यात् ॥ ४१ ॥ निर्देशाद्वा व्यवतिष्ठेरन् ॥ ४२ ॥

१७

अप्राकृते तद्विकाराद्विरोधाद् व्यवतिष्ठेरन् ॥ ४३ ॥

१८

उभयसाम्नि चैवमेकार्थापत्तेः ॥ ४४ ॥ स्वार्थत्वाद्वा व्यवस्था स्यात् प्रकृतिवत् ॥ ४५ ॥

१९

पार्वणहोमयोस्त्वप्रवृत्तिस्समुदायार्थसंयोगादभीज्या हि ॥ ४६ ॥ कालस्येति चेन्नाप्रकरणत्वात् ॥ ४७ ॥ मन्त्रवर्णाच्च ॥ ४८ ॥ तदभावेऽग्निवदिति चेन्नाधिकारित्वात् ॥ ४९ ॥ उभयोरविशेषात् ॥ ५० ॥ यदभीज्या वा तद्विषयौ ॥ ५१ ॥

२०

प्रयाजेऽपीति चेन्नाचोदितत्वात् ॥ ५२ ॥

इति नवमाध्याये द्वितीयः पादः ॥ ( तत्राधिकरणानि २०, सूत्राणि ५२ )

## तृतीयः पादः

१

प्रकृतौ यथोत्पत्ति वचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात् ॥ १ ॥ लिङ्गदर्शनाच्च ॥ २ ॥

२

जातिनैमित्तिकं यथास्थानम् ॥ ३ ॥ अविकारमेकेऽनार्षत्वात् ॥ ४ ॥ लिङ्गदर्शनाच्च ॥ ५ ॥ विकारो वा तदुक्तहेतुत्वात् ॥६॥ लिङ्गं मन्त्रचिकीर्षार्थम् ॥७॥ नियमो वोभयभागित्वात् ॥ ८ ॥

३

लौकिके दोषसंयोगादपवृक्ते हि चोद्यते निमित्तेन प्रकृते स्यादभागित्वात् ॥ ९ ॥

४

अन्यायस्त्वविकारेणादृष्टप्रतिघातित्वादविशेषाच्च तेनास्य ॥ १० ॥ विकारो वा तदर्थत्वात् ॥ ११ ॥ अपि वा त्वन्यायसम्बन्धात् प्रकृतिवत्परेष्वपि यथार्थं स्यात् ॥ १२ ॥ यथार्थन्त्वन्यायस्याचोदितत्वात् छन्दसि यथादृष्टम् ॥ १३ ॥

५

विप्रतिपत्तौ विकल्पस्स्यात् समत्वाद्गुणे त्वन्याय्यकल्पनैकदेशत्वात् ॥१४॥ प्रकरणविशेषाच्च ॥ १५ ॥ उत्कर्षो वा द्वियज्ञवत् ॥ १६ ॥ अर्थाभावात्तु नैवं स्याद् गुणमात्रमितरत् ॥ १७ ॥ द्यावोस्तथेति चेन्नोत्पत्तिशब्दत्वात् ॥ १८ ॥

६

अपूर्वे त्वविकारोऽप्रदेशाद् प्रतीयेत ॥ १९ ॥

७

विकृतौ चापि तद्वचनात् ॥ २० ॥

८

अध्रिगुस्सवनीयेषु तद्वत् समानविधानाश्चेत् ॥ २१ ॥

९

प्रतिनिधौ चाविकारात् ॥ २२ ॥ अनाम्नानादशब्दत्वमभावाच्चेतरस्य स्यात् ॥ २३ ॥ तादर्थ्याद्वा तदाख्यं स्यात् संस्कारैरविशिष्टत्वात् ॥ २४ ॥ उक्तञ्च तत्त्वमस्य ॥ २५ ॥

१०

संसर्गिषु चार्थस्यास्थितपरिणामत्वात् ॥ २६ ॥ लिङ्गदर्शनाच्च ॥ २७ ॥

११

एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यादसर्वविषयत्वात् ॥ २८ ॥ अविकारो वा बहूनामेककर्मवत् ॥ २९ ॥ सहत्वं त्वैकध्यं स्यादेकत्वात्त्वचोऽनभिप्रेतं तत्प्रकृतित्वात् परेष्वभ्यासेन विवृद्धावभिधानं स्यात् ॥ ३० ॥

१२

मेधपतित्वं स्वामिदेवतस्य समवायात् सर्वत्र च प्रयुक्तत्वात् तस्य च न्यायनिगदत्वात् सर्वत्रैवाविकारस्स्यात् ॥ ३१ ॥ अपि वा द्विसमवायोऽअर्थान्यत्वे यथासङ्ख्यं प्रयोगस्स्यात् ॥ ३२ ॥ स्वामिनो वैकशब्द्यादुत्कर्षो देवतायां स्यात् पत्न्यां द्वितीयशब्दस्स्यात् ॥ ३३ ॥ देवता तु तदाशीष्ट्वात् सम्प्राप्तत्वात् स्वामिन्यनर्थिका स्यात् ॥ ३४ ॥ उत्सर्गाच्च भक्त्या तस्मिन् पतित्वं स्यात् ॥ ३५ ॥ एकस्तु समवायात् तस्य तल्लक्षणत्वात् ॥३६॥ संसर्गित्वाच्च तस्मात्तेन विकल्पस्स्यात् ॥३७॥ एकत्वेऽपि गुणानपायात् ॥ ३८ ॥

१३

नियमो वा बहुदेवत्ये विकारस्स्यात् ॥ ३९ ॥ विकल्पो वा प्रकृतिवत् ॥४०॥

१४

अर्थान्तरे विकारस्स्याद्देवतापृथक्त्वादेकाभिसमवायात् स्यात् ॥ ४१ ॥

इति नवमाध्याये तृतीयः पादः ॥ ( तत्राधिकरणानि १४, सूत्राणि ४१ )

## चतुर्थः पादः

१

षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वाद् गुणस्य प्रविभक्तत्वादविकारे हि तासामकार्त्स्न्येनाभिसम्बन्धो विकारान्न समासस्स्यादसंयोगाच्च सर्वाभिः ॥१॥ अभ्यासेऽपि तथेति चेन्न गुणत्वादर्थकृतत्वाच्च ॥ २ ॥ समासेऽपि तथेति चेन्नासम्भवात् ॥ ३ ॥ स्वाभिश्च वचनं प्रकृतौ तथेह स्यात् ॥ ४ ॥ वङ्क्रीणान्तु प्रधानत्वात् समासेनाभिधानं स्यात् प्राधान्यमद्ध्रिगोस्तदर्थत्वात् ॥ ५॥ तासाञ्च कृत्स्नवचनात् ॥६॥ अपि त्वसन्निपातित्वात् पत्नीवदाम्नातेनाभिधानं स्यात् ॥ ७॥ विकारस्तु प्रदेशत्वाद्यजमानवत् ॥ ८ ॥ अपूर्वत्वात् तथा पत्न्याम् ॥ ९ ॥ आम्नातस्त्वविकारात् सङ्ख्यासु सर्वगामित्वात् ॥ १० ॥ सङ्ख्या त्वेवं प्रधानं स्यात् वङ्क्रयः पुनः प्रधानम् ॥ ११ ॥ अनाम्नातवचनञ्चावचने हि वङ्क्रीणां स्यादनिर्देशः ॥ १२ ॥ अभ्यासो वा विकारात् स्यात् ॥ १३ ॥ पशुस्त्वेवं प्रधानं स्यादभ्यासस्य तन्निमित्तत्वात् तस्मात्समासशब्दस्स्यात् ॥ १४ ॥

२

अश्वस्य चतुस्त्रिंशत्तस्य वचनाद् वैशेषिकम् ॥ १५ ॥

३

तत्प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात् ॥ १६ ॥ ऋग्वा स्यादाम्नातत्वादविकल्पश्च न्याय्यः ॥ १७ ॥ तस्यान्तु वचनादैरवत् पदविकारस्स्यात् ॥ १८ ॥ सर्वप्रतिषेधो वासंयोगात् पदेन स्यात् ॥ १९ ॥

४

वनिष्ठुसन्निधानादुलूकेन वपाभिधानम् ॥ २० ॥

५

प्रशसास्याभिधानम् ॥ २१ ॥ बाहुप्रशंसा वा ॥ २२ ॥

६

श्येनशलाकश्यपकवषोरूस्रेकपर्णेष्वाकृतिवचनं प्रसिद्धसन्निधानात् ॥ २३ ॥ कार्त्स्न्यं वा स्यात्तथाभावात् ॥ २४ ॥ अध्रिगोश्च तदर्थत्वात् ॥ २५ ॥

७

प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थे हि विधीयते ॥ २६ ॥

८

धारणे च परार्थत्वात् ॥ २७ ॥ क्रियार्थत्वादितरेषु कर्म स्यात् ॥ २८ ॥

९

न तूत्पन्ने यस्य चोदनाप्राप्तकालत्वात् ॥ २९ ॥

१०

प्रदानदर्शनं श्रपणे तद्धर्म भोजनार्थत्वात् संसर्गाच्च मधूदकवत् ॥ ३० ॥ संस्कारप्रतिषेधश्च तद्वत् ॥ ३१ ॥ तत्प्रतिषेधे च तथाभूतस्य वर्जनात् ॥ ३२ ॥ अधर्मं त्वप्रदानात् प्रणीतार्थे विधानादतुल्यत्वादसंसर्गः ॥ ३३ ॥ परो नित्यानुवादस्स्यात् ॥ ३४ ॥ विहितप्रतिषेधो वा ॥ ३५ ॥ वर्जने गुणभावित्वात्तद्युक्तः प्रतिषेधस्स्यात् कारणात्केवलाशनम् ॥ ३६ ॥ व्रतधर्माच्च लेपवत् ॥ ३७ ॥ रसप्रतिषेधो वा पुरुषधर्मत्वात् ॥ ३८ ॥

११

अभ्युदये दोहापनयः स्वधर्मा स्यात्प्रवृत्तत्वात् ॥ ३९ ॥ श्रृतोपदेशाच्च ॥४०॥

१२

अपनयो वा अर्थान्तरे विधानाच्चरुपयोवत् ॥४१॥ लक्षणार्था श्रृतश्रुतिः ॥४२॥

१३

श्रयणानान्त्वपूर्वत्वात् प्रदानार्थे विधानं स्यात् ॥ ४३ ॥ गुणो वा श्रयणार्थत्वात् ॥ ४४ ॥ श्रुतेश्च तत्प्रधानत्वात् ॥ ४५ ॥ अर्थवादश्च तदर्थत्वात् ॥ ४६ ॥ संस्कारं प्रति भावाच्च तस्मादेत्वप्रदानं स्यात् ॥ ४७ ॥

१४

पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् ॥ ४८ ॥ शेषप्रतिषेधो वार्थाभावादिडान्तवत् ॥ ४९ ॥ पूर्ववत्वाच्च शब्दस्य संस्थापयतीति चाप्रवृत्ते नोपपद्यते ॥ ५० ॥ प्रवृत्तेर्यज्ञहेतुत्वात् प्रतिषेधे संस्काराणामकर्म स्यात्तत्कारितत्वात् यथा प्रयाजप्रतिषेधे ग्रहणमाज्यस्य ॥ ५१ ॥ क्रिया वा स्यादपक्छेदादकर्म सर्वहानं स्यात् ॥

१५

आज्यसंस्थाप्रतिनिधिस्स्यात् द्रव्योत्सर्गात् ॥ ५३ ॥ संस्थापयतीति चापूर्वे नोपपद्यते ॥ ५४ ॥ चोदना वा कर्मोत्सर्गादन्यैः स्यादविशिष्टत्वात् ॥ ५५ ॥ अनिज्याञ्च वनस्पतेः प्रसिद्धां तेन दर्शयति ॥५६॥ संस्था च तद्देवतत्वात् स्यात् ॥५७॥

**इति नवमाध्याये चतुर्थः पादः ॥ ( तत्राधिकरणानि १५, सूत्राणि ५७ )**

**( आहत्य नवमाध्यायेऽधिकरणानि ६७, सूत्राणि १९८ )**

समाप्तश्चाध्यायः ॥

❀ श्रीः ❀

# दशमाध्याये प्रथमः पादः

१

विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥ अपि वाभिधानसंस्कार-द्रव्यमर्थे क्रियेत तादर्थ्यात् ॥ २ ॥ तेषामप्रत्यक्षशिष्टत्वात् ॥ ३ ॥

इति प्रथमं वर्णकम् ॥ १ ॥

द्वितीयं वर्णकम् ॥

विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् ॥ १ ॥ अपि वाभिधानसंस्कार-द्रव्यमर्थे क्रियेत तादर्थ्यात् ॥ २ ॥ तेषामप्रत्यक्षशिष्टत्वात् ॥ ३ ॥

इति प्रथमाधिकरणे द्वितीयं वर्णकम् ॥

तृतीयं वर्णकम् ॥

विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥ अपि वाभिधानसंस्कार-द्रव्यमर्थे क्रियेत तादर्थ्यात् ॥ २ ॥ तेषामप्रत्यक्षशिष्टत्वात् ॥ ३ ॥

इति प्रथमाधिकरणे तृतीयं वर्णकम् ॥

२

इष्टिरारम्भसंयोगादङ्गभूतान्निवर्तेतारम्भस्य प्रधानसंयोगात् ॥ ४ ॥

३

प्रधानाच्चान्यसंयुक्तात् सर्वारम्भान्निवर्तेतानङ्गत्वात् ॥ ५ ॥

४

तस्यान्तु स्यात्प्रयाजवत् ॥ ६ ॥ न वाङ्गभूतत्वात् ॥ ७ ॥ एकवाक्य-त्वाच्च ॥ ८ ॥

५

कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्तेत तादर्थ्यं श्रुतिसंयोगात् ॥ ९ ॥

६

स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत ॥ १० ॥ अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत ॥ ११ ॥ समाख्यानञ्च तद्वत् ॥ १२ ॥ मन्त्रवर्णाच्च ॥ १३ ॥

७

प्रयाजे च तन्न्यायत्वात् ॥ १४ ॥ लिङ्गदर्शनाच्च ॥ १५ ॥

८

तथाज्यभागाग्निरपीति चेन्न व्यपदेशाद्देवतान्तरम् ॥ १६ ॥ समत्वाच्च ॥१७॥

९

पशावपीति चेन्न तद्भूतवचनात् ॥ १८ ॥ लिङ्गदर्शनाच्च ॥ १९ ॥ गुणो वा स्यात् कपालवद् गुणभूतविकाराच्च ॥ २० ॥ अपि वा शेषभूतत्वात्तत्संस्कारः प्रतियेत स्वाहाकारवदङ्गानामर्थसंयोगात् ॥ २१ ॥ व्यूद्धवचनञ्च विप्रतिपत्तौ तदर्थत्वात् ॥ २२ ॥ गुणोऽपीति चेन्नासंहानात कपालवत् ॥ २३ ॥ ग्रहणाञ्च सम्प्रतिपत्तौ तद्वचनं तदर्थत्वात् ॥ २४ ॥ ग्रहाभावे च तद्वचनम् ॥ २५ ॥ देवतायाञ्च हेतुत्वं प्रसिद्धं तेन दर्शयति ॥ २६ ॥ अविरुद्धोपपत्तिरर्थापत्तेः शृतवद् गुणभूतविकारस्स्यात् ॥ २७ ॥ स द्व्यर्थः स्यादुभयोः श्रुतिभूतत्वाद्विप्रतिपत्तौ तादर्थ्यात्तद्विकारत्वमुक्तं तस्यार्थवादत्वम् ॥ २८ ॥ विप्रतिपत्तौ तासामाख्याविकारः स्यात् ॥ २९ ॥ अभ्यासो वा प्रयाजवदेकदेशोऽन्यदेवत्यः ॥ ३० ॥

१०

चरुर्हविर्विकारः स्यादिज्यासंयोगात् ॥ ३१ ॥ प्रसिद्धग्रहणत्वाच्च ॥ ३२ ॥ ओदनो वान्नसंयोगात् ॥ ३३ ॥ न द्व्यर्थत्वात् ॥ ३४ ॥ कपालविकारो वा विशयेऽर्थोपपत्तिभ्याम् ॥ ३५ ॥ गुणमुख्यविशेषाच्च ॥ ३६ ॥ तच्छ्रुतौ चान्यहविष्ट्वात् ॥ ३७ ॥ लिङ्गदर्शनाच्च ॥ ३८ ॥ ओदनो वा प्रयुक्तत्वात् ॥ ३९ ॥ अन्यव्यपदेशाच्च ॥ ४० ॥ तथा च लिङ्गदर्शनम् ॥ ४१ ॥

११

स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात् ॥ ४२ ॥ संख्या चापि कपालवत् ॥ ४३ ॥ एकस्मिन्वा विप्रतिषेधात् ॥ ४४ ॥ न वार्थान्तरसंयोगादपूपे पाकसंयुक्तं धारणार्थञ्चासौ भवति तत्रार्थात् पात्रलाभः स्यादनियमोऽविशेषात् ॥ ४५ ॥ चरौ वा लिङ्गदर्शनात् ॥ ४६ ॥

१२

तस्मिन् पेषणमनर्थलोपात्स्यात् ॥ ४७ ॥ अक्रिया वापूपहेतुत्वात् ॥ ४८ ॥

१३

पिण्डार्थत्वाच्च संयवनम् ॥ ४९ ॥

१४

संवपनञ्च तादर्थ्यात् ॥ ५० ॥

१५

सन्तापनमधः श्रपणात् ॥ ५१ ॥

१६

उपधानञ्च तादर्थ्यात् ॥ ५२ ॥

१७

पृथुश्लक्ष्णे चापूर्वार्थत्वात् ॥ ५३ ॥

१८

अध्यूहश्चोपरिपाकार्थत्वात् ॥ ५४ ॥

१९

तथावज्वलनम् ॥ ५५ ॥

२०

व्युद्धृत्यासादनञ्च प्रकृतावश्रुतत्वात् ॥ ५६ ॥

इति दशमाध्याये प्रथमः पादः ॥ ( तत्राधिकरणानि २०, सूत्राणि ५६ )

## द्वितीयः पादः

१

कृष्णलेष्वर्थलोपादपाकः स्यात् ॥ १ ॥ स्याद्वा प्रत्यक्षशिष्टत्वात् प्रदानवत् ॥ २ ॥

२

उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म स्यात् ॥ ३ ॥ क्रियेत वार्थवादत्वात्तयोस्संसर्गहेतुत्वात् ॥ ४ ॥ अकर्म वा चतुर्भिराप्तिवचनात् सहपूर्णं पुनश्चतुरवत्तम् ॥ ५ ॥ क्रिया वा मुख्यावदानपरिमाणात् सामान्यात्तद्गुणत्वम् ॥ ६ ॥ तेषाञ्चैकावदानत्वात् ॥ ७ ॥ आप्तिस्सङ्ख्यासमत्वात् ॥ ८ ॥ सतोस्त्वाप्तिवचनम् व्यर्थम् ॥ ९ ॥ विकल्पस्त्वेकावदानत्वात् ॥ १० ॥ सर्वविकारे त्वभ्यासानर्थक्यं हविषो हीतरस्य स्यादपि वा स्विष्टकृतः स्यादितरस्यान्याय्यत्वात् ॥ ११ ॥ अकर्म वासंसर्गार्थनिवृत्तत्वात्तस्मादाप्तिसमर्थत्वम् ॥ १२ ॥

३

भक्षाणान्तु प्रीत्यर्थस्वादकर्म स्यात् ॥ १३ ॥ स्याद्वा निर्द्धानदर्शनात् ॥ १४ ॥ वचनं त्वाज्यभक्षणस्य प्रकृतौ स्यादभागित्वात् ॥ १५ ॥ वचनं वा हिरण्यस्य प्रदानवदाज्यस्य गुणभूतत्वात् ॥ १६ ॥

४

एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहृतत्वात् ॥ १७ ॥

५

सर्वत्वञ्च तेषामधिकारात्स्यात् ॥ १८ ॥ पुरुषापनयो वा तेषामवाच्यत्वात् ॥ १९ ॥

६

पुरुषापनयात् स्वकालत्वम् ॥ २० ॥

७

एकार्थत्वादविभागस्स्यात् ॥ २१ ॥

८

ऋत्विग्दानं धर्ममात्रं स्याद्दातिसामर्थ्यात् ॥ २२ ॥ परिक्रयार्थं वा कर्मसंयोगाल्लोकवत् ॥ २३ ॥ दक्षिणायुक्तवचनाच्च ॥ २४ ॥ न चान्येनानम्येत परिक्रयात् कर्मणः परार्थत्वात् ॥ २५ ॥ परिक्रीतवचनाच्च ॥ २६ ॥ सनिवन्ये च भृतिवचनात् ॥ २७ ॥ नैष्कर्तृकेण संस्तवाच्च ॥ २८ ॥

९

शेषभक्षाश्च तद्वत् ॥ संस्कारो वा द्रव्यस्य परार्थत्वात् ॥ ३० ॥ शेषे च समत्वात् ॥ ३१ ॥ स्वामिनि च दर्शनात्तत्सामान्यादितरेषु तथात्वम् ॥ ३२ ॥ तथा चान्यार्थदर्शनम् ॥ ३३ ॥

१०

वरणमृत्विजामानमनार्थत्वात् सत्रे न स्यात् स्वकर्मत्वात् ॥ ३४ ॥

११

परिक्रयश्च तादर्थ्यात् ॥ ३५ ॥ प्रतिषेधश्च कर्मवत् ॥ ३६ ॥ स्याद्वा प्रासर्पिकस्य धर्ममात्रत्वात् ॥ ३७ ॥ न दक्षिणाशब्दात्तस्मान्नित्यानुवादस्स्यात् ॥ ३८ ॥

१२

उदवसनीयस्सत्रधर्मो स्यात्तदङ्गत्वात्तत्र दानं धर्ममात्रं स्यात् ॥ ३९ ॥ न त्वतत्प्रकृतित्वाद्विभक्तचोदितत्वात् ॥ ४० ॥

१३

तेषान्तु वचनाद् द्वियज्ञवत् सहप्रयोगस्स्यात् ॥ ४१ ॥ तत्रान्यानृत्विजो वृणीरन् ॥ ४२ ॥

१४

एकैकशस्त्वविप्रतिषेधात् प्रकृतेश्चैकसंयोगात् ॥ ४३ ॥

१५

कामेष्टौ च दानशब्दात् ॥ ४४ ॥ वचनं वा सत्रित्वात् ॥ ४५ ॥

१६

द्वेष्ये वाचोदनार्दक्षिणापनयस्स्यात् ॥ ४६ ॥

१७

अस्थियज्ञोऽविप्रतिषेधादितरेषां स्याद्विप्रतिषेधादस्थ्नाम् ॥ ४७ ॥ याव-दुत्तरमुपयोगस्स्यात् ॥ ४८ ॥

१८

यदि तु वचनात्तेषां जपसंस्कारमर्थलुप्तं सेष्टि तदर्थत्वात् ॥ ४९ ॥

१९

क्रत्वर्थन्तु क्रियेत गुणभूतत्वात् ॥ ५० ॥

२०

काम्यानि तु न विद्यन्ते कामाज्ञानाद्यथेतरस्यानुच्यमानानि ॥ ५१ ॥

२१

इहार्थाश्चाभावात् सूक्तवाकवत् ॥ ५२ ॥ स्युर्वार्थवादत्वात् ॥ ५३ ॥ नेत्क्ता-भिधानात्तदभावादितरस्मिन् ॥ ५४ ॥

२२

स्युर्वा होतृकामाः ॥ ५५ ॥ न तदाशीष्ट्वात् ॥ ५६ ॥

२३

सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात् ॥ ५७ ॥ स्याद्वोभयोः प्रत्यक्षशिष्टत्वात् ॥ ५८ ॥

२४

गते कर्मास्थितयज्ञवत् ॥ ५९ ॥

२५

जीवतोऽवचनमायुराशिषस्तदर्थत्वात् ॥ ६० ॥ वचनं वा भागित्वादाभ-वात्प्राग्यथोक्तात् ॥ ६१ ॥

२६

क्रिया स्याद्धर्ममात्राणाम् ॥ ६२ ॥

२७

गुणलोपेऽपि मुख्यस्य ॥ ६३ ॥

२८

मुष्टिलोपात्तु चतुष्ट्वसङ्ख्यालोपस्तद्गुणत्वात् स्यात् ॥ ६४ ॥ न निर्वाप-शेषत्वात् ॥ ६५ ॥ सङ्ख्या तु चोदनां प्रति सामान्यात्तद्विकारस्संयोगाच्च परं मुष्टेः ॥ ६६ ॥ न चोदनाभिसम्बन्धात् प्रकृतौ संस्कारयोगात् ॥ ६७ ॥

२९

औत्पत्तिके तु द्रव्यतो विकारस्स्यादकार्यत्वात् ॥ ६८ ॥

३०

नैमित्तिके तु कार्यत्वात् प्रकृतेस्स्यात्तदापत्तेः ॥ ६९ ॥

३१

विप्रतिषेधे तद्वचनात् प्राकृतगुणलोपस्स्यात्तेन च कर्मसंयोगात् ॥ ७० ॥

३२

परेषां प्रतिषेधस्स्यात् ॥ ७१ ॥ विप्रतिषेधाच्च ॥ ७२ ॥

३३

अर्थाभावेऽसंस्कारार्थं स्यात् ॥ ७३ ॥

३४

अर्थेन च विपर्यासे तादर्थ्यात्तत्वमेव स्यात् ॥ ७४ ॥

इति दशमाध्याये द्वितीयः पादः ॥ ( तत्राधिकरणानि ३४, सूत्राणि ७४ )

# तृतीयः पादः

१

विकृतौ शब्दवत्त्वात्प्रधानस्य गुणानामधिकोत्पत्तिस्सन्निधानात् ॥ १ ॥ प्रकृतिवत्तस्य चानुपरोधः ॥ २ ॥ चोदना प्रभुत्वाच्च ॥ ३ ॥ प्रधानन्त्वङ्गसंयुक्तं तथाभूतमपूर्वं स्यात्तस्य विध्युपलक्षणात् सर्वो हि पूर्ववान्विधिरविशेषात्प्रवर्तितः ॥ ४ ॥ न चाङ्गविधिरनङ्गे स्यात् ॥ ५ ॥ कर्मणश्चैकशब्द्यात् सन्निधाने विधेराख्या-संयोगो गुणेन तद्विकारस्स्यात् शब्दस्य विधिगामित्वाद् गुणस्य चोपदेश्यत्वात् ॥ ६ ॥ अकार्यत्वाच्च नाम्नः ॥ ७ ॥ तुल्या च प्रभुता गुणे ॥ ८ ॥ सर्वमेवं प्रधान-मिति चेत्तथाभूतेन संयोगाद्यथार्थं विधयः स्युः ॥ ९ ॥ विधित्वं चाविशिष्टं प्राकृतानां वैकृतैः कर्मणा योगात्तस्मात् सर्वं प्रधानार्थम् ॥ १० ॥ समत्वाच्च तदुत्पत्तेस्संस्कारैरधिकारस्स्यात् ॥ ११ ॥

२

हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् ॥ १२ ॥ प्रकृत्यनुपरोधाच्च ॥ १३ ॥ उत्तरस्य वा मन्त्रार्थत्वात् ॥ १४ ॥ विध्यतिदेशात्तच्छ्रुतौ विकारस्स्याद् गुणानामुपदेश्य-त्वात् ॥ १५ ॥ पूर्वस्मिंश्चामन्त्रत्वदर्शनात् ॥ १६ ॥

३

संस्कारे तु क्रियान्तरं तस्य विधायकत्वात् ॥ १७ ॥ प्रकृत्यनुपरोधाच्च ॥१८॥ विधेस्तु तत्र भावात् सन्देहे यस्य शब्दस्तदर्थः स्यात् ॥ १९ ॥ संस्कारसामर्थ्याद् गुणसंयोगाच्च ॥ २० ॥ विप्रतिषेधात् क्रियाप्रकरणे स्यात् ॥ २१ ॥

४

षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुतिसंयोगात् ॥ २२ ॥ अभ्यासात्तु प्रधानस्य ॥ २३ ॥ आवृत्त्या मन्त्रकर्म स्यात् ॥ २४ ॥ अपि वा प्रतिमन्त्रत्वात्

प्राकृतानामहानं स्यादन्याग्यश्च कृतेऽभ्यासः ॥ २५ ॥ पौर्वापर्याच्चाभ्यासे नोपपद्यते नैमित्तिकत्वात् ॥ २६ ॥ तत्पृथक्त्वञ्च दर्शयति ॥ २७ ॥ न चाविशेषाद्-व्यपदेशस्स्यात् ॥ २८ ॥

५

अग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद्वाक्यसंयोगात् ॥ २९ ॥ शिष्टत्वाच्चेतरासां यथास्थानम् ॥ ३० ॥ विकारस्त्वप्रकरणे हि काम्यानि ॥ ३१ ॥ शङ्कते च निवृत्तेरुभयत्वं हि श्रूयते ॥ ३२ ॥

६

वासोवत्सञ्च सामान्यात् ॥ ३३ ॥

७

अर्थापत्तेस्तद्धर्मं स्यान्निमित्ताख्याभिसंयोगात् ॥ ३४ ॥

८

दाने पाकोऽर्थलक्षणः ॥ ३५ ॥

९

पाकस्य चान्नकारितत्वात् ॥ ३६ ॥

१०

तथाभिधारणस्य वासोवत्से ॥ ३७ ॥

११

द्रव्यविधिसन्निधौ सङ्ख्या तेषां गुणत्वात्स्यात् ॥ ३८ ॥ समत्वात्तु गुणानामेकस्य श्रुतिसंयोगात् ॥ ३९ ॥ यस्य वा सन्निधाने स्याद्वाक्यतो ह्यभिसम्बन्धः ॥ ४० ॥ असंयुक्ता तु तुल्यवदितराभिर्विधीयन्ते तस्मात् सर्वाधिकारस्स्यात् ॥ ४१ ॥ असंयोगाद्विधिश्रुतावेकजाताधिकारस्स्यात् श्रुत्यकोपात् क्रतोः ॥ ४२ ॥ शब्दार्थश्चापि लोकवत् ॥ ४३ ॥ सा पशूनामुत्पत्तितो विभागात् ॥ ४४ ॥ अनियमो विशेषात् ॥ ४५ ॥ भागित्वाद्वा गवां स्यात् ॥ ४६ ॥ प्रत्ययात ॥ ४७ ॥ लिङ्ग-दर्शनाच्च ॥ ४८ ॥

१२

तत्र दानं विभागेन प्रदानानां पृथक्त्वात् ॥४९॥ परिक्रयाच्च लोकवत् ॥५०॥ विभागञ्चापि दर्शयति ॥ ५१ ॥

१३

सम स्यादश्रुतित्वात् ॥ ५२ ॥ अपि वा कर्मकृतं वैषम्यम् ॥ ५३ ॥ अतुल्यास्स्युः परिक्रये विषमाख्या विधिश्रुतौ परिक्रयान्न कर्मण्युपपद्यते दर्शनाद्विशेषस्य तथाभ्युदये ॥ ५४ ॥

१४

तस्य धेनुरिति गवां प्रकृतौ विभक्तचोदितत्वात् सामान्यात्तद्विकारस्स्याद्यथेष्टिर्गुणशब्देन ॥ ५५ ॥ सर्वस्य वा क्रतुसंयोगादेकत्वाद् दक्षिणार्थस्य गौणानाञ्चार्थैकत्वादर्थे विकृतौ श्रुतिभूता स्यात्तत्समवाये हि कर्मभिः ॥ ५६ ॥ चोदनानामनाश्रयाल्लिङ्गेन नियमस्स्यात् ॥ ५७ ॥

१५

एकां पञ्चेति धेनुवत् ॥ ५८ ॥

१६

त्रिवत्सश्च ॥ ५९ ॥ तथा च लिङ्गदर्शनम् ॥ ६० ॥

( पञ्चदशाधिकरणशेषः )

एके तु श्रुतिभूतत्वात् सङ्ख्यया गवां लिङ्गविशेषेण ॥ ६१ ॥

१७

प्राकाशौ च तथेति चेत् अपि त्ववयवार्थत्वाद्विभक्तप्रकृतित्वाद् गुणेदन्ताविकारस्स्यात् ॥ ६२ ॥

१८

धेनुवच्चाश्वदक्षिणा स ब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य ॥ ६३ ॥ एके तु कर्तृसंयोगात् स्रग्वत्तस्य लिङ्गविशेषेण ॥ ६४ ॥ अपि वा तदधिकाराद्धिरण्यवद्विकारस्स्यात् ॥ ६५ ॥

१९

तथा च सोमचमसः ॥ ६६ ॥ सर्वविकारो वा क्रत्वर्थे प्रतिषेधात् पशूनाम् ॥ ६७ ॥ ब्रह्मदानेऽविशिष्टमिति चेदुत्सर्गस्य क्रत्वर्थत्वात् प्रतिषिद्धस्य कर्म स्यान्न च गौणः प्रयोजनमर्थस्स दक्षिणानां स्यात् ॥ ६८ ॥ यदि तु ब्रह्मणस्तदूनं तद्विकारस्स्यात् ॥ ६९ ॥ सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् ॥ ७० ॥

२०

यजुर्युक्ते त्वध्वर्योर्दक्षिणाविकारस्स्यात् ॥ ७१ ॥ अपि वा श्रुतिभूतत्वात् सर्वासां तस्य भागो नियम्येत ॥ ७२ ॥

इति दशमाध्याये तृतीयः पादः ॥ ( तत्राधिकरणानि २०, सूत्राणि ७२ )

## चतुर्थः पादः

१

प्रकृतिलिङ्गासंयोगात् कर्म संस्कारं विकृतावधिकं स्यात् ॥ १ ॥ चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतसन्निधानात् ॥ २ ॥

२

चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् ॥ २ ॥

३

सर्वत्र प्रहाम्नानमधिकं स्यात् ॥ ३ ॥ अधिकैश्चैकवाक्यत्वात् ॥ ४ ॥ लिङ्गदर्शनाच्च ॥ ५ ॥

४

प्रजापत्येषु चाम्नानात् ॥ ६ ॥

५

आमने लिङ्गदर्शनात् ॥ ७ ॥

६

उपगेषु शरवत् स्यात् प्रकृतिलिङ्गसंयोगात् ॥ ८ ॥ आनर्थक्यात्त्वधिकं स्यात् ॥ ९ ॥

७

संस्कारे चान्यसंयोगात् ॥ १० ॥ प्रयाजवदिति चेन्नार्थान्यत्वात् ॥ ११ ॥

८

आच्छादने त्वैकार्थ्यात् प्राकृतस्य विकारस्स्यात् ॥ १२ ॥ अधिकं वान्यार्थत्वात् ॥ १३ ॥ समुच्चयञ्च दर्शयति ॥ १४ ॥

९

सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत ॥ १५ ॥

१०

अर्थे त्वश्रूयमाणे शेषत्वात् प्राकृतस्य विकारस्स्यात् ॥ १६ ॥

११

सर्वेषामविशेषात् ॥ १७ ॥ एकस्य वा श्रुतिसामर्थ्यात् प्रकृतेश्चाविकारस्स्यात् ॥ १८ ॥

१२

स्तोमविवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारस्स्यादितरस्याश्रुतत्वात् ॥ १९ ॥

१३

पवमाने स्यातां तस्मिन्नावापोद्धारदर्शनात् ॥ २० ॥ वचनानि त्वपूर्वत्वात् ॥ २१ ॥

१४

विधिशब्दस्य मन्त्रत्वे भावस्स्यात्तेन चोदना ॥ २२ ॥ शेषाणां चोदनैकत्वात्तस्मात् सर्वत्र श्रूयते ॥ २३ ॥

१५

तथोत्तरस्यां ततौ तत्प्रकृतित्वात् ॥ २४ ॥

१६

प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् ॥ २५ ॥ अविकारो वार्थशब्दानपायात्स्याद् द्रव्यवत् ॥ २६ ॥ आरम्भसमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशास्त्रमनर्थकं स्यात् ॥ २७ ॥ द्रव्येष्वारम्भगामित्वादर्थेऽविकारस्सामर्थ्यात् ॥ २८ ॥

१७

वृधन्वान् पवमानवद्विशेषनिर्देशात् ॥ २९ ॥ मन्त्रविशेषनिर्देशान्न देवताविकारस्स्यात् ॥ ३० ॥

१८

विधिनिगमभेदात् प्रकृतौ तत्प्रकृतित्वाद्विकृतावपि भेदः स्यात् ॥ ३१ ॥ यथोक्तं वा विप्रतिपत्तेरचोदनात् ॥ ३२ ॥

१९

स्विष्टकृद्देवतान्यत्वात्तच्छब्दत्वान्निवर्तेत ॥ ३३ ॥ संयोगो वार्थापत्तेरभिधानस्य कर्मजत्वात् ॥ ३४ ॥

२०

सगुणस्य गुणलोपे निगमेषु यावदुक्तं स्यात् ॥ ३५ ॥ सर्वस्य वैककर्म्यात् ॥ ३६ ॥

२१

स्विष्टकृदावापिकोऽनूयाजे स्यात् प्रयोजनवदङ्गानामर्थसंयोगात् ॥ ३७ ॥

२२

अन्वाहेति च शस्त्रवत् कर्म स्याचोदनान्तरात् ॥ ३८ ॥ संस्कारो वा चोदितस्य शब्दवचनार्थत्वात् ॥ ३९ ॥ अवाच्यत्वान्नेति चेत् स्याद् गुणार्थत्वात् ॥ ४० ॥

२३

मनोतायान्तु वचनादविकारस्स्यात् ॥ ४१ ॥

२४

पृष्ठार्थेऽन्यद्रथन्तरात्तद्योनिः पूर्ववत्वात् स्यादृचां प्रविभक्तत्वात् ॥ ४२ ॥ स्वयोनौ वा सर्वाख्यत्वात् ॥ ४३ ॥ यूपवदिति चेन्न कर्मसंयोगात् ॥ ४४ ॥

२५

कार्यत्वादुत्तरयोर्यथाप्रकृति ॥४५॥ समानदेवते वा तृचस्याविभागात् ॥४६॥

२६

ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारस्स्यात् ॥ ४७ ॥

२७

उभयपानात् पृषदाज्ये दध्नोऽपि स्यादुपलक्षणं निगदेषु पातव्यस्योपलक्षणत्वात् ॥ ४८ ॥ न वा परार्थत्वाद्यज्ञपतिवत् ॥४९॥ स्याद्वावाहनस्य तादर्थ्यात् ॥५०॥ न वा संस्कारशब्दत्वात् ॥ ५१ ॥ स्याद्वा द्रव्याभिधानात् ॥ ५२ ॥ दध्नस्तु गुणभूतत्वादाज्यपा निगमास्स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात् ॥ ५३ ॥ दधि वा स्यात् प्रधानमाज्ये प्रथमान्त्यसंयोगात् ॥ ५४ ॥

अपि वाऽप्रधानत्वाद् गुणार्थे व्यपदेशे भक्त्या संस्कारशब्दस्स्यात् ॥ ५५ ॥ अपि वाख्याविकारत्वात्तेन स्यादुपलक्षणम् ॥ ५६ ॥ न वा स्याद् गुणशास्त्रत्वात् ॥ ५७ ॥

इति दशमाध्याये चतुर्थः पादः ॥ ( तत्राधिकरणानि २७, सूत्राणि ५७ )

## पञ्चमः पादः

१

आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपस्स्यात् ॥ १ ॥ लिङ्गदर्शनाच्च ॥ २ ॥ विकल्पो वा समत्वात् ॥ ३ ॥ क्रमादुपजनोऽन्ते स्यात् ॥ ४ ॥ लिङ्गमविशिष्टं संख्याया हि तद्वचनम् ॥ ५ ॥ आदितो वा प्रवृत्तिस्स्यादारम्भस्य तदादित्वाद्वचनादन्त्यविधिस्स्यात् ॥ ६ ॥

२

एकत्रिके तृचादिषु माध्यन्दिने च्छन्दसां श्रुतिभूतत्वात् ॥ ७ ॥ आदितो वा तन्न्यायत्वादितरस्यानुमानिकत्वात् ॥ ८ ॥ यथानिवेशञ्च प्रकृतिवत् सङ्ख्यामात्रविकारत्वात् ॥ ९ ॥

३

त्रिकं तृचे धुर्ये स्यात् ॥ १० ॥ एकस्यां वा स्तोमस्यावृत्तिधर्मत्वात् ॥ ११ ॥

४

चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमस्स्यात् ॥ १२ ॥ प्राप्तिस्तु रात्रिशब्दसम्बन्धात् ॥ १३ ॥

५

अपूर्वासु तु सङ्ख्यासु विकल्पस्स्यात् सर्वासामर्थवत्त्वात् ॥ १४ ॥

६

स्तोमविवृद्धौ प्राकृतानामभ्यासेन सङ्ख्यापूरणमधिकारात् सङ्ख्याया गुणशब्दत्वादन्यस्य चाश्रुतित्वात् ॥ १५ ॥ आगमेन वाभ्यासस्याश्रुतत्वात् ॥ १६ ॥ सङ्ख्यायाश्च पृथक्त्वनिवेशात् ॥ १७ ॥ पराक् शब्दात् ॥ १८ ॥ उक्ताविकाराच्च ॥ १९ ॥ अश्रुतत्वान्नेति चेत् स्यादर्थचोदितानां परिमाणशास्त्रम् ॥ २० ॥ आवापवचनञ्चा-

भ्यासे नोपपद्यते ॥ २१ ॥ सन्नाम्नोत्पत्तिसामर्थ्यात् ॥ २२ ॥ धुर्यष्वपीति चेन्नावृत्तिधर्मत्वात् ॥ २३ ॥

७

बहिष्पवमाने तु ऋगागमस्सामैकत्वात् ॥ २४ ॥

८

अभ्यासेन सङ्ख्यापूरणं सामिधेनीष्वभ्यासप्रकृतित्वात् ॥ २५ ॥ अविशेषान्नेति चेत् स्यात्तद्धर्मत्वात् प्रकृतिवदभ्यस्येता सङ्ख्यापूरणात् ॥ २६ ॥ यावदुक्तं वा कृतपरिमाणत्वात् ॥ २७ ॥ अधिकानाञ्च दर्शनात् ॥ २८ ॥ कर्मस्वपीति चेन्न चोदितत्वात् ॥ २९ ॥

९

षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् ॥ ३० ॥ प्रकृतौ चाभावदर्शनात् ॥ ३१ ॥ अयज्ञवचनाच्च ॥ ३२ ॥ प्रकृतौ वा शिष्टत्वात् ॥ ३३ ॥ प्रकृतिदर्शनाच्च ॥ ३४ ॥ आम्नानं परिसङ्ख्यार्थम् ॥ ३५ ॥ उक्तमभावदर्शनम् ॥ ३६ ॥ गुणादयज्ञत्वम् ॥ ३७ ॥

१०

तस्याग्रयणाद् ग्रहणम् ॥ ३८ ॥ उक्थ्याच्च वचनात् ॥ ३९ ॥

११

तृतीयसवने वचनात् स्यात् ॥४०॥ अनभ्यासे पराक् शब्दस्तादर्थ्यात् ॥४१॥ उक्थ्यविच्छेदवचनाच्च ॥ ४२ ॥ आग्रायणाद्वा पराक्शब्दस्य देशवाचित्वात् पुनराधेयवत् ॥ ४३ ॥ विच्छेदस्तोमसामान्यात् ॥ ४४ ॥

१२

उक्थ्याग्निष्टोमसंयोगादस्तुतशास्त्रस्स्यात् सति हि संस्थान्यत्वम् ॥ ४५ ॥ सस्तुतशस्त्रो वा तदङ्गत्वात् ॥ ४६ ॥ लिङ्गदर्शनाच्च ॥ ४७ ॥ वचनात् संस्थान्यत्वम् ॥ ४८ ॥

१३

अभावादतिरात्रेषु गृह्यते ॥ ४९ ॥ अन्वयो वानारभ्यविधानात् ॥ ५० ॥

१४

चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयेत भोजनवत् ॥ ५१ ॥ अपि वा सङ्ख्यावत्वान्नानाहीनेषु गृह्येत पक्षवदेकस्मिन् सङ्ख्यार्थभावात् ॥ ५२ ॥ भोजने सङ्ख्यावत्वात् ततोऽपि सङ्ख्या स्यात् ॥ ५३ ॥

१५

जगत्साम्नि सामाभावादृक्स्साम तदाख्यं स्यात् ॥ ५४ ॥

१६

उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात् स्यात् ॥ ५५ ॥ मुख्येन वा नियम्येत ॥ ५६ ॥ निमित्तविघाताद्वा क्रतुयुक्तस्य कर्म स्यात् ॥ ५७ ॥

१७

ऐन्द्रवायवस्याग्रतावचनादादितः प्रतिकर्षस्स्यात् ॥ ५८ ॥ अपि वा धर्मविशेषात्तद्धर्माणां स्वस्थाने प्रकरणादग्रत्वमुच्यते ॥ ५९ ॥ धारासंयोगाच्च ॥ ६० ॥

१८

कामसंयोगे वचनादादितः प्रतिकर्षः स्यात् ॥ ६१ ॥ तद्देशानां वाग्रसंयोगात् तद्युक्ते कामशास्त्रं स्यान्नित्यसंयोगात् ॥ ६२ ॥

१९

परेषु चाग्रशब्दः पूर्ववत् स्यात् तदादिषु ॥ ६३ ॥ प्रतिकर्षो वा नित्यार्थेनाग्रस्य तदसंयोगात् ॥ ६४ ॥ प्रतिकर्षञ्च दर्शयति ॥ ६५ ॥

२०

पुरस्तादैन्द्रवायस्याग्रस्य कृतदेशत्वात् ॥ ६६ ॥ तुल्यधर्मत्वाच्च ॥ ६७ ॥ तथा च लिङ्गदर्शनम् ॥ ६८ ॥

२१

सादनञ्चाविशेषात् ॥ ६९ ॥ लिङ्गदर्शनाच्च ॥ ७० ॥

२२

प्रदानं चापि सादनवत् ॥ ७१ ॥ न वा प्रधानत्वाच्छेषत्वात् सादनं तथा ॥ ७२ ॥

२३

त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात् ॥ ७३ ॥ अपि वाहर्गणेष्वग्निवत् समानविधानं स्यात् ॥ ७४ ॥

२४

द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत्समानविधानं स्यात् ॥ ७५ ॥ व्यूढो वा लिङ्गदर्शनात् समूढविकारस्स्यात् ॥ ७६ ॥ तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ ७७ ॥

२५

एकादशिनीवत् त्र्यनीकापरिवृत्तिस्स्यात् ॥ ७८ ॥ स्वस्थानविवृद्धिर्वाह्नाम-प्रत्यक्षसङ्ख्यत्वात् ॥ ७९ ॥ पृष्ठ्यावृत्तौ चाग्रयणस्य दर्शनात् त्रयस्त्रिंशे परिवृत्तौ पुनरैन्द्रवायवस्स्यात् ॥ ८० ॥ वचनात् परिवृत्तिरैकादशिनेषु ॥ ८१ ॥ लिङ्ग-दर्शनाच्च ॥ ८२ ॥

२६

छन्दोऽव्यतिक्रमाद् व्यूढे भक्षकपालपवनमानपरिधिमन्त्राणां यथार्शक्ति वचनमूहवत् स्यात् ॥ ८३ ॥

इति दशमाध्याये पञ्चमः पादः ॥ ( तत्राधिकरणानि २६, सूत्राणि ८३ )

## षष्ठः पादः

१

एकर्चस्थानि यज्ञे स्युः स्वाध्यायवत् ॥ १ ॥ तृचे वा लिङ्गदर्शनात् ॥ २ ॥

२

स्वदृंशं प्रति वीक्षणं कालमात्रं परार्थत्वात् ॥ ३ ॥

३

पृष्ठ्यस्य युगपद्विधेरेकाहवद्द्विसामत्वम् ॥ ४ ॥ विभक्ते वासमस्तविधा-नात् तद्विभागेऽविप्रतिषिद्धम् ॥ ५ ॥

४

समासस्त्वैकादशिनेषु तत्प्रकृतित्वात् ॥ ६ ॥ विहारप्रतिषेधाच्च ॥ ७ ॥ श्रुतितो वा लोकवद्विभागस्स्यात् ॥ ८ ॥ विहारप्रकृतित्वाच्च ॥ ९ ॥ विशये च तदासक्तेः ॥ १० ॥ त्रयस्तथेति चेन्न समत्वात् प्रयाजवत् ॥ ११ ॥

५

सर्वपृष्ठे पृष्ठशब्दात् तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वात् ॥ १२ ॥ विधेस्तु विप्रकर्षस्स्यात् ॥ १३ ॥

६

वैरूपसामा क्रतुसंयोगात् त्रिवृद्वदेकसामा स्यात् ॥ १४ ॥ पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात् ॥ १५ ॥ त्रिवृद्वदिति चेन्न प्रकृतावकृत्स्नसंयोगात् ॥ १६ ॥ विधित्वान्नेति चेत् स्याद्विशये तन्न्याय्यत्वात् कर्माविभागात् ॥ १७ ॥ प्रकृतेश्चाविकारात् ॥ १८ ॥

७

त्रिवृति सङ्ख्यात्वात् सर्वसङ्ख्याविकारस्स्यात् ॥ १९ ॥ स्तोमस्य वा तल्लिङ्गत्वात् ॥ २० ॥

८

उभयसाम्नि विश्वजिद्वद्विभागस्स्यात् ॥ २१ ॥ पृष्ठार्थे वा तदर्थत्वात् ॥२२॥ लिङ्गदर्शनाच्च ॥ २३ ॥

९

पृष्ठ्ये रसभोजनमावृत्ते त्रयस्त्रिंशेऽहनि स्यात्तदानन्तर्यात् प्रकृतिवत् ॥ २४ ॥ अन्ते वा कृतकालत्वात् ॥ २५ ॥

१०

अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात् ॥ २६ ॥ अन्ते वा कृतकालत्वात् ॥ २७ ॥

११

आवृत्तिस्तु व्यवाये कालभेदात् स्यात् ॥ २८ ॥

१२

मधु न दीक्षिता ब्रह्मचारित्वात् ॥ २९ ॥ प्राश्येत वा यज्ञार्थत्वात् ॥ ३० ॥

१३

मानसमहरन्तरं स्यात् द्वादशाहव्यपदेशात् ॥३१॥ तेन च संस्तवात् ॥ ३२ ॥ अहरन्ताच्च परेण चोदना ॥ ३३ ॥ पक्षे सङ्ख्या सहस्रवत् ॥ ३४ ॥ अहरङ्गं वांशुवच्चोदनाभावात् ॥ ३५ ॥ दशमविसर्गवचनाच्च ॥ ३६ ॥ दशमेऽहनीति च तद्गुणशास्त्रात् ॥ ३७ ॥ सङ्ख्यासामञ्जस्यं स्यात् ॥ ३८ ॥ पश्चतिरेके चैकस्य

भावात् ॥ ३९ ॥ स्तुतिव्यपदेशमङ्गेनाविप्रतिषिद्धं व्रतवत् ॥ ४० ॥ वचनादतदन्तत्वम ॥ ४१ ॥

१४

सत्रमेकः प्रकृतिवत् ॥ ४२ ॥ वचनात्तु बहूनां स्यात् ॥ ४३ ॥ अपदेशस्स्यादिति चेन्नैकव्यपदेशात् ॥ ४४ ॥ बहूनामिति चैकस्मिन् विशेषवचनं व्यर्थम ॥४५॥

१५

अन्ये स्युः ऋत्विजः प्रकृतिवत् ॥ ४६ ॥ अपि वा यजमानास्स्युः ऋत्विजामभिधानसंयोगात् तेषां स्याद्यजमानत्वम ॥ ४७ ॥ कृतसंस्कारो वचनादाधातृवदिति चेत् स्याद्विशये तन्न्यायत्वात् प्रकृतिवत् ॥ ४८ ॥ स्वाम्याख्यास्स्युर्गृहपतिवदिति चेन्न प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्मेण ॥ ४९ ॥ बहूनामिति च तुल्येषु विशेषवचनं नोपपद्यते ॥ ५० ॥ दीक्षितादीक्षितव्यपदेशश्च नोपपद्येतार्थयोर्नित्यभावित्वात् ॥ ५१ ॥ अदक्षिणत्वाच्च ॥ ५२ ॥

१६

द्वादशाहस्य सत्रत्वमासनोपेयिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात् ॥ ५३ ॥ यजति चोदनादहीनत्वं स्वामिनां चास्थिरपरिमाणत्वात् ॥५४॥

१७

अहीने दक्षिणाशास्त्रं गुणत्वात् प्रत्यहं कर्मभेदात् स्यात् ॥ ५५ ॥ सर्वस्य वैककर्म्यात् ॥ ५६ ॥ पृषदाज्यवद्वाह्नां गुणशास्त्रं स्यात् ॥ ५७ ॥ ज्योतिष्टोम्यस्तु दक्षिणास्सर्वासामेककर्मत्वात् प्रकृतिवत्तस्मात्तासां विकारस्स्यात् ॥ ५८ ॥ द्वादशाहे तु वचनात् प्रत्यहं दक्षिणाभेदस्तत्प्रकृतित्वात् परेषु तासां सङ्ख्याविकारस्स्यात् ॥ ५९ ॥ परिक्रयाविभागाद्वा समस्तस्य विभागस्स्यात् ॥ ६० ॥ भेदस्तु गुणसंयोगात् ॥ ६१ ॥

१८

प्रत्यहं सर्वसंस्कारः प्रकृतिवत् सर्वासां सर्वशेषत्वात् ॥ ६२ ॥ एकार्थत्वान्नेति चेत् स्यादुत्पत्तौ कालभेदात् ॥ ६३ ॥ विभज्य तु संस्कारवचनात् द्वादशाहे ॥ ६४ ॥

१९

लिङ्गेन द्रव्यनिर्देशे सर्वप्रत्ययस्स्याल्लिङ्गस्य सर्वगामित्वादाग्नेयवत् ॥ ६५ ॥ यावदर्थं वार्थशेषत्वादल्पेन परिमाणं स्यात् तस्मिंश्च लिङ्गसामर्थ्यम् ॥ ६६ ॥

आग्नेये तु कृत्स्नविधिः ॥ ६७ ॥ ऋजीषस्य प्रधानत्वादहर्गणे सर्वस्य प्रतिपत्तिस्स्यात् ॥ ६८ ॥

२०

वाससि मानोपावहरणे प्रकृतौ सोमस्य वचनात् ॥ ६९ ॥

२१

तत्राहर्गणेऽर्थाद्वासः प्रकॢप्तिस्स्यात् ॥ ७० ॥

२२

मानं प्रत्युत्पादयेत् प्रकृतौ तेन दर्शनादुपावहरणस्य ॥ ७१ ॥ हरणे वा श्रुत्यसंयोगादर्थाद्धि प्रकृतौ तेन ॥ ७२ ॥

इति दशमाध्याये षष्ठः पादः ॥ ( तत्राधिकरणानि २२, सूत्राणि ७२ )

## सप्तमः पादः

१

पशोरेकहविष्टं समस्तचोदितत्वात् ॥ १ ॥ प्रत्यङ्गं वा ग्रहवदङ्गानां पृथक् कल्पनत्वात् ॥ २ ॥

२

हविर्भेदात् कर्मणोऽभ्यासस्तस्मात्तेभ्योऽवदानं स्यात् ॥ ३ ॥ आज्यभागवद्वा निर्देशात् परिसङ्ख्या स्यात् ॥ ४ ॥ तेषां वा द्व्यवदानत्वं विवक्षन्नभिनिर्दिशेत् पशोः पञ्चावदानत्वात् ॥ ५ ॥ अंसशिरोनूकसक्थिप्रतिषेधश्च तदन्यपरिसङ्ख्यानेऽनर्थकस्स्यात् प्रदानत्वात्तेषां निरवदानप्रतिषेधस्स्यात् ॥ ६ ॥ अपि वा परिसङ्ख्या स्यादनवदानीयशब्दत्वात् ॥ ७ ॥ अब्राह्मणे च दर्शनात् ॥ ८ ॥ शृताशृतोपदेशाच्च तेषामुत्सर्गवदयज्ञशेषत्वम् ॥ ९ ॥

३

इज्याशेषात् स्विष्टकृदिज्येत प्रकृतिवत् ॥ १० ॥ त्र्यङ्गैर्वा शरवद्विकारस्स्यात् ॥ ११ ॥

४

अध्यूध्नी तु होतुस्त्र्यङ्गवदिडाभक्षविकारस्स्यात् ॥ १२ ॥ शेषे वा समवैति तस्माद्रथवन्नियमस्स्यात् ॥ १३ ॥ अशाखत्वात् तु नैवं स्यात् ॥ १४ ॥ अपि वा दानमात्रं स्याद् भक्षशब्दानभिसम्बन्धात् ॥ १५ ॥ दातुस्त्वविद्यमानत्वादिडा-भक्षविकारस्स्याच्छेषं प्रत्यविशिष्टत्वात् ॥ १६ ॥

५

अग्नीधश्च वनिष्टुरध्यूध्नीवत् ॥ १७ ॥

६

अप्राकृतत्वान् मैत्रावरुणस्याभक्षत्वम् ॥ १८ ॥ स्याद्वा होत्रध्वर्युविकार-त्वात्तयोः कर्मभिस्सम्बन्धात् ॥ १९ ॥

७

द्विभागस्स्याद् द्विकर्मकत्वात् ॥ २० ॥ एकत्वाद्वैकभागस्स्याद् भागस्याश्रुति-भूतत्वात् ॥ २१ ॥

८

प्रतिपस्थातुश्च वपाश्रपणात् ॥ २२ ॥ अभक्षो वा कर्मभेदात् तस्यास्सर्व-प्रदानत्वात् ॥ २३ ॥

९

विकृतौ प्राकृतस्य विधेर्ग्रहणात् पुनः श्रुतिरनर्थिका स्यात् ॥ २४ ॥ अपि वाग्नेयवद् द्विशब्दत्वं स्यात् ॥ २५ ॥ न वा शब्दपृथक्त्वात् ॥ २६ ॥ अधिके चार्थवत्वात् स्यादर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् ॥ २७ ॥ प्रतिषेधस्स्यादिति चेन्नाश्रुतत्वात् ॥ २८ ॥ अग्रहणादिति चेन्न तुल्यत्वात् ॥ २९ ॥ तथा तद्ग्रहणे स्यात् ॥३०॥ अपूर्वतान्तु दर्शयेद् ग्रहणस्यार्थवत्त्वात् ॥३१॥

१०

ततोऽपि यावदुक्तं स्यात् ॥ ३२ ॥

११

स्विष्टकृति भक्षप्रतिषेधः स्यात् तुल्यकारणत्वात् ॥ ३३ ॥ अप्रतिषेधो वा दर्शनादिडायां स्यात् ॥ ३४ ॥ प्रतिषेधो वा विधिपूर्वस्य दर्शनात् ॥ ३५ ॥

१२

शंय्विडान्तत्वे विकल्पस्स्यात् परेषु पत्न्यनुयाजप्रतिषेधोऽनर्थकस्स्यात् ॥३६॥ अनुवादो वा कर्मणस्स्यादशब्दात् ॥ ३७ ॥

१३

प्रतिषेधार्थवत्त्वाच्चोत्तरस्य परस्तात् प्रतिषेधस्स्यात् ॥ ३८ ॥ प्राप्तेर्वा पूर्वस्य वचनादतिक्रमस्स्यात् ॥३९॥ प्रतिषेधस्य त्वरायुक्तत्वात् तस्य च नान्यदेशत्वम् ॥४०॥

१४

उपसत्सु यावदुक्तमकर्म स्यात् ॥ ४१ ॥ स्रौवेण वागुणत्वाच्छेषप्रतिषेधस्स्यात् ॥ ४२ ॥ अप्रतिषेधो वा प्रतिषिध्य प्रतिप्रसवात् ॥ ४३ ॥ अनिज्या वा शेषस्य मुख्यदेवतानभीज्यत्वात् ॥ ४४ ॥

१५

अवभृथे बर्हिःप्रतिषेधात् शेषकर्म स्यात् ॥ ४५ ॥ आज्यभागयोर्वागुणत्वाच्छेषप्रतिषेधस्स्यात् ॥ ४६ ॥ प्रयाजानां त्वेकदेशप्रतिषेधाद्वाक्यशेषत्वं तस्मान्नित्यानुवादस्स्यात् ॥ ४७ ॥ गृहमेधीयवद्वा स्यात् ॥ ४८ ॥

१६

विरोधिनामेकश्रुतौ नियमस्स्याद् ग्रहणस्यार्थवत्त्वाच्छरवच्छ्रुतितो विशिष्टत्वात् ॥ ४९ ॥ उभयप्रदेशान्नेति चेच्छरेष्वपीति चेत् ॥ ५० ॥ विरोध्यग्रहणात् तथा शरेष्विति चेत्तथेतरस्मिन् ॥ ५१ ॥ श्रुत्यानर्थक्यमिति चेन्न ग्रहणस्यार्थवत्त्वादुभयोरप्रवृत्तिस्स्यात् ॥ ५२ ॥

१७

सर्वासां वा गुणानामर्थवत्त्वाद् ग्रहणमप्रवृत्तेस्स्यात् ॥ ५३ ॥ अधिकं स्यादिति चेन्नार्थाभावात् ॥ ५४ ॥

१८

तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः प्रवृत्तौ हि विकल्पस्स्यात् ॥ ५५ ॥ यावच्छ्रुतीति चेन्न प्रकृतावशब्दत्वात् ॥ ५६ ॥

१९

विकृतौ त्वनियमस्स्यात् पृषदाज्यवद् ग्रहणस्य गुणार्थत्वादुभयोश्च प्रदिष्टत्वाद् गुणशास्त्रं यदेति स्यात् ॥ ५७ ॥ ऐकार्थ्याद्वा नियम्येत श्रुतितो विशिष्ट-

त्वात् ॥ ५८ ॥ विरोधित्वाच्च लोकवत् ॥ ५९ ॥ क्रतोश्च तद्गुणत्वात् ॥ ६० ॥ विरोधिनाञ्च तच्छ्रुतावशब्दत्वाद् विकल्पस्स्यात् ॥ ६१ ॥ पृषदाज्ये समुच्चयो ग्रहणस्य गुणार्थत्वम् ॥ ६२ ॥ यद्यपि चतुरवत्तीति तु नियमेनोपपद्यते ॥ ६३ ॥ क्रत्वन्तरे वा तन्न्याय्यत्वात् कर्मभेदात् ॥ ६४ ॥

२०

यथाश्रुतीति चेन्न चोदनैकत्वात् ॥ ६५ ॥

इति दशमाध्याये सप्तमः पादः ॥ ( तत्राधिकरणानि २०, सूत्राणि ६५ )

## अष्टमः पादः

१

प्रतिषेधः प्रदेशेऽनारभ्यविधाने च प्राप्तप्रतिषिद्धत्वाद् विकल्पस्स्यात् ॥ १ ॥ अर्थप्राप्तवदिति चेन्न तुल्यहेतुत्वादुभयं शब्दलक्षणम् ॥ २ ॥ अपि तु वाक्यशेषस्स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशस्स्यात् ॥ ३ ॥

२

अपूर्वे चार्थवादस्स्यात् ॥ ४ ॥

३

अपूर्वे चार्थवादस्स्यात् ॥ ४ ॥

४

शिष्ट्वा तु प्रतिषेधस्स्यात् ॥ ५ ॥

५

न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादस्स्यादानर्थक्यात् परसामर्थ्याच्च ॥ ६ ॥

६

पूर्वैश्च तुल्यकालत्वात् ॥ ७ ॥

७

उपवादश्च तद्वत् ॥ ८ ॥ प्रतिषेधादकर्मेति चेन्न शब्दपूर्वत्वात् ॥ ९ ॥

८

दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात् सर्वदानहोमपाकप्रतिषेधस्स्यात् ॥ १० ॥ अक्रतुयुक्तानां वा धर्मस्स्यात् क्रतोः प्रत्यक्षशिष्टत्वात् ॥ ११ ॥ तस्य वाप्यानुमानिकमविशेषात् ॥ १२ ॥ अपितु वाक्यशेषत्वादितरपर्युदासस्स्यात् प्रतिषेधे विकल्पस्स्यात् ॥ १३ ॥

९

अविशेषेण यच्छास्त्रमन्याय्यत्वाद् विकल्पस्य तत्सन्दिग्धमाराद्विशेषशिष्टं स्यात् ॥ १४ ॥

१०

अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृतमाज्यभागवत् प्राकृतप्रतिषेधार्थम् ॥ १५ ॥ विकारे तु तदर्थं स्यात् ॥ १६ ॥ वाक्यशेषो वा क्रतुना ग्रहणात् स्यादनारभ्यविधानस्य ॥ १७ ॥

११

मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात् स्यात् ॥ १८ ॥ अनाम्नाते च दर्शनात् ॥ १९ ॥ प्रतिषेधाच्च ॥ २० ॥

१२

अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिस्स्यात् ॥ २१ ॥ मासिग्रहणञ्च तद्वत् ॥ २२ ॥ ग्रहणं वा तुल्यत्वात् ॥ २३ ॥ लिङ्गदर्शनाच्च ॥ २४ ॥ ग्रहणं समानविधानं स्यात् ॥ २५ ॥ मासिग्रहणमभ्यासप्रतिषेधार्थम् ॥ २६ ॥

१३

उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगादधिकमाज्यमतुल्यत्वाल्लोकवदुत्पत्तेर्गुणभूतत्वात् ॥ २७ ॥ तत्संस्कारश्रुतेश्च ॥ २८ ॥ ताभ्यां वा सह स्विष्टकृतस्सकृत्त्वे द्विरभिघारणेन तदाप्तिवचनात् ॥ २९ ॥ तुल्यवच्चाभिधाय सर्वेषु भक्त्यनुक्रमणात् ॥ ३० ॥

१४

साप्तदश्यवन्नियम्येत ॥ ३१ ॥ हविषो वा गुणत्वात् तथाभूतविवक्षा स्यात् ॥ ३२ ॥

१५

पुरोडाशाभ्यामित्यधिकृतानां पुरोडाशयोरुपदेशस्तच्छ्रुतित्वाद्वैश्यस्तोमवत् ॥ ३३ ॥ न त्वनित्याधिकारोऽस्ति विधेर्नित्येन सम्बन्धस्तस्माद्वाक्यशेषत्वम् ॥३४॥ सति च नैकदेशेन कर्तुः प्रधानभूतत्वात् ॥ ३५ ॥ कृत्स्नत्वात्तु तथा स्तोमे ॥ ३६ ॥ कर्तुस्स्यादिति चेन्न गुणार्थत्वात् प्राप्ते च नोपदेशार्थः ॥ ३७ ॥ कर्मणोऽस्तु प्रकरणे तन्न्यायत्वाद् गुणानां लिङ्गेन कालशास्त्रं स्यात् ॥ ३८ ॥ यदि तु सान्नाय्यं सोमयाजिनो न ताभ्यां समवायोऽस्ति विभक्तकालत्वात् ॥ ३९ ॥ अपि वा विहितत्वाद् गुणार्थायां पुनः श्रुतौ सन्देहे श्रुतिर्द्विदेवतार्था स्याद् यथानभिप्रेतस्तथाग्नेयो दर्शनादेकदेवते ॥ ४० ॥ विधिन्तु बादरायणः ॥ ४१ ॥ प्रतिषिद्धविज्ञानाद् वा ॥ ४२ ॥ तथाचान्यार्थदर्शनम् ॥ ४३ ॥

१६

उपांशुयाजमन्तरा यजतीति हविर्लिङ्गाश्रुतित्वाद्यथाकामी प्रतीयेत ॥ ४४ ॥ ध्रौवाद्वा सर्वसंयोगात् ॥ ४५ ॥

१७

तद्वच्च देवतायां स्यात् ॥ ४६ ॥ तन्त्रीणां वा प्रकरणात् ॥ ४७ ॥

१८

धर्माद् वा स्यात् प्रजापतिः ॥ ४८ ॥ देवतायास्त्वनिर्वचनं तत्र शब्दस्येह मृदुत्वं तस्मादिहाधिकारेण ॥ ४९ ॥ विष्णुर्वा स्याद्धौत्राम्नानादमावास्याहविश्च स्याद्धौत्रस्य तत्र दर्शनात् ॥ ५० ॥ अपि वा पौर्णमास्यां स्यात्, प्रधानशब्दसंयोगात्, गुणत्वान्मन्त्रो यथाप्रधानं स्यात् ॥ ५१ ॥ आनन्तर्यञ्च सान्नाय्यस्य पुरोडाशेन दर्शयत्यमावास्याविकारे ॥ ५२ ॥ अग्नीषोमविधानात्तु पौर्णमास्यामुभयत्र विधीयते ॥ ५३ ॥ प्रतिषिध्य विधानाद्वा विष्णुस्समानदेशस्स्यात् ॥ ५४ ॥ तथा चान्यार्थदर्शनम ॥ ५५ ॥ न चानङ्गं सकृच्छ्रुतावुभयत्र विधीयेतासम्बन्धात् ॥५६॥

१९

द्विपुरोडाशायां स्यादन्तरार्थत्वात् ॥ ५७ ॥ अजामिकरणार्थत्वाच्च ॥ ५८ ॥ तदर्थमिति चेन्न तत्प्रधानत्वात् ॥ ५९ ॥ अशिष्टेन चासम्बन्धात् ॥ ६० ॥ उत्पत्तेस्तु निवेशस्स्याद् गुणस्यानुपरोधेनार्थस्य विद्यमानत्वाद् विधानादन्तरार्थस्य नैमित्ति-

कत्वात् तदभावे श्रुतौ स्यात् ॥ ६१ ॥ उभयोस्तु विधानात ॥ ६२ ॥ गुणानाञ्च परार्थत्वादुपवेषवद्यदेति स्यात् ॥ ६४ ॥ अनपायश्च कालस्य लक्षणं हि पुरोडाशौ ॥ ६५ ॥ प्रशंसार्थमजामित्वम् ॥ ६६ ॥

इति दशमाध्याये अष्टमः पादः ॥ ( तत्राधिकरणानि १९, सूत्राणि ६६ )

( आहत्य दशमाध्यायेऽधिकरणानि १६७, सूत्राणि ४८० )

समाप्तश्चाध्यायः ॥

❋ श्रीः ❋

# एकादशाध्याये प्रथमः पादः

१

प्रयोजनाभिसम्बन्धात् पृथक् सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् ॥ १ ॥ शेषवद्वा प्रयोजनं प्रतिकर्म विभज्येत ॥ २ ॥ अविधानात्तु नैवं स्यात् ॥ ३ ॥ शेषस्य हि परार्थत्वाद् विधानात् प्रतिप्रधानभावः स्यात् ॥ ४ ॥

२

अङ्गानान्तु शब्दभेदात् क्रतुवत्स्यात् फलान्यत्वम् ॥ ५ ॥ अर्थभेदस्तु तत्रार्थे-ह्यैकार्थ्यादैककर्म्यम् ॥ ६ ॥ शब्दभेदान्नेति चेत् कर्मार्थत्वात् प्रयोगे ताच्छब्द्यं स्यात्तदर्थत्वात् ॥ ७ ॥ कर्तृविधेर्नानार्थत्वाद् गुणप्रधानेषु ॥ ८ ॥ आरम्भस्य शब्द-पूर्वत्वात् ॥ ९ ॥ एकेनापि समाप्येत कृतार्थत्वाद्यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत् स्यात् ॥ १० ॥ फलाभावान्नेति चेन्न कर्मसंयोगात् प्रयोजनमशब्ददोषं स्यात् ॥११॥ ऐकशब्द्यान्नेति चेन्नार्थपृथक्त्वात् समत्वादगुणत्वम् ॥ १२ ॥ विधेस्तु एकश्रुति-त्वादपर्यायविधानान्नित्यवच्छ्रुतभूताभिसंयोगादर्थेन युगपत्प्राप्तेर्यथाप्राप्तं स्वशब्दो निवीतवत् सर्वप्रयोगे प्रवृत्तिः स्यात् ॥ १३ ॥ तथा कर्मोपदेशः स्यात् ॥ १४ ॥ क्रत्वन्तरेषु पुनर्वचनम् ॥ १५ ॥ उत्तरास्वश्रुतित्वाद् विशेषाणां कृतार्थत्वाद् स्वदोहे यथाकामी प्रतीयेत ॥ १६ ॥

३

कर्मण्यारम्भभाव्यत्वात् कृषिवत्प्रत्यारम्भं फलानि स्युः ॥ १७ ॥ अधिकारश्च सर्वेषां कार्यत्वादुपपद्यते विशेषः ॥ १८ ॥ सकृत्तु स्यात् कृतार्थत्वादङ्गवत् ॥ १९ ॥ शब्दार्थश्च तथा लोके ॥ २० ॥ अपि वा सम्प्रयोगे यथाकामी प्रतीयेताश्रुतत्वाद् विधिषु वचनानि स्युः ॥२१॥ ऐकशब्द्यात्तथाङ्गेषु ॥२२॥ लोके कर्मार्थलक्षणम् ॥२३॥

४

क्रियाणामर्थशेषत्वात् प्रत्यक्षोऽतस्तन्निर्वृत्त्यापवर्गस्स्यात् ॥ २४ ॥ धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गस्स्यात् ॥ २५ ॥

५

क्रतुवद्वानुनेनाभ्यासे फलभूमा स्यात् ॥ २६ ॥ सकृद्वा कारणैकत्वात् ॥ २७॥ परिमाणञ्चानियमेन स्यात् ॥ २८ ॥ फलस्यारम्भनिर्वृत्तेः क्रतुषु स्यात् फलान्यत्वम् ॥ २९ ॥ अर्थवांस्तु नैकत्वादभ्यासस्स्यादनर्थको यथाभोजनमेकस्मिन्नर्थस्यापरिमाणत्वात् प्रधाने च क्रियार्थत्वादनियमस्स्यात् ॥ ३० ॥ पृथक्त्वाद् विधितः परिमाणं स्यात् ॥ ३१ ॥ अनभ्यासो वा प्रयोगवचनैकत्वात् सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणः स्यात् क्रियार्थत्वात् ॥ ३२ ॥ अभ्यासो वा च्छेदनसम्मार्गावदानेषु वचनात् सकृत्वस्य ॥ ३३ ॥ अनभ्यासस्तु वाच्यत्वात् ॥ ३४ ॥

६

बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् ॥ ३५ ॥ दृष्टः प्रयोग इति चेत्तथेह ॥३६॥ भक्त्येति चेत्तथेतरस्मिन् ॥ ३७ ॥ प्रथमं वा नियम्येत कारणादतिक्रमस्स्यात् ॥ ३८॥ तथा चान्यार्थदर्शनम् ॥ ३९ ॥ प्रकृत्या च पूर्ववत्तदासत्तेः ॥ ४० ॥

७

उत्तरासु न यावत् स्वमपूर्वत्वात् ॥ ४१ ॥ यावत्स्वं वान्यविधानेनानुवादस्स्यात् साकल्यविधानात् ॥ ४२ ॥ बह्वर्थत्वाच्च ॥ ४३ ॥ अग्निहोत्रे चाशेषवद्यवागूनियमः ॥ ४४ ॥ तथा पयःप्रतिषेधः कुमाराणाम् ॥ ४५ ॥ सर्वप्रापिणापि लिङ्गेन संयुज्य देवताभिस्संयोगात् ॥ ४६ ॥

८

प्रधानकर्मार्थत्वादङ्गानां तद्भेदात् कर्मभेदः प्रयोगे स्यात् ॥ ४७ ॥ क्रमकोपश्च यौगपद्ये स्यात् ॥ ४८ ॥ तुल्यानान्तु यौगपद्यमेकशब्दोपदेशात् स्याद् विशेषाग्रहणात् ॥ ४९ ॥ ऐकर्थ्यादव्यवायस्स्यात् ॥ ५० ॥ तथा चान्यार्थदर्शनम् कामुकायनः ॥ ५१ ॥ तन्न्यायत्वदशक्तेरानुपूर्व्यं स्यात् संस्कारस्य तदर्थत्वात् ॥५२॥ असंसृष्टेऽपि तादर्थ्यात् ॥ ५३ ॥ विभवाद्वा प्रदीपवत् ॥ ५४ ॥ अर्थात्तु लोके विधितः प्रतिप्रधानं स्यात् ॥५५॥ सकृदिज्यां कामुकायनः परिमाणाविरोधात् ॥५६॥ विधेस्त्वितरार्थत्वात् सकृदिज्याश्रुतिव्यतिक्रमः स्यात् ॥ ५७ ॥ विधिवत्प्रकरणाविभागे प्रयोगं बादरायणः ॥५८॥ कचिद्विधानान्नेति चेन्न विधेश्चोदितत्वात् ॥५९॥

९

व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणविशेषाणाम् ॥ ६० ॥ भेदस्तु कालभेदाच्चोदनाव्यवायात् स्याद्विशिष्टानां विधेः प्रदानकालत्वात् ॥ ६१ ॥ तथा चान्यार्थदर्शनम ॥ ६२ ॥ विनिरिति चेन्न वर्तमानापदेशात् ॥ ६३ ॥

इत्येकादशाध्याये प्रथमः पादः ॥ ( तत्राधिकरणानि ९, सूत्राणि ६३ )

## द्वितीयः पादः

१

एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात् ॥ १ ॥ अविधिश्चेत्कर्मणां नाभिसम्बन्धः प्रतीयेत लक्षणार्थाभिसंयोगाद् विधित्वाच्चेतरेषां प्रतिप्रधानं भावः स्यात् ॥ २ ॥ अङ्गेषु च तदभावः प्रधानं प्रति निर्देशाद्यथा द्रव्यदेवतम् ॥ ३ ॥ यदि तु कर्मणो विधिसम्बन्धस्स्यादैकशब्द्यात् प्रधानार्थाभिसंयोगात् ॥ ४ ॥ तथा चान्याथदर्शनम् ॥ ५ ॥ श्रुतिश्चैषां प्रधानवत् कर्मश्रुतेः परार्थत्वात् कर्मणोऽश्रुतित्वाच्च ॥ ६ ॥ अङ्गानि तु विधानत्वात् प्रयोजनेनोपदिश्येरन् तस्मात् स्यादेकदेशत्वम् ॥ ७ ॥ द्रव्यदेवतं तथेति चेन्न चोदनाविधिशेषत्वान्नियमार्थो विशेषः ॥ ८ ॥ तेषु समवेतानां समवायात् तन्त्रमङ्गानि भेदस्तु तद्भेदात् कर्मभेदः प्रयोगे स्यात् तेषां प्रधानशब्दत्वात्तथा चान्यार्थदर्शनम् ॥ ९ ॥

२

इष्टिराजसूयचातुर्मस्येष्वैकर्म्यादङ्गानां तन्त्रभावस्स्यात् ॥ १० ॥ कालभेदान्नेति चेन्नैकदेशत्वात् पशुवत् ॥ ११ ॥ अपि वा कर्मपृथक्त्वात् तेषाञ्च तन्त्रत्व विधानात् साङ्गानामुपदेशस्स्यात् ॥ १२ ॥ तथा चान्यार्थदर्शनम् ॥ १३ ॥ तदावयवेषु स्यात् ॥ १४ ॥ पशौ तु चोदनैकत्वात् तन्त्रस्य विप्रकर्षः स्यात् ॥ १५ ॥

३

नथा स्यादध्वरकल्पायां विशेषस्यैककालत्वात् ॥ १६ ॥ इष्टिरिति चैकवच्छ्रुतिः ॥ १७ ॥ अपि वा कर्मपृथक्त्वात् तेषां च तन्त्रविधानात् साङ्गानामु-

पदेशस्स्यात् ॥ १८ ॥ प्रथमस्य वा कालवचनम् ॥ १९ ॥ फलैकत्वादिष्टिशब्दो यथान्यत्र ॥ २० ॥

४

वसाहोमस्तन्त्रमेकदेवतेषु स्यात् प्रदानस्यैककालत्वात् ॥ २१ ॥ कालभेदात् त्वावृत्तिर्देवताभेदे ॥ २२ ॥

५

अन्ते यूपाहुतिस्तद्वत् ॥ २३ ॥ इतरप्रतिषेधो वा ॥ २४ ॥ अनुवादमात्रमन्तिकस्य ॥ २५ ॥ अशास्त्रत्वाच्च देशानाम् ॥ २६ ॥

६

अवभृथे प्रधानेऽग्निविकारस्स्यान्न हि तद्धेतुरग्निसंयोगो द्रव्यदेवतवत् ॥२७॥ साङ्गो वा प्रयोगवचनैकत्वात् ॥ २८ ॥ लिङ्गदर्शनाच्च ॥ २९ ॥ शब्दविभागाच्च द्रव्यदेवतापनयः ॥ ३० ॥

७

दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात् सर्वतन्त्रं विक्रियते ॥ ३१ ॥ अचोदनेति चेत् स्यात् पौर्णमासीवत् ॥ ३२ ॥ प्रयोगचोदनेति चेत् तथेह ॥ ३३ ॥ आसादनमिति चेन्नोत्तरेणैकवाक्यत्वात् ॥ ३४ ॥ अवाच्यत्वाच्च ॥ ३५ ॥ आम्नायवचनं तद्वत् ॥ ३६ ॥

८

कर्तृभेदस्तथेति चेन्न समवायात् ॥ ३७ ॥ लिङ्गदर्शनाच्च ॥ ३८ ॥ वेदिसंयोगादिति चेन्न देशमात्रत्वात् ॥ ३९ ॥

९

एकाग्नित्वादपरेषु तन्त्रं स्यात् ॥ ४० ॥ नाना वा कर्तृभेदात् ॥ ४१ ॥

१०

पर्यग्निकृतानामुत्सर्गो प्राजापत्यानां कर्मोत्सर्गः श्रुतिसामान्यादारण्यवत्तस्माद् ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् ॥ ४२ ॥ संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् ॥ ४३ ॥ वपानाञ्चानभिधारणस्य दर्शनात् ॥ ४४ ॥

११

पञ्चशारदीयास्तथेति चेन्न चोदनैकवाक्यत्वात् ॥ ४५ ॥ संस्काराणाञ्च दर्शनात् ॥ ४६ ॥

१२

दशपेये क्रयप्रतिकर्षात् प्रतिकर्षः प्राचां तस्मात् समानतन्त्रं स्यात् ॥ ४७ ॥ समानवचनं तद्वत् ॥ ४८ ॥ अप्रतिकर्षो वार्थहेतुत्वात् सहत्वं विधीयते ॥ ४९ ॥ पूर्वस्मिंश्चावभृथस्य दर्शनात् ॥ ५० ॥ दीक्षाणाञ्चोत्तरस्य ॥ ५१ ॥ समानः कालसामान्यात् ॥ ५२ ॥

१३

निष्कासस्यावभृथे तदेकदेशत्वात् पशुवत् प्रदानविप्रकर्षस्स्यात् ॥ ५३ ॥ अपनयो वा प्रसिद्धेनाभिसंयोगात् ॥ ५४ ॥ प्रतिपत्तिरिति चेन्न कर्मसंयोगात् ॥ ५५ ॥

१४

उदयनीये च तद्वत् ॥ ५६ ॥ प्रतिपत्तिर्वाकर्मसंयोगात् ॥ ५७ ॥ अर्थकर्म वा शेषत्वाच्छ्रयणवत्तदर्थेन विधानात् ॥ ५८ ॥

इत्येकादशाध्याये द्वितीयः पादः ॥ ( तत्राधिकरणानि १४, सूत्राणि ५८ )

## तृतीयः पादः

१

अङ्गानां मुख्यकालत्वात् वचनादन्यकालत्वम् ॥ १ ॥

२

द्रव्यस्याकर्मकालनिष्पत्तेः प्रयोगस्सर्वार्थस्स्यात् स्वकालत्वात् ॥ २ ॥

३

यूपश्चाकर्मकालत्वात् ॥ ३ ॥ एकयूपञ्च दर्शयति ॥ ४ ॥

४

संस्कारास्त्वावर्तेरन्नर्थकालत्वात् ॥ ५ ॥ तत्कालास्तु यूपकर्मत्वात् तस्य धर्मविधानात् सर्वार्थानाञ्च वचनादन्यकालत्वम् ॥ ६ ॥ सकृन्मानञ्च दर्शयति ॥ ७ ॥

५

स्वरुस्तन्त्रापवर्गस्स्यादस्वकालत्वात् ॥ ८ ॥ साधारणो वा यदनुनिष्पत्तिस्तस्य साधारणत्वात् ॥ ९ ॥ सोमान्ते च प्रतिपत्तिदर्शनात् ॥ १० ॥ तत्कालो वा प्रस्तरवत् ॥ ११ ॥ न वोत्पत्ति वाक्यत्वात् प्रदेशात् प्रस्तरे तथा ॥ १२ ॥

६

अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादन्त्ये प्रथमे वाहनि विकल्पस्स्यात् ॥ १३ ॥ पाणेस्त्वश्रुतिभूतत्वाद् विषाणानियमस्स्यात् प्रातस्सवनमध्यत्वाच्छिष्टे चाभिप्रवृत्तत्वात् ॥ १४ ॥

७

वाग्विसर्गो हविष्कृता बीजभेदे तथा स्यात् ॥ १५ ॥

८

पशौ च पुरोडाशे च समानतन्त्रं भवेत् ॥ १६ ॥

९

अग्नियोगस्सोमकाले तदर्थत्वात् संस्कृतकर्मणः परेषु साङ्गस्य तस्मात् सर्वापवर्गे विमोकस्स्यात् ॥ १७ ॥ प्रधानापवर्गे वा तदर्थत्वात् ॥ १८ ॥ अवभृथे च तद्वत् प्रधानार्थस्य प्रतिषेधोऽप्रवृत्तार्थत्वात् ॥ १९ ॥ अहर्गणे च प्रत्यहं स्यात् तदर्थत्वात् ॥ २० ॥

१०

सुब्रह्मण्या च तन्त्रं दीक्षावदन्यकालत्वात् ॥ २१ ॥

११

तत्काला त्वावर्तेत प्रयोगतो विशेषसंयोगात् ॥ २२ ॥ अप्रयोगाङ्गमिति चेत् स्यात् प्रयोगनिर्देशात् कर्तृभेदवत् ॥ २३ ॥ तद्भूतस्थानादग्निवदिति चेत्तदपवर्गस्तदर्थत्वात् ॥ २४ ॥ अग्निवदिति चेन्न प्रयोगसाधारण्यात् ॥ २५ ॥ लिङ्गदर्शनाच्च ॥ २६ ॥ तद्धि तथेति चेन्नाशिष्टत्वादितरन्यायत्वाच्च ॥ २७ ॥ विध्येकत्वादिति चेन्न कृत्स्नस्य पुनः प्रयोगात् प्रधानवत् ॥ २८ ॥

१२

लौकिकेषु यथाकामी संस्कारार्थालोपात् ॥ २९ ॥

१३

यज्ञायुधानि धार्येरन् प्रतिपत्तिविधानादृजीषवत् ॥ ३० ॥ यजमानसंस्कारो वा तदर्थः श्रूयते तत्र यथाकामी तदर्थत्वात् ॥ ३१ ॥ मुख्यधारणं वा मरणस्यानियतत्वात् ॥ ३२ ॥ यो यजनीयेऽहनि म्रियेत सोऽधिकृतस्स्यादुपवेषवत ॥ ३३ ॥ न शास्त्रलक्षणत्वात् ॥ ३४ ॥ उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् ॥ ३५ ॥ शब्दसामञ्जस्यमिति चेत् तथाशिरे ॥ ३६ ॥ शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृतावर्थेहापूर्वार्थैस्तद्भूतोपदेशः ॥ ३७ ॥ प्रकृत्यर्थत्वात् पौर्णमास्या ध्रियेरन् ॥३८॥ अग्न्याधेयाद् वा विप्रतिषेधात् तानि धारयेन् मरणस्यानिमित्तत्वात् ॥३९॥ प्रतिपत्तिर्वा यथान्येषाम् ॥ ४० ॥

१४

उपरिष्टात् सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषादवाच्यो हि प्रकृतिकालः ॥ ४१ ॥ अङ्गविपर्यासो विना वचनादिति चेदुत्कर्षस्संयोगात् कालमात्रमितरत्र ॥ ४२ ॥ प्रकृतिकालासक्तेश्शब्दवतामिति चेन्न श्रुतिविप्रतिषेधात् ॥ ४३ ॥ विकारस्थान इति चेन्न चोदनापृथक्त्वात् ॥ ४४ ॥

१५

उत्कर्षे सूक्तवाकस्य न सोमदेवतानामुत्कर्षः पश्वनङ्गत्वाद्यथा निष्कर्षेऽनन्वयः ॥ ४५ ॥ वाक्यसंयोगाच्चोत्कर्षस्समानतन्त्रत्वादर्थलोपादनन्वयः ॥ ४६ ॥

इत्येकादशाध्याये तृतीयः पादः ॥ (तत्राधिकरणानि १५, सूत्राणि ४६)

## चतुर्थः पादः

१

चोदनैकत्वाद्राजसूयेऽनुक्तदेशकालानां समवायात् तन्त्रमङ्गानि ॥ १ ॥ प्रतिदक्षिणं वा कर्तृसम्बन्धस्स्यादिष्टिवदङ्गभूतत्वात् समुदायो हि तन्निर्वर्त्या तदेकशब्दोपदेशः स्यात् ॥ २ ॥ तथा चान्यार्थदर्शनम् ॥ ३ ॥

२

अनियमस्स्यादिति चेन्नोपदिष्टत्वात् ॥ ४ ॥

३

अवेष्टौ त्वैकतन्त्र्यं स्याल्लिङ्गदर्शनात् ॥ ५ ॥ वचनात् कामसंयोगेन ॥ ६ ॥ क्रत्वर्थायामिति चेन्न वर्णसंयोगात् ॥ ७ ॥

४

पवमानहविष्ष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् ॥ ८ ॥ लिङ्गदर्शनाच्च ॥ ९ ॥ वचनात्तु तन्त्रभेदः स्यात् ॥ १० ॥ सहत्वे नित्यानुवादस्स्यात् ॥ ११ ॥

५

द्वादशाहे तत्प्रकृतित्वादेकैकमहरपवृज्येत कर्मपृथक्त्वात् ॥ १२ ॥ अह्नां वा श्रुतिभूतत्वात् तत्र साङ्गं क्रियेत यथा माध्यन्दिने ॥ १३ ॥ अपि वा फलकर्तृ-सम्बन्धात् सहप्रयोगस्स्यादाग्नेयाग्नीषोमीयवत् ॥ १४ ॥ साङ्गकालश्रुतिकत्वात्तु स्वस्थानानां विकारस्स्यात् ॥ १५ ॥ तथाचान्यार्थदर्शनम् ॥ १६ ॥ चोदनापृथक्त्वे त्वैकतन्त्र्यं समवेतानां कालसंयोगात् ॥ १७ ॥

६

सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादावाहनवत् ॥ १८ ॥ अपि वेन्द्राभिधानत्वात् सकृत्स्यादुपलक्षणं कालस्य लक्षणार्थत्वादविभागाच्च ॥ १९ ॥

७

पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात् तन्त्राभावस्स्यात् ॥ २० ॥

८

भेदस्तु सन्देहाद्देवतान्तरे स्यात् ॥ २१ ॥ अर्थाद्वा लिङ्गकम स्यात् ॥ २२ ॥ अभाज्यत्वाद्वसानां भेदस्स्यात् स्वयाज्याप्रदानत्वात् ॥ २३ ॥ अपि वा प्रतिपत्ति-त्वात् तन्त्रं स्यात् स्वत्त्वस्याश्रुतिभूतत्वात् ॥ २४ ॥ सकृदिति चेन्न कालभेदात् ॥ २५ ॥

९

जात्यन्तरेषु भेदस्स्यात् पक्तिवैषम्यात् ॥ २६ ॥ वृद्धिदर्शनाच्च ॥ २७ ॥

१०

कपालानि च कुम्भीवत्तुल्यसङ्ख्यानाम् ॥ २८ ॥ प्रतिप्रधानं वा प्रकृतिव ॥ २९ ॥ सर्वेषाञ्चाभिप्रथनं स्यात् ॥ ३० ॥

११

एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वं तस्मिन् मन्त्रार्थनानात्वादावृत्तौ मन्त्रस्य सकृत्प्रयोगस्स्यात् ॥ ३१ ॥

१२

द्रव्यान्तरे कृतार्थत्वात् तस्य पुनः प्रयोगान्मन्त्रस्य तद्गुणत्वात् पुनः प्रयोगस्स्यात् तदर्थेन विधानात् ॥ ३२ ॥

१३

निर्वपणलवनास्तरणाज्यग्रहणेषु चैकद्रव्यवत्प्रयोजनैकत्वात् ॥ ३३ ॥ द्रव्यान्तरवद्वा स्यात् तत्संस्कारात् ॥ ३४ ॥

१४

वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनः प्रयोगात् ॥ ३५ ॥ एकस्य वा गुणविधिर्द्रव्यैकत्वात् तस्मात् सकृत्प्रयोगस्स्यात् ॥ ३६ ॥

१५

कण्डूयने प्रत्यङ्गं कर्मभेदात् स्यात् ॥ ३७ ॥ अपि वाचोदनैककालमैककर्म्यं स्यात् ॥ ३८ ॥

१६

स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् ॥ ३९ ॥

१७

प्रमाणे स्वार्थनिर्वृत्तेः ॥ ४० ॥

१८

उपरवमन्त्रस्तन्त्रं स्याल्लोकवद्बहुवचनात् ॥ ४१ ॥ न सन्निपातित्वादसन्निपातकर्मणां विशेषाग्रहणे कालैकत्वात् सकृद्वचनम् ॥ ४२ ॥ हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्यावृत्तिः कालभेदात् स्यात् ॥ ४३ ॥ अध्रिगोश्च विपर्यासात् ॥ ४४ ॥ करिष्यद्वचनाच्च ॥ ४५ ॥

इत्येकादशाध्याये चतुर्थः पादः ॥ ( तत्राधिकरणानि १८, सूत्राणि ४५ )

( आहत्य एकादशाध्यायेऽधिकरणानि ५६, सूत्राणि २१२ )

समाप्तश्चाध्यायः ॥

* श्रीः *

# द्वादशाध्याये प्रथमः पादः

१

तन्त्रिसमवाये चोदनातः समानानामैकतन्त्र्यमतुल्येषु तु भेदो विधिप्रक्रमतादर्थ्यात् तादर्थ्यं श्रुतिकालनिर्देशात् ॥ १ ॥ गुणकालविकाराच्च तन्त्रभेदस्स्यात् ॥ २ ॥ तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिस्स्यात् तन्त्रार्थस्याविशिष्टत्वात् ॥ ३ ॥ विकाराच्च न भेदस्स्यादर्थस्याविकृतत्वात् ॥ ४ ॥ एकेषाञ्चाशक्यत्वात् ॥ ५ ॥ एकाग्निवच्च दर्शनम् ॥ ६ ॥

२

जैमिनेः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधस्स्यात् ॥ ७ ॥

३

नानार्थत्वात् सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात् ॥ ८ ॥ अकर्म वा कृतदृषा स्यात् ॥ ९ ॥

४

पात्रेषु च प्रसङ्गस्स्याद्धोमार्थत्वात् ॥ १० ॥ न्याय्यानि वा प्रयुक्तत्वाद् अप्रयुक्ते प्रसङ्गस्स्यात् ॥ ११ ॥

५

शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात् ॥ १२ ॥

६

श्रपणञ्चाग्निहोत्रस्य शालामुखीये न स्यात् प्राजहितस्य विद्यमानत्वात् ॥१३॥

७

हविर्धाने निर्वपणार्थं साधयेतां प्रयुक्तत्वात् ॥ १४ ॥ असिद्धिर्वान्यदेशत्वात् प्रधानवैगुण्यादवैगुण्ये प्रसङ्गस्स्यात् ॥ १५ ॥ अनसाञ्च दर्शयति ॥ १६ ॥

८

तद्युक्तञ्च कालभेदात् ॥ १७ ॥

९

मन्त्राश्च सन्निपातित्वात् ॥ १८ ॥

१०

धारणार्थत्वात् सोमेऽग्न्यन्वाधानं न विद्यते ॥ १९ ॥

११

तथा व्रतमुपेतत्वात् ॥ २० ॥ विप्रतिषेधाच्च ॥ २१ ॥ सत्यवदिति चेन्न संयोगपृथक्त्वात् ॥ २२ ॥

१२

ग्रहार्थञ्च पूर्वमिष्टेस्तदर्थत्वात् ॥ २३ ॥ शेषवदिति चेन्न वैश्वदेवो हि ॥ २४ ॥ स्याद्वा व्यपदेशात् ॥ २५ ॥ न गुणार्थत्वात् ॥ २६ ॥

१३

संनहनञ्च वृत्तत्वात् ॥ २७ ॥

१४

अन्यविधानादारण्यभोजनं न स्यादुभयं वृत्त्यर्थम् ॥ २८ ॥

१५

शेषभक्षास्तथेति चेन्नान्यार्थत्वात् ॥ २९ ॥

१६

भूतत्वाच्च परिक्रयः ॥ ३० ॥

१७

शेषभक्षास्तथेति चेन्न कर्मसंयोगात् ॥ ३१ ॥

१८

प्रवृत्तवरणात् प्रतितन्त्रं वरणं होतुः क्रियेत ॥ ३२ ॥ ब्रह्मापीति चेन्न प्राङ्-नियमात् तदर्थं हि ॥ ३३ ॥ निर्दिष्टस्येति चेन्नाश्रुतत्वात् ॥ ३४ ॥ होतुस्तथेति चेन्न कर्मसंयोगात् ॥ ३५ ॥

१९

यज्ञोत्पत्त्युपदेशे निष्ठितकर्म प्रयोगभेदात् प्रतितन्त्रं क्रियेत ॥ ३६ ॥ न वा कृतत्वात् तदुपदेशो हि ॥ ३७ ॥

२०

देशपृथक्त्वान्मन्त्रोऽभ्यावर्तते ॥ ३८ ॥

२१

संनहनहरणे तथेति चेन्नान्यार्थत्वात् ॥ ३९ ॥

इति द्वादशाध्याये प्रथमः पादः ॥ ( तत्राधिकरणानि २१, सूत्राणि ३९ )

## द्वितीयः पादः

१

विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात् ॥ १ ॥ मांसपाकप्रतिषेधश्च तद्वत् ॥ २ ॥ निर्देशाद्वा वैदिकानां स्यात् ॥ ३ ॥ सति चौपासनस्य दर्शनात् ॥ ४ ॥ अभावदर्शनाच्च ॥ ५ ॥ मांसपाको विहितप्रतिषेधस्स्यादाहुतिसंयोगात् ॥ ६ ॥ वाक्यशेषो वा दक्षिणेऽस्मिन्नारभ्य विधानस्य ॥ ७ ॥

२

सवनीये छिद्रापिधानार्थत्वात् पशुपुरोडाशो न स्यादन्येषामेवमर्थत्वात् ॥८॥ क्रिया वा देवतार्थत्वात् ॥ ९ ॥ लिङ्गदर्शनाच्च ॥ १० ॥

३

हविष्कृत्सवनीयेषु न स्यात् प्रकृतौ यदि सर्वार्था, पशुं प्रत्याहूता सा कुर्याद्विद्यमानत्वात् ॥ ११ ॥

४

पशौ तु संस्कृते विधानात् तार्तीयसवनिकेषु स्यात् सौम्याश्विनयोश्चापवृक्तार्थत्वात् ॥ १२ ॥ योगाद्वा यज्ञाय तद्विमोके विसर्गस्स्यात् ॥ १३ ॥

५

निशियज्ञे प्राकृतस्यापवृत्तिस्स्यात् प्रत्यक्षशिष्टत्वात् ॥ १४ ॥ कालवाक्यभेदाच्च तन्त्रभेदस्स्यात् ॥ १५ ॥ वेद्युद्धननव्रतं विप्रतिषेधात् तदेव स्यात् ॥ १६ ॥ तन्त्रमध्ये विधानाद्वा तत्तन्त्रा सवनीयवत् ॥ १७ ॥ वैगुण्यादिध्माबर्हिर्न साधयेदग्न्यन्वाधानञ्च यदि देवतार्थम् ॥ १८ ॥

६

अन्वारम्भणीया विकृतौ न स्यात् प्रकृतिकालमध्यत्वात् कृता पुनस्तदर्थेन ॥ १९ ॥ स्याद्वा कालस्याशेषभूतत्वात् ॥ २० ॥ आरम्भविभागाच्च ॥ २१ ॥

७

विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम् ॥ २२ ॥

८

मुख्यं वा पूर्वचोदनाल्लोकवत् ॥ २३ ॥ तथा चान्यार्थदर्शनम् ॥ २४ ॥

९

अङ्गगुणविरोधे च तादर्थ्यात् ॥ २५ ॥

१०

परिधिर्द्व्यर्थत्वादुभयधर्मा स्यात् ॥ २६ ॥

११

यौप्यस्तु विरोधे स्यान्मुख्यानन्तर्यात् ॥ २७ ॥ इतरो वा तस्य तत्र विधानात् ॥ २८ ॥ उभयोश्चाङ्गसंयोगः ॥ २९ ॥

१२

पशुसवनीयेषु विकल्पस्स्याद्वैकृतश्चेदुभयोरश्रुतिभूतत्वात् ॥ ३० ॥ पाशुकं वा तस्य वैशेषिकाम्नानात् तदनर्थकं विकल्पे स्यात् ॥ ३१ ॥ पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात् ॥ ३२ ॥

१३

अपूर्वञ्च प्रकृतौ समानतन्त्रा चेदनित्यत्वादनर्थकं हि स्यात् ॥ ३३ ॥

१४

अधिकश्च गुणस्साधारणेऽविरोधात् कांस्यभोजिवदमुख्येऽपि ॥ ३४ ॥

१५

तत्प्रवृत्त्या तु तन्त्रस्य नियमस्स्याद्यथा पाशुकं सूक्तवाकेन ॥ ३५ ॥ न वाविरोधात् ॥ ३६ ॥ अशास्त्रलक्षणाच्च ॥ ३७ ॥

इति द्वादशाध्याये द्वितीयः पादः ॥ (तत्राधिकरणानि १५, सूत्राणि ३७)

## तृतीयः पादः

१

विश्वजिति वत्सत्वङ् नामधेयादितरथा तन्त्रभूयस्त्वादहतं स्यात् ॥ १ ॥ अविरोधो वा उपरि वासो हि वत्सत्वक् ॥ २ ॥

२

अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमस्स्यात् स्विष्टकृद्दर्शनाच्च ॥ ३ ॥ आगन्तुकत्वाद्वा स्वधर्मा स्याच्छ्रुतिविशेषादितरस्य च मुख्यत्वात् ॥ ४ ॥ स्वस्थानत्वाच्च ॥ ५ ॥ स्विष्टकृच्छ्रवणाच्चेति चेद्विकारः पवमानवत् ॥ ६ ॥ अविकारो वा प्रकृतिवच्चोदनां प्रति भावाच्च ॥ ७ ॥

३

एककर्मणि शिष्टत्वाद् गुणानां सर्वकर्म स्यात् ॥ ८ ॥

४

एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिस्स्यात्प्रधानस्य ॥ ९ ॥ अभ्यस्येतार्थवत्वादिति चेन्नाश्रुतित्वात् ॥ १० ॥ सति चाभ्यासशास्त्रत्वात् ॥ ११ ॥ विकल्पवच्च दर्शयति ॥ १२ ॥ कालान्तरेऽर्थवत्वं स्यात् ॥ १३ ॥

५

प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात् सर्वस्य निर्घातः ॥ १४ ॥

६

समुच्चयस्त्वदोषार्थेषु ॥ १५ ॥

७

मन्त्राणां कर्मसंयोगात् स्वधर्मेण प्रयोगस्स्यात् धर्मस्य तन्निमित्तत्वात् ॥१६॥ विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगस्स्यात् कर्मार्थत्वात् प्रयोगस्य ॥ १७ ॥

८

भाषास्वरोपदेशाद्वैरवत् प्रावचनप्रतिषेधस्स्यात् ॥ १८ ॥ मन्त्रोपदेशो वा न भाषिकस्य प्रायापत्तेर्भाषिकश्रुतिः ॥ १९ ॥ विकारः कारणाग्रहणात् ॥ २० ॥

९

तन्न्यायत्वाददृष्टेऽप्येवम ॥ २१ ॥ तदुत्पत्तेर्वा प्रवचनलक्षणत्वात् ॥ २२ ॥

१०

मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसन्निपातस्स्यात्सर्वस्य वचनार्थत्वात् ॥ २३ ॥

११

सन्ततवचनाद्धारायामादिसंयोगः ॥ २४ ॥ कर्मसन्तानो वा नानाकर्मत्वादितरस्याशक्यत्वात् ॥ २५ ॥

१२

आधारे च दीर्घधारत्वात् ॥ २६ ॥

१३

मन्त्राणां सन्निपातित्वादेकार्थानां विकल्पस्स्यात् ॥ २७ ॥

१४

सङ्ख्याविहितेषु समुच्चयोऽसन्निपातित्वात् ॥ २८ ॥

१५

ब्राह्मणविहितेषु च सङ्ख्यावत्सर्वेषामुपदिष्टत्वात् ॥ २९ ॥ याज्यावषट्कारयोश्च समुच्चयदर्शनं तद्वत् ॥ ३० ॥ विकल्पो वा समुच्चयस्याश्रुतित्वात् ॥ ३१ ॥ गुणार्थत्वादुपदेशस्य ॥ ३२ ॥ वषट्कारे नानार्थत्वात्समुच्चयः ॥ ३३ ॥

१६

हौत्रास्तु विकल्पेरन् एकार्थत्वात् ॥ ३४ ॥ समुच्चयो वा क्रियमाणानुवादित्वात् ॥ ३५ ॥

इति द्वादशाध्याये तृतीयः पादः ॥ ( तत्राधिकरणानि १६, सूत्राणि ३५ )

## चतुर्थः पादः

१

जपाश्चाकर्मसंयुक्ताः स्तुत्याशीरभिधानञ्च याजमानेषु समुच्चयस्स्यादाशीःपृथक्त्वात् ॥ १ ॥ समुच्चयञ्च दर्शयति ॥ २ ॥

२

याज्यानुवाक्यासु तु विकल्पस्स्याद्देवतोपलक्षणार्थत्वात् ॥ ३ ॥ लिङ्गदर्शनाच्च ॥ ४ ॥

३

क्रयणेषु तु विकल्पस्स्यादेकार्थत्वात् ॥ ५ ॥ समुच्चयो वा प्रयोगे द्रव्यसमवायात् ॥ ६ ॥ समुच्चयञ्च दर्शयति ॥ ७ ॥

४

संस्कारे च तत्प्रधानत्वात् ॥ ८ ॥

५

सङ्ख्यासु तु विकल्पस्स्याच्छ्रुति विप्रतिषेधात् ॥ ९ ॥

६

द्रव्यविकारन्तु पूर्ववदर्थकर्म स्यात्तथा विकल्पे नियमः प्रधानत्वात् ॥ १० ॥ द्रव्यत्वेऽपि समुच्चयो द्रव्यस्य कर्मनिष्पत्तेः प्रतिपशु कर्मभेदादेवं सति यथा प्रकृति ॥ ११ ॥ कपालेऽपि तथेति चेन्न कर्मणः परार्थत्वात ॥ १२ ॥ प्रतिपत्तिस्तु शेषत्वात् ॥ १३ ॥ श्रुतेऽपि पूर्ववत्त्वात्स्यात् ॥ १४ ॥ विकल्पे त्वर्थकर्म नियमप्रधानत्वाच्छेषे च कर्मकार्यसमवायात्तस्मात्तेनार्थकर्म स्यात् ॥ १५ ॥

७

उखायां काम्यनित्यसमुच्चयो नियोगे कामदर्शनात् ॥ १६ ॥ असति चासंस्कृतेषु कर्म स्यात् ॥ १७ ॥ तस्य च देवतार्थत्वात् ॥ १८ ॥ विकारो वा तदुक्तहेतुः ॥ १९ ॥ वचनादसंस्कृतेषु कर्म स्यात् ॥ २० ॥ संसर्गे चापि दोषस्स्यात् ॥ २१ ॥ वचनादिति चेत्तथेतरस्मिन् ॥ २२ ॥ उत्सर्गेऽपि कर्मणः कृतत्वात् ॥ २३ ॥

८

स आहवनीयस्स्यादाहुतिसंयोगात् ॥ २४॥ अन्यो वोद्धृत्याहरणात् ॥ २५॥

९

तस्मिन् संस्कारकर्म शिष्टत्वात् ॥ २६ ॥ स्थानाद्वा परिलुप्येरन् ॥ २७ ॥

१०

नित्यधारणे विकल्पो न ह्यकस्मात्प्रतिषेधस्स्यात् ॥ २८ ॥ नित्यधारणाद्वा प्रतिषेधो गतश्रियः ॥ २९ ॥

११

परार्थान्येको यजमानगणे ॥ ३० ॥

१२

अनियमोऽविशेषात् ॥ ३१ ॥

१३

मुख्यो वाविप्रतिषेधात् ॥ ३२ ॥

१४

सत्रे गृहपतिस्संयोगाद्धौत्रवत् ॥ ३३ ॥ आम्नायवचनाच्च ॥ ३४ ॥ सर्वं वा तदर्थत्वात् ॥ ३५ ॥ गृहपतिरिति च समाख्यासामान्यात् ॥ ३६ ॥ विप्रतिषेधे परम् ॥ ३७ ॥ हौत्रे परार्थत्वात् ॥ ३८ ॥ वचनं परम् ॥ ३९ ॥

१५

प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ॥ ४० ॥ स्मृतेर्वा स्याद् ब्राह्मणानाम् ॥ ४१ ॥ फलचमसविधानाच्चेतरेषाम् ॥ ४२ ॥ सान्नाय्येऽप्येवं प्रतिषेधोऽसोमपीथहेतुत्वात् ॥ ४३ ॥ चतुर्धाकरणे च दर्शनात् ॥ ४४ ॥ अन्वाहार्ये च दर्शनात् ॥ ४५ ॥

इति द्वादशाध्याये चतुर्थः पादः ॥ ( तत्राधिकरणानि १५, सूत्राणि ४५ )

( आहत्य द्वादशाध्यायेऽधिकरणानि ६७, सूत्राणि १५५ )

समाप्तश्चाध्यायः ॥

* श्री *

# अध्वरमीमांसाकुतूहलवृत्तेश्चतुर्थभागस्य

# सूत्रसूची

द

## श

ष



स

॥ कुतूहलवृत्तेश्चतुर्थभागस्य सूत्रसूची समाप्ता ॥

श्रीः

श्रीगुरुभ्यो नमः

# न्यायसञ्चारविवरणम्

पृ० २ पं० ३ (क) 'प्रायेणानृतवादित्वात्पुंसां भ्रान्त्यादिसम्भवात्' (शा० दी० १-३-१)

वेदस्य प्रामाण्यानवधारणे हेतुः पुंसामनृतवादित्वम् भ्रान्त्यादिसम्भवश्च। पुमांसः प्रायोऽनृतवादिनः, तत्प्रणीतवेदस्य प्रामाण्यं कथं सिध्यतु? क्वचिदनृतवादित्वाभावेऽपि तेषां भ्रमविप्रलिप्सादिसम्भवात्तत्प्रणीतस्य वेदस्य प्रामाण्यं कथमङ्गीक्रियताम्? अतस्तत्र प्रयोजनस्य विषयस्य चासत्त्वादिदं शास्त्रं नारम्भणीयमिति शङ्कायां तत्परिहारायेदमध्वर-मीमांसाशास्त्रस्य प्रथमं सूत्रम्—'अथातो धर्मजिज्ञासा' इति। ध्वरो हिंसा, नास्ति ध्वरो हिंसा यस्य इत्यध्वरः यज्ञः, तस्य मीमांसा-विचारः, तदात्मकं शास्त्रमित्यर्थः। प्रायोऽस्मिन् शास्त्रे यज्ञतत्सम्बन्धिपदार्थविधायकान्येव वाक्यान्युदाहृत्य विचारः प्रवर्त्यते। अत इदमध्वर-मीमांसाशास्त्रमित्युच्यते।

पृ० ३ पं० ११ (ख) 'सन्दिग्धे तु वाक्यशेषात्' ( जै० सू० १-४-२० )।

निगमनिरुक्तव्याकरणाद्यध्ययनेन पदपदार्थज्ञानवतां वेदार्थज्ञानं सम्भवत्येव, तथापि यत्रार्थविषये सन्देहः तस्य निवृत्तिर्विचारमन्तरा न भवितुमर्हतीति विचारात्मकं शास्त्र-मारम्भणीयम्। तथाहि—'अक्ताः शर्करा उपदधाति' इत्याम्नायते। शर्कराः क्षुद्रपाषाणाः। अक्ताः—अञ्जनेन संस्कृताः। ताः वेद्यामुपदध्यात्—निक्षिपेदिति वाक्यस्यार्थे ज्ञातेऽपि तासामञ्जनं केन द्रवद्रव्येणेति वाक्यतो न ज्ञायते। द्रवद्रव्याणि च नाना-जलघृततैलपयः-प्रभृतीनि। एतेषु येन केनचन द्रवद्रव्येणाञ्जनम्? उत 'तेजो वै घृतम्' इत्यर्थवादवशेन घृतेनैवाञ्जनम्? इति सन्देहे तन्निर्णयाय शास्त्रमिदं न्यायमुपदिशति। अर्थवादाधिकरणेऽ-र्थवादानां विध्यङ्गत्वं प्रतिपादितम्—विधिः प्रधानम्, अर्थवादश्चाङ्गमिति। तत्राङ्ग-भूतोऽप्यर्थवादोऽविशेषेण प्रवृत्तं विधिं प्रधानमपि सङ्कोचयितुं समर्थ इति घृतेनैवाञ्जनं न तु येन केनचन द्रवद्रव्येणेति वाक्यशेषाधिकरणे सिद्धान्तितम्। एतादृशो निर्णयो न निगम-निरुक्तादिना भवति। अतो विचारशास्त्रमावश्यकमिति।

पृ० ७ पं० १७ (ग) 'वस्तुतस्तु'।

तार्किकसिद्धं यथार्थानुभवत्वं प्रमालक्षणं व्युदस्य अनधिगतार्थगन्तृत्वमेव तल्लक्षणमुचितमिति सिद्धान्तः कृतः। तत्र धारावाहिकज्ञाने घटः घटः घट इत्याकारके द्वितीयादिज्ञानेऽनधिगतार्थविषयकत्वाभावेनाव्याप्तिमाशङ्क्य द्वितीयादिज्ञानेषु भासमानानां क्षणानामगृहीतत्वात्तत्कृतानधिगतार्थविषयकत्वसम्भवेनाव्याप्तिं परिहृत्य धारावाहिकज्ञाने तावद्व्यापि ज्ञानमेकमेवेति कल्पान्तरमुपन्यस्तम्—वस्तुतस्त्वित्यादिना। योग्यविभुविशेषगुणानां त्रिक्षणावस्थायित्वात् तावद्व्याप्येकमेव ज्ञानमिति साधनम्, त्रिक्षणावस्थायित्वस्य च पारिभाषिकत्वव्यवस्थापनं न शास्त्रमर्यादानुगुणमिति कल्पान्तरं गृह्णाति-वस्तुतस्त्विति। स्वं द्वितीयादिज्ञानम्, तत्समानविषयकं ज्ञानम् 'घटः' इति प्रथमज्ञानम्। तदनपेक्षोत्पत्तिकत्वं द्वितीयादिज्ञानेष्विति अनधिगतार्थविषयकत्वमेव प्रमाया लक्षणमित्यर्थः।

पृ० १० पं० १८ (घ) 'बर्हिरेकत्वेन'।

'यदातिथ्यायां बर्हिस्तदुपसदाम् तदग्नीषोमीयस्य' इति ज्योतिष्टोमे समाम्नायते। आतिथ्येष्टौ यद्बर्हिः लवनादिसंस्कारैः सम्पादितं वेद्यास्तरणादौ च विनियुक्तं तदेव बर्हिः उपसदिष्टिषु अग्नीषोमीयपशौ च ग्राह्यमिति वाक्यस्यार्थः। इष्टित्वेनातिथ्यादयो दर्शपूर्णमासविकाराः। दर्शपूर्णमासयोर्बर्हिस्संस्काराः—बर्हिषां लवनम्, अनधो निधानम्, शुल्बेन सन्नहनम्, ग्रन्थिकरणम्, ग्रन्थेरुपगूहनम्, मूर्ध्ना हरणम् इत्यादयः तेऽतिदेशेनातिथ्योपसदग्नीषोमीयेषु प्राप्ताः। तत्र दर्शपूर्णमासवदातिथ्यायां सर्वे बर्हिस्संस्कारा अनुष्ठीयन्ते। आतिथ्येष्टिश्च ज्योतिष्टोमे सोमस्य राज्ञः क्रयणानन्तरं द्वितीयदिनेऽनुष्ठीयते। सोमो राजातिथिस्समागत इति तदादरायेयमिष्टिः क्रियत इत्यातिथ्येष्टिः। तदूर्ध्वं द्वितीयतृतीयचतुर्थदिनेषूपसदिष्टयस्तिस्रः, चतुर्थदिने चाग्नीषोमीयपशुश्चानुष्ठीयन्ते। यथातिथ्येष्टिर्दर्शपूर्णमासविकृतिः, तथोपसदिष्टयः, पशुयागश्च तद्विकृतयः। विकृतित्वाद्दर्शपूर्णमासतोऽत्र बर्हिस्संस्कारा अतिदिष्टा अपि उपसत्सु अग्नीषोमीयपशौ च नानुष्ठीयन्ते, यदातिथ्यायां बर्हिस्तदुपसदाम् इति विधेः सकृदातिथ्यायामनुष्ठितानामेव बर्हिस्संस्काराणामुपसदग्नीषोमीयाङ्गत्वप्राप्तेः पुनस्तेषां नानुष्ठानम्, तथैवाकाशस्यैकत्वेन देवदत्तीयकर्णशष्कुल्यवच्छिन्नाकाशे संस्कृते तत्संस्काराणां यज्ञदत्तीयकर्णशष्कुल्यवच्छिन्नाकाशस्याप्यङ्गत्वेन संस्कृतत्वाज्ज्ञानोत्पत्तिरिति शङ्कितुराशयः।

पृ० १८ पं० १८ (ङ) 'स्वार्थे प्रामाण्यस्यार्थवादाधिकरणे'।

'स आत्मनो वपामुदखिदत्' 'गावो वा एतत्सत्रमासत' इत्याद्यर्थवादानामसद्वृत्तान्तावबोधकत्वेन केवलविधेयस्तुतिपरत्वमेव, न तु स्वशक्यार्थपरत्वमपि, शक्यार्थपरत्वे स्वीक्रियमाणेऽप्रामाण्यापत्तेः। अतो जहत्स्वार्थलक्षणया केवलं विधेयस्तुतिपरत्वं स्वीकृत्य विध्येकवाक्यतया प्रामाण्यं प्रसाधनीयम्। एवमेव 'तत्सामान्यादितरेषु तथात्वम्' इति न्यायेन 'वायुर्वै क्षेपिष्ठा देवता' इत्याद्यर्थवादानामपि जहत्स्वार्थलक्षणामङ्गीकृत्य केवलविधेयस्तुतिपरत्वमेवाङ्गीकर्तव्यमिति प्राभाकरपक्षं प्रच्छन्नबौद्धमतत्वेनोत्थाप्य वैदिकशिरोमणीनां वार्तिककृतां पक्षो ग्रन्थकारेणोपपादितः। सर्वेष्वर्थवादेषु सदर्थप्रतिपादकेषु वावयवाक्यार्थानतिक्रमेणैवाजहत्स्वार्थलक्षणया प्राशस्त्यपरत्वम्। न चासदर्थप्रकाशकेषु 'स आत्मनो वपाम्' इत्यादिषु शक्यार्थस्वीकारे प्रजापतिरात्मनो वपामुच्चिखेद, तथैव यजमानोऽपि स्वीयां वपामुत्खिदेत् इत्यर्थस्स्यात्, स चाशक्यत्वादनुपपन्नः। अतस्स्वार्थेऽप्रामाण्यमिति वाच्यम्। सृष्ट्यादौ परमेश्वरः स्वमहिम्ना पशुरूपमन्यदेकं स्वीकृत्य तद्वपोत्कर्तनेनायजत इत्येवं प्रकारेण सर्वत्र स्वार्थे सत्यतायास्सत्वान्न दोषः। अत एव 'गुणवादस्तु' 'रूपात्प्रायात्' इत्यादीनि सूत्राणि स्वार्थसत्यतापराणि सङ्गच्छन्ते। विशेषस्त्वर्थवादाधिकरणादवगन्तव्यः।

पृ० १८ पं० २० (च) 'रेवत्यधिकरणे वक्ष्यते'।

'त्रिवृदग्निष्टुदग्निष्टोमः' 'तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत' 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति वाक्यानि श्रूयन्ते। प्रथमवाक्यस्यायमर्थः—अग्निष्टुत् इति कर्मणो नाम। अग्निष्टुत्संज्ञकैकाहस्सोमयागः। अयं ज्योतिष्टोमविकृतिः। ज्योष्टोमेऽग्निष्टोमसंस्थाके त्रिवृत् पञ्चदशः सप्तदशः एकविंश इति चत्वारस्स्तोमा विहिताः। स्तोमो नाम स्तोत्रगता सङ्ख्या। ज्योतिष्टोमे प्रातस्सवने बहिष्पवमानमेकम्, चत्वार्याज्यस्तोत्राणि। बहिष्पवमानस्य त्रिवृत्स्तोमः त्रिवृदित्यस्य नव संख्यार्थः। नवसंख्याकस्तोमो बहिष्पवमानस्य। आज्यस्तोत्राणां पञ्चदशस्तोमः। माध्यन्दिनसवने माध्यन्दिनपवमानमेकम्, चत्वारि पृष्ठस्तोत्राणि। एषु सप्तदशस्तोमः। सायंसवने आर्भवपवमानम्, यज्ञायज्ञीयञ्चेति स्तोत्रद्वयम्। अत्रैकविंशस्तोमः। आहत्य द्वादशस्तोत्राणि। इमानि प्रकृताग्निष्टुद्यागेऽतिदेशतः प्राप्तानि। तत्र 'त्रिवृत्' इति नवसंख्यया पञ्चदशादिसंख्या बाध्यन्ते। तथा च त्रिवृत्स्तोमकोऽग्निष्टुद्याग इति सम्पन्नम्। अग्निष्टोम-

शब्दः प्रकृते संस्थावाची। संस्था नाम स्तोत्रेण क्रतूपरमः। अग्निष्टोमस्तोत्रेण क्रतूपरमे जाते स क्रतुरग्निष्टोमसंस्थाक इति कथ्यते। ज्योतिष्टोमेऽग्निष्टोमसंस्था नित्या। तदुपरि उक्थ्यस्तोत्राणि कृत्वा क्रतूपरमे सति स उक्थ्यसंस्थाक इति व्यवह्रियते। यद्युक्थ्यसंस्थानन्तरं षोडशिस्तोत्रम्, तदुपर्यतिरात्रस्तोत्राणि च क्रियन्ते, तर्हि षोडशिसंस्थाकोऽतिरात्रसंस्थाक इति व्यवहारः। उक्थ्यादयश्च संस्थाः काम्याः। प्रकृतेऽग्निष्टोमपदं संस्थापरम्। अग्निष्टोमसंस्थाक इति सम्पन्नम्। तथा च त्रिवृत्स्तोमकेनाग्निष्टोमसंस्थाकेनाग्निष्टुद्यागेन स्वर्गं फलं भावयेदिति बोधः। द्वितीयवाक्ये 'तस्य' इत्यनेन प्रकृताग्निष्टुतः परामर्शः। 'वायव्यासु' इत्यनेन 'यज्ञा यज्ञा वोऽग्नये' इति प्राकृतर्चो बाधः। यज्ञायज्ञीयस्तोत्रे प्रकृतितः प्राप्तस्यैकविंशस्तोमस्याग्निष्टुद्यागे त्रिवृदित्यनेन बाधे सति पुनः 'एकविंशम्' इत्यनेन प्रतिप्रसवः। तथा च—एकविंशस्तोमकवायव्यर्गधिकरणकाग्निष्टोमस्तोत्रेणाग्निष्टुत्क्रतुना ब्रह्मवर्चसं भावयेदिति बोधः। एतस्यैव रेवतीषु' इति तृतीयवाक्ये रेवतीष्वित्यनेन वायव्यानामृचां बाधः। 'रेवतीर्नः' इति रेशब्दघटिता ऋचो रेवत्यः। रेवतीषु ऋक्षु 'अश्वं नत्वा वारवन्तम्' इत्यस्यामृचि गेयं वारवन्तीयं साम निक्षिप्य तच्चाग्निष्टोमसामस्थाने कृत्वा पशुकामो यजेत इति वाक्यस्य साधारणोऽर्थः। अत्र विचारः—किं पूर्वस्मिन्नेवाग्निष्टुत्क्रतौ रेवत्याधारवारवन्तीयगुणः पशुफलाय विधीयते? उत तादृशगुणविशिष्टं कर्मान्तरम्? इति। पूर्वपक्षी फलाय गुणविधिं मन्यते, सिद्धान्ती तु कर्मान्तरम्। तत्र पूर्वपक्षे—'ब्रह्मवर्चसकामो यजेत' इति पूर्ववाक्यप्राप्तस्य यागस्य 'पशुकामोह्येतेन यजेत' इति वाक्यगतयजतिपदमनुवादकम्। अतः पूर्वकर्मण्येव फलोद्देशेन रेवतीऋगधिकरणकवारवन्तीयगुणविधानमनेन क्रियते। तत्राश्रयत्वेन यागस्यान्वयः 'दध्नेन्द्रियकामस्य जुहुयात्' इतिवत्। 'फलाय विधीयमानो गुणो यत्र कारकतामापद्यते स आश्रयः' इति विधया विधीयमानसाम्नो यागकारकत्वासम्भवात् यागस्याश्रयत्वं नोपपद्यते यद्यपि, तथापि आनर्थक्यतदङ्गन्यायेन यागाङ्गस्तोत्रसाधनद्वारा यागसाधनत्वोपपत्तेः। अत्र रेवतीवारवन्तीयसम्बन्धे तस्य च पशुफलेन सम्बन्धे विधीयमाने वाक्यभेदस्स्यात्, किन्तु 'यजेत' इति श्रूयमाणविधे रेवतीवारवन्तीयसम्बन्धे व्यापाराभावेन 'कृत्वा' इति क्त्वाप्रत्ययेनैव वारवन्तीयस्य रेवतीसम्बन्धसिद्धेः केवलं फलसम्बन्धस्यैव विधेयत्वान्न वाक्यभेदः। अतः प्रकृताग्निष्टुति फलाय गुणविधिरयमिति पूर्वपक्षः। तथा च—अग्निष्टोमस्तोत्रद्वारा प्रकृतयागाश्रितेन रेवत्याधारवारवन्तीयगुणेन पशून् भावयेदिति पूर्वपक्षे बोधः।

सिद्धान्तस्तु—'गीतिषु सामाख्या' इति साम्नां गीतिरर्थः। गीतिश्चोच्चारणक्रियाविशेषः। एवंविधस्य साम्न उद्देश्यत्यागात्मको यागः कथमाश्रयो भवितुमर्हति, द्रव्यदेवता-

साधनको यागः, तं प्रति गीतिविशेषात्मकं साम कथं साधनं स्यात् ? यागाङ्गभूतस्तोत्रद्वारापि वारवन्तीयं साम कथं यागकारकत्वमश्नुवीत ? क्रियाकारकभावश्च साक्षात्परिगण्यते, न तु प्रणाड्या। किञ्च फले विधीयमानमिदं वारवन्तीयं न यागाङ्गम्, अतः कथं यागाङ्गानि स्तोत्राण्युपसर्पेत्। एतेन आनर्थक्यतदङ्गन्यायो नात्र प्रसरतीति सिध्यति। अतो न यागस्याश्रयत्वम्। यद्यपि क्रियाकारकभावसम्बन्धानादरेण 'पशुकाम उक्थ्यं गृह्णीयात्' 'दाक्षायणयज्ञेन स्वर्गकामो यजेत' इत्यादौ फलाय विधीयमाना उक्थ्यदाक्षायणयज्ञादयः संस्थावृत्त्यादयो गुणाः यागसम्बन्धिप्रयोगपरिच्छेदकत्वमात्रेण तदाश्रितत्वं प्राप्नुवन्ति, तथैव गीत्यात्मकस्य साम्नः 'कृत्वा' इति क्त्वाप्रत्ययगम्यक्रियान्तरसमानकर्तृकत्वनिर्वाहाय क्रियान्तरापेक्षायां सन्निधिलब्धो यागो यजतिनानूद्यमान आश्रयतयाऽन्वेतुमर्हति, तथापि 'अग्निष्टोमसाम' पदं व्यर्थं स्यात्, प्रकृतितः आज्यपृष्ठादिषु सर्वेषु स्तोत्रेष्वतिदेशतः प्राप्तेषु विशिष्याग्निष्टोमस्तोत्रस्यानुवादे कारणाभावात्। अतः गुणविधौ यजत्यग्निष्टोमसामपदयोरनुवादत्वं नास्ति किन्तु विधानार्थत्वमेव तयोरिति स्वीकर्तव्यम्। तथा सति वारवन्तीयस्य धात्वर्थेनाग्निष्टोमेन च सम्बन्धे क्रियमाणे 'वारवन्तीयेन पशून् भावयेदग्निष्टोमसम्बन्धिना' इति वाक्यभेदो दुर्वारः। अतः कृत्वा शब्दोक्तभावनानिर्वाहितरेवतीवारवन्तीयनिरूपितक्रियाकारकभावसम्बन्धविशेषितोऽपूर्वो यागः पशुफलाय विधीयत इति विशिष्टविधिस्स्वीक्रियत इति। तदिदमुक्तं भट्टपादैः—

"श्रौतव्यापारनानात्वे शब्दानामतिगौरवम्।
एकोक्त्यवसितानान्तु नार्थाक्षेपो विरुध्यते॥" इति।

एवञ्च—'एतस्यैव रेवतीषु' इत्यत्र 'यजेत' इत्याख्यातोपात्तभावनायां पशुफलं साध्यत्वेन धात्वर्थस्य यागस्य करणत्वेन चान्वये जाते 'यागेन पशून् भावयेत्' इति बोधे सति यागेन कथम्भूतेनेत्याकाङ्क्षायां, रेवतीऋगधिकरणकवारवन्तीयसामसाध्यकाग्निष्टोमस्तोत्रयुक्तेनेति सम्बध्यते। तत्र विशेषणीभूतस्यार्थस्यार्थाद्विहितत्वात्तदंशेऽपि प्रामाण्यम्—अप्राप्तानधिगतार्थबोधकत्वरूपं सिध्यत्येवेत्यर्थः।

**पृ० १८. पं० २१; पृ० १९ पं० ३. ( छ, ज ) 'देवताधिकरणे‥‥‥प्रपञ्चयिष्यते'।**

'देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात्' ( जै० सू० ९. १. ६. ) इति देवताधिकरणपूर्वपक्षसूत्रम्। देवतोद्देश्यकद्रव्यत्यागात्मके यागे देवताया उद्देश्यत्वात् सैव यागस्य प्रयोजिका प्रधानभूता, यागस्तु गुणभूतः, भोजनस्य तदर्थत्वात्—भोजनरूपस्य यागस्य

तदर्थत्वात्–देवतार्थत्वात्, अतिथिवदिति दृष्टान्तः। यथातिथिसत्कारार्थभोजनस्य तदर्थत्वमतिथिश्च प्रधानभूतः, तथैव यागोऽपि देवतार्थः, देवता प्रधानभूता, यागश्च तदर्थो गुणभूत इति पूर्वपक्षसूत्रार्थः। 'अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्यात् गुणत्वेन देवताश्रुतिः' इति सिद्धान्तसूत्रम्। हविस्त्यागक्रियैव प्रधानभूता–शब्दपूर्वत्वात्, देवता च गुणत्वेन। 'यजेत स्वर्गकामः' इत्यत्र स्वर्गार्थित्वेन याग उपदिश्यते। यागश्च देवतोद्देश्यकद्रव्यत्यागरूपः। यागस्य देवता च 'यदाग्नेयोऽष्टाकपालः' इत्याद्युत्पत्तिवाक्ये तद्धितान्तपदेनावगम्यते। तत्र च देवता द्रव्यं प्रति गुणभूता। द्रव्यदेवतासम्बन्धेन च–अग्निदेवताकाष्टाकपालपुरोडाशहविष्को याग इति कल्पनीयः। 'यजेत स्वर्गकामः' इत्यधिकारवाक्ये एवंविध एव यागः परामृश्यत इति तत्र त्यागांशं प्रति देवता गुणभूतैव, न तु तस्याः प्राधान्यम् इत्येतावन्मात्रं देवताधिकरणप्रतिपाद्यम्। देवताया विग्रहवत्त्वम्, हविस्स्वीकर्तृत्वं हविर्भोक्तृत्वं तृप्तिः प्रसादश्चेति विग्रहादिपञ्चकस्य स्वीकारेऽपि देवताया गुणभावे न कापि क्षतिः। विग्रहादिपञ्चकाववोधकश्रुतिस्मृतीतिहासपुराणवचनानामानर्थक्यापत्त्या तत्स्वीकृत्य यागादिकं प्रति देवताया गुणभावस्वीकारेऽधिकरणस्वरूपस्य न भङ्गापत्तिः, सूत्रकारेण विग्रहादिपञ्चकस्य कण्ठतोऽनिराकरणात्। 'यजेत स्वर्गकामः' इत्यादयो विधयस्स्वर्गादिफलसाधनत्वेन क्षणिका यागादिक्रिया विदधानाः कालान्तरभाविस्वर्गादिसाधनत्वान्यथानुपपत्त्या स्वजन्यापूर्वद्वारा यागादयः फलसाधका इत्यवबोधयन्ति, विनापूर्वेण यागादीनां फलसाधनत्वानुपपत्तेः। यागादिना तोपिता अपीन्द्रादयो देवताः अपूर्वं प्रतिगुणभूता एव। ततश्च देवतानां विग्रहादिपञ्चकस्वीकारेऽपि न काचित्क्षतिः, तोषितदेवताकयागस्य तज्जन्यापूर्वस्य वा फलप्रदातृत्वसिद्धेरिति।

**पृ० २६. पं० ४. (ङ) 'ननु वेतसशाखया'।**

विधेयस्तावकतयार्थवादस्य प्रामाण्यस्वीकारः क्वचिदनुपपन्न इति शङ्कते-नन्विति। वेतसशाखा प्रसिद्धा। अवकाः–लतारूपाश्शैवालाः। आभिरग्निं विकर्षति–विकर्षणेन संस्करोतीत्यर्थः। 'य एवं विद्वानग्निं चिनुते' इति श्रूयते। चयनेन स्थण्डिलं निष्पाद्य तत्राग्निस्थापनद्वारा क्रतुमुपकुर्यादिति तदर्थः। तथा चाग्न्याधेयस्थण्डिलं वेतसशाखयावकाभिश्च विकर्षति–विकर्षणेन संस्कुर्यादिति प्रकृतवाक्यस्यार्थः। एवं संस्कृतस्याग्नेः 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति, तमुक्थ्येन, तं षोडशिना, तमतिरात्रेण, तं द्विरात्रेण' इत्यादिभिः 'तमेकादशरात्रेण' इत्यन्तैः चतुर्दशभिर्वाक्यैर्विहितेष्वनुयजनेषु विनियोगः। तथा च स्थण्डिलनिष्पत्तिप्रणालिकया चयनसंस्कृतेनाग्निनाग्निष्टोमादीन् कुर्यादिति सिध्यति। एवञ्चाग्निविकर्षणे विनियुक्तासु वेतस-

शाखायामवकासु च स्तोतव्यासु, 'आपो वै शान्ताः' इत्यापस्स्तूयन्त इति विधेयवेतसशाखावकानां स्तुतेरभावात् विधेयस्तावकतयार्थवादानां प्रामाण्यं दुरुपपादमिति शङ्कितुराशयः ।

**पृ० २६. पं० १६. ( च ) 'इत्यंशुग्रहणे विहितं हिरण्यं स्तूयते' ।**

द्वितीयाध्यायद्वितीयपादे नवमेऽश्वदाभ्याधिकरणेऽश्वदाभ्यवाक्ययोः 'योंऽशुं गृह्णाति' 'योऽदाभ्यं गृहीत्वा सोमाय यजते' इत्यनयोर्यागान्तरविधायकत्वमित्याशङ्क्य ज्योतिष्टोमे ग्रहणरूपगुणविधायकत्वमिति सिद्धान्तितम् । एवं विहितं ग्रहणमनूद्य 'हिरण्यं हस्ते भवत्यथ गृह्णाति' इत्यनेनांशुग्रहग्रहणावसरे हस्ते हिरण्यधारणं विधीयते । अर्थाद्धिरण्यं हस्ते धृत्वांशुं ग्रहणेन संस्कुर्यादिति वाक्यार्थः । तत्र 'स्तेनं मनः' इत्यर्थवादस्स्तोतुं प्रवृत्तः 'रूपात्' हेतुना मनसः स्तेनवत्प्रच्छन्नरूपत्वं प्रतिपादयन् हिरण्यं स्तौति–हिरण्यञ्चैतद्दोषरहितमभ्यर्हितमिति ।

**पृ० २७, पं० २० ( छ ) 'विज्ञानेश्वरादिभिः' ।**

याज्ञवल्क्यस्मृतौ—

'अग्र्यस्सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा ।
वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णकः ॥
स्वस्रीयऋत्विग्जामातृयाज्यश्वशुरमातुलाः ।
त्रिणाचिकेतदौहित्रशिष्यसम्बन्धिबान्धवाः ॥
कर्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निर्ब्रह्मचारिणः ।
पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसम्पदः' ॥

इति श्राद्धे निमन्त्र्यान् श्राद्धार्हान् ब्राह्मणान् परिगणय्य,

'रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ।
अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तकः' ॥

इत्यादिना अनिमन्त्र्याः श्राद्धानर्हा ब्राह्मणाः परिगणिताः । तत्र निमन्त्र्याणां परिगणनेन कुण्डगोलकादीनाम् (पत्यौ जीवति परदारेषु यस्सुत उत्पद्यते स कुण्डः, मृते च पत्यौ तथा य उत्पद्यते स गोलकः) अनिमन्त्र्यत्वं सिध्यत्येव, तथापि तेषां परिगणनं श्राद्धार्हब्राह्मणानामलाभे सति श्राद्धानर्हलक्षणानाक्रान्तानां ब्राह्मणानां प्राप्त्यर्थं परिगणनमिति मिताक्षराकारा वदन्ति—'अग्र्यास्सर्वेषु वेदेषु, इत्यादिना श्राद्धयोग्यब्राह्मणप्रतिपादनेनैव तद्व्यतिरिक्तानामयोग्यत्वे सिद्धेऽपि पुनः केषाञ्चिद्रोग्यादीनां प्रतिषेधवचनमुक्तलक्षणब्राह्मणासम्भवे प्रतिषेधरहितानां प्राप्त्यर्थम्' इति । अयमर्थस्सूत्रगतचकारेण समुच्चीयत इति ।

**पृ० ११ पं० २१. (ज) 'पुरुषस्तु परं प्रत्यवैष्यतीति तृतीये'।**

तृतीयाष्टमस्याष्टमाधिकरणे। 'क्लृप्तीर्यजमानं वाचयति' इति श्रूयते। 'आयुर्यज्ञेन कल्पताम्, प्राणो यज्ञेन कल्पताम्' इत्यादयो मन्त्राः क्लृप्त्यर्थकशब्दघटिता क्लृप्तिशब्देनोच्यन्ते। अत्र किमधीतानधीतमन्त्रस्सर्वोऽपि यजमानो वाचयितव्यः? उतानधीतमन्त्र एव? अथवाधीतमन्त्र एव? इति त्रिधा संशयः। प्रथमपक्षद्वयं पूर्वपक्षिणः। वाचनं नाम याज्ञिकैः क्रियमाणं खण्डशः कृत्स्नमन्त्रसमर्पणम्। तदिदमधीतवेदविषये प्रवर्तमानमदृष्टार्थं स्यात्, अतोऽनधीतवेद एव वाचयितव्य इति पूर्वपक्षः। अनधीतवेदस्य क्रतुष्वधिकाराभावादधीतवेद एवादृष्टार्थं वाचयितव्य इति सिद्धान्तः। तत्र 'स्वाध्यायोऽध्येतव्यः' इति विधिः स्वकुलपरम्परागतशाखाया अध्ययनकर्तव्यतां बोधयति। तच्चाध्ययनं स्वशाखाया नित्यम्, तदर्थज्ञानञ्च नित्यम्। शाखान्तराध्ययनं तदर्थज्ञानञ्चार्थिकम्, तत्तत्क्रतुविधिभिः प्रयुक्तत्वात्, तत्र स्वाध्यायाध्ययनविधेर्व्यापाराभावात्। अतः स्वशाखायास्समग्राया अध्ययनन्तु नित्यम्, तदर्थज्ञानमपि, किन्तु स्वाधिकृतकर्मस्वरूपपरिज्ञानमात्रेणापि कर्मानुष्ठानसिद्धेरनधिकृतकर्मविधिपरिज्ञानाभावेऽपि कर्मानुष्ठानं निष्प्रत्यूहं सिध्यत्येव, किन्तु नित्यस्य तदर्थज्ञानस्य विरहेण पुरुषः प्रत्यवैति। अत्रायं विषयविमर्शः—अङ्गत्वग्राहकं सामर्थ्यापरपर्याय लिङ्गं सामान्यसम्बन्धबोधकप्रमाणान्तरनिरपेक्षं तत्सापेक्षञ्चेति विभज्य कर्मानुष्ठानं प्रत्यर्थज्ञानस्य सामान्यसम्बन्धबोधकप्रमाणान्तरनिरपेक्षेण सामर्थ्येनाङ्गत्वं प्रसाधनीयम्, अनारभ्याधीतत्वेन क्रतुमध्यपाठाभावात्स्वाध्यायाध्ययनविधेः। तत्रोत्तरक्रतुविधयो यथावत्स्वस्वविधेयानुष्ठानसिद्धये विद्यावतः पुरुषानपेक्षन्ते। स्वाध्यायाध्ययनविधिरपि विद्याग्रहणे पुरुषान् प्रवर्तयति। गृहीतविद्याश्च पुरुषाः नैकविधानि फलानि कामयमानास्तत्तत्क्रतुविधिभिर्यथाधिकारं सम्बध्नन्ति। तत्र पुरुषैर्गृहीताया विद्याया बोधान्तत्वे सत्येव क्रतुविधयो निराकाङ्क्षा भवेयुः। स च बोधोऽर्थज्ञानरूपः। सोऽपि न केवलं पदपदार्थज्ञानावसानः, किन्तु निष्कृष्टवेदवाक्यार्थज्ञानावसानः, पदपदार्थज्ञानस्याङ्गाध्ययनेनैव सिद्धेः। निष्कृष्टवेदवाक्यार्थज्ञानन्तु विचारात्मकमीमांसाशास्त्रगम्यम्। ततश्च प्रयोजनवदर्थावबोधपर्यवसायी स्वाध्यायाध्ययनविधिः विचारात्मकमीमांसाशास्त्रं प्रयोजयतीति भाष्यवार्तिकाद्युन्नीतः पन्थाः।

वासुदेवदीक्षितास्तु-नियतस्वरविशिष्टाक्षरानुपूर्वीग्रहणार्थत्वेनाध्ययनविधेः पर्यवसानमभिप्रयन्ति। तत्र वेदभाष्ये सायणाचार्योदधृतानि 'बोधान्तत्वेऽध्ययनाकारस्न्यंम्' 'सोऽकाम्यः प्राग्बोध्यमानाभानयोः' इत्यादिपुरुषार्थानुशासनसूत्राणि, महाभाष्यकारैरुदाहृता

'ब्राह्मणेन निष्कारणो वेदष्षडङ्गोऽध्येयो ज्ञेयश्च' इति श्रुतिश्च प्राधान्येन तेषामवलम्बः। ग्रन्थकृतामिदं तात्पर्यम्—अध्ययनं ग्रहण-धारण-जपभेदेन त्रिविधम्। अध्ययनञ्च गुरु-मुखोच्चारणानूच्चारणम्। तेन प्रथममध्येता वेदानुपूर्वीं गृह्णाति, तदनु धारयति-वाचो-विधेयं करोति, ततः प्रत्यहं ब्रह्मयज्ञेन जपत्यविस्मरणाय। त्रिविधेष्वप्यध्ययनेपूद्देश्यकोटा-वर्थविबोधो न निपतति, नियतस्वरविशिष्टाक्षरानुपूर्वीग्रहणधारणजपेष्वेव विधेः पर्यवसानात्। एतादृशाक्षरानुपूर्वीग्रहणधारणजपानामपि दृष्टप्रयोजनत्वमेव। अर्थावधारणस्य च कर्मानुष्ठान उपयोगः। तच्चोत्तरक्रतुविधिभिरेवाकाङ्क्ष्यते। तच्च 'षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति विधिना प्रयुज्यते। अतोऽक्षरानुपूर्वीग्रहणार्थमेवाध्ययनम्, तन्नित्यम्, तदर्थज्ञानमपि नित्यम्, अर्थज्ञानमपि स्वाधिकृतमन्त्रब्राह्मणयोरेव, अध्ययनन्तु समस्तायाः स्वशाखाया इति।

पृ० ३४ पं० ८ (ञ) पृष्ठस्य १८ 'ङ' इति टिप्पण्यां विवृतोऽयमर्थः।

पृ० ३६ पं० १० (ञ) 'चातुर्थिकतृतीयाद्याधिकरणपुनरुक्तिस्तु तत्रैव परिहरिष्यते'।

ग्रन्थकृता परिहारो यद्यपि कण्ठरवेण तत्र न कृतः, तथापि तत्रत्योपपादनशैल्या परिहारः प्रतीयते। 'न स पापं श्लोकं शृणोति' इत्यर्थवादबोधितपापश्लोकश्रवणाभावस्य विधीयमानपर्णत्वनिरूपितसाध्यत्वं नास्तीति पर्णमय्यधिकरणप्रतिपाद्यम्। औदुम्बराधि-करणे तु 'ऊर्जोऽवरुद्ध्यै' इत्यर्थवादबोधितोर्गवरोधनिष्ठसाध्यतानिरूपितसाधनत्वमौदुम्बरत्वस्य नास्तीति प्रतिपाद्यमिति प्रतिपाद्यभेदेनाधिकरणभेदः। नन्वेवं प्रतिपाद्यभेदे विनिगमनाविरहः, वैपरीत्येनापि प्रतिपाद्यसम्भवादिति चेत्, अत्र वदन्ति—साध्यसाधनांशयोरत्रैव विचारे सत्यपि रात्रिसत्राधिकरणन्यायेन यथा 'प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ति' इत्याद्यर्थ वादानां स्तुतिसमर्पकानामपि फलसमर्पकत्वम्, तथा 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इत्यादीनामपि फलसमर्पकत्वमस्त्विति शङ्कायाम्, युक्तं रात्रिसत्रस्थले फलाकाङ्क्षायाः प्रकारान्तरेणाशान्तेः स्तुतिसमर्पकस्याप्यर्थवादस्यागत्या फलसमर्पकत्वं प्रति-पादितम्। औदुम्बरपर्णतादीनान्तु क्रतूपकारेण फलाकाङ्क्षाशान्तेर्नगतिकत्वमिति प्रति-पादनायेदमधिकरणं प्रवृत्तमिति न पौनरुक्त्यमिति।

पृ० ४६ पं० १८ (ट) 'इति षष्ठप्रथमान्त्याधिकरणे वक्ष्यते'।

'रौद्रं वास्तुमयञ्चरुं निर्वपेत्' इति विधाय 'एतया निषादस्थपतिं याजयेत्' इति श्रूयते। वास्तुमयम्—वास्तुकाख्य ( बथुआ ) शाकप्रकृतिकमित्यर्थः। ब्राह्मणाच्छूद्राया-मुत्पन्नो जातिविशेषो निषादः। स्थपतिः—प्रभुरित्यर्थः। तत्र निषादस्थपतिरित्यस्य

द्वेधा विग्रहः—निषादानां स्थपतिः, निषादश्चासौ स्थपतिश्चेति। विग्रहवाक्ये निषादानामिति षष्ठ्या निषादसम्बन्धिस्थपत्यभिधानान्नास्ति लक्षणा। समासे च षष्ठ्या अनुपलभ्यमानत्वात् निषादशब्देन लक्षणया तत्सम्बन्धी प्रतिपादयितव्यः। नैतावता व्याससमासयोर्भिन्नार्थकत्वम्, उभाभ्यामपि निषादसम्बन्धिनस्स्थपतेः प्रतिपादनात्। क्वचिच्छ्रुत्या क्वचिच्च लक्षणयेति विशेषः। कर्मधारयसमासे तु लक्षणां विनैव सामानाधिकरण्यम्। एवञ्च यत्र षष्ठ्यर्थलक्षणया सामानाधिकरण्यं तत्र षष्ठीसमासः। यत्र तु विनैव तां सामानाधिकरण्यं तत्र कर्मधारय इति स्थितिः। तत्र तत्पुरुषे सत्यामपि लक्षणायां विद्यावतामधिकारिणां त्रैवर्णिकानां लाभः। कर्मधारये तु लक्षणायामसत्यामपि विद्याविहीनस्यानधिकारिणो लाभः। निषादरूपस्थपतेरनुपनीतस्याधिकारसिद्धये 'एतया निषादस्थपतिम्' इति विधिना तस्य विद्याऽऽक्षेप्तव्या। तदिदं गौरवमापतति। तत्रोच्यते 'फलमुखगौरवस्यादोषत्वात्' इति। फलम्—लक्षणानाश्रयणम्। तन्मुखं गौरवं न दोषायेति भावः। एवञ्च विधिबलान्निषादस्य विद्यापि कल्प्यत इति कर्मधारय एव स्वीकर्तव्यः। एवमेव मन्त्रोच्चारणस्य दृष्टफलं प्रत्यायनम्। तच्च मन्त्रोच्चारणेन विनापि सम्पादयितुं शक्यमुपायान्तरेण. किन्तु मन्त्रोच्चारणेनैवेति नियमः क्रियते। नियमस्य फलमदृष्टम्, तच्च गौरवावहम्। गौरवावहमपि फलमुखत्वान्न दोषायेति स्वीक्रियते।

पृ० ४७. पं० ३. ( ठ ) 'व्यक्तं भविष्यति'।

चयने अभ्र्यादानाय चत्वारो मन्त्रा आम्नाताः—(१) 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां गायत्रेण च्छन्दसाऽऽददेऽङ्गिरस्वत्' (२) 'अभ्रिरसि नारिरसि पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभर त्रैष्टुभेन त्वा च्छन्दसाऽऽददेऽङ्गिरस्वत्' (३) 'अभ्रिरसि नारिरसि त्वया वयꣳसधस्थ आऽग्निꣳ शकेम खनितुं पुरीष्यं जागतेन त्वा च्छन्दसाऽऽददेऽङ्गिरस्वत्' (४) 'हस्त आधाय सविता बिभ्रदभ्रिꣳहिरण्ययीं तया ज्योतिरजस्रमिदग्निं खात्वा न आभराऽऽनुष्टुभेन त्वा च्छन्दसाऽऽददेऽङ्गिरस्वत्' (तै०सं०४.१.१.३,४) इति। एतेषां विनियोजकं ब्राह्मणम्—'चतुर्भिरभ्रिमादत्ते चत्वारि च्छन्दांसि छन्दोभिरेव' ( तै० सं० ५.१.१. ) इति। अत्र मन्त्रपाठादेव चतुष्ट्वसिद्धौ ब्राह्मणवाक्ये 'चतुर्भिः' इति ग्रहणं व्यर्थमापद्यते. तत्सार्थक्याय 'गुणार्थेन पुनः श्रुतिः' इति सूत्रम्। समुच्चयरूपगुणसमर्पणाय ब्राह्मणवाक्ये चतुर्भिरिति पुनःश्रवणमित्यर्थः। मास्तु समुच्चयः, का हानिरिति चेत्—मन्त्रपाठाद्विकल्पेनापि मन्त्रा अभ्र्यादाने प्राप्नुयुः। विकल्पश्च सत्यां गतौ नोचितः। सोऽयमर्थः द्वादशतृतीयद्वादशे मन्त्रसमुच्चयाधिकरणे प्रतिपादितः। तत्रत्यमिदं सूत्रम्—

'सङ्ख्याविहितेषु' इति। सङ्ख्यया ये विधीयन्ते मन्त्राः ते सङ्ख्याविहिताः। यथा 'चतुर्भिरादत्ते' 'द्वाभ्यां खनति' 'षड्भिराहरति' इत्यादयः, तेषु समुच्चयस्स्यात् न विकल्पः। कुतः? असन्निपातित्वात्–विकल्पाङ्गीकारे मन्त्राणां सन्निपत्योपकारकत्वाभावादित्यर्थः। मन्त्राणां कर्मसमवेतप्रकाशनद्वारा सन्निपातित्वं मन्त्राधिकरणे व्यवस्थापितम्। यदि विकल्पः तर्ह्यप्राप्तस्याद्दृष्टार्थत्वं स्यात्। सङ्ख्या च 'चतुर्भिः' इति शब्देनोच्यते, विकल्पश्च पाठादवगन्तव्यः। विकल्पापेक्षया शब्देनोच्यमाना सङ्ख्या प्रबला। अतस्साऽङ्गीकर्तव्या। तत्र मन्त्राणां समुच्चयेन विना सङ्ख्या नोपपद्यते। तस्मात्समुच्चयः। ननु सकृन्मन्त्रेणार्थस्याभिधानात् समुच्चयेऽपि मन्त्राणामदृष्टार्थत्वं स्यादिति चेन्न; 'चतुर्भिरादत्ते' इति वचनाच्चतुरभिहितं कृतमभ्र्यादानमभ्युदयकारि भवतीति कल्पनात्। तस्मात्समुच्चयेऽपि नादृष्टार्थता, समुच्चयश्च सिद्ध इति।

**पृ० ४९. पं० २१. ( ड ) 'नवमाद्याधिकरणन्यायेन'।**

मन्त्राणामविवक्षितार्थत्वे 'स्वाध्यायवदवचनात्' इति हेतुपरं सूत्रम्। स्वाध्यायाध्ययनकालेऽक्षरानुपूर्व्यवधारणायोच्चारणाभ्यासः क्रियते, तथा लौकिकावघातपेषणादिकर्मसु तत्तन्मन्त्रैरुच्चारितैरर्थप्रकाशनाभ्यासस्याभावादविवक्षितार्था मन्त्राः। उच्चारणाभ्यासस्य यथा विधिरस्ति न तथार्थप्रकाशनाभ्यासस्य बिधिरस्ति। अर्थप्रकाशनमावश्यकञ्चेत्तदभ्यासोऽपि विधातव्यस्स्यात्। अतो विध्यनुसारेण मन्त्राणामुच्चारणमेव प्रयोजनम् इति पूर्वपक्षिणस्तात्पर्यम्। तत्र सिद्धान्तसूत्रम्—'विद्यावचनमसंयोगात्' इति। स्वाध्यायाध्ययनवद् अर्थप्रकाशनस्य विद्याया अनभ्यासः, असंयोगात्–यज्ञसंयोगाभावात्। यज्ञसंयुक्तानामेवावघातपेषणादीनां मन्त्रप्रकाश्यत्वम्, न तु लौकिकावघातपेषणादीनाम्। अस्मिन्नर्थे नवमाद्याधिकरणन्यायस्साधकः। तथाहि—'यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात्' ( जै० सू० ९. १. १. ) इति समग्रं सूत्रम्। यज्ञसम्बन्धिनस्सर्वे धर्माः ( पदार्थाः ) अपूर्वप्रयुक्ता इति सप्तमाद्याधिकरणसिद्धान्तः। अर्थाद् 'व्रीहिभिर्यजेत' 'यवैर्यजेत' 'दध्ना जुहोति' 'पयसा जुहोति' इत्यादिभिः यागहोमसाधनत्वेन विहिता व्रीह्यादयोऽपूर्वप्रयुक्ताः, अपूर्वमेवैतेषां प्रयोजकम्। इमानि द्रव्याण्युद्दिश्य 'व्रीहीनवहन्ति' 'तण्डुलान् पिनष्टि' 'पिष्टं संयौति' इत्यादिभिर्विहितानामवघातपेषणसंयवनादीनामप्यपूर्वार्थत्वं सप्तमाद्यन्यायसिद्धमेव। अपूर्वं साध्यम् व्रीह्यादीनि द्रव्याणि तदुद्देशेन च विहितान्यवघातादीनि तत्साधनानीति भावः। तत्र व्रीह्याद्युद्देशेन विधीयमानानामवघातादीनामुद्देश्यं व्रीह्यादय इति स्पष्टम्। किन्तूद्देश्यतावच्छेदकं किं

व्रीहित्वादिकम्? उतापूर्वसाधनत्वम्? यदि प्रथमः कल्पस्तर्हि व्रीहित्वावच्छिन्नानवहन्यादिति, यदि च द्वितीयः कल्पस्तर्हि अपूर्वसाधनत्वावच्छिन्नानवहन्यादिति बोधः। तत्र 'व्रीहीनवहन्ति' इत्यत्र श्रुतव्रीह्यादिस्वरूपस्य परित्यागे कारणाभावात् व्रीह्यादिद्वारैवावघातादीनामपूर्वार्थत्वमिति पूर्वपक्षे सिद्धान्तसूत्रम्–'यज्ञकर्म प्रधानम्' इति। यज्ञशब्दो यागहोमदानादीनां वाचकः, तेषां कर्म-कार्यमपूर्वमित्यर्थः। तदपूर्वं धर्मान् प्रति प्रधानम्। हि यस्मात्कारणात्, तद्–अपूर्वं चोदनाभूतम्–विधानं प्राप्तम्। तस्यापूर्वस्य सम्बन्धिषु व्रीह्यादिषु द्रव्येषु विधीयमानस्संस्कारः—अवहननादिः, तत्प्रयुक्तः—अपूर्वसाधनविशेषरूपद्वारकः, न तु व्रीह्यादिस्वरूपद्वारकः। अत्र हेतुः—तदर्थत्वादिति। धर्माणामपूर्वार्थत्वादित्यर्थः। एवञ्च 'व्रीहीनवहन्ति' इत्यत्र विधीयमानावहननस्योद्देश्यतावच्छेदकं न व्रीहित्वम्, किन्त्वपूर्वसाधनविशेषत्वमेवेति सिध्यति। एवं सत्यवहननादीनां वैकृतद्रव्येषु नीवारादिषु ऊहसिद्धिः फलम्। व्रीहित्वादेरुद्देश्यतावच्छेदकत्वे नीवारादिषु तदभावान्नोहः प्रसिध्येत्। अपूर्वञ्च यागादिक्रियाजन्यम्। यागादयश्च तत्तत्प्रकरणसम्बद्धाः। तत्र दर्शपूर्णमासप्रकरणे 'व्रीहीनवहन्ति' इति श्रुतमपि न दर्शपूर्णमाससम्बन्धित्वेनापूर्वसाधनविशेषरूपत्वमुद्देश्यतावच्छेदककोटिप्रविष्टं भवति, येन नीवारादिषु तदभावात् ऊहो न सिध्येत्, किन्तु-आकाङ्क्षाया अपूर्वसाधनविशेषरूपत्वेनैव शान्तेः व्रीह्यादिपदं तदेव लक्षयेत्, न तु दर्शपूर्णमाससम्बन्धित्वमपि। अत ऊहस्य न प्रतिहतिः। न चैवं दर्शपूर्णमासादियज्ञसम्बन्धित्वस्य लक्ष्यतावच्छेदककोटौ प्रवेशाभावे नीवारादिषूपदेशेनैवावघातादीनां प्राप्तत्वादूहो न सिध्येदिति वाच्यम्, अपूर्वसाधनत्वलक्षणे प्रकरणस्य नियामकत्वात्, नीवारादीनां प्रकरणगृहीतत्वाभावाच्च। यद्यपि जुह्वादीनामपि प्रकरणगृहीतत्वेनापूर्वसाधनविशेषरूपत्वावच्छिन्नत्वात्तत्राप्यवहननादीनां प्राप्तिर्दुर्वारा, तथापि तेषामर्थाधिकरणन्यायेन प्रत्यासत्तिबलेनावान्तरापूर्वार्थत्वाश्रयणान्न दोषः। एवञ्च 'व्रीहीनवहन्ति' इत्यस्य तण्डुलनिर्वृत्तिप्रणाड्या यदपूर्वसाधनम् तदवहन्यादिति वचनव्यक्तिः। तेन च प्रकृतिवत्कुर्यादित्यतिदेशेऽपि अवहतैस्तण्डुलैरपूर्वं कुर्यादित्यर्थस्य नीवारादिष्वपि सम्भवादूहसिद्धिरप्रत्यूहा। एवञ्च व्रीह्याद्युद्देशेन विधीयमानानामवहननादिक्रियाणां यज्ञसम्बद्धानामेवापूर्वं प्रयोजकमिति सिद्धम्। अनेन न्यायेन, अवघातपेषणसंयवनाद्यर्थप्रकाशकत्वेन विधीयमाना मन्त्रा अपि तानेवार्थान् प्रकाशयेयुः, ये च यज्ञसम्बद्धाः। यथा व्रीह्युद्देशेन विधीयमाना अवहननादयोऽपूर्वप्रयुक्ताः, तथा अवहननाद्युद्देशेन विधीयमाना मन्त्रा अप्यपूर्वप्रयुक्ताः। तच्चापूर्वं प्रकरणसम्बद्धम्। अतः प्रकरणसम्बद्धानामेवावघातादिक्रियाणां मन्त्रप्रकाश्यत्वं न तु लौकिकावघातादिक्रियाणामिति।

पृ० ५४. पं० २० (ढ) 'प्रत्युत सूत्रकारस्य देवताविग्रहादिकमभिमतं वार्तिकाभिमतश्चेति षाष्ठतिर्यगधिकरणे प्रपञ्चयिष्यते'।

देवतानां विग्रहवत्त्वं हविर्भोक्तृत्वं प्रसादवत्त्वं फलैश्वर्यवत्त्व फलदातृत्वञ्चेति पञ्चकं तत्तद्यागविधिसामर्थ्यात्कल्पनीयम्। 'यजदेवपूजायाम्' इति स्मरणाद्यागो देवताराधनरूपः राजाराधनवत्। यथा राज्ञ आराधनं तत्प्रसादजननद्वारा फलसाधनम्, प्रसन्नश्च फलं ददाति, तथा यागैराराध्यमाना देवाः प्रसन्नाः फलं ददति। फलदातृत्वञ्च फलस्येशानेषु तेषु भवितुमर्हति। अतः फलैश्वर्यवत्त्वं तेषामभ्युपगन्तव्यम्। अप्रसन्नानां तेषां फलदातृत्वं न सम्भवतीति तेषां प्रसादोऽप्यावश्यकः। प्रसादश्च हविर्भोक्तारः प्रसन्नाः फलैश्वर्यवन्तः फलदातारश्चेति तत्तद्यागविधिसामर्थ्यात्सिध्यति। विग्रहादिपञ्चकस्यास्य साधकानि प्रमाणानि सन्ति मन्त्रार्थवादेतिहासपुराणानि—'सहस्राक्षो गोत्रभिद्वज्रबाहुरस्मासु देवो द्रविणं ददातु' 'तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयति' 'इन्द्रो राजा जगतश्चर्षणीनां मधि क्षमि विषुरूपं यदस्ति। ततो ददाति दाशुषे वसूनि' 'इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः। ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः'॥ इत्यादीनि। एभिर्मन्त्रार्थवादादिभिः स्पष्टं देवतानां विग्रहादिपञ्चकमभिधीयत इति निर्विवादम्। तत्रार्थवादा विध्येकवाक्यतामवाप्य विधेयस्तुतौ तात्पर्यवन्तोऽपि अवान्तरपदसंसर्गतो देवताविग्रहादिकं प्रतिपादयन्तीत्यपि निर्विवादम्। किन्तु महातात्पर्यवशेनार्थवादानां विधेयप्रशंसाप्रतिपादनपरत्वेऽपि पदसंसर्गवशात्प्रतीयमानस्य विग्रहादेस्त्यागो न समुचितः, तत्रावान्तरतात्पर्यस्य सत्वात्। तात्पर्यं द्विविधम्—महातात्पर्यमवान्तरतात्पर्यञ्चेति। तत्रावान्तरतात्पर्यं महातात्पर्याविरोधेन यदि प्रवर्तते, तर्हि तेन प्रतीयमानस्यार्थस्य स्वीकारे न कश्चिद्दोषः। यदि चावान्तरतात्पर्यं महातात्पर्यं विरुणद्धि, तर्हि तत्र तदविरोधसम्पादनाय समुचित उपायोऽवलम्ब्यते। तदर्थं सूत्रकारेण बहव उपायाः प्रतिपादिताः। तत्र साधारणं सूत्रम्—'अविशिष्टस्तु वाक्यार्थः' इति। विभागे साकाङ्क्षत्वे सत्येकार्थप्रतिपादकत्वं वाक्यत्वमिति लौकिकवैदिकसाधारण्येन वाक्यलक्षणमाह भगवान् जैमिनिः—'अर्थैकत्वादेकं वाक्यं साकाङ्क्षश्चेद्विभागे स्यात्, इति। एतादृशवाक्यस्यार्थो वाक्यार्थः, स च मन्त्रेष्वप्यविशिष्ट इति सूत्रार्थः। यथा मन्त्रवाक्यं तदर्थश्च, तथैवार्थवादवाक्यं तदर्थश्च। तत्रेयान् भेदः—मन्त्रवाक्यानां स्वातन्त्र्येणाप्यर्थाववोधकत्वं न तु विध्येकवाक्यतयैवेति। अर्थवादानां स्वार्थमात्रप्रतिपादने धर्मप्रमितिजनकत्वं न सिध्येदिति विध्येकवाक्यता स्वीक्रियते। तेषां स्वार्थमात्रपरत्वे विरोधिनः शास्त्रदृष्टविरोधादयः प्रसरन्ति। तेषां परिहाराय 'गुणवादस्तु' 'रूपात्प्रायात्' इत्यादीनि सूत्राणि प्रवृत्तानि।

तत्सिद्धिपेटिका चैतदर्थमेव प्रवृत्ता। एवञ्च यत्रार्थवादानां विरोधाः तत्र गौण्या वृत्त्या तत्परिहारद्वारा विध्येकवाक्यतया तेषां धर्मे प्रामाण्यम्। यत्र च विरोधा न सन्ति तत्र लक्षणया विधेयप्राशस्त्यबोधकत्वेन विध्येकवाक्यतेति सर्वत्रार्थवादवाक्यानामर्थवत्वं तावत्सिध्यति। ये चार्थवादा देवताविग्रहादिप्रतिपादकाः 'वज्रहस्तः पुरन्दरः' 'तृप्त एवैनमिन्द्रः' इत्यादयः, तेषां लक्षणया प्रशस्त्यप्रतिपादनपरत्वमङ्गीकृत्य विध्येकवाक्यत्वेऽपि जहत्स्वार्थत्वे न किमपि प्रमाणम्। ननु दर्शपूर्णमासादिविधिवाक्यानि फलयागयोस्साध्यसाधनतां प्रतिपादयन्ति। तत्र यागादीनां क्षणिकत्वेन कालान्तरभाविफलसाधकत्वमनुपपन्नमित्यपूर्वाधिकरणे यागजन्यापूर्वं प्रतिपाद्य तद्द्वारा यागादय एव फलसाधकाः। अर्थाद्यागादय एव फलप्रदाः। देवतानां विग्रहादिपञ्चकं स्वीकृत्य तासां फलप्रदातृत्वे स्वीक्रियमाणे विधिवाक्यविरोधोऽपूर्वाधिकरणविरोधश्च स्यादिति चेदत्र वदन्ति—यागाराधनेन प्रसन्नानामपि देवानां कल्पान्तरभाविफलदातृत्वस्यासम्भवेनापूर्वद्वारैव देवताप्रसादस्यापि फलजनकत्वस्य वक्तव्यतया अन्यत्रापि तथा कल्पनात्, 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' इति विद्यापूर्वस्य कर्मापूर्वस्य पूर्वानुभवजनितसंस्कारस्य च जीवेन सहोत्क्रान्तिश्रवणेन कर्मजन्यापूर्वस्यावश्याभ्युपेयत्वाच्च देवताविग्रहादिपञ्चकस्वीकारे न कोऽपि विरोधः।

वार्तिककृतः— 'विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे।
श्रेयःप्राप्तिनिमित्ताय नमस्सोमार्धधारिणे॥'

इति स्वीये मङ्गलश्लोके ईश्वरं नमस्कुर्वन्ति। अतस्सूत्रवार्तिककृन्मते विग्रहादिपञ्चकं देवतानामभिमतमिति। एतद्विवेचनं भूमिकायां द्रष्टव्यम्।

पृ० ५८, पं० १२, (ण) 'निन्दा तु—नहि निन्दान्यायेन'।

तत्सिद्धिपेटिकायां प्रशंसाधिकरणसिद्धोऽयं न्यायः—'न हि निन्दा निन्दितुं प्रवृत्ता, अपि तु स्तुत्यं स्तोतुम्' इति। 'अपशवो वान्ये गो अश्वेभ्यः, गो अश्वाः पशवः' इत्यर्थवादेन गवाश्वव्यतिरिक्तानां प्राणिनामपशुत्वं प्रतिपाद्य गवामश्वानाञ्च पशुत्वमुक्तम्। तत्र गवाश्वव्यतिरिक्तानामपशुत्वनिन्दा गवामश्वानाञ्च प्राशस्त्ये पर्यवस्यतीति न्यायार्थः। अनेन न्यायेन 'स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्' इति वेदार्थज्ञानविधुरस्य भारहारत्वस्थाणुत्वनिन्दा निन्दायां तात्पर्यं नावहति, किन्तु 'योऽर्थज्ञ इत्सकलं भद्रमश्नुते' इति बोधितस्यार्थज्ञस्य स्तुतौ तात्पर्यमादधाति। एवमेव 'नरकन्तु विपर्यये' इति निन्दायाः स्तुतौ पर्यवसानं बोध्यम्।

**पृ० ६७, पं० २०, ( त ) 'शाखान्तराद्यधिकरणे वार्तिकादिषु व्यवस्थापयिष्यमाणत्वात्'।**

क्रमकालपरिमाणानि प्रयोगविधिग्राह्याणि। तत्तत्क्रतुजन्यापूर्वस्यानिर्ज्ञाताङ्गपरिमाणतया श्रौताङ्गमात्रेणाकाङ्क्षा न शाम्यति। प्रयोगविधेराकाङ्क्षा तावत्पर्यन्तमनुवर्तते, यावत् विरोधाभावे श्रुत्यादिसमाख्यापर्यन्तैः प्रमाणैः, अनारभ्यविधिभिः, शाखान्तरश्रुतविधिभिश्चाङ्गानि प्राप्यन्ते। एवं प्रापितान्यङ्गानि समुच्चित्य प्रयोगविधिर्गृह्णाति। तथा स्मृत्याचारप्राप्तान्यपि अङ्गानि प्रतीक्षते, सर्वेषां करणोपकारसाधनानामन्वयोत्तरमनुष्ठानाय प्रयोगविधेरनुष्ठानात्मनः प्रवृत्तेः। तेन च प्रयोगवेलायामेव पदार्थानामपेक्षितं क्रमकालादि प्रयोगावच्छेदकतयाऽन्वीयमानं यावत्प्रमाणप्रापितपदार्थप्रयोगाविरोधेनैवावच्छेदकतया कल्प्यते। शाखान्तराधिकरणे सर्वशाखाप्रत्ययमेकं कर्मेति सिद्धान्तितम्। वेदभेदेनाग्निहोत्रादीनां विधानेऽपि तत्तद्वेदाध्यायिनं प्रति तत्तदग्निहोत्रादिविधेस्सार्थक्यादग्निहोत्रमेकमेव। तत्र स्वशाखोक्ताङ्गैरेवोपकारसिद्धेः स्वशाखोक्ताङ्गानामनुष्ठानेन फलसिद्धिः। विरोधे च तेषां विकल्पः। अविरोधे च समुच्चयः। समुच्चयपक्षे शाखान्तरीयाण्यङ्गानि यावन्नायान्ति तावत्प्रयोगविधिर्न प्रवर्तते। सर्वेष्वागतेषु प्रयोगविधिरात्मानं लभते। अतः श्रौतक्रमकाल परिमाणानां प्रयोगाङ्गत्वात्पदार्थाश्रितत्वाच्च सर्वपदार्थप्राप्त्युत्तरकालं प्रयोगप्रवृत्तिरिति सिद्धम्।

**पृ० ६७. पं० २४ (थ) 'एकादशद्वितीयाद्याधिकरणे व्यवस्थापयिष्यति'।**

'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति श्रुतम्। अत्र सप्तम्यन्तं पदं कालवाचकम्, तृतीयान्तञ्च कर्मवाचकम्। पौर्णमास्याम्—आग्नेयः, उपांशुयाजः, अग्नीषोमीयश्चेति त्रयः प्रधानयागाः; अमावास्यायाम्—आग्नेयः, ऐन्द्रं दधि, ऐन्द्रं पय इति त्रयः प्रधानयागाः। आग्नेयाद्युत्पत्तिवाक्येषु 'पौर्णमास्याम्' 'अमावास्यायाम्' इति कालसंयोगश्रवणात् तत्तत्कालकर्तव्यांस्त्रींस्त्रीन् प्रधानयागान् 'पौर्णमास्या' 'अमावास्यया' इति पदद्वयमनुवदति। तत्तत्कालानुष्ठेयानां त्रयाणां त्रयाणां यागानां समुदायाभिप्रायेण 'पौर्णमास्या' 'अमावास्यया' इत्येकवचनम्। एकैकस्यां पौर्णमास्याममावास्यायाञ्चैकैकस्याग्नेयादेः प्रधानयागस्यानुष्ठानं मा भवतु, किन्त्वेकस्यामेव पौर्णमास्याममावास्यायाञ्च त्रिकस्य त्रिकस्यानुष्ठानं भवत्विति बोधनायेदं वाक्यद्वयं प्रवृत्तम्। तेन च 'दर्शपूर्णमासाभ्याम्' इति द्वित्वसिद्धिः फलमिति विद्वदधिकरणे व्यक्तम्। तत्र पौर्णमास्यमावास्याकालयोरुत्पत्तिवाक्यविहिताग्नेयादियागैस्सम्बन्ध इत्याभ्यां वाक्याभ्यामवगम्यते, न तु प्रयोगविधिना। एवं सति प्रधानयागानां

पौर्णमास्याममावास्यायाश्चानुष्ठानं तदङ्गानाञ्च कालान्तर इत्यापद्येत । तन्निराकरणायेद-मधिकरणम् । आग्नेयाद्युत्पत्तिवाक्येन विहिताया भावनायाः भाव्याकाङ्क्षायां सत्यां विधि-निष्ठप्रवर्तकत्वान्यथानुपपत्त्या सामान्यमिष्टं कल्प्यते । साधनाकाङ्क्षायां धात्वर्थस्साधनं भावार्थाधिकरणन्यायेन । इतिकर्तव्यताकाङ्क्षायामङ्गानामन्वयो वक्तव्यः । किन्तु भावनाया इष्टविशेषाकलुषितत्वेन विस्पष्टमितिकर्तव्यताकाङ्क्षाया अनुत्थानादङ्गान्वयो न भवितुमर्हति । तदर्थमधिकारवाक्यमाश्रयणीयम् । तेन समीहितविशेषे समर्पिते सत्यनन्तरमिदं समीहितं कथं सम्पादनीयमित्यपेक्षा जायते । तस्याञ्चापेक्षायामङ्गसम्बन्धो घटते । किञ्चित्समीहितं कथं कुर्यादिति न कस्यचिदप्यपेक्षा भवति, किन्त्विदं समीहितं कथं कुर्यादिति । ततश्च फलवाक्यान्वयात्पूर्वं समीहितविशेषानवगमे कथमित्यपेक्षाभावान्नाङ्गसम्बन्धः, किन्तूत्पत्तिवाक्ये सामान्यावगतस्य समीहितस्य विशेषमेव भावनापेक्षते इत्यपेक्षानुसारेण फलसम्बन्धः प्रथमं पश्चाच्चाङ्गसम्बन्धो वाच्यः । एवञ्च साध्यसाधनेतिकर्तव्यताविशिष्टभावनावगमानन्तरं तस्य कर्मणश्चिकीर्षोत्पद्यते । भावनोत्पत्तिवाक्ये भेदेन करणभावावगमात् प्रयाजादीनां भेदेन विनियोगः । कालादीनान्तु विशिष्टभावनावगमानन्तरं तत्प्रयुयुक्षायां चिकीर्षापरनामधेयायां सत्यामीदृशे काले तत्प्रयोगः कर्तव्य इति प्रयोगद्वारान्वीयमानानां कालादीनां युगपत्सर्वविषय-कैकप्रयोगावच्छेदकत्वेनान्वयस्सिध्यतीति कालादेः प्रयोगाङ्गत्वमेव । अतः कालस्य प्रयोगा-ङ्गत्वे सिद्धेऽङ्गसहितप्रधानस्य प्रयोग एकस्मिन् काले सिध्यतीत्याग्नेयादियागानां कालस्तन्त्रं सिद्धं भवति ।

पृ० ७६ पं० ५ ( द ) 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायेन' ।

अर्थवादापेक्षया विधिवाक्यं प्रबलम्, अर्थवादानां विधेयस्तुतिप्रयोजनकत्वाद् विध्येकवाक्यतयैवप्रामाण्यलाभात् । तेन विध्यनुसारिणाऽर्थवादेन भवितव्यम्, न त्वर्थवादा-नुसारेण विधेर्नयनम् । तत्र 'त्रिवृद्बहिष्पवमानम्' इति विधिवाक्ये त्रिवृच्छब्दस्य लोकप्रसिद्ध-त्रैगुण्यार्थकत्वे 'नवभिः स्तुवन्ति' इति गुणवाक्यस्यानर्थक्यं स्यात् । विधेयं त्रैगुण्यम्, 'नवभिः स्तुवन्ति' इत्यस्य च स्तोत्रीयानवकपरत्वमिति भिन्नार्थकत्वेनैकवाक्यत्वासम्भवात् । विधिगुणवाक्ययोः प्राबल्यदौर्बल्ये सत्यपि दुर्बलस्य गुणवाक्यस्यानर्थक्यप्रतिहतत्वेन बलाबलं विपरीतं सिध्यति । गुणवाक्यानुरोधेन विधिगतत्रिवृच्छब्दस्य नवसङ्ख्यार्थकत्वमङ्गीकृत्य ऋङ्नवकपरत्वमेष्टव्यमित्यर्थः । यद्यपि 'नवभिः स्तुवन्ति' इति नार्थवादः, तथापि गुणप्रापक-वाक्यानुरोधेन विधिगतत्रिवृच्छब्दस्य स्तोत्रीयानवकपरत्वाङ्गीकारान्न दोषः ।

**पृ० ८४ पं० ( ध ) 'अत्र शाखान्तरे समानतन्त्रतानिन्दा नहि निन्दान्यायेन'।**

नहि निन्दान्यायः पूर्वं पृष्ठस्य ५८ टिप्पण्यां विवेचितः। तथापि विषयगाम्भीर्यं निश्चित्य पुनर्विविच्यते। कल्पसूत्राणां वेदमूलकत्त्वेन प्रामाण्यसाधने प्रयोजनानि सूत्रकारेण प्रदर्शितानि—'सर्वत्र च प्रयुक्तत्वात्सन्निधानशास्त्राच्च' इति। सर्वोऽपरपक्षः पौर्णमासेष्टेः कालः, सर्वश्च पूर्वपक्षो दर्शस्य काल इति कल्पसूत्रकारो मन्यते—'सर्वोऽपरपक्षः पूर्णमासस्य सर्वः पूर्वपक्षो दर्शस्य' इति। 'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत' इति वेदवाक्यं पौर्णमासीममावास्याञ्च तिथिं दर्शपूर्णमासयोः कालमाह। एवं प्रत्यक्ष-श्रुतिविरोधे कल्पसूत्रस्याप्रामाण्यं प्रयोजनं कल्पसूत्राणां वेदमूलकत्वाङ्गीकारे। 'अत्रेदं चिन्त्यम्' इत्यादिना ग्रन्थकारो वासुदेवदीक्षितस्स्वीयं विचारं प्रकटयति। अस्ति पाथिकृतीष्टिः—'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् यो दर्शपूर्णमासयाजी सन्नमावास्यां पौर्णमासीं वातिपातयेत्' इति। आहिताग्नेः यदि दर्शकालस्य पौर्णमासीकालस्य वातिपातोऽतिक्रमणं भवेत्तर्हि तेनेयमिष्टिः प्रायश्चित्तरूपेण कर्तव्या। प्रायो विनाशः, तस्य चित्तम्—सन्धान-मित्यर्थः। विनष्टस्य कर्मणस्सन्धानं येन क्रियते तत् प्रायश्चित्तं कर्म। तद् जपहोमेज्याभेदेन त्रिविधं भवति। दर्शपूर्णमासरूपस्य कालस्यातिपन्नत्वात्कर्म विनष्टम्, तस्य सन्धानायेयं पाथिकृतीष्टिः। अस्या इष्टेरनुष्ठानमात्रेण पौर्णमास्या वा दर्शस्य वा सम्पत्तिर्न भवति, किन्तु पौर्णमासेष्टिः दर्शेष्टिश्च कर्तव्या। अथवा प्रायश्चित्तेष्टेः दर्शपौर्णमासेष्टेश्च समानतन्त्रता। समानतन्त्रताया निन्दा शाखान्तरे श्रूयते—'अथैकेषां वि वा एतस्य यज्ञश्छिद्यते, यस्य यज्ञे प्रततेऽन्तरे तामिष्टिं निर्वपन्ति। य एवासावाग्नेयोऽष्टाकपालः पौर्णमास्यां योऽमावास्यायां तमग्नये पथिकृते कुर्यात्तेनैव पुनः पन्थानमवैति न यज्ञं विच्छिनत्ति' इति। यो यजमानो दर्शपूर्णमासौ कालावतिक्रम्य कालान्तरे दर्शपूर्णसयागमनुतिष्ठति, तन्मध्ये पाथिकृतीष्टिरनुष्ठी-यमाना यजमानोपक्रान्तस्य यज्ञस्य विच्छेदिका भवति, अतो दर्शे वा पौर्णमास्यां वा य आग्नेय-यागः क्रियते तत्रैव पथिकृत्त्वगुणसम्पादनं कर्त्तव्यम्, तेनैव कालातिक्रमजनितपथभ्रंशस्समी-कृतस्स्यादिति श्रुतिसन्दर्भस्यार्थः। अत्र या यज्ञविच्छेदरूपा निन्दाभिहिता सा न निन्दायां तात्पर्यमावहति, किन्तु पथिकृत्त्वगुणविधिप्रशंसायामेव। अनया निन्दयेदमनुमीयते—यत् दर्शपूर्णमासातिरिक्तकालान्तरेऽपि दर्शपूर्णमासयोरनुष्ठानं वैधमिति। अत्र च 'स्वकालादुत्तरः कालो गौणः पूर्वस्य कर्मणः' इति वचनान्तरेण न प्रत्यक्षश्रुतिविरोधः। अतः 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति प्रत्यक्षश्रुतिविरोधः कल्पसूत्रस्य, तेन चाप्रामाण्यं कथमिति।

पृ० ८४ पं० २३ ( न ) 'तृतीयाद्यपादीयान्त्याधिकरणपूर्वपक्षन्यायाभासमूलकमप्रमाणम्'।

दर्शपूर्णमासयोः पुरोडाशचतुर्धाकरणप्रसङ्गे 'अविशेषादुभौ वा' इति सूत्रयन् कात्यायनः आग्नेयाग्नीषोमीययोरुभयोः पुरोडाशयोश्चतुर्धाकरणं मन्यते। 'आग्नेयं चतुर्धा करोति' इति प्रत्यक्षश्रुतिराग्नेयपुरोडाशस्यैव चतुर्धाकरणं विधत्ते। अतः प्रत्यक्षश्रुतिविरुद्धमिदमप्रमाणम्। अत्र कात्यायनवचनं तार्तीयीकाधिकरणपूर्वपक्षमूलकम्। तत्र हि दर्शपूर्णमासयोर्विद्यमानेष्वाग्नेयाग्नीषोमीयैन्द्राग्नेषु पुरोडाशेषु विचारः प्रवर्तितः—'आग्नेयं चतुर्धा करोति' इत्यत्र चतुर्धाकरणविधौ किमाग्नेयशब्देनाग्नीषोमीय ऐन्द्राग्नश्चेति द्विदेवत्योऽपि पुरोडाशो गृह्यते? उत केवलाग्निदेवत्य एव सः? इति। तत्र पूर्वपक्षसूत्रम्—'शेषस्तु गुणसंयुक्तस्साधारणः प्रतीयेत मिथस्तेषामभिसम्बन्धात्' ( जै० सू० ३. १. २६ ) इति। पुरोडाशचतुर्धाकरणं शेषप्रतिपत्तिसंस्कारः द्विदेवत्यसाधारणः कर्तव्यः, यतः अग्नीषोमीयैन्द्राग्नयोरपि गुणेनाग्निना संयोगो वर्तते। अग्निसम्बन्धस्य तत्र सत्त्वादित्यर्थः। यद्यपि 'आग्नेयम्' 'अग्नीषोमीयम्' 'ऐन्द्राग्नम्' इति देवतातद्धितान्ताश्शब्दाः। 'आग्नेयम्' इत्यत्र निरपेक्षस्याग्नेस्सम्बन्धः 'अग्नीषोमीयम्' इत्यत्र तु सोमसापेक्षस्याग्नेरिति व्यपेक्षालक्षणसामर्थ्याभावात् तद्धितोत्पत्तिर्न स्यात्, तथापि 'यदाग्नेयोऽष्टाकपालः' इत्युत्पत्तिवाक्ये यागरूपकार्यसम्बन्धस्य सत्त्वेन देवतातद्धितत्वेऽपि 'आग्नेयं चतुर्धा करोति' इत्यत्र तादृशकार्यसम्बन्धाभावेन सम्बन्धसामान्यमाश्रित्य 'चित्रगुमानय' इत्यादिवत् चतुर्धाकरणद्रव्योपलक्षणमात्राङ्गीकारान्नानुपपत्तिः। चित्रगुमानयेत्यत्र न चित्रा गावोऽप्यानीयन्ते, उपलक्षणत्वाच्चित्रगवाम्। अग्निशब्दस्यापि तथैवोपलक्षणत्वम्। सम्बन्धसामान्यञ्चाग्नेर्द्विदेवत्ययोरग्नीषोमीयैन्द्राग्नयोरप्यस्तीति आग्नेयशब्देनाग्नीषोमीयैन्द्राग्नयोरपि व्यपदेशस्सङ्गच्छते। अस्तु वा देवतात्वेनैवोपलक्षणत्वमग्नेः, तथापि त्यज्यमानहविरुद्देश्यत्वरूपदेवतात्वेन द्विदेवत्ययोरप्यग्नेस्सत्त्वान्न दोषः। तदिदमुक्तम्—'मिथस्तेषामसम्बन्धात्' इति सूत्रखण्डेन। अतश्चतुर्धाकरणं द्विदैवत्ययोरपि पुरोडाशयोर्भवत्येवेति पूर्वपक्षः। एतन्मूलकं कात्यायनवचनम्—'उभौ वाविशेषात्' इति। पूर्वपक्षस्तु न्यायाभासः, तन्मूलकत्वादप्रामाण्यमस्येति।

सिद्धान्तस्तु—आग्नेयशब्दो द्विदैवत्यसाधारणो न भवति, किन्तु केवलाग्निदेवत्ये पुरोडाशे चतुर्धाकरणस्य व्यवस्था, अर्थसंयोगात्—देवतारूपेणाग्निनार्थेन केवलाग्निदेवत्यपुरोडाशस्यैव सम्बन्धात्। आग्नेश्चोपलक्षणत्वं देवतात्वेनैव, न तु सम्बन्धमात्रेण। सम्बन्धमात्रन्त्वप्रसिद्धं भवति, तस्य चोपलक्षणत्वं न सम्भवति। प्रसिद्धिश्च विधिवाक्येन सिध्यति। विधिवाक्यञ्च 'यदाग्नेयः' इति हविरुद्देश्यत्वलक्षणदेवताभावेनैवाग्नेस्सम्बन्धं प्रतिपादयति।

ईदृशं प्रसिद्धसम्बन्धमादाय देवतातद्धित एवायं निश्चीयत इत्याग्नेयस्यैव पुरोडाशस्य चतुर्धाकरणमिति ।

अत्र वासुदेवदीक्षितः 'उभौ वाविशेषात्' इति कात्यायनवचनस्य प्रामाण्यं साधयितुं स्वीयमाशयमेवं व्यक्तीकरोति—कात्यायनेन प्रथमं 'सञ्चरमभ्युक्ष्य प्राशित्रमवद्यति यवमात्रं पिप्पलमात्रं वा, अन्यतरत आज्यमुभयतो वाग्नेयात्' ( का० श्रौ० सू० ३. ४. १ ) इति, 'भागांश्च' ( का० श्रौ० सू० ३. ४. २ ) इति सूत्रयित्वा कतिपयसूत्रानन्तरम् 'उभौ वाविशेषात्' ( का० श्रौ० सू० ३. ४. १२ ) इति सूत्रितम् । तत्र प्रथमसूत्रेण सञ्चरदेशाभ्युक्षण-प्राशित्रावदानाभिघारणान्युक्तानि । तत्र प्राशित्रं ब्रह्मभागः यवपरिमाणः पिप्पलपरिमाणो वा आग्नेयपुरोडाशस्य मस्तकादवदेयः, अग्नीषोमीयस्य पुरोडाशस्य तु यतः कुतश्चित्प्रदेशात् । द्वितीयसूत्रेण षडवत्तब्रह्मयजमानभागांश्चाग्नेयादवद्यतीत्युक्तम् । अनन्तरं प्राशित्रप्रदानेडाव-दानेडाप्रदानहोत्रङ्गुल्यञ्जनान्वारम्भणयजमानकर्तृकव्यादेशादीन् सूत्रयित्वा 'उभौ वाविशेषात्' इति सूत्रेण चतुर्धाकरणमुभयोरपि आग्नेयाग्नीषोमीयपुरोडाशयोः कर्तव्यमित्युक्तम् । तत्र कर्काचार्यः 'आग्नेयाद्भागांश्च' इति सिद्धान्तपरतया 'उभौ वाविशेषात्' इति पूर्वपक्षतया व्याचष्टे । तदिदमपव्याख्यानमिति दीक्षितो मन्यते, उभयोस्सूत्रयोर्मध्ये प्राशित्रप्रदानेडाव-दानादिप्रतिपादकसूत्रैर्व्यवधानात् । अतस्सूत्रद्वयमिदं पक्षभेदप्रतिपादकमिति वक्तव्यम् । तथा सति 'उभौ वाविशेषात्' इति शाखान्तरमूलकं सिध्यति । तथा च नाप्रामाण्यमस्येति दीक्षिताशयः ।

**पृ० ८५ पं० १ (१) 'इति द्वादशिकद्वितीयपादीयद्वितीयाधिकरणपूर्वपक्षमूलकमप्रमाणम्' ।**

अग्नीषोमीयपशौ 'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशक-पालं द्वादशकपालं वा निर्वपति' इति विहितः पशुपुरोडाशयागः । पश्वर्थमनुष्ठीयमानः पुरोडाशः पशुपुरोडाशयागः । 'सुषिरो वा एतर्हि पशुर्यर्हि वपामुत्खिदति, यद्व्रीहिमयः पुरोडाशो भवत्यपिधानाय' इत्यर्थवादेन वपायामुद्धृतायां यस्सुषिरः तस्य पिधानार्थ इत्यव-गम्यते । अग्नीषोमीयपशोर्विकृतिभूते सवनीयपशावयमतिदेशेन प्राप्तः । तत्रायमनुष्ठेयो न वेति सन्देहः । सवनीये पशौ 'धानाः करम्भाः परीवापः पयस्या' इत्यादिना सवनीयपुरोडाश-द्रव्याणि विधाय 'अनुसवनं सवनीयाः पुरोडाशा निरूप्यन्ते अपिहत्या अच्छिद्रतायाः' इति सवनीयपुरोडाशा विहिताः । अत्राप्यर्थवादेन छिद्रापिधानं बोध्यते । अतस्सवनीयैरेव पिधानाच्छिद्रापिधानं कृतमिति कृतकार्यः पशुपुरोडाशो निवर्तते । पुनः 'वपया प्रातस्सवने

चरन्ति पुरोडाशेन माध्यन्दिने सवने अङ्गैस्तृतीयसवन' इति वाक्येन माध्यन्दिनसवने कर्तव्यत्वेन पशुपुरोडाशो बोध्यत इति निवृत्तस्य पुनर्विधानाद्विकल्प इति पूर्वपक्षः। इममेव पूर्वपक्षन्यायमवलम्ब्यापस्तम्बाचार्यः 'स कृताकृतः' इति सूत्रयति।

सिद्धान्तस्तु—छिद्रापिधानवचनमर्थवादमात्रम्, प्रत्यक्षविरोधात्। न हि पशुपुरोडाशे कृते पशोः छिद्रापिधानमनुभवामः। किञ्च दशमाध्यायप्रथमपादस्य नवमाधिकरणे 'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशं निर्वपति' इति विहितस्य पशुपुरोडाशस्य देवतासंस्कारार्थत्वं सिद्धान्तितम्। तेन च छिद्रापिधानार्थत्वं पर्णमयीन्यायेनार्थवादमात्रं प्रत्यक्षविरोधात् इति नित्यमेवातिदेशेन पुरोडाशस्सवनीये कर्तव्य इति। एवञ्च विकल्पपूर्वपक्षमूलकत्वादापस्तम्बवाक्यस्याप्रामाण्यमिति।

अत्र चाप्रामाण्यमापस्तम्बवचनस्याननुष्ठानलक्षणमभ्युपगन्तव्यम्, विरुद्धश्रुतेः प्रत्यक्षमनुपलम्भात्। एवमेव सवनीयपशुपुरोडाशं प्रकृत्य 'अक्रियामेके, अन्यत्र तदर्थवचनात्' इत्याश्वलायनसूत्रे (५।१३।९) छिद्रापिधानार्थवादोत्थापितन्यायमूलकतैव तदुपन्यासादवगम्यते, न स्पष्टश्रुतिमूलकता। अत आश्वलायनसूत्रोक्तस्य न्यायस्य द्वादशिकन्यायेनाभासत्वावगमाद्यावच्छ्रुतिदर्शनमननुष्ठानलक्षणमप्रामाण्यं सिध्यति नात्यन्तिकमप्रामाण्यम्। एतेनापस्तम्बाश्वलायनसमये सवनीये पशुपुरोडाशविकल्पस्य, तस्याक्रियायाश्च मूलमुपलब्धमासीदित्यनुमातव्यं भवति। सूत्रकारस्तु जैमिनिः प्रत्यक्षश्रुतिविरुद्धानां कल्पसूत्राणामप्रामाण्यं बोधयितुम्—'सर्वत्र च प्रयुक्तत्वात्सन्निधानशास्त्राच्च' इति सूत्रयति। अत्र सूत्रकाराभिमतमुदाहरणम् 'सर्वोऽपरपक्षः पूर्णमासस्य कालः, सर्वः पूर्वपक्षो दर्शस्य' इति कल्पसूत्रमभिमतमिति 'सर्वत्र च प्रयुक्तत्वात्' इत्यनेन स्पष्टमवगम्यते। तदिदं कल्पसूत्रं दर्शपूर्णमाससन्निधावाम्नातेन 'अमावास्यायाममावास्यया यजेत' 'पौर्णमास्यां पौर्णमास्या यजेत' इति शास्त्रेण विरुद्धम्, अतोऽप्रमाणं कल्पसूत्रम्। अन्यानि चैतत्सदृशान्युदाहरणानि 'अविशेषादुभौ वा' इत्यादीनि सूत्रगतचकारेण समुच्चीयन्ते।

भाष्यकारैरेतत्सूत्रभाष्ये सूत्रकाराभिमतमेवोदाहरणं 'पूर्वपक्षे सर्वासु तिथिष्वमावास्या' इत्युपन्यस्य 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति तद्विरुद्धा श्रुतिः दर्शिता। वार्तिककारास्तु गृह्यकारवचनमिदं दर्शपूर्णमासचरककल्पसूत्रकारवचनाध्यारोपेण दत्तमुदाहरणमत्यन्ताध्यारोपाभिभवाभिप्रायप्रयुक्तमिति सदृष्टान्तमनादृतवन्तः। यथा—आसायमाहुतेः प्रातराहुतिर्नात्येति, आप्रातराहुतेस्सायमाहुतिः' इत्यौपासनहोमीयं

गृह्यकारवचनमग्निहोत्रविषयत्वेन न कल्प्यते, तथैव 'आपौर्णमास्या अमावास्या नात्येति, आ-अमावास्यायाः पौर्णासी' इत्येतदपि दर्शपूर्णमासविषयं न कल्पनीयमित्यन्यदेवोदाहरणं मृग्यमिति। तत्परवर्तिनो ग्रन्थकाराः पार्थसारथिखण्डदेवप्रभृतयो नैकविधान्युदाहरणान्युपन्न्यस्य विचारितवन्तः। तत्र 'स कृताकृतः' इत्यापस्तम्ववचनमेकम्। आपस्तम्वश्रौतसूत्रस्य त्रयोदशप्रश्ने प्रथमकण्डिकायाम् 'अभिषवादिमाध्यन्दिनं सवनं नीयते' इत्यारभ्य प्रातस्सवनापेक्षयात्र विद्यमानान् विशेषानभिधाय 'पशुपुरोडाशं निरूप्य पयस्यावर्जं सवनीयाः' (१३।१।१२) इति पशुपुरोडाशनिर्वापं पयस्यावर्जं सवनीयनिर्वापञ्च सूत्रयित्वा, 'तेन प्रचर्य सवनीयैः प्रचरति' (१३।१।१३) इति पशुपुरोडाशप्रचारानन्तरं सवनीयप्रचारं विदधात्यापस्तम्वाचार्यः। अनन्तरम्—'समानन्तु स्विष्टकृदिडम्' (१३।१।१४) इति पशुपुरोडाशसवनीयस्विष्टकृदिडस्य समानत्वं प्रतिपाद्य 'स कृताकृतः' (१३।१।१५) इति पशुपुरोडाशस्य विकल्पपक्षमपि सूचयति। अतश्शाखान्तरमूलकोऽयं विकल्पपक्ष इति प्रतीयते।

**पृ० ८५ पं० ५ (फ) 'इति तार्तीयीकसप्तमपादीयाधिकरणपूर्वपक्षन्यायाभासमूलकमप्रमाणम्'।**

तृतीयसप्तमपञ्चमाधिकरणे ज्योतिष्टोमेऽग्नीषोमीयपशौ 'यूपं मिनोति' इति विहितं यूपमानमधिकृत्य श्रुतम्—'अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि' इति।

वाक्यस्यायमर्थः—यूपं स्थापयितुं कियद्विस्तारवानवटोऽपेक्षित इति जिज्ञासायां तन्निर्णयाय यूपमूलस्य स्थौल्यमंगुल्यादिभिर्मातव्यम्। तस्य मीयमानस्य यदर्धं तद्यूपार्धम्। एकमर्धमन्तर्वेदि भवति, अर्धान्तरञ्च बहिर्वेदि इति।

तत्र विचारः प्रवर्तितः—किमर्धमन्तर्वेदि इति वेद्येकदेशो यूपमानाङ्गतया विधीयते, 'अर्धं बहिर्वेदि' इत्यनुवादः? किं वा उभाभ्यामेक एव सन्धिदेशो वेदित्वानादरेण विधीयते? इति। तत्र 'तथा यूपस्य वेदिः' (जै० सू० ३।७।१२) इति सूत्रेण पूर्वाधिकरणन्यायानुसारेण पूर्वपक्षयति। पूर्वाधिकरणे 'दीक्षादक्षिणन्तु वचनात्प्रधानस्य' इति (३।७।१०) सूत्रेण 'दीक्षा सोमस्य दक्षिणा सोमस्य' इति वचनात् दीक्षादक्षिणं प्रधानाङ्गमिति प्रतिपादितम्। तेन न्यायेन महावेदिरपि तदेकदेशद्वारा मीयमानयूपाङ्गं भवति। एकस्मिन्नर्धेऽन्तर्वेदि मीयमानेऽर्थादर्धान्तरं बहिरेव भवतीति 'अर्धं बहिर्वेदि' इत्यनुवाद एव सिध्यति। अतः वेद्येदेशः मीयमानयूपाङ्गं भवतीति पूर्वपक्षः। इममेव पूर्वपक्षन्यायमनुसृत्य 'यावद्यूपं वेदिमुद्धन्ति' इत्यापस्तम्बवचनं प्रवृत्तम्।

सिद्धान्तस्तु—ज्योतिष्टोमे वेदिदेशस्याङ्गप्रधानार्थत्वं सिद्धान्तितमस्मिन्नेव पादे तृतीयाधिकरणे। तत्र हि 'सा वा इयं सर्वैव वेदिः इयति शक्ष्यामहे त्वै अवमाय यजन्ते त्रिंशत्पदानि पश्चात् तिरश्ची भवति षड्विंशत्प्राची चतुर्विंशतिः पुरस्तात्तिरश्ची' इति महावेदेः सामान्यविधिमुदाहृत्य विचारः प्रवर्तितः—किमियं महावेदिः प्रधानमात्रार्था? उताङ्गप्रधानार्था? इति। सर्वापीयं पृथिवी वेदिर्भवति, तथापि 'इयति' परिमितदेशे यज्ञं कर्तुं प्रभवामः, न तु सर्वस्यां पृथिव्याम्, इति हेतोः 'अवमाय' त्रिंशत्पदादिक्रमेण कञ्चिद्देशं परिकल्प्य यजेरन्निति सामान्यविधेरर्थः। अङ्गसहितप्रधानस्य चिकीर्षितत्वात् तदर्थैव महावेदिरिति तत्रत्यस्सिद्धान्तः। तेन ज्योतिष्टोमस्याङ्गं पशुः, पशोश्चाङ्गं यूप इति महावेदिरियं ज्योतिष्टोमाङ्गपशुद्वारा यूपाङ्गमपीति सिध्यति। अतः यूपार्धद्वयेऽपि वेदिदेशस्य प्राप्तत्वात् 'अर्धमन्तर्वेदि' इत्यनेनार्धोद्देशेन तद्विधाने परिसंख्या स्यात्। परिसङ्ख्या च त्रिदोषा। तस्मादन्तर्वेदिबहिर्वेदिपदाभ्यां सन्धिदेशविशेषलक्षणैवाश्रयणीया, दोषत्रयवत्परिसङ्ख्यापेक्षया एकस्या लक्षणायास्स्वीकारे लाघवात्। यूपार्धोद्देशेन बहिर्वेदिमात्रविधानेऽर्धान्तरेऽन्तर्वेदेः प्राप्तत्वादनुवादोपपत्तेर्यद्यपि लक्षणाया न प्रसक्तिः, तथाप्यनुवादे तस्य वैयर्थ्यापत्त्या लक्षणाभ्युपगम्यते। लक्षणा च द्वाभ्यां पदाभ्याम्, तेन च न वाक्यभेदादिदोषप्रसक्तिः। अन्यथा अन्तर्वेदिपद एव लक्षणास्वीकारे बहिर्वेदेरपि विधेयत्वेन वाक्यभेदापत्तेः। अतः 'अर्धमन्तर्वेदि अर्धं बहिर्वेदि' इत्यनेन वेदित्वानादरेण जहत्स्वार्थलक्षणया यूपोद्देशेन सन्धिदेशो विधीयते। तेन च यूपैकादशिन्यां वेदेरविवृद्धिः फलं सिध्यति।

ज्योतिष्टोमे पक्षद्वयम्—यूपैकादशिनी पश्वेकादशिनी चेति। आग्नेयः, सारस्वतः, सौम्यः, पौष्णः, बार्हस्पत्यः, वैश्वदेवः, ऐन्द्रः, मारुतः, ऐन्द्राग्नः, सावित्रः, वारुण इत्येकादश पशवः। तत्र प्रतिपशु यूपभेदे यूपैकादशिनी, यूपभेदाभावे एकस्मिन्नेव यूपे एकादशपशूनां बन्धनं यदि तदा पश्वेकादशिनी भवति। तत्रैकयूपपक्षे वेदेर्विवृद्धिशङ्काया एव नावसरः। यदा चैकादश यूपाः तदा तेषां ज्योतिष्टोमविकारे तीव्रसुति प्रागपवर्गता विहिता। आहवनीयस्य पुरस्तादिमान् यूपान् प्राचीक्रमेण निखनेयुः। तदर्थं तावती वेदिर्वर्धनीया न वेति सन्देहो भवति। तत्र यदि वेदित्वानादरेण लक्षणया सन्धिदेशविशेषो 'अर्धमन्तर्वेदि अर्धं बहिर्वेदि' इत्याभ्यां विधीयेत तर्हि वेदिविवृद्धिर्न कर्तव्येति प्रयोजनं सिध्यत्यधिकरणस्य। 'यावद्यूपं वेदिमुद्धन्ति' इति च कल्पसूत्रस्य पूर्वपक्षमूलकत्वेनाप्रामाण्यं भवति।

अत्र ग्रन्थकारो दीक्षित एवमप्रामाण्यं परिहरति—'प्राच्येकादशिनी सम्मीयते, यावद्यूपं वेदिमुद्धन्ति, पूर्वार्द्धं वेदेः परार्द्धंव्यासमपच्छिद्य तत्पुरस्तात्प्राञ्चं दध्यात्' इति समग्रं

कल्पसूत्रम् । सूत्रस्यायमर्थः—महावेदेः पूर्वार्द्धम्—चतुर्विंशतिपदोदगायतं भवति । तदर्ध-विस्तारं ( द्वादशपदपरिमितम् ) अपच्छिद्य—वेद्यवयवत्वेनापरिगृह्य, तत्—अपच्छिन्नक्षेत्रम् उत्तरवेदेः पुरस्तात् प्राञ्चम्—प्रागायतं दध्यात्—परिगृह्णीयादिति । 'अर्धमन्तर्वेदि अर्धं बहिर्वेदि' इत्यनेन लक्षितसन्धिदेशस्य विधानेऽप्यत्राजहत्स्वार्थलक्षणैव स्वीकर्तव्या । अर्थात् वेदिं पुरस्कृत्यैवायं विधिर्न तु वेदिमपुरस्कृत्य, सन्धिपदस्य सापेक्षत्वात् । तत्र चापेक्षापूरकत्वेन वेदेरेवान्वयो वाच्यः । तथा च वेदितद्बहिस्सन्धित्वविशिष्टदेशस्यैव विधेयत्वं फलति । विशिष्ट-विधानाच्च न वाक्यभेदः । वेदिकार्यं यथा यूपमानम् तथा सदोमानहविर्धानमानोत्तरवेदि-मानादीन्यपि वेदिकार्याणि । अतो वेदिपरिमाणस्यादृष्टार्थत्वं नापतति । तस्माद्वेदित्वादरेणैव सन्धिदेशविधिरिति युक्तम् । देशविशेषलक्षणायामपि सामान्यतस्साङ्गे विहिताया वेदेरविरो-धेनार्धप्राप्त्युपपत्तेः यूपैकादशिन्यां तदर्थं वेदिवृद्धिरावश्यिकी । अतश्च 'यावद्यूपं वेदिमुद्धन्ति' इति वचनं सङ्गच्छते । अथवा—'इयति शक्ष्यामहे' इत्यनेन सामान्यशास्त्रेण वेदेस्साङ्गप्रधा-नार्थत्वात्कात्स्न्र्येन मूलतो यूपमानस्य वेद्यां प्राप्तौ 'अर्धं बहिर्वेदि' इति विशेषतयार्धस्य बहि-र्वेदित्वं विधीयते । 'अर्धमन्तर्वेदि' इति त्वनुवादः, सामान्यविधिनैवार्धस्यान्तर्वेदित्वस्य नित्यतया प्राप्तत्वात् । अत एव च न वाक्यभेदः । अतो यूपमानाङ्गत्वाद्वेदेः तीव्रसुति यूपैकाद-शिन्यां प्राच्यां 'यावद्यूपं वेदिमुद्धन्ति' इति कल्पसूत्रं युज्यत एवेति ।

पृ० ८५. पं० ८. (ब) 'इति द्वादशिकचतुर्थपादीयाधिकरणपूर्वपक्षन्यायाभासमूलकमप्रमाणम्' ।

द्वादशाध्यायचतुर्थपादस्य षष्ठाधिकरणे 'जाघन्या पत्नीस्संयाजयन्ति' इति वाक्यमुदा-हृत्य विचारः प्रवर्तितः । पशोः पुच्छं जाघनी कथ्यते । दर्शपूर्णमासयोः पत्नीसंयाजेषु 'जाघन्या पत्नीस्संयाजयन्ति, आज्येन वा' इत्याज्येन सह विकल्पतया जाघनी विहिता । साऽतिदेशेनाग्नीषोमीयपशौ प्राप्ता । पशुप्रकरणेऽपि वाक्यमिदं श्रुतम् । अग्नीषोमीयपशुयागात् पशुगणे चोदकेन जाघनी प्राप्नोति । तत्र पशुगणे बह्वीनां जाघनीनां समुच्चयो वा विकल्पो वेति संशयः । पत्नीसंयाजेषु जाघन्या यदि प्रतिपत्तिस्तर्हि समुच्चयः, यदि चार्थकर्म ततो विकल्पः । अतः जाघनीहोमस्य प्रतिपत्तित्वं वाऽर्थकर्मत्वं वेति विचारणीयम् । तत्र दर्शपूर्ण-मासयोर्जाघन्याः प्रतिपत्तिर्न भवितुमर्हति, तत्र पशोरभावात् । अतस्तस्याः पत्नीसंयाज-गुणत्वमेव । तथापि पशौ हृदयाद्यर्थमालब्धस्य पशोस्सम्बन्धिन्यास्तस्याः 'जाघन्या पत्नी-स्संयाजयन्ति' इति पुनः श्रवणात् प्रतिपत्त्यपेक्षायां प्रतिपत्तित्वेन पत्नीसंयाजविधानम् । अतः पशुगणे जाघनीनां प्रतिपत्तिरूपदृष्टार्थत्वसिद्धये समुच्चय एवोचित इति पूर्वपक्षः । अत एव कल्पसूत्रे 'जाघनीभिः' इति बहुवचनमुपपन्नं भवति ।

सिद्धान्तस्तु—प्रकृतौ दर्शपूर्णमासयोर्जाघन्या आज्येन सह विकल्पतया गुणभावः श्रुतः—'जाघन्या पत्नीस्संयाजयन्ति, आज्येन वा' इति । तथैव पशौ चोदकतः प्राप्ता । तत्र पुनर्वचनं 'जाघन्या पत्नीस्संयाजयन्ति' इति नियमार्थमङ्गीकर्तव्यम् । यथा प्रकृतितः प्राप्ता तथैव नियमः । प्राप्तिश्च तस्या गुणभावेनैव । तदेवं सति प्रधानभूतस्सन् यागः जाघनीसंस्कारार्थोऽपीति यदि स्वीक्रियते, तदा वाक्यभेदप्रसङ्गः । यदि चैतद्दोषपरिहारार्थं पशुयागस्य प्राकृतमदृष्टार्थत्वं परित्यज्य केवलप्रतिपत्तित्वं स्वीक्रियते, तर्हि अप्राकृतकार्यापत्तिः । तस्मात्प्रकृताविव पशावपि यागः केवलादृष्टार्थः । 'सर्वे द्रव्यविधयो नियमविधयः' इति न्यायेन प्रकृतावपि जाघनीविधेर्नियमविधितया प्रयोजनस्य क्लृप्तत्वात् पशावपि तथैव सिध्यति । तस्माद्यथाप्राप्ताया एव नियमनेन प्रतिपत्त्यर्थत्वाभावाद्विकल्पः । तथा च जाघन्या उपादेयत्वेन विवक्षितसङ्ख्यात्वादेकैव काचिज्जाघनी पश्वेकादशिन्यां ग्राह्येत्यभिधानान्न्यायविरुद्धमापस्तम्बवचनमिति । अत्रापस्तम्बवचनस्य श्रुतिमूलकत्वाभावानिश्चयात्कदाचिच्छ्रुतिमूलकत्वोपपत्तेः प्रामाण्यमेवेति नेदमुदाहरणमुपपन्नम् ।

पृ० ६३ पं० ३ (भ) 'इति तार्तीयाधिकरणन्यायेन' । ( अरुणान्यायः )

अरुणाधिकरणे 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इत्युदाहृत्य विचारः प्रवर्तितः—किम् 'अरुणाया' इति पदं वाक्याद्विच्छिद्य प्राकरणिके सर्वस्मिन् द्रव्ये सोमादौ निविशते—सोमादिव्यक्त्या यत्प्रकृतं कार्यं साधनीयं तदरुणया साधयेत् इति ? किं वा वाक्ये श्रुतेन क्रीणातिना सम्बध्य तत्साधनीभूतायामेकहायन्यां निविशते—अरुणगुणकैकहायन्या क्रीणीयात् इति ? । पूर्वस्मिन् स्फ्यकपालाधिकरणे 'स्फ्येनोद्धन्ति' 'कपालेषु श्रपयति' 'अग्निहोत्रहवण्या हवींषि निर्वपति' इत्यादावुद्धननश्रपणहविर्निर्वपणाद्येकैकया क्रियया स्फ्यादीनां प्रत्येकं सम्बन्धस्य सत्त्वात् तत्तत्क्रियामात्रार्थत्वं तस्य तस्येति व्यवस्थापितत्वेऽपि आरुण्यस्यामूर्तत्वेन क्रयं प्रति करणत्वासम्भवात् प्रकरणाविशेषात् प्रकृतापूर्वसाधनद्रव्यमात्रे निवेशस्स्वीकर्तव्यः । अत्रारुणापदमारुण्यगुणकद्रव्यपरम्—'गुणवचनानामाश्रयतो लिङ्गवचनानि' इति गुणोपसर्जनद्रव्यवाचिनो विशेष्यलिङ्गत्वविधानात् । तस्मादारुण्यगुणविशिष्टोऽरुणाशब्दः । तृतीया करणत्वे वर्तते । करणभूतं विशेष्यं द्रव्यमनूद्यारुण्यगुणः परिच्छेदकतया विधीयते, न त्वारुण्यस्य करणतया । तत्रास्मिन् वाक्ये श्रौतैकहायन्यवरुद्धे क्रये 'अरुणया' इति पदेन लक्षणयोपस्थितद्रव्यान्तरस्यैकहायन्या सह विकल्पसमुच्चयासम्भवात् वाक्यतो विभज्य प्रकृतसोमादिद्रव्योद्देशेनारुण्यं विधातव्यम् । तत्राविशेषात्सोमयागीयेषु सर्वेषु द्रव्येष्वारुण्यस्य विधानं पर्यवस्यतीति पूर्वपक्षः ।

तत्र सिद्धान्तसूत्रमिदम्—'अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमस्स्यात्' इति। द्रव्यगुणयोः—एकहायनीद्रव्यस्यारुण्यगुणस्य च नियमः—परस्परान्वयद्वारा क्रयभावनायामेवैकस्यामन्वयः, न त्वेकहायन्याः क्रयभावनायाम् आरुण्यस्य द्रव्यविधायकतत्तद्भावनासु। तत्र हेतुः—ऐककर्म्यादिति। 'अरुणया' इत्यस्मिन् वाक्ये एकस्या एव क्रयभावनायाः श्रवणात्। 'क्रीणाति' इत्यत्राख्यातेन प्रधानभूता भावनाभिधीयते। तस्याश्च प्रथमं वाक्यश्रुतानां सर्वेषां मिथोऽन्वयं विनैव सम्बन्धः, प्रधानान्वयस्याभ्यर्हितत्वात्। सर्वेषां भावनान्वयोत्तरं पदार्थाः केन प्रकारेण भावनाया वयमुपकारं कुर्म इत्यपेक्षमाणाः यथायोगं ते मिथोऽन्वयं प्राप्नुवन्ति। अयं पार्ष्ठिकोऽन्वयः। प्राथमिकान्वयेऽस्त्यैककर्म्यम्—एकं कर्म क्रियापदं यस्मिन् पदजाते तदेककर्म, तस्य भाव ऐककर्म्यम्, तस्मात्। यदा हि एकमर्थं प्रतिपादयितुं वाक्यं प्रवृत्तम् तदा वाक्यभङ्गाश्रयणं नोचितमिति बोधयति—अर्थैकत्व इति। स्त्रीप्रत्ययन्तस्यारुणाशब्दस्यात्र केवलगुणवचनत्वमेव। तृतीया च तदारुण्यं करणतयाभिधत्ते। सा चारुण्यगुणस्यामूर्तत्वात्साक्षात्क्रियासाधनताशक्तिमपश्यन्ती गुणस्य द्रव्यपरिच्छेदकताशक्तिं पर्यालोच्य परिच्छेदमुखेनैव क्रियासाधनत्वे विश्राम्यति। एकहायनीपरिच्छेद आरुण्येन कर्तुं शक्यते। परिच्छेदो नाम—इतरव्यावृत्तद्रव्यप्रतीतिविशेषः। तथा चारुणगुणकपिङ्गाक्ष्यैकहायनीद्रव्यकरणकक्रयभावना वाक्यार्थस्सम्पद्यते। तदेवमेकवाक्यत्वे सति तृतीयया गम्यमानं करणत्वं श्रौतप्रकृत्यर्थारुण्यगतं विधेयतयाश्रितं भवति। 'अरुणया' इत्यस्य वाक्यभङ्गे सति तृतीया लाक्षणिकप्रकृत्यर्थद्रव्यगतकरणत्ववाचिनी स्यात्। तदिदं सम्भवत्येकवाक्यत्वे नोचितमाश्रयितुम्। किञ्चारुण्यं परिच्छेद्यमपेक्षते, एकहायनी च परिच्छेदकम् स्ववाक्यगतं गुणं द्रव्यञ्चापहाय गुणान्तरेण चाकाङ्क्षाशान्तिवर्णनं नोचितम्। अत आरुण्यैकहायन्योः परस्परान्वयनियमः। इममेवार्थं सूत्रगतं 'नियम' पदमभिधत्ते। अत्र पूर्वपक्षी अरुणाशब्द आरुण्यगुणविशिष्टपर इत्युक्त्वा तत्र 'गुणवचनानामाश्रयतो लिङ्गवचनानि' इति स्मृतिं सम्प्रदर्श्य केवलगुणपरत्वे पुंल्लिङ्गता तद्विशिष्टद्रव्यपरत्वे च विशेष्यलिङ्गतेति स्त्रीलिङ्गनिर्देशोऽनुपपन्न इति न्यरूपयत्, तत्र सिद्धान्त्येवमभिप्रैति—'गुणवचनानाम्' इत्यस्य गुणोपसर्जनद्रव्यप्रतिपादनयोग्यानामित्यर्थः। तेषां परिच्छेद्यमुखेन क्रियान्वयादिना परिच्छेद्यद्रव्यलिङ्गसम्बन्ध इति स्मृतेरर्थः। तेनेह केवलगुणवचनत्वेऽपि परिच्छेद्यैकहायनीद्वारा स्त्रीलिङ्गोपपत्तिर्भवेदेवेति। अत एकहायन्यरुणिम्नोर्नियमः परस्परान्वयरूपस्सम्बन्ध इति सिध्यति।

अनेनैव न्यायेन 'गोशब्देन सास्नादिमानभिधीयते' इत्यत्र वाच्यवाचकभावग्रहदशायाम् 'अभिधीयते' इत्यभिधानक्रियाद्वारा कर्मत्वेन सास्नादिमतोऽर्थस्य करणत्वेन गोशब्दस्य

च वाच्यवाचकयोः परस्परान्वयरूपो नियम एष्टव्यः। तेन गाव्यादिशब्दस्यापि सास्नादिमदर्थवाचकत्वस्वीकारे व्युत्पत्तिकालेऽभिधानक्रियायां करणत्वेनावगतस्य गोशब्दस्य बाधस्स्यात्। अतो गोशब्द एव वाचकः, गाव्यादयश्च शब्दाः पुरुषाशक्तिजा इति।

**पृ० ६६, पं० ७ (म) 'इति द्वैतीयीकाधिकरणन्यायात्'। (संज्ञाधिकरणन्यायः)**

लोकवेदयोः पदभेदं 'इमे लौकिकाः' 'इमे वैदिकाः' इति व्यपदेशभेदेन, नियतस्वरराहित्येन तत्साहित्येन, स्त्रग्यूपादिपदसाहचर्येण चाभिप्रयन् पूर्वपक्षी पदभेदादर्थभेदं साधयितुं संज्ञाधिकरणन्यायमतिदिशति—'संज्ञा चोत्पत्तिसंयोगात्' (जै० सू० २।२।२२) इति। ज्योतिष्टोमं प्रकृत्य 'अथैष ज्योतिः' 'अथैष विश्वज्योतिः' 'अथैष सर्वज्योतिः' इति श्रुतानां ज्योतिर्विश्वज्योतिस्सर्वज्योतिश्शब्दानां प्रकृतज्योतिष्टोमयागानुवादकत्वम्? उत कर्मान्तराभिधायकत्वम्? इति सन्दिह्य विचारः प्रवर्तितः। ज्योतिरादिशब्दानां प्रकृतज्योतिष्टोमानुवादकत्वमेव 'एतेन सहस्रदक्षिणेन यजेत' इति ज्योतिरादिवाक्यानन्तरं पठिते 'एतेन' इत्येतच्छब्दबलात् ज्योतिष्टोमस्यैव ज्योतिरादिशब्दैः परामर्शात्। एवं ज्योतिष्टोममनूद्य तत्र सहस्रदक्षिणागुणविधिः। एवञ्च प्रकृतहानाप्रकृतकल्पनादिदोषाप्रसक्तिः। अतो गुणविधायकत्वमेव न कर्मान्तरविधायकत्वमिति पूर्वपक्षः।

सिद्धान्तस्तु 'संज्ञा चोत्पत्तिसंयोगात्' इति। यथा सङ्ख्या कर्मभेदिका, तथा संज्ञापि। ज्योतिष्टोमादिनामतो भिन्नानि नामान्यत्र श्रूयन्ते-ज्योतिः विश्वज्योतिः सर्वज्योतिरिति। यदा भिन्नानि नामपदानि, तदार्थभेदोऽपि सिध्यति। यथा 'शाला' 'माला' देवदत्तः' 'यज्ञदत्तः' इत्यादावक्षरसाम्ये सत्यपि पदभेदादर्थभेदः, तथा 'ज्योतिः' 'ज्योतिष्टोमः' 'विश्वज्योतिः' 'ज्योतिष्टोमः' इत्यत्रापि पदभेदादर्थभेदः। अतः 'उत्पत्तिसंयोगात्' उत्पत्तिशिष्टसंज्ञायाः कर्मभेदकत्वात्प्रकृते ज्योतिरादिशब्दानां कर्मभेदकत्वमेव। अनेन न्यायेन लोकवेदयोः 'देवाः' 'देवासः' 'आत्मना' 'त्मना' 'उद्ग्राहः' 'उद्ग्राभः' इति पदभेददर्शनादर्थभेदोऽपि स्वीकर्तव्य इति लोकवेदाधिकरणपूर्वपक्षिणस्तात्पर्यम्।

**पृ० ६७, पं० १४ (य) 'पदैकत्वाच्च संज्ञाधिकरणन्यायस्याप्रवृत्तिः'।**

संज्ञाधिकरणे ज्योतिरादिपदानां भेदादर्थभेदं स्वीकृत्य कर्मान्तरबोधकत्वं तेषां व्यवस्थापितम्। प्रकृते 'देवाः' 'देवासः' इत्यादीनां पदैकत्वमेव, प्रातिशाख्यच्छन्दःप्रभृतीनि प्रमाणानि वैदिकपदेषु न्यूनाधिक्यं बोधयन्ति। लौकिकान्येव पदानि न्यूनाधिक्ययुक्तानि वेदेषु प्रयुज्यन्त इत्यत्रानुशासनानीमानि। प्रातिशाख्यप्रभृतीनि लक्षणशास्त्राणि वेदेषु श्रुतानां

लक्ष्याणां स्थिरीकरणाय प्रवृत्तानि । अन्यथा प्रातिशाख्यादिप्रवृत्त्यनन्तरं वेदेष्विमानि पदानि प्रवृत्तानीति स्यात् । अतो वैदिकलौकिकपदानामनन्यत्वेन पदैकत्वान्नार्थभेदः । ज्योतिरादयश्शब्दाश्च न तथेति तत्रार्थभेद उपपन्न इति लोकवेदाधिकरणसिद्धान्तिन आशयः ।

**पृ० ९८, पं० १५, ( र ) 'अतो वायुपुराणोक्तरीत्या··········पश्यन्ति' ।**

**पृ० ६६, पं० १० ( ल ) 'इति तार्तीयीकन्यायात्' ।**

न्यायोऽयं ६३ पृष्ठस्य टिप्पण्यां विवृतः । शक्तिग्रहावसरे प्रथमं 'सास्नादिमान् गोशब्देनाभिधीयते' इत्यत्र व्यक्तौ गृहीतस्य सम्बन्धस्य नियमरूपस्य व्यक्तिपरिहारेण जातिवाचित्वे बाधस्स्यादित्यर्थः ।

**पृ० १०७, पं० १, ( व ) 'संज्ञाचोत्पत्तिसंयोगादित्यत्र स्फुटीभविष्यति' ।**

संज्ञाधिकरणन्यायः ६६ पृष्ठे टिप्पण्यां निरूपितः । ज्योतिरादिसंज्ञानां कर्मभेदकत्वमुत्पत्तिशिष्टानामेव । याश्च संज्ञाः उत्पन्नशिष्टगुणयोगनिबन्धनाः न तासां कर्मभेदकत्वम् । यथा दाक्षायणयज्ञादिसंज्ञाः । अग्रेऽयं विषयः स्फुटीकरिष्यते ।

**पृ० १११, पं० २१, ( श ) 'इति तार्तीयीकाधिकरणन्यायेन' । ( ऐन्द्रीन्यायः )**

चयने 'निवेशनस्सङ्गमन इत्यैन्द्रया गार्हपत्यमुपतिष्ठते' इति श्रुतम् । 'निवेशनस्सङ्गमन' इति मन्त्रप्रतीकम् । 'निवेशनस्सङ्गमनो वसूनां विश्वा रूपाभिचष्टे शचीभिः । देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम्' ॥ इति समग्रो मन्त्रः । इन्द्रो देवः द्योतमानः । स च वसूनां धनानां निवेशनः—आवासः, सङ्गमनः—आश्रितेषु सङ्गमयिता, सत्यधर्मा—अबाधितगुणशाली, एतादृश इन्द्रः सवितेव—सूर्य इव विश्वा रूपा—सर्वाणि रूपाणि वस्तूनि, शचीभिरभिचष्टे—स्वशक्तिभिः प्रकाशयति, एवं पथीनां—कर्ममार्गाणां समरे सङ्गमने न तस्थौ-नोदासीनो भवति इति मन्त्रस्यार्थः । इत्यनया ऐन्द्रया-इन्द्रदेवताकया ऋचा, गार्हपत्यम्—अग्निम्, उपतिष्ठेत-समीपमेत्य मन्त्रमभिदधीत इति विधिवाक्यस्यार्थः । उपस्थानं नाम मन्त्राभिधानपूर्वकं समीपगमनम् । अत्र मन्त्रगतसामर्थ्यमिन्द्रदेवताप्रकाशने वर्तते । तेनेन्द्रदेवतोपस्थानमनेन कर्तव्यमिति प्रतीयते । 'गार्हपत्यम्' इति द्वितीया च गार्हपत्यस्याग्नेरुपस्थानमाचष्टे । एवं सामर्थ्यस्य श्रुतेश्चैकस्मिन् लक्ष्ये सन्निवेशे जाते, पूर्वपक्षी मन्यते—इन्द्रोपस्थानमेव कर्तव्यम् न गार्हपत्योपस्थानमिति । विधिवाक्ये 'ऐन्द्रया' इत्युपक्रमगतं पदम् । 'गार्हपत्यम्' इति चोपसंहारगतम् । उपक्रमगतं तद्धितान्तम् । तद्धितश्रुत्या मन्त्रस्य

मुख्य एवार्थे विनियोगः कर्तव्यः । अतः जघन्यश्रुतस्य गार्हपत्यशब्दस्य गौण्या वृत्त्या इन्द्रपरत्वमाश्रणीयम् । तस्माद् गार्हपत्यसमीपे स्थित्वा इन्द्रमुपतिष्ठेत इति ।

तत्र सिद्धान्तसूत्रमिदम्—'वचनात्त्वयथार्थमैन्द्री स्यात्' इति । ऐन्द्री ऋगेवायथार्थं स्यात्—मुख्यार्थवृत्तिर्न भवेत् । तत्र हेतुः—वचनादिति । गार्हपत्ये विनियोगवचनादित्यर्थः । 'ऐन्द्रया' इति पदं न देवतातद्धितान्तम्, किन्तु 'अस्य वामीयम्' 'कयाशुभीयम्' इत्यादिवत् पदसंयोगमात्रेण तद्धितान्तम् । 'ऐन्द्रया' इत्युपक्रमगतमपि मन्त्रस्य विधिविहितार्थप्रकाशकतया विधिपरतन्त्रत्वमभ्युपगन्तव्यम् । विधिविहितस्यार्थस्य ज्ञानानन्तरमेव मन्त्रप्रवृत्तिः । विधिश्च गार्हपत्योपस्थानं ब्रवीति इत्यवगते सति तदनन्तरं प्रवृत्तो मन्त्रस्तदविरोधेनैवार्थं प्रकाशयेत् । तत्र मुख्यार्थमतिक्रम्य गौणार्थत्वं मन्त्रस्य युक्तमाश्रयितुम् । अतो मन्त्रानुरोधेन गार्हपत्यशब्दस्य गौणार्थत्वं नोचितम् । एवञ्च मन्त्रगतेन्द्रशब्दस्यैव गार्हपत्यपरत्वमाश्रित्य तदुपस्थाने मन्त्रो विनियुज्यत इति ।

तत्प्रख्याधिकरणपूर्वपक्षी 'अग्निहोत्रं जुहोति' इत्यत्राग्निहोत्रशब्दस्य कर्मनामत्वे सति तस्य कर्मणोऽरूपत्वं साधयति । तत्र 'यदग्नये च प्रजापतये च सायं जुहोति' 'यत्सूर्याय च प्रजापतये च प्रातः' इति वाक्याभ्यां विशिष्टकर्मान्तरविधायकत्वमङ्गीकृत्य, तत्र 'अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहेति सायम्' 'सूर्यो ज्योतिर्ज्योतिस्सूर्यस्स्वाहेति प्रातः' इत्याभ्यां सायं प्रातःकालिककर्मणोर्मन्त्रो विधीयत इत्यभ्युपैति । तत्र प्रजापतिदेवताके कर्मणि कथमग्नेः सूर्यस्य च प्रकाशकयोर्मन्त्रयोर्निवेश इति शङ्कायामैन्द्रीन्यायेनाग्निपदं सूर्यपदञ्च गौण्या प्रजापतिं बोधयत इति ।

पृ० १२५. पं० २४. ( ब ) 'सर्वप्रदानं हविषस्तदर्थत्वात् इत्यत्र व्यक्तं भविष्यति' ।

## ( सर्वप्रदानन्यायः )

सर्वप्रदानाधिकरणे ( ३–४–१७ ) भाष्यमतं वार्तिकमतमुभयोर्निष्कर्षश्च ग्रन्थकृता प्रदर्शितः । तत्र 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्याञ्चाच्युतो भवति' इत्यत्र कृत्स्नस्य पुरोडाशस्य होमः ? उत द्व्यवदानादिसंस्कारसंस्कृतस्य ? इति विचारः प्रवर्तितः । तत्र भाष्यमतेन पूर्वोत्तरपक्षौ–'अग्निमुखा वै देवाः' इति वाक्यशेषबलेन आहवनीयाद्यग्निसम्बद्धस्यैव द्रव्यस्य देवतासम्बन्ध इत्यवगम्यते । आहवनीयाग्निसम्बन्धश्च होमेन विना न सम्भवति । अतः कृत्स्नस्य पुरोडाशं हुत्वा स्विष्टकृदादिशेषकार्याणि पुरोडाशान्तरेण सम्पादनीयानि । 'शेषात्स्विष्टकृतं जुहोति' इत्यत्र शेषशब्दोऽन्यपर्यायः, न त्ववयवावयविभाववाची ।

अतः कृत्स्नस्यैव पुरोडाशस्य होम इति पूर्वः पक्षः। सिद्धान्तस्तु—'सकृदुपस्तृणाति' 'द्विर्हविषोऽवद्यति' 'सकृदभिघारयति' 'चतुरवत्तं जुहोति' 'अङ्गुष्ठपर्वमात्रमवद्यति' 'द्व्यवदानं जुहोति' 'मध्यात्पूर्वार्द्धाच्चावद्यति' इत्याद्यनेकैर्वाक्यैः होमस्य क्रमोऽवबोध्यते। यदि कृत्स्नस्य पुरोडाशस्य होमस्तर्हि 'मध्यात्पूर्वार्द्धाच्चावद्यति' 'द्विर्हविषोऽवद्यति' इत्यादिना पुरोडाशान्निष्कृष्य द्विरवदानादेर्होमोऽनुपपन्नस्स्यात्। अतोऽवत्तस्यैव द्रव्यस्य होमसाधनता निश्चेतव्या। एतदनुसारेणाग्नेयवाक्यस्य द्व्यवदानद्वारा हविषो होमसाधनत्वं कल्पनीयम्, न कृत्स्नस्य पुरोडाशस्य। यथा व्रीहीणां पुरोडप्रकृतितया, पशोर्हृदयादिप्रणाडिकया, सोमस्य रसद्वारा यागसाधनत्वम्, तथा कृत्स्नपुरोडाशस्य द्व्यवदानप्रणाडिकयाग्नेयत्वमुपपन्नं भवति। अत एव 'शेषात्स्विष्टकृतं समवद्यति' इत्यत्र शेषशब्दस्योपयुक्तावशिष्टांशपरत्वम्, न त्वन्यपरत्वम्। अत्र याज्ञिकाः—वेद्यामासादितात् पुरोडाशात् 'मध्यात्पूर्वार्द्धाच्चावद्यति' इति क्रमेणाङ्गुष्ठपर्वमात्रं प्रथमावदानं कृत्वा जुह्वां निक्षिप्य स्रुवेण पुरोडाशमभिघार्य द्वितीयमवदानं पूर्ववत्सम्पाद्य पुरोडाशमभिघारयन्ति। तदिदमभिघारणं हुतावशिष्टस्य स्विष्टकृद्यागार्हत्वाधायकम्। अनेनाभिघारणेन तद्द्रव्यमयातयामं भवति। यदि 'शेष' शब्दोऽन्यपर्यायस्तर्हि तस्य द्रव्यस्य पूर्वोक्तसंस्कारविहीनतया स्विष्टकृद्यागार्हता न सिध्येदिति शेषकर्मणां लोप एव स्यात्। अतो न कृत्स्नहोमः। किन्तु 'यदाग्नेयोऽष्टाकपालः' इत्युत्पत्तिवाक्येन यत्कृत्स्नस्य पुरोडाशस्याग्नेयत्वमवगतं तद् द्व्यवदानसंस्कृतद्रव्ये उपसंह्रियत इति द्व्यवदानस्यैवाग्निदेवतासम्बद्धस्य होम इति।

तदिदं भाष्यसम्मतं सन्दूष्य वार्तिके पक्षत्रयमुपवर्णितम्। तथाहि—नात्रोपसंहारन्यायस्सङ्गच्छते। 'सप्तदश सामिधेनीरनुब्रूयात्' इत्यनारभ्यवाक्यविहितं साप्तदश्यं सामिधेनीसम्बद्धम्, न तु क्रतुसम्बद्धम्। सामिधेनीनामव्यभिचरितक्रतुसम्बन्धसत्त्वात् साप्तदश्येऽपि स सम्बन्धोऽनुमीयते। तेन च क्रतूपस्थितिर्वक्तव्या। क्रतवश्चेष्टिरूपाः प्रकृतिविकृतिभेदेन विविधाः। तत्रानारभ्याधीतानां प्रकृतिगामित्वन्यायेन दर्शपूर्णमासयोस्तत्प्राप्तम्। तत्र 'पञ्चदश सामिधेनीरनुब्रूयात्' इति प्रत्यक्षप्राकरणिकवाक्येन पाञ्चदश्यमुपदिष्टमिति प्राप्तसाप्तदश्यस्य तत्र निवेशासम्भवाद्विकृतिषु गतम्। तत्राप्यतिदेशप्राप्तपाञ्चदश्यस्य सत्त्वात्ततः परावृत्त्यान्यत्र विकृतिषु निवेष्टुं यावत्प्रवृत्तं तावन्मित्रविन्दादिषु कतिपयेष्टिषु गतम्, किन्तु तत्र पुनः साप्तदश्यश्रुतिमवलोक्य ततोऽपि परावृत्त्यानाम्नातसाप्तदश्यासु विकृतिषु निवेष्टुमुद्युञ्जानं सत् मित्रविन्दादिषु प्रत्यक्षोपदेशस्य वैयर्थ्यं पर्यालोच्य तत्रैवोपसंह्रियते इत्युपसंहारन्यायस्वरूपम्। प्रकृते 'आग्नेयः' इति तद्धितेन 'सास्य देवता' इत्यधिकृत्य विहितेन

द्रव्यस्य पुरोडाशस्य सम्बन्धोऽवगम्यते। द्रव्यदेवतासम्बन्धश्च यागः। देवतात्वञ्च त्यज्यमानद्रव्योद्देश्यत्वमेव, देवतोद्देश्यकद्रव्यत्याग एव च यागः। तथा च 'आग्नेयोऽष्टाकपालः' इत्यत्राग्निदेवताकयागसाधनमष्टाकपालः पुरोडाश इति शब्दात्स्फुटमवगम्यमाने सान्नाय्यानारभ्यस्थल इवानुमानस्य नावसरः। द्व्यवदानवाक्ये च न देवतासम्बन्धः स्फुटः, किन्तु द्व्यवदानस्याग्नेयावयवत्वादनुमेयः। तत्र 'यदाग्नेयोऽष्टाकपालः' इति स्पष्टः सामान्यविधिः कथमस्पष्टद्व्यवदानमात्र उपसंह्रियेत, आग्नेयवाक्यस्योपजीव्यत्वात्। तदिदमुक्तं भट्टपादैः—

> 'सामान्यविधिरस्पष्टः संह्रियेत विशेषतः।
> स्पष्टस्य तु विधेर्नान्यैरुपसंहारसम्भवः'॥ इति।

किञ्च सामान्यस्य विशेष उपसंहारस्तत्र भवति यत्र विशेषः सामान्यात्मना भेदमनुभवेत्। द्व्यवदानन्तु पुरोडाशस्यावयवः, पुरोडाशस्तु तदवयवी। अवयवावयविनोश्च भेदः प्रसिद्धः। अवयवावयविभावस्थले सामान्यविशेषव्यवहारो न भवति। अतोऽपि नात्रोपसंहारन्यायप्रवृत्तिः। व्रीह्यादीनां पुरोडाशप्रकृतितया, पशोश्च हृदयादिप्रकृतितया यागाङ्गत्वमिव पुरोडाशस्यापि द्व्यवदानप्रणाडिकया यागाङ्गत्वमिति यदुक्तं तत्र दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमस्ति। व्रीहिषु पशौ चावघातविशसनादिना तत्तत्स्वरूपस्य विनष्टत्वेन तेषां साक्षाद्यागसाधनतासम्भवेन पुरोडाशहृदयादीनाञ्च वाक्यान्तरतो यागसाधनत्वावगमाद् व्रीह्यादीनां प्रकृतिद्रव्यतया यागसाधनत्वमुपपन्नम्। प्रकृते च तादृशसाधकबाधकप्रमाणाभावेन साक्षादेव च पुरोडाशस्य देवतासम्बन्धावगमात् द्व्यवदानद्वारा तदाश्रयणस्यायुक्तत्वादिति वैषम्यम्। अतः 'द्व्यवदानं जुहोति' इति वाक्ये द्व्यवदानस्य प्रक्षेपमात्रावगमात् प्रक्षेपस्य संस्कारकर्मत्वमभ्युपेयम्। प्रक्षेपश्चायं नोत्पत्तिवाक्यावगतकृत्स्नपुरोडाशस्याग्नेयत्वविरोधी, अग्नये त्यक्तस्य कृत्स्नपुरोडाशस्याग्नौ तदेकदेशभूतद्व्यवदानमात्रप्रक्षेपे सत्याग्नेयत्वानपायात्। 'द्व्यवदानं जुहोति' इत्यत्र द्व्यवदानस्याग्नेयत्वं न विशिष्यावगतम्। अत उत्पत्तिवाक्यावगतस्याग्नेयत्वस्य द्व्यवदानं न द्वारं भवितुमर्हति। तस्माद् द्व्यवदानप्रणाड्या पुरोडाशस्याग्नेयत्वं नोचितम्।

किञ्च—वेद्यां हविषामासादनम्, सामिधेन्यनुवचनम्, इध्माधानम्, पूर्वाघारः, प्रवरः, उत्तराघारः, प्रयाजाः, आज्यभागौ, 'अग्नय इदं न मम' इति याजमानस्त्यागः, पुरोऽनुवाक्यावचनम्, उपस्तरणम्, द्विरवदानम्, अभिघारणम्, दक्षिणानुक्रमणम्, आश्रावणम्, प्रत्याश्रावणम्, याज्याप्रैषः, याज्यानुवचनम्, तदन्ते वषट्कारः वषट्कृते द्व्यवदानस्याहवनीये

प्रक्षेप इति सिद्धे पदार्थक्रमे पर्यालोच्यमाने, आज्यभागोत्तरमेव देवतायै हविषः त्यक्तत्वात् तदनन्तरमुपस्तरणादिविधिभिः द्वयवदानस्य प्रक्षेपमात्रं कर्तव्यम्। तस्य च यागत्वाभावात् वषट्कारादिकमनुपपन्नं भवेत्। तस्माद्यागः प्रधानम् होमस्तु प्रक्षेपरूपः प्रतिपत्तिस्स्यात्। तथा सति कदाचित् द्वयवत्तनाशे द्रव्यान्तरोत्पत्तिर्न भवेत्, प्रतिपत्तित्वादस्य कर्मणः। तदिदं नोपपन्नमिति पक्षान्तरं वार्तिके प्रदर्शितम्—

यागस्य द्वे रूपे-देवतोद्देश्यकद्रव्यत्यागत्वम् देवतोद्देश्यकप्रक्षिप्यमाणद्रव्यविषयकत्वात्मकहोमत्वञ्चेति। तत्र प्रथमं सामान्यरूपम्, द्वितीयञ्च विशेषरूपम्। सामान्यरूपापन्नयागस्य पुरोडाशस्साधनम्, विशेषरूपापन्नस्य तु द्वयवत्तद्रव्यम्। वषट्कारोत्तरकाले समग्रः पुरोडाशो यजमानेन देवतायै त्यक्तव्यः, तस्मिन्नेव च क्षणेऽध्वर्युणा द्वयवत्तद्रव्यमाहवनीये प्रक्षेप्तव्यम्। द्व्याकारस्यैव यागस्याधिकारवाक्येन फलसम्बन्धात्प्राधान्यं सिध्यति। अतो वषट्कारसम्बन्धविरोधोऽपि न भवति। त्यागप्रक्षेपयोस्समानकालिकत्वेन द्वयवदाननाशे त्यागार्थं द्रव्यान्तरोत्पत्तौ बाधकमपि नास्ति। एवञ्च यागः प्रक्षेपांशश्चोमयोरपि प्राधान्यमिति।

अस्मिन्नपि पक्षेऽरुचिं प्रदर्श्य पक्षान्तरं दर्शितं वार्तिके—वषट्कारोत्तरं याग इत्येतत्समुचितम्। प्रक्षेपांशस्य प्राधान्यकोटौ निवेशो न समुचितः, तथा सति प्रक्षेपस्य विकृतावतिदेशानापत्तेः। अङ्गानामेवातिदेशः, न तु प्रधानस्य। विना प्रक्षेपेण विकृतियागाः कर्तव्या भवेयुः। प्रक्षेपस्य प्राधान्येऽग्निहोत्रमिव दर्शपूर्णमासावपि जुहोतिशब्दव्यवहार्यौ भवेताम्। यागहोमयोर्भेदो न प्रसिध्येत्। तस्मात् यजतिचोदनाचोदितेषु यागस्य प्राधान्यम्, प्रक्षेपस्य च संस्कारत्वम्। तच्च न स्विष्टकृदादिवदुपयुक्तसंस्कारकम्, किन्तु उपयुज्यमानद्रव्यसंस्कारकम्। तेन प्रतिपत्तिकर्मतो भेदस्सिध्यति। उपयुक्तसंस्कारः, उपयोक्ष्यमाणसंस्कारः, उपयुज्यमानसंस्कारश्चेति त्रिविधं भवति संस्कारकर्म। जुहोति चोदनाचोदितेषु च कर्मसु त्यागस्य प्रक्षेपस्य च स्वाहान्तमन्त्रकर्तव्यतया समानकालकत्वात्प्रक्षेपस्य न संस्कारकर्मत्वम्। तस्मात् देवतोद्देशेन स्वत्वत्यागमात्रं यागः, देवतोद्दिष्टत्यज्यमानस्वत्वकद्रव्यप्रक्षेपो होम इति यागस्थले कृत्स्न एव पुरोडाशादिः यागसाधनम्, तदवयवद्वयवदानप्रक्षेपस्तु त्यज्यमानपुरोडाशसंस्कार इति वार्तिकनिष्कर्षः।

वासुदेवदीक्षितस्तु द्वयवदानप्रणाड्यैव पुरोडाशस्याग्नेयत्वमिति भाष्यमतमेव समर्थयते। विषयोऽयं सर्वप्रदानाधिकरणे (३,४,१७) द्रष्टव्यः।

पृ० १३१. पं० ७. (ष) 'उत्पत्त्युत्पन्नशिष्टयोर्गुणाधिरणे ··· ··· ··· ··· ··· ···

प्राबल्यदौर्बल्ये व्यवस्थापयिष्येते।"

उत्पत्तिवाक्ये शिष्ट उपदिष्टो गुण उत्पत्तिशिष्टः। उत्पत्तिवाक्यभिन्नमुत्पन्नवाक्यम्। तत्र शिष्ट उत्पन्नशिष्टः। अनयोरुत्पत्तिशिष्टः प्रबलः, तदितरस्तु दुर्बलः। अयं न्यायो गुणाधिकरणे (२-२-९) सिद्धः। अत्र गुणात्कर्मभेदस्साध्यते। चातुर्मास्येषु वैश्वदेवपर्वणि 'आग्नेयमष्टाकपालं निर्वपति' इत्यादिभिरष्टौ प्रधानयागा विहिताः। तत्र 'सा वैश्वदेव्यामिक्षा' इत्यनेन विश्वेदेवदेवताकामिक्षाद्रव्यकयागस्सप्तमः। तदनन्तरं 'वाजिभ्यो वाजिनम्' इति श्रुतम्। अस्मिन् वाक्ये सन्देहः—'वाजिभ्यः' इत्यनेनामिक्षायागमनूद्य वाजिनाख्यं द्रव्यं किं विधीयते? उत वाजिदेवताकवाजिनद्रव्यकं कर्मान्तरं विधीयते? इति। तत्र 'सा वैश्वदेव्यामिक्षा' इत्यत्र प्रत्यक्षयज्यश्रवणेऽपि द्रव्यदेवतासम्बन्धबलात् 'आमिक्षया यजेत' इति यजतिपदं कल्पनीयम्। कल्पितयजतिपदेन यागमात्रमामिक्षागुणसम्बन्धरहितं निष्कृष्यानूद्य तत्र 'वाजिभ्यो वाजिनम्" इति वाजिनगुणो विधीयते। तेन चोत्पत्त्युत्पन्नशिष्टगुणगतप्राबल्यदौर्बल्यस्य नावसरः। यद्यपि यागस्यामिक्षाद्रव्यसम्बद्धस्यैव प्रतीतिः, तथापि यागस्वरूपमात्रमेव यजिनाभिधीयत इति स्वीकारान्न दोषः। यथा 'पुरोडाशकपालेन तुषानुपवपति' इत्यत्र तुषोपवापे पुरोडाशसम्बन्धरहितस्य केवलस्य कपालस्यैवान्वयः, तथाऽऽमिक्षाद्रव्यासम्बद्धस्य यागमात्रस्याभिधानं यजतिना स्वीक्रियते। तथा चामिक्षासम्बन्धाद्विनिष्कृष्य यागस्वरूपानुवादेन वाजिनगुणविधानसम्भवान्नास्त्युत्पत्त्युत्पन्नशिष्टयोर्गुणयोर्विशेष इत्युभयोस्तुल्यबलात्वादामिक्षायागे वाजिनगुणविधानमिति पूर्वपक्षः।

सिद्धान्तस्तु—उत्पत्तिविधौ गुणविषयकाकाङ्क्षायां सत्यामुत्पन्नवाक्येन स गुणस्समर्पयितुं शक्यते, आकाङ्क्षानुसारेणैव गुणानामन्वयात्। आमिक्षाया उत्पत्तिविधौ सत्त्वात् द्रव्यान्तरस्य नापेक्षा। अतस्तत्रासम्भवन्निवेशो गुणो वाजिनरूपः कर्मभेदकः। वाजिनवाक्येन न यागमात्रमामिक्षारहितमनुवदितुं शक्यम्, अनुवादस्य पुरोवादसापेक्षत्वेन पुरोवादस्य चामिक्षागुणयुक्तस्यैवोपस्थितत्वात् तादृशस्यैव कर्मणो बुद्धौ विपरिवर्तमानत्वात्। पुरोडाशकपाले त्वगत्या पुरोडाशान्निष्कृष्य कपालमात्रस्याभिधानं स्वीक्रियते। अतो वाजिनवाक्ये वाजिनगुणककर्मान्तरमेव विधीयते, उत्पत्तिशिष्टस्य गुणस्य प्रबलत्वात्। अनेनैव न्यायेन 'वैश्वदेवेन यजेत' इति वाक्यं नाग्नेयादियागेषु विश्वेदेवदेवतागुणविधायकं भवितुमर्हति, तत्रोत्पत्तिशिष्टाग्न्यादिदेवतानां सत्त्वात्। अतो वैश्वदेववाक्ये वैश्वदेवशब्दो नामधेयम्।

पृ० १३५. पं० १६ (स) 'औदुम्बराधिकरणन्यायेन'।

( विधिवन्निगदन्यायः )

'औदुम्बरो यूपो भवत्यूर्वा उदुम्बरः ऊर्क् पशवः ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्यै' इत्यत्र 'ऊर्जं पशूनाप्नोति' 'ऊर्जोऽवरुध्यै' इति फलसमर्पकत्वं स्वीकृत्य तत्फलोद्देशेनौदुम्बरत्वगुणविधाने यूपेनैव साध्याकाङ्क्षाया निवृत्तत्वात् फलाय गुणविधिरिति नोपपद्यत इति व्यवस्थाप्य समग्रस्यार्थवादत्वेन प्राशस्त्यसमर्पकत्वं सिद्धान्तितम्। तन्न्यायेनात्रापि गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति' इत्याद्यर्थवादादष्टाकपालादिवाक्यानां 'यदष्टाकपालो भवति' इत्यादीनां फलाय गुणविध्यसम्भवः।

पृ० १३५, पं० २२ ( ह ) 'कामपदाभावेऽपि रात्रिसत्रन्यायेन।'

( रात्रिसत्रन्यायः )

'प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्ति' इत्यर्थवादबोधितं प्रतिष्ठाख्यं फलं ज्योतिरादियागानां यथा कल्प्यते, तथैव 'गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति' 'विराजैवास्मिन्नन्नाद्यं दधाति' इत्यादिभिः 'यदष्टाकपालो भवति' यन्नवकपालो भवति' इत्यादिविहितकर्मसु ब्रह्मवर्चसादिफलं समर्प्यत इति शङ्कितुराशयः।

पृ० १३६ पं० ५ (क्ष) 'एवञ्च गोदोहनेन चमसस्येव काम्यैरष्टत्वादिभिः।'

( काम्यं नित्यस्य बाधकमिति न्यायः )

दर्शपूर्णमासयोः 'चमसेनापः प्रणयेत्' इत्यनेनापां प्रणयनं प्रति चमसो विहितः। अयं नित्यः। अत्रैव यजमानो यदि पशुकामनावान् स्यात् तर्हि तस्य काम्यमपि साधनं विहितम्—'गोदोहनेन पशुकामस्य प्रणयेत्' इति गोदोहनम्। गावो दुह्यन्ते यस्मिन् पात्रे तद् गोदोहनम्। तेनापां प्रणयनं कुर्यात्पशुकामी यजमानः। अत्र 'काम्यं नित्यस्य बाधकम्' इति न्यायेन गोदोहनस्य काम्यस्य नित्यचमसबाधकत्वमङ्गीक्रियते, तथैव 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इति नैमित्तिकवैश्वानरेष्टौ श्रुतं द्वादशत्वं 'यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति' इत्यादिवाक्येषु श्रूयमाणैरष्टत्वादिभिर्बाध्यताम्। अष्टत्वादयश्च काम्याः, द्वादशत्वन्तु नित्यम्। 'काम्यं नित्यस्य बाधकम्' इति न्यायस्यात्रापि प्रवृत्तेरिति शङ्कितुराशयः।

**पृ० १३८. पं० ५. ( का ) 'एतेन गुणमुख्याधिकरणेन गतार्थत्वं निरस्तम्'।**

**( गुणमुख्यव्यतिक्रमन्यायः )**

गुणमुख्याधिकरणे ( ३. ३. २ ) गौणमुख्यविषयमन्त्रविनियोगविचारः प्रवर्तितः। गुणोऽङ्गम् तद्विषयो मन्त्रः, मुख्यं प्रधानम् तद्विषयो मन्त्रः। अनयोर्विनियोगविचारस्तत्र कृतः। 'उच्चैः ऋचा क्रियते उपांशु यजुषा, उच्चैस्साम्ना' इति त्रिधिभिः ऋगादिवेदैर्यत्क्रियते तत्रोच्चैस्त्वादयस्स्वरा विधीयन्ते। तत्राधानं 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इति विहितं याजुर्वेदिकम्। आधानं मुख्यं याजुर्वेदिकस्वरयुक्तम्। स च स्वर उपांशुः। तत्रैवाधाने 'वारवन्तीयं साम गायति' इति वारवन्तीयसाम्नो गेयत्वेन विहितम्। सामगानञ्चाङ्गम्, तत्स्वरस्तु सामवेदिक उच्चैस्त्वम्। आधाने गेयं साम किमुच्चैस्त्वावच्छिन्नम्? उतोपांशुत्वावच्छिन्नम्? यदि मुख्यस्यानुग्रहस्तर्हि उपांशुस्वरः। यदि वाङ्गस्यानुग्रहस्तर्हि उच्चैस्स्वरः। तत्र पूर्वपक्षी 'उच्चैः ऋचा क्रियते' इत्यादौ क्रियतिपदे विधीयत इत्यर्थस्य पूर्वाधिकरणे स्वीकृतत्वेन ऋग्वेदविहितकर्माङ्गानामुच्चैस्त्वम् यजुर्वेदविहितानां तेषामुपांशुत्वम्, सामवेदविहितानाञ्चोच्चैस्त्वमित्येवं सिद्धत्वात् वारवन्तीयस्य सामवेदविहितत्वादुच्चैस्त्वमेवेति गौणस्वरमेवाङ्गीकरोति।

सिद्धान्ती तु—गुणमुख्ययोरङ्गविधिप्रधानविधिप्रयुक्तस्वरयोरुच्चैस्त्वोपांशुत्वयोर्विरोधे गुणस्य मुख्यार्थत्वान्मुख्येनैवाधानविधिना यजुर्वेदस्वरमेवाङ्गीकरोति। मुख्यविधिस्साङ्गं प्रधानं विधत्ते—पूर्वापरसकलाङ्गकलापोपेताधानेनाग्निमुत्पादयेदिति। अङ्गानां प्रधानशेषत्वेन स्वातन्त्र्येण धर्मग्राहकत्वाभावात् प्रधानविधिनिबन्धन एव स्वरोऽङ्गेष्वप्यनुष्ठेयः। ततश्च प्रधानवेदस्वरस्योपांशुत्वस्य प्रधानधर्मत्वात् तद्बाधे प्रधानवैगुण्यम् अङ्गवेदस्वरस्योच्चैस्त्वस्य बाधे त्वङ्गवैगुण्यमिति वारवन्तीयस्योपांशुत्वमेव, प्रधानवैगुण्यादङ्गवैगुण्यस्य जघन्यत्वात्। अङ्गवैगुण्यं सह्यम्, प्रधानवैगुण्यन्त्वसह्यम्। अतो वारवन्तीयस्योपांशुत्वमेव।

अस्मिन्नधिकरणे गौणीवृत्तेः प्रसक्तिरेव न दृश्यते। कथमनेनाधिकरणेन तत्सिध्यधिकरणस्य गतार्थत्वशङ्केति न विद्मः।

**पृ० १३८ पं० ६ (खा) 'अत्राभिधेयसदृशे वृत्तिर्गौणत्वमध्यारोपितार्थत्वं वेति विचारस्तु वार्तिकादावनुसन्धेयः'।**

तत्सिद्धिपेटिकायां गौण्या वृत्तेर्निमित्तान्यभिधीयन्ते।

तत्र तत्सिध्यधिकरणे—

'अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते ।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता' ॥

इति कारिकया भट्टपादाः लक्षणाया गौणीवृत्तेश्च स्वरूपं प्रतिपादितवन्तः । अभिधेयेन—शक्येन, अविनाभूते–नान्तरीयकतया सम्बद्धे पदार्थे यस्या वृत्तेः प्रवृत्तिस्सा लक्षणेष्यते । 'गामानय' इत्यत्र गोशब्दोऽभिधया गोत्वमुपस्थापयन् तस्यानयनक्रिययान्वेतुमशक्यतया गोत्वाविनाभूते गोव्यक्तिपदार्थे लक्षणया प्रवृत्तो गोव्यक्तिमुपस्थापयति । एवं 'यष्टीः प्रवेशय' 'मञ्चाः क्रोशन्ति' इत्यादौ यष्टिसहचरितादिप्रत्ययः लक्षणया जायते । सेयमुपादानलक्षणेत्यालङ्कारिकाणां व्यवहारः, नैयायिकादीनाञ्चाजहल्लक्षणेति ।

लक्ष्यमाणगुणयोगेन या वृत्तिः प्रवर्तते सा गौणी वृत्तिः । यथा—'अग्निर्माणवकः' इति । अत्राग्निपदं स्वगतपैङ्गल्यादिगुणसदृशगुणबोधकम् , तादृशगुणवत्त्वं माणवके वर्तत इति अग्निमाणवकयोस्सामानाधिकरण्यम् । अग्निपदवाच्यग्नित्वाविनाभावेन माणवको न प्रतीयते, किन्तु अग्नित्वलक्षितात्पैङ्गल्यादेरर्थात् यत्पैङ्गल्यादि गम्यते, तेन माणवके सादृश्याद्बुद्धिरुपजायते । तदुक्तं भट्टपादैः—

'वन्हित्वलक्षितादर्थाद्यत्पैङ्गल्यादि गम्यते ।
तेन माणवके बुद्धिस्सादृश्यादुपजायते' ॥ इति ।

अग्निमाणवकयोस्सामानाधिकरण्याच्छब्दस्य परत्र तात्पर्यनिश्चये सति तन्निर्वाहाय शब्दस्य वृत्तिर्वक्तव्या । सा च न लक्षितलक्षणा सम्भवति । लक्षणायां हि मुख्यार्थसम्बन्धित्वरूपादरेण लक्ष्यार्थस्य प्रतीत्या भवितव्यम् । अग्निर्माणवकः सिंहो माणवकः इत्यादौ तु अग्निसम्बन्धित्वेन सिंहसम्बन्धित्वेन प्रतीतिर्न विवक्षिता, किन्तु अग्निगतपैङ्गल्यादितुल्यपैङ्गल्यादिसिंहगतक्रौर्यादितुल्यक्रौर्यादिगुणयोगित्वमात्रेण । एवञ्च माणवकस्य परम्परया तत्तत्सम्बन्धे विद्यमानेऽपि तद्रूपानादरेण गुणयोगमात्रस्य विवक्षितत्वात्तत्प्रतीत्यर्थं गौण्यात्मकं वृत्त्यन्तरं स्वीकर्तव्यम् । लक्षणाद्वारकत्वाल्लक्षितलक्षणेति ग्रन्थकाराणां व्यवहारः । वस्तुतस्तु गौणीवृत्तिर्लक्षणातो भिन्नैव । एवञ्च स्वार्थसदृशे तद्गुणशालिनि तात्पर्यं भजमानश्शब्दः गौण इति सिध्यति । केचनाध्यारोपितार्थकत्वं गौणत्वमाशेरते । अत एव—

'अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः ।
अभाललोचनश्शम्भुर्भगवान् बादरायणः' ॥

इत्यत्र बादरायणे ब्रह्मत्वाद्यारोप एव चतुर्वदनत्वादिप्रसिद्धब्रह्माद्यकैकगुणवैकल्यवर्णनं स्वरसं भवति । 'अयं हि धूर्जटिस्साक्षात्' इत्यादौ साक्षात्पदविशेषणं मुख्यधूर्जटित्वारोप एव समञ्जसं भवति । एवं 'मुखं चन्द्रः' इत्यादौ रूपकमिच्छतामालङ्कारिकाणामप्यारोपितार्थत्वमेव गौणत्वं सम्मतम् । तस्मादारोपितार्थत्वमेव गौणत्वमिति । एवं वेदे आरोपितार्थत्वस्वीकारे तस्याप्रामाण्यापत्तेः पक्षोऽयं मिमांसकैर्नेष्यते । अत एवोक्तं भट्टपादैः--

'यद्यध्यासेन वक्तॄणां गौणी वृत्तिः प्रकल्प्यते ।
वेदे सा न कथञ्चित्स्यादध्यारोपयितुर्विना' ॥ इति ।

**पृ० १४३ पं० ३ (ख) 'न चोपक्रमाधिकरणेऽर्थवादानुरोधेन ऋगादिशब्दस्य वेदपरत्वं वक्ष्यते तृतीयस्य तृतीये' ।**

## ( असञ्जातविरोधित्वन्यायः )

तृतीयतृतीयप्रथमाधिकरणे 'वेदो वा प्रायदर्शनात्' इति सूत्रेणेति शेषः। तत्र 'त्रयो वेदा अजायन्त, अग्नेः ऋग्वेदः, वायोर्यजुर्वेदः, आदित्यात्सामवेदः' इत्युपक्रम्य 'उच्चैः ऋचा क्रियते, उपांशु यजुषा, उच्चैस्साम्ना' इत्युपसंहृतं वाक्यमुदाहृत्य विचारः प्रवर्तितः । उपक्रमगतो भागोऽर्थवादः, उपसंहारगतश्च विधिः । अर्थवादे वेदशब्दः, विधौ च ऋगादिशब्दः । तत्रार्थवादस्य विध्यपेक्षया दुर्बलत्वात्तद्गतवेदशब्दानुसारेण प्रबलविधिगतऋगादिशब्दानां वेदपरत्वं नाङ्गीकर्तुमुचितमिति पूर्वपक्षे सति सिद्धान्तसूत्रमिदं 'वेदो वा प्रायदर्शनात्' इति । अर्थवादस्य दुर्बलत्वेऽपि असञ्जातविरोधित्वेन प्राबल्यमङ्गीकर्तव्यम् । अत उपक्रमगतवेदशब्दानुसारेणोपसंहारगतानामृगादिशब्दानामृग्वेदादिपरत्वमेवाङ्गीकर्तव्यम् । तन्न्यायेन प्रकृते 'अक्ताश्शर्करा उपदधाति, तेजो वै घृतम्' इत्यत्रापि 'तेजो वै घृतम्' इत्यर्थवादगतघृतशब्दबलेनाञ्जनं घृतेनैव क्रियतामिति सिद्धान्तिनश्शङ्कां पूर्वपक्षी 'न च' इत्यादिना निराकरोति । असञ्जातविरोधित्वेन तत्रोपक्रमगतोऽर्थवादः प्रबलो भवतु, किन्त्वत्रार्थवाद उपसंहारे श्रुतः, विधिस्तूपक्रमे । अतोऽसञ्जातविरोधित्वेन विधेः स्वतः प्रबलस्य दुर्बलार्थवादानुसारेणान्यथानयनं नोचितमिति पूर्वपक्षिण आशयः ।

**पृ० १४३ पं० ७ (ग) 'इति द्वादशिकाधिकरणे गुणानुरोधेन' ।**

## ( कांस्यभोजिन्यायः )

गुणानुरोधेन क्वचित्प्रधानस्यानुसरणं कर्तव्यं भवति । गुरुः प्रधानभूतः, शिष्यश्च गुणभूतः । शिष्येण गुरूच्छिष्टभोजनं कांस्यपात्रे च भोजनं व्रतं स्वीकृतम् । गुरोस्तु

भोजने पात्रनियमो नास्ति । कांस्ये राजते कदलीपत्रे पलाशपत्रे वा गुरुर्भोजनं कर्तुं शक्नोति किन्तु गुणभूतस्य शिष्यस्य व्रतपरिपालनाय शिष्यमनुसरन् गुरुः कांस्यपात्रमेव भोजने स्वीकरोति । अयं कांस्यभोजिन्यायः द्वादशद्वितीयचतुर्दशाधिकरणसिद्धः । तत्रेदं सूत्रम्— 'अधिकश्च गुणस्साधारणेऽविरोधात्कांस्यभोजिवदमुख्येऽपि' इति । अत्राग्रयणेष्टिगतानि— ऐन्द्राग्नवैश्वदेवद्यावापृथिव्यानि हवींष्युदाहृत्य विचारः कृतः । नवान्नयाग आग्रयणेष्टिः । यवाग्रयणं व्रीह्याग्रयणमित्याद्यस्ति तत्र प्रविभागः । आग्रयणेष्टौ ऐन्द्राग्नः पुरोडाशः, वैश्वदेवश्चरुः, द्यावापृथिव्य एककपालः पुरोडाश इति सन्ति त्रीणि हवींषि । तत्रैन्द्राग्नवैश्वदेवहविषी दर्शविकृतिभूते, द्यावापृथिव्य एककपालस्तु चातुर्मास्येषु वैश्वदेवपर्वान्तर्गतद्यावापृथिव्यैककपालविकृतिः । चातुर्मास्येषु 'कुशप्रस्वः प्रस्तरः' ( का० श्रौ० सू० ५.२.२० ) इति प्रस्तरविशेषो विहितः । प्रसूः पुष्पम् , तद्वन्तः कुशाः कुशप्रस्वः । पुष्पिताः कुशा इत्यर्थः । तानेव प्रस्तरं कुर्यात् । प्रस्तरो नाम प्रथमो लूनो दर्भमुष्टिः । पुष्पितानां कुशानां प्रथमो लूनो दर्भमुष्टिः प्रस्तर इति यावत् । स चात्राग्रयणद्यावापृथिव्ययागे चोदकेन प्राप्तः । ऐन्द्राग्ने वैश्वदेवे च दर्शविकृतौ प्रसूनमप्रसूनं वा बर्हिरित्यत्रानियमः । आग्रयणे त्रयाणामपि यागानां समानतन्त्रतयानुष्ठाने किमनियमतया बर्हिरुपादेयम् ? उत प्रसूनं बर्हिरेवोपादेयम् ? इति सन्देहेऽनियम इति पूर्वपक्षः । सिद्धान्तस्तु प्रसूनं बर्हिरेवेति नियम इति । यागस्य बर्हिरङ्गम् । तच्च प्रसूनोपादाने न कश्चन विरोधः । अनियमपक्षे तु द्यावापृथिव्यस्य वैगुण्यमापद्यते । अतस्समानतन्त्रेऽवैगुण्यसम्पादनाय गुणभूतप्रसूनानुसारेण मुख्यैन्द्राग्नवैश्वदेवयागगतानियमं परित्यज्य प्रसूनबर्हिष एवोपादानं कर्तव्यम् कांस्यभोजिवत् । अनेन न्यायेन प्रकृतेऽपि गुणभूतार्थवादानुसारेण 'अक्ताश्शर्करा उपदधाति' इति विधेर्मुख्यस्य नयनमस्त्वति शङ्कितुराशयः ।

**पृ० १४३ पृ० १४ (घा) 'विधेरेव द्वे शक्ती कल्पयिष्याम इति न्यायेन'**

सार्थवादो विधिः तद्रहितश्च विधिरिति द्वेधा विधिवाक्यान्युपलभ्यन्ते । तत्रार्थवादसहितेषु विधिषु इतिकर्तव्यताकाङ्क्षापूरणायार्थवादा अन्वियन्ति । तद्रहितेषु तु विधिषु विधेरेव प्रवर्तकत्वं प्ररोचकत्वञ्चेति शक्तिद्वयमङ्गीक्रियते । तत्र 'विधेरेव द्वे शक्ती कल्पयिष्यामः' इति न्यायः प्रवर्तते । अनेन न्यायेन 'अक्ताः शर्करा उपदधाति' इति विधेरपि तादृशशक्तिद्वयसत्त्वात् विधितस्सामान्याञ्जनसाधनस्याक्षेपोपपत्तेरर्थवादसमर्पितविशेषस्य घृतस्योपादानं किमर्थमिति पूर्वपक्षिण आशयः ।

**पृ० १४३ पं० २५ (ङा) 'विध्यनुसारेण छत्रिन्यायेन' (छत्रिन्यायः)**

तत्सिद्धिपेटिकातस्सिद्धोऽयं न्यायः। छत्रिष्वच्छत्रिषु च गच्छत्सु छत्रिणो गच्छन्तीति लोकाः प्रयुञ्जते। तथैव वेदेऽपि 'प्राणभृत उपदधाति' इत्यत्र प्राणभृच्छब्दः प्राणभृदप्राणभृत्सु प्रयुज्यते। अनेन न्यायेन 'तेजो वै घृतम्' इत्यर्थवादगतघृतशब्दोऽपि घृताघृतबोधक इति विध्यनुसारेण घृततैलवसाद्यन्यतमेनाञ्जनं प्रत्येतव्यमिति पूर्वपक्षिण आशयः।

**पृ० १५० पं० २५ (चा) 'अव्यक्तासु तु सोमस्येति न्यायात्'**

अष्टमप्रथमनवमाधिकरणसूत्रमिदम्। ये यागास्स्वोत्पत्तिवाक्येऽविहितदेवताकास्तेऽव्यक्ताः कथ्यन्ते। अव्यक्तानां यागानां 'सोमेन यजेत' इति विहितो यागः प्रकृतिः। सोमयागानामुत्पत्तिवाक्येषु क्वापि देवताबोधकं पदं नैव भवति। एवं तत्र तद्बोधकपदाभावेऽपि सोमरसग्रहणार्थं या देवताः तत्र तत्र वाक्येषु क्लृप्ताः तासामेव प्रसङ्गादुपकारकत्वं स्वीक्रियते। अतोऽव्यक्तत्वसामान्येनाहीनद्वादशाहोद्भिदादीनां तद्विकृतित्वमित्युद्भिद्यागस्सोमेन यष्टव्य इति प्रयोजनं सिध्यति सिद्धान्ते।

**पृ० १५१. पं० १ (छा) 'प्रतिनिधिपेटिकायां वक्ष्यमाणत्वात्'**

षष्ठाध्यायस्य तृतीयपादे पञ्चमाधिकरणेऽदृष्टार्थानां प्रतिनिध्यभावः प्रतिपादितः— 'न देवताग्निशब्दक्रियमन्यार्थसंयोगात्' ( जै० सू० ६.३.१८ ) इति। अत्र देवता इन्द्रादयः, अग्नय आहवनीयादयः, शब्दक्रिया मन्त्रोच्चारणम्, एतानि न प्रतिनिधिमर्हन्ति, अन्यार्थसंयोगात्–अन्यस्य प्रतिनिधित्वाभावसाधकस्यैवार्थस्यादृष्टरूपस्य संयोगात्। अदृष्टार्थत्वादित्यर्थः। यद्यप्यत्र द्रव्यस्य न ग्रहणमस्ति, तथापि पूर्वपक्षी सोमस्य द्रव्यस्याप्यपूर्वार्थत्वमङ्गीकरोति। अतः पूर्वपक्षे देवतादीनां यथा प्रतिनिध्यभावः, तथा सोमस्यापि न प्रतिनिधिरित्यभिप्रायः।

**पृ० १५१. पं० २० (जा) 'इति न्यायात्'।**

भावार्थाधिकरणवार्तिकमिदम्—'नित्यं न भवनम्' इति।

अकर्मकास्सकर्मकाश्च धातवो द्विविधाः। येभ्यो धातुभ्यः परा श्रूयमाणा तिङ्विभक्तिः कर्तृसरूपलाभार्थमेव व्यापारं प्रतिपादयति तेऽकर्मका धातवः—अस्ति भवति विद्यतिप्रभृतयः। येभ्यश्च परा श्रूयमाणा तिङ्विभक्तिः सिद्धे कर्तरि अन्यस्वरूपलाभविषयं व्यापारं प्रतिपादयति, ते सकर्मकाः—यजति ददाति पचतीत्यादयः। सकर्मकेषु करोतिरपि सन्निविष्टः। किन्तु करोतिः व्यापारस्य सामान्यावस्थां बोधयति, यजतिददात्यादयश्च विशेषावस्थाम्।

देवदत्तः किं करोति इति प्रश्ने पठति ददातीत्येव प्रयोगः, न तु भवत्यस्तीति । तस्माल्लब्धात्मककर्तृव्यापारवचनानि करोत्यर्थवन्त्याख्यातानि—पचति पाकं करोति, गच्छति गमनं करोतीति । करोतिश्च नित्यं सकर्मकः । किञ्चित्क्रियमाणं यावन्न लभ्यते न तावत्तस्यार्थः पर्यवस्येत् । सर्वेषां कारकाणामवान्तरक्रियासु कर्तृत्वं प्रतिपद्यमानानामेव प्रधानक्रियासु कर्मादिविभागो जायते । तत्र भवतिक्रियाया यः कर्ता 'घटो भवति' इत्यादौ स एव करोतेः कर्म भवति 'घटं करोति' इति । तदिदमुक्तम्—

नित्यं न भवनं यस्य यस्य वा नित्यभूतता ।
न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव' ।। इति ।

खपुष्पकाशौ कुर्वन्न कश्चिदुपलभ्यते । अतस्तयोर्न नित्यं भवनम्, नापि तयोर्नित्यभूततेति न तयोः क्रियमाणत्वम् । करोतेस्तु नित्यं भवनमस्ति । अतः यजति-यागं करोति, ददाति-दानं करोति इत्यादौ किञ्चिदनुत्पन्नस्योत्पादनरूपं सामान्यमस्तीति उत्पद्यमानस्य वस्तुन उत्पत्त्यनुकूल उत्पादककर्तृव्यापारः करोतेरर्थ इति सिध्यति । स एव कर्तृव्यापारो भावनापदाभिधेय इति ।

पृ० १५३. पं० १६ (आ) 'सविशेषणे हि इति न्यायेन'

'सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामतः' इति न्यायाकारः । द्वैधीभावजनकोद्यमने कुठारः करणश्चेत् उद्यमनविशेषणे द्वैधीभावेऽपि करणं कुठार इति ।

पृ० १५४. पं० १० (आ) 'तृतीयस्य तृतीये प्रकरणाधिकरणे'

तृतीयाध्यायस्य तृतीयपादे चतुर्थाधिकरणे प्रकरणविषये पार्थसारथ्यभिमतं प्रतिपाद्य समालोचितम् । भावनायाः करणाकाङ्क्षायां धात्वर्थः, इतिकर्तव्यताकाङ्क्षायां करणानुग्राहकाणि प्रयाजादीन्यङ्गानि चान्वियन्ति । करणभूतो यागादिर्धात्वर्थः स्वस्य फलजननशक्त्याधायकसामग्रीमपेक्षते, प्रयाजादीन्यङ्गानि च साध्यमपेक्षन्ते । साध्यञ्च तेषां यागानुग्रहरूपम् । तदेवं दर्शपूर्णमासवाक्यस्य प्रयाजादिवाक्यानाञ्च परस्पराभिसम्बन्धः । तदिदं परस्पराकाङ्क्षारूपमेव प्रकरणं कथ्यते । प्रकरणञ्चेतिकर्तव्यतार्थि भवति । अग्नेर्दाहजनकताशक्तौ स्वतस्सिद्धायामपि दाहजननाय शक्त्याधायकसामग्रीसापेक्षोऽग्निर्यथा, तथैव यागादेः कर्मणः फलजननशक्तौ सत्यामपि तज्जननशक्त्याधायकसामग्रीसापेक्षं कर्म भवति । अग्निनिष्ठायाः कर्मनिष्ठाया वा शक्तेर्नोत्पादकसामग्रीसापेक्षता, मीमांसकनये शक्तेरनादित्वात् । अतोऽनुग्रहाकाङ्क्षैव कर्मणः, तदनुग्रह एव प्रयाजादिभिस्साध्यते । करणगतशक्त्याधायकत्वमेव प्रयाजादीनामितिकर्तव्यतात्वम् । अत एव प्रयाजादीनां न स्वतन्त्रफलार्थत्वम्, नापि दर्शपूर्णमासवाक्यगतस्वर्गफलार्थत्वम्, फलस्य तत्र शान्ताकाङ्क्षत्वात् प्रयाजादिभिस्सम्बन्धा-

नुपपत्तेः। एवञ्च प्रयाजादिभिरनुगृहीताभ्यां दर्शपूर्णमासाभ्यां स्वर्गं भावयेदित्येकवाक्यतेति स्थितिः। अत्र पार्थसारथिमिश्रोऽन्यथैव मतमाविष्करोति। तथाहि—'यजेत' इत्यादावाख्यातेन आर्थीभावनाभिधीयते, सा सामान्यव्यापाररूपा। तद्विशेषाश्च व्यापाराः प्रयाजादिदिवाक्यैरभिधीयन्ते। अधिश्रयणप्रभृत्यवस्रावणान्तो व्यापारस्सामान्यरूपेण 'पचति' इत्याख्यातेनाभिधीयते। स एव सामान्यव्यापार आर्थीभावना। फूत्कारदर्वीचालनादयस्तु व्यापारा विशेषाः, ते च 'फूत्करोति' 'दर्व्या चालयति' इत्यादिवाक्यैरभिधीयन्ते, तथैव 'यजेत' 'जुहुयात्' 'दद्यात्' इत्यादावपि। भावनायाः कथम्भावाकाङ्क्षायां प्रयाजादीनि विशेषणतया सम्बध्यन्ते। तथा च प्रयाद्यङ्गविशिष्टाभ्यां दर्शपूर्णमासाभ्यां स्वर्गं भावयेदिति स्वर्गभावना प्रयाजादिरूपा भवति, न तु प्रधानकर्मणो दर्शपूर्णमासादेः अङ्गकर्मणां प्रयाजादीनाञ्चानुग्राह्यानुग्राहकरूपस्सम्बन्धः, अननु[illegible]तस्यापि कर्मणः संयोगारम्भकत्वदर्शनात्। अतश्च सामान्यव्यापाररूपाया आर्थीभावनायाः, विशेषव्यापाररूपाणाञ्च प्रयाजादीनां यस्सम्बन्धः स एव प्रकरणपदवाच्य इति। प्रयाजादिरूपायामार्थीभावनायां सत्यां तत्र धात्वर्थस्य यागादेः कथं करणत्वेनान्वयो भवेत्? यदि यागादेः करणत्वम् तर्हि तस्य साधकतमत्वरूपत्वात् प्रयाजादिव्यापारो यागादिजन्यस्स्यात्। न हि यागादिजन्यः प्रयाजादिव्यापारो भवितुमर्हति। किञ्च यागकरणिका प्रयाजादिरूपा स्वर्गभावनेति यागादेः करणस्य प्रयाजादिव्यापारस्य परस्परासम्बद्धस्य भावनायामन्वये सति यागवत्प्रयाजादिव्यापारस्यापि प्राधान्यापत्तिः। अतः करणानुग्राहकत्वेनैव प्रयाजादीनामन्वयो वक्तव्यः। यदि च प्रयाजादीनां करणानुग्राहकत्वं न तर्हि प्रयाजादीनामभेदेन भावनाविशेषकत्वं सिध्येत्। एवञ्च करणभूतयागस्यानुग्रहाकाङ्क्षाम् प्रयाजाद्यतिरिक्तां फलभावनाञ्चाख्यातवाच्यामङ्गीकृत्य तस्यां यागानुग्रहमुखेन प्रयाजादिव्यापारस्य भेदेनैवान्वयोऽभ्युपगन्तव्य इति।

पृ० १५५, पं० १४ (टा) 'सकृत्तु स्यात्कृतार्थत्वात्' इति गुणसूत्र उद्भाव्य निराकरिष्यते'

एकादशस्य प्रथमपादे तृतीयाधिकरणे काम्यकर्मणां सकृदेवानुष्ठानम्? उत फलभूयस्त्वमिच्छतामसकृदप्यनुष्ठानम्? इति सन्दिह्य 'सकृत्तु स्यात्कृतार्थत्वादङ्गवत्' इति गुणसूत्रेण सकृदेवानुष्ठानमिति पूर्वपक्षः, 'अपि वा सम्प्रयोगे यथाकामी प्रतीयेताश्रुतित्वाद्विधिषु वचनानि स्युः' इति सूत्रेण फलभूयस्त्वायासकृदनुष्ठानमिति सिद्धान्तः कृतः। अयमत्र पूर्वपक्षिणोऽभिप्रायः—स्वर्गयागयोस्साध्यसाधनभावः श्रुत्या बोध्यते। यागादिकं कर्म विनश्वरं

कालान्तरभाविफलजननेऽसमर्थमिति साध्यसाधनभावोपपत्तये किञ्चित्कल्पनीयम्। तत्र किं फलजनकत्वादिधर्मकमपूर्वं कल्प्यताम् ? उत कृतयागस्यात्मन एव फलजनकत्वं कल्प्यताम् ? इति विचारे कृतयागस्यात्मन एव तत्कल्पनमुचितम्, लाधवात्। अपूर्वकल्पने फलोत्पत्त्यनन्तरं तस्य ध्वंसः कल्पनीयः, अन्यथा फलस्यानुभवेन तन्नाशे जातेऽपूर्वस्य सत्त्वात्पुनः फलोत्पत्तिः, तद्वारणाय फलध्वंसस्य प्रतिबन्धकत्वमेष्टव्यम्। तथा च कर्मजन्यत्वेनादृष्टापूर्वकल्पने तस्य फलहेतुत्वं, स्थायित्वम्, अस्थायित्वे च प्रतिवध्यप्रतिबन्धकभावादिकल्पनमित्यतिगौरवं स्यात्। कृतयागस्यात्मनः फलजनकत्वे स्वीक्रियमाणे आत्मनो नित्यत्वेन न तत्र कस्यचन कल्पनम्, नापि तद्ध्वंसः, न चापि प्रतिवध्यप्रतिबन्धकभावकल्पनेति लाधवम्। अतस्सकृदनुष्ठितयागस्य पुरुषस्य फलोत्पत्तिरिति सकृदेवानुष्ठेयानि काम्यकर्माणि। यद्यपि कृतयागस्यात्मनो नित्यत्वेन फलानुभवानन्तरं पुनः फलोत्परिति शङ्काया अवसरोऽस्त्येव, तथापि सकृत्कृतयागस्य यावती कृतयागता तावत्येव पुनः प्रयुञ्जानस्येति न कश्चिदतिशय इति कल्पनान्न दोष इति। सिद्धान्तिनोऽयमभिप्रायः—कृतयागस्य पुरुषस्य फलजनकत्वस्वीकारेऽपि फलध्वंसस्य स्थास्यतः कस्यचिदतिशयस्यावश्यकत्वमस्त्येव। अन्यथा पुनः फलोत्पत्तिर्दुर्वारा। कृतयागत्वन्तूपलक्षणं वक्तव्यम्, तच्च न सम्भवति, यागात्प्राचीनावस्थाव्यावृत्तस्योपलक्ष्यतावच्छेदकस्याभावात्। आत्मत्वस्यैवोपलक्ष्यतावच्छेदकत्वे त्वकर्तुरपि फलं स्यात्। अतोऽवश्यकल्पनीयापूर्वद्वारैव श्रुतस्य यागस्य फलजनकत्वमाश्रयणीयम्, न त्वश्रुतस्य कृतयागस्य पुरुषस्य। कृतयागस्यात्मनः फलजनकत्वमङ्गीकृत्यापि अतिशयकल्पनं पूर्वपक्षिणो दुर्वारमेव। स एवातिशयस्सिद्धान्तिनापूर्वमित्युच्यते। स च फलान्तरार्थं पुनः प्रयोगे सति कल्प्यत इति फलभूयस्त्वायासकृदनुष्ठानं कर्मणामिति।

**पृ० १५६ पं० १२. ( टा ) 'फलवाक्ये एकशब्दोपात्तानां प्रधानानामेकफलसाधनत्वस्यैकादशाद्याधिकरणे व्यवस्थापयिष्यमाणत्वात्'।**

यस्मिन् यागे बहूनि-प्रधानानि फलञ्चैकम् तत्र किमेकैकं प्रधानं फलजनकम् ? उत संहृत्य प्रधानान्येकं फलं जनयन्ति ? इति विचारः एकादशाद्याधिकरणे प्रवर्तितः। तत्र पूर्वपक्षी—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र दर्शपूर्णमासपदवाच्यानि परस्परासंहृतानि कर्माण्युद्दिश्य फलं चोद्यत इति मन्वानः प्रतिप्रधानं फलमवधारयति। दर्शपूर्णमासपदेन यद्यपि कर्मणां समुदायद्वयं बोध्यते। तेन च कर्मणां साहित्यमवगम्यते, तथापि कर्मणामुद्देश्यत्वात्तद्गतसाहित्यस्याविवक्षितत्वात्प्रतिप्रधानं फलं भिन्नमेवेति पूर्वपक्षः। सिद्धान्तस्तु—

न कर्माण्युद्दिश्य फलं चोद्यते, किन्तु फलकामिनमुद्दिश्य कर्माणि विधीयन्ते। अतश्चोपादेयत्वात्कर्मणां तद्गतं साहित्यं विवक्षणीयमेव। तस्मादेकशब्दोपात्तानां प्रधानानामेकफलसाधनत्वमेवेति।

**पृ० १५६ पं० १९ ( ठा ) 'सर्वे द्रव्यविधयो नियमविधयः इति चातुर्थिकन्यायेन'।**

'व्रीहिभिर्यजेत' 'यवैर्यजेत' इत्यादिवाक्यैस्तत्तद्यागाद्युद्देशेन द्रव्याणि विधीयन्ते। विना द्रव्यदेवताभ्यां यागाद्यनुष्ठानासम्भवात् द्रव्यस्य देवतायाश्चापेक्षायामिमानि वाक्यानि द्रव्याणि विदधति। तत्र यागविध्यन्यथानुपपत्त्यैव यत्किञ्चिद्द्रव्यं तत्साधनत्वेन-प्राप्नोत्येव, तत्र व्रीह्यादिविधीनामानर्थक्यं-प्रसज्यते। आनर्थक्यं परिहर्तुमयं न्यायः—'सर्वे द्रव्यविधयो नियमविधयः' इति। नियमे समाश्रीयमाणेऽनियमेन प्राप्तद्रव्याणां व्यवस्थावकल्पते। तत्र यागादिनिर्वर्तकत्वरूपदृष्टफले विद्यमानेऽपि नियमजन्यमदृष्टं तत्र समाश्रीयते विहितव्रीह्यादिभिः क्रियमाणैर्यागादिभिरेवापूर्वं निष्पद्यत इति। सोऽयं न्यायः चतुर्थद्वितीयनवमाधिकरणसिद्धः।

**पृ० १६७ पं० २१ ( डा ) 'इत्यत्र दशमे वक्ष्यते। तन्न्यायेन'**

दशमचतुर्थचतुर्दशाधिकरणे 'यदाग्नेयः' इत्यादिविधिगताग्न्यादिशब्दस्य 'अग्निमग्न आवह' 'स्वाहाग्निम्' इत्यादिनिगदेषु नियमो वर्तते न वेति विचारः प्रवर्तितः। नियमो नास्तीति पूर्वपक्षः, अस्तीति च सिद्धान्तः। तत्रार्थस्य देवतात्वे शुचिपावकादिशब्देषु विनिगमकाभावेन यस्य कस्यचित्पर्यायवाचिनश्शब्दस्य निगदेषु निवेशः। शब्दस्य देवतात्वेऽपि निगदेषु पठितानामग्न्यादिशब्दानां पाक्षिकानुवादत्वान्न विधिगतशब्दस्य नियम इति पूर्वपक्षिण आशयः। 'आग्नेयः' इति तद्धितान्तश्शब्दोऽग्निदेवताकं हविरिति बोधयति। देवतात्वञ्च त्यज्यमानहविरुद्देश्यत्वम्। अग्न्यादेर्हविरुद्देश्यत्वञ्च 'अग्नय इदं न मम' इति चतुर्थ्यन्तशब्दोच्चारणविषयत्वम्। तथा च हविस्त्यागकालिकचतुर्थ्यन्तशब्दोच्चारणविषयत्वमेव देवतात्वमिति सम्पन्नम्। एतेन 'आग्नेय' इत्यादौ 'अग्न्यादिदेवतामुद्दिश्य हविः त्यजेत्' 'अग्न्यादिशब्दमुच्चार्य हविस्त्यजेत्' इत्यर्थद्वयं निष्पद्यते। तत्र प्रथमोऽर्थः श्रौतः द्वितीयश्चार्थिकः। श्रौतस्यार्थस्य विधेयत्वेऽपि शब्दोच्चारणस्य पश्चाद्विधेयत्वमावश्यकत्वादङ्गीकर्तव्यम्, तेन विना देवतात्वानिर्वाहात्। तथा सत्यावश्यकत्वादग्निशब्दमुच्चार्य हविस्त्यजेदित्येवमार्थिकार्थशब्दोच्चारणमेव विधीयते। अस्मिश्च पक्षेऽर्थस्य देवतात्वं प्राप्तमेवाग्नेय इत्यनेनानूद्यते। अतश्च फलचमसन्यायेन श्रौतार्थिकार्थयोर्विधानप्रयुक्तं गौरवं नाश्रितं भवति। यथा—'यदि राजन्यस्सोमं बिभक्षयिषेत् न्यग्रोधस्तिभिनीराहृत्य तास्सम्पिष्य तमस्मै भक्षं प्रयच्छेत्' इत्यत्र श्रौतस्यापि भक्षणस्य न विधिः, यागेन विना भक्षणस्याप्रसक्तेः। आर्थिके यागे विधीय-

माने श्रौतस्यापि भक्षणस्य प्राप्तत्वादनुवादः । एवञ्च 'यदाग्नेयः' इत्यादौ देवतात्वं विदधच्छब्दः पुरुषव्यापाररूपं शब्दोच्चारणमपेक्षत इति तद्दशायामुपस्थितमग्निपदमेव स्वीकरोति न पर्यायमिति विधिगतशब्दस्य नियम इति सिद्धान्तिन आशयः । अयमत्र निष्कर्षः—

शब्दस्य देवतात्वम् अर्थस्य देवतात्वमिति च मीमांसकेषु मतद्वयम् । अग्निशब्दस्य लोकतोऽर्थावगमेऽपीन्द्रादिशब्दानां लोकतस्तदर्थानवगमेनार्थस्य देवतात्वासम्भवाच्छब्द एव देवतेति तेषामाशयः । इन्द्रादिशब्दानां लोकतोऽर्थानवगमेऽपि 'तृप्त एव एनमिन्द्रः' 'वज्रहस्तः पुरन्दरः' इत्यादिवाक्यैरर्थवत्त्वावगमात्, असत्यर्थवत्त्वे गामुच्चारयेदित्यादिवल्लक्षणयाऽऽनुपूर्वीपरत्वानुपपत्तेश्च न शब्दमात्रं देवता, किन्त्वर्थ एवेति द्वितीयमतस्य तात्पर्यम् । पक्षद्वयेऽपि विधिगतशब्दस्य नियमस्तुल्यः इति । अनेन न्यायेन प्रकृते इन्द्र महेन्द्रयोरर्थतोऽभिन्नत्वेऽपि निगदेषु इन्द्र इन्द्रशब्देनैव, महेन्द्रो महेन्द्रशब्देनैवेति नियमस्स्वीकर्तव्यः । एवञ्चेन्द्रस्तुल्या महेन्द्रस्य संस्कारासम्भवादुत्कर्षस्स्यादेवेति सिध्यति ।

**पृ० १८६ पं० १८ ( जा ) 'अरुणिमादिकारकभेदेऽपि क्रयभावनाया एकत्वात्' ।**

'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इत्यत्राख्यातोपात्तभावनायामारुण्यादीनां प्रत्येकं करणत्वेनान्वयेऽपि यथा न भावनाया भेदस्तथा 'सोमेन यजेत' 'दाक्षिणानि जुहोति' 'हिरण्यमात्रेयाय ददाति' इत्यादौ धात्वर्थानां यागहोमदानानां भिन्नानां करणत्वेनान्वयेऽपि न भावनाभेद इति पूर्वपक्ष्याशयः ।

**पृ० १९४ पं० १२ ( झा ) 'वक्ष्यमाणन्यायेन सङ्ख्यया कर्मभेदस्य निश्चितत्वात्' ।**

सङ्ख्याधिकरण ( पू० मी० २।२।७ ) न्यायेन 'तिस्र आहुतीर्जुहोति' 'प्राजापत्यान् पशूनालभते' इत्यादौ त्रित्वसङ्ख्यया बहुत्वसङ्ख्यया च कर्मभेदो यथा साधितः, तथा 'प्रयाजैर्यजते' 'पञ्च भवन्ति' इति संख्यया प्रयाजानां कर्मभेदसिद्धौ तनूनपादादिवाक्यानां पूर्वपक्षेऽर्थवादत्वम्, सिद्धान्ते च नामधेयत्वमनुपपन्नम् । अतः 'वाजप्रसवीयं जुहोति' 'राष्ट्रभृतो जुहोति' 'वातनामानि जुहोति' इत्युदाहृत्याधिकरणं प्रवर्तयितव्यमिति ।

**पृ० २०३ पं० १६ ( ञा ) 'तत्रोपपदस्य प्रसिद्धत्वात्तदनुसारेण कांस्यभोजिन्यायेन काल संयुक्तेष्वेव यजिप्रवृत्तेः' ।**

नामधेयेषु कानिचनाख्यातपरतन्त्राणि, कानिचन स्वतन्त्राणि च भवन्ति । तत्र 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इयत्र दर्शपूर्णमासपदं कालसंयुक्तेषु यागेषु प्रसिद्धं स्वतन्त्रम् । 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यत्र राजसूयपदमप्रसिद्धत्वादाख्यात-

परतन्त्रं सत् प्रकरणाधीतेषु सर्वेष्विष्टिपशुसोमेषु वर्तत इति स्थितिः। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यधिकारवाक्ये 'दर्शपूर्णमासाभ्याम्' इति द्वित्वस्योपपत्तिः 'य एवं विद्वान् पौर्णमासीं यजते' इति विद्वद्वाक्याधीना। अत्र 'अमावास्यां' 'पौर्णमासीं' इत्येकवचनान्तं पदद्वयं तत्तत्कालसंयुक्तानां त्रयाणां त्रयाणां प्रधानयागानां समुदायस्यानुवादकमिति समुदायद्वयाभिप्रायेण 'दर्शपूर्णमासाभ्याम्' इति द्वित्वस्योपपत्तिः, तेन च षण्णां प्रधानानामाग्नेयादीनां फलसम्बन्धसिद्धिः। ननु फलसम्बन्धबोधकत्वेन दर्शपूर्णमासवाक्यस्य प्राबल्यात्, विद्वद्वाक्ययोस्समुदायानुवादकत्वेन दौर्बल्यात् दुर्बलविद्वद्वाक्यानुसारेण प्रबलदर्शपूर्णमासवाक्ये दर्शपूर्णमासपदस्य प्रसिद्धत्वं कथमिति चेदत्रैव कांस्यभोजिन्यायः। न्यायस्यास्य विवरणं पूर्वमकरवम्। अनुवादकत्वेन दुर्बलयोरपि विद्वद्वाक्ययोः 'पौर्णमासीम्' 'अमावास्याम्' इति नामपदद्वयम् 'य एवं विद्वान् पौर्णमासीं यजते यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति' 'य एवं विद्वानमावास्यां यजते यावदतिरात्रेणोपाप्नोति तावदुपाप्नोति' इति व्यवस्थितफलार्थवादानुसारेण तत्तत्कालयोगिष्वेवाग्नेयादिषु षट्सु कर्मसु प्रवृत्तं सत् 'यजते' इति यजिं तत्तत्समुदायानुवादकत्वेन नियमयति। तस्मात्प्रबलाधिकारवाक्यगतमपि दर्शपूर्णमासपदं दुर्बलमपि विद्वद्वाक्यमनुसरत् समुदायद्वयबोधकम्। तेन च द्वित्वस्योपपत्तिः।

**पृ० २०३ पं० २८ ( टा ) 'यथा चैतत्तथा चतुर्थे वक्ष्यामः'**

अधिकारवाक्ये दर्शपूर्णमासशब्दः, विद्वद्वाक्ये चामावास्यापौर्णमासीशब्दौ। विद्वद्वाक्यगतशब्दौ षण्णामाग्नेयादियागानां त्रिकद्वयानुवादकौ भवेताम्, किन्तु दर्शपूर्णमासपदयोस्समुदायद्वयानुवादकत्वं कथं सम्भवेत्? दर्शत्वेनामावास्यात्वेन शब्दभेदसत्त्वात् इति शङ्का चतुर्थचतुर्थपादे एकादशाधिकरणे समाहिता। 'दर्शो ह वा एतयोः पूर्वः पूर्णमास उत्तरः' इत्यादिश्रुतितः दर्शामावास्याशब्दयोः पर्यायत्वेनैकार्थ्यात् न कोऽपि दोष इति।

**पृ० २०४ पं० ६ (ठा) 'यथा चैतत्तथा एकादशस्य द्वितीयाद्याधिकरणे वक्ष्यामः'।**

'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते' इति विद्वद्वाक्यद्वयं कालसंयुक्तानां षण्णामाग्नेयादीनां यागानां समुदायद्वयमनुवदत् एकस्यामेव पौर्णमास्यामाग्नेयोपांशुयाजाग्नीषोमीयाणां त्रिकम् एकस्यामेवामावास्यायामाग्नेयसन्नाय्ययागनां त्रिकमनुष्ठेयमित्यपि बोधयति। एतेन त्रिकस्य त्रिकस्य सहप्रयोगः 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत' इति वाक्यविहितेष्टिपशुसोमानां तु न सहप्रयोगः, तत्र फलबोधकपदाभावात्, फलार्थत्वेनैव प्रधानानां सहभावावश्यकत्वात्। दर्शपूर्ण-

मासवाक्ये तु 'स्वर्गकामः' इति फलश्रवणात्, तदुद्देशेन कर्मणां विहितत्वात् फलार्थिनो युगपत्कर्तव्यतां प्रधानानामवगमयन्ति। यस्यां बुद्धावाग्नेयः कर्तव्यत्वेनोपतिष्ठते तस्यामेवाग्नीषोमीयादयोऽप्युपतिष्ठन्ते, प्रयोगविध्येकवाक्यत्वात्। तेन सर्वेषु कर्तव्यतयोपस्थितेषु यागेषु पौर्णमासीकालः अमावास्याकालो वा विधीयत इति एकैव पौर्णमासी आमावास्या वा सर्वार्था भवति। अतः कालस्य तन्त्रत्वमिति।

पृ० २०६ पं० ४ (डा) 'गुणानाञ्च परार्थत्वादिति न्यायेन तेषां परस्परवैशिष्ट्याभावात्'।

'गुणानाञ्च परार्थत्वादसम्बन्धस्समत्वात्स्यात्' इति समग्रं सूत्रम्। तृतीयप्रथमैकादशे उपवीताधिकरणे गुणसूत्रतया सूत्रमिदं व्याख्यातं वार्तिकमतानुसारेण। भाष्यकारमतेन चाधिकरणान्तरपरमिदं सूत्रम्। भाष्यकारमतेन च द्वादशं वारणाधिकरणम्। तत्रोपवीताधिकरणे 'उपव्ययते देवलक्ष्ममेव तत्कुरुते' इति विहितमुपवीतं किं सामिधेन्यङ्गमुत दर्शपूर्णमासाङ्गमिति सन्देहे 'सन्दिग्धे तु व्यवायाद्वाक्यभेदस्स्यात्' इति सूत्रेण निविन्मन्त्रैर्व्यवायाद्-व्यवधानात् वाक्यभेदस्स्यात्-'उपव्ययते' इति विहिते उपवीते 'सामिधेनीरन्वाह' इति वाक्यतो भेदः–सामिधेनीप्रकरणाद्विच्छेदस्स्यादिति सिद्धान्तयित्वा तद्गुणसूत्रतया 'गुणानाञ्च' इति सूत्रं व्याख्यातम्। सामिधेनीनामुपवीतस्य च गुणयोः परार्थत्वाद्-दर्शपूर्णमासार्थत्वात् मिथोऽसम्बन्धः–अङ्गाङ्गिभावाभावः। अत उपवीतं न सामिधेन्यङ्गम्, किन्तु दर्शपूर्णमासाङ्गमेवेति। अनेन न्यायेन विद्वद्वाक्यविहितकर्मानुवादेन 'यदाग्नेयोऽष्टाकपालः' इत्यादिवाक्यैरग्न्यादिगुणविधानं न सम्भवति, विधेयानां देवताद्रव्याष्टत्वसंख्याकालानामनेकत्वात् प्राप्तकर्मोद्देशेनानेकविधाने वाक्यभेदापत्तेः। अतो गुणानां विशेष्यविशेषणभावमङ्गीकृत्य विधानमिति वक्तव्यम्। तच्च न सम्भवति, गुणानां द्रव्यदेवतादीनां परार्थत्वेन मिथो विशेष्यविशेषणभावानुपपत्तेरिति।

पृ० २०५. पं० ९ (ढा) 'कारकप्राधान्यं पश्वेकत्वाधिकरणे वक्ष्यते'।

यदाग्नेयादिवाक्येषु द्रव्यदेवतादीनां परार्थत्वान्मिथो विशेष्यविशेषणसम्बन्धाभावेन पृथगेव विधेर्व्यापारः कल्पनीयः। तथा सति वाक्यभेद इति यद्युच्यते तर्हि 'पशुना यजेत' इत्यत्र प्राप्तकर्मानुवादेन प्रकृतिप्रत्ययार्थानां जातिलिङ्गसंख्याकारकाणां कथं विशिष्टवैशिष्ट्यभावेनान्वयः? अस्याश्शङ्कायाः निवारणं कारकप्राधान्यमङ्गीकृत्य क्रियते। चतुर्थप्रथमसप्तमाधिकरणे ( पश्वेकत्वाधिकरणे ) 'पशुना यजेत' इत्यत्र पशुगतमेकत्वं यागाङ्गं न वेति सन्दिह्य न यागाङ्गमिति पूर्वपक्षः कृतः। एकत्वसङ्ख्या प्रत्ययगम्या। 'प्रकृत्यर्थान्वित-

स्वार्थबोधकत्वं प्रत्ययानाम्' इति न्यायेन सा प्रकृत्यर्थे पशावेवान्वेति। अत्र चैकपदश्रुतिः 'पशुना' इति प्रमाणम्। यदि च यागे तस्या अन्वयस्तर्हि समभिव्याहाररूपवाक्यप्रमाणेन वक्तव्यः। वाक्यञ्च श्रुत्यपेक्षया दुर्बलम्। अत एव ग्रहैकत्ववदविवक्षितमेकत्वम्। यदि च विवक्षा स्यात् तर्हि वाक्यभेदः–पशुर्यागसाधनम् स चैक इति। अतः पशुगतैकत्वमविवक्षितमिति न तद्यज्ञाङ्गमिति पूर्वपक्षिण आशयः। सिद्धान्तस्तु—एकत्वं यज्ञाङ्गं विवक्षितमिति। तथाहि—"पशुना' इत्यत्र प्रातिपदिकेन पशुरभिधीयते, प्रत्ययेन चैकत्वं कारकञ्चाभिधीयेते। पदस्य युगपत्प्रसरत्वादिमेऽर्थाः पदेन युगपदभिधीयन्त इति स्वीकर्तव्यम्। ततश्चैकपदोपात्तप्रातिपदिकार्थापेक्षया एकप्रत्ययोपात्तकारकस्य सन्निहिततरत्वात् 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोस्तु प्रत्ययः प्राधान्येन, इति स्मृत्या प्राधान्याच्चैकत्वं कारकेऽन्वेति, न तु प्रातिपदिकार्थे, एकपदश्रुत्या समानाभिधानश्रुतेः प्रबलत्वात्। अतस्संख्यायाः कारकेणान्वयः। तथाचैकत्वयुक्तेन कारकेण यष्टव्यमिति सिध्यति। तच्च कारकं किमिति विशेषापेक्षायामेकपदश्रुत्या पशुरन्वेति। एवञ्च पशुत्वैकत्वविशिष्टकारकेण यष्टव्यमिति विशिष्टवैशिष्ट्यभावेनान्वये सति विध्यावृत्तिकृतवाक्यभेदस्य नावसर इति सिद्धान्तिन आशयः।

**पृ० २११. पृ० २५. (णा) 'समुच्चयदर्शनन्तु दशमे'**

दशमाध्यायसप्तमपादस्य प्रथमाधिकरणे हृदयादिहविष्प्रकृतितया पशोर्यागसाधनत्वं व्यवस्थाप्य द्वितीयाधिकरणे हृदयादिष्वेकैनैव यागः उत सर्वैरिति सन्दिह्य हृदयादीनां समुच्चयः प्रदर्शितः।

**पृ० २२६. पं. १७ (ता) 'पौर्णमास्यधिकरणे ···निराकृतत्वान्नोन्मेषमर्हति'।**

'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते' इति विद्वाक्ययोः यागविधायकत्वमङ्गीकृत्य तत्र द्रव्यदेवतासमर्पकत्वेन यदग्नेयादिवाक्यानि पूर्वपक्षिणा स्वीकृतानि। सिद्धान्तिना तु यदाग्नेयादिवाक्यानां गुणसमर्थकत्वेऽग्न्यादीनामनेकेषां गुणानां विधाने वाक्यभेदापत्तिमुद्भाव्य विद्वद्वाक्ययोः समुदायानुवादकत्त्वमेवेति सिद्धान्तितम्। अनेनैव न्यायेन 'सा वैश्वदेव्यामिक्षा' इत्यत्र 'वाजिभ्यो वाजिनम्' इति वाक्येन वाजिदेवतायाः वाजिनगुणस्य च विधाने वाक्यभेदापत्तेः पक्षोऽयं निराकृत एवेति नात्र तस्याः कोटेरुन्मेष इत्यर्थः।

**पृ० २३० पं० १ (था) 'स्तुतशस्त्राधिकरणगतेन्द्रमहेन्द्रन्यायेन'।**

विश्वेदेवदेवताकामिक्षाद्रव्यकयागे पूर्वपक्षिणा 'वाजिभ्यो वाजिनम्' इति वाक्यगतचतुर्थ्यन्तवाजिशब्देन विश्वान्देवाननूद्य वाजिनद्रव्यविधानमित्युच्यते। तदिदं न सङ्गतम्।

स्तुतशस्त्राधिकरणे ( पू० मी० २. १. ६ ) विधिगतदेवतापदेनैव निगदेषु देवताया निर्देशो वक्तव्य इति दाशमिकविधिशब्दाधिकरणे साधितत्वात् इन्द्रस्तुत्या महेन्द्रस्य संस्कारासम्भवान्मन्त्रस्योत्कर्षस्साधितः । तदिदमिन्द्रमहेन्द्रयोर्भेदे सत्येव सम्भवति । अतः इन्द्रमहेन्द्रयोर्यथा भेदस्तथा वाजित्वेन विश्वेदेवत्वेन देवतयोर्भेदस्स्वीकर्तव्यः । तथा च 'सा वैश्वदेव्यामिक्षा' इति विहितकर्मणि वाजिनस्य सम्बन्धो न सङ्गत इति ।

**पृ० २३५ पं० ८ (दा) 'ग्रहैकत्वाधिकरणे स्फुटीभविष्यति'**

'पशुना यजेत' इत्यत्र तृतीयैकवचनेन करणकारकमेकत्वञ्चोच्यते, प्रातिपदिकेन च पशुः । तत्र तृतीयाकारकस्य यागक्रियायामन्वय इति निर्विवादम्, कारकाणां क्रियान्वयनियमात् । एकत्वप्रातिपदिकार्थयोस्तु न साक्षात्क्रियया वशीभावः, किन्तु कारकेणान्वितयोस्तयोः यागादिक्रिययामन्वयः । पशुरेकत्वञ्च क्रियान्वयात्प्रागेव कारके समानपदश्रुत्या प्रथममन्वयं लभते । तत्र च यागक्रिया प्रधानम्, पश्वेकत्वे तु गुणभूते । ते च प्रधानक्रियावशीकृते प्रधानाविरोधेनैवान्वयमाकाङ्क्षतः । ततश्च पश्वेकत्वाभ्यां युगपदन्वितस्यैव करणकारकस्यान्वयं यागक्रियानुमन्यते, न पृथगन्वितस्य । तथा च पश्वेकत्वोभयविशिष्टकरणकारकयुक्ता यागक्रिया विधावन्वेतीति न वाक्यभेदप्रसक्तिः । अनेनैव प्रकारेण 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्रापि दधिविशिष्टकारकविधानान्न वाक्यभेदः ।

**पृ० २४५ पं० ८ (धा) 'उक्थ्यो वैरूपसामा' इत्यादिवद्दाशमिकन्यायेन'**

दशमाध्यायषष्ठपादस्य षष्ठेऽधिकरणे न्यायोऽयं विवृतः । विकृतिविशेषे सोमे 'उक्थ्यो वैरूपसामा, एकविंशष्षोडशी वैराजसामा' इति श्रूयते । उक्थ्यः—उक्थ्यसंस्थाकः, वैरूपसामवान् क्रतुः, एकविंशः—एकविंशस्तोमकः षोडशी—षोडशिसंस्थाकः, वैराजसामवान् क्रतुः, तेन फलं भावयेदिति वाक्यस्यार्थः । अत्र विधीयमानयोः साम्नोः वैरूपस्य कस्मिन् स्तोत्रे निवेश इति संशयः—किं सर्वस्मिन् क्रतौ साम्नोः वैरूपस्य वैराजस्य च निवेशः, तेन च सामान्तराणां निवृत्तिः ? उत पृष्ठस्तोत्रे निवेशः, तेन च पृष्ठस्तोत्रसम्बन्धिनामेव साम्नां निवृत्तिः ? इति । क्रतौ विधीयमानं साम न साक्षात्क्रतूपकारकं भवितुमर्हति, किन्तु स्तोत्रद्वारा । तत्र सत्सु बहुषु स्तोत्रेषु विशेषतः कस्यचन स्तोत्रस्यानिर्देशेनाविशेषात्सर्वस्तोत्रसम्बन्धावगतेस्सर्वत्र क्रतौ निवेश इति पूर्वपक्षः । सिद्धान्तस्तु—वैरूपवैराजयोर्न सर्वस्मिन् क्रतौ निवेशः, किन्तु पृष्ठस्तुतिलक्षण एव कार्ये तयोर्निवेशः । यद्यप्यनयोर्वाक्ययोः साम्नः स्तोत्रेण सम्बन्धो न प्रतीयते, किन्तु साममात्रं क्रत्वङ्गतया विधीयते । न हि साम्नस्साक्षात्क्रत्वङ्गत्वं भवितुमर्हतीति द्वारापेक्षायां सर्वाणि स्तोत्राण्युपस्थितानि भवन्ति, तथापि प्रकृतौ

ज्योतिष्टोमे 'यदि रथन्तरसामा' इति सामान्तबहुव्रीहिलक्षणलिङ्गविशेषेण पृष्ठस्तोत्रमेव द्वारतया स्वीकृतम्, तथैव 'वैरूपसामा' 'वैराजसामा' इति सामान्तबहुव्रीहिलक्षणलिङ्गस्यात्रापि सत्त्वात् पृष्ठस्तुतेरेव द्वारत्वकल्पनमुचितम् । तस्मान्न सर्वस्तोत्रेषु साम्नोर्निवेश इति । अनेन न्यायेन 'रथन्तरसामा' इत्यस्य पृष्ठस्तोत्रमात्रपरता ।

**पृ० २४६ पं० १४ (ना) 'न च बर्हिराज्याधिकरणन्यायेन'**

प्रथमाध्यायस्य चतुर्थपादस्याष्टमाधिकरणेऽयं न्यायस्सिद्धः । 'बर्हिर्लुनाति' 'आज्यं निर्वपति' इत्यत्र बर्हिराज्यशब्दयोः प्रवृत्तिनिमित्तत्वेन किं संस्कारो ग्राह्यः ? उत जातिः ? इति सन्दिह्य 'बर्हिरादाय गावो गताः' 'आज्यं विक्रीणन्ति' इति संस्काररहितेऽपि बर्हिषि आज्ये च प्रयोगदर्शनान्न संस्कारवाचकः, किन्तु जातिवाचक एवेति सिद्धान्तितम् । अनेन न्यायेन राजशब्दस्य क्षत्रियजातिपरत्वमेव द्राविडव्यवहारादङ्गीक्रियतामिति शङ्कां वारयति—न चेत्यादिना । बर्हिराज्यशब्दयोर्जात्यर्थत्वं न व्यभिचरति, संस्कृतयोरप्याज्यबर्हिषोः जातेरव्यभिचारात् । प्रकृते तु राज्ययोगनिमित्तकराजशब्दस्य ब्राह्मणादिष्वप्यार्यैः प्रयोगः क्रियते । तत्र क्षत्रियत्वजातेर्व्यभिचारः । अतो न राजशब्दस्य क्षत्रियजातिपरत्वमिति पूर्वपक्ष्याशयः ।

**पृ० २४६ पं० २६ (पा) 'ततश्च नकुलनखनक्षत्रादिशब्देष्विव व्याकरणं राज्यशब्देऽपि साधुत्वान्वाख्यानपरं व्याख्येयम्' ।**

राज्ञः कर्मेत्यर्थे 'पत्यन्तपुरोहितादिभ्यो यक्' इति यक् प्रत्ययान्तं राज्यपदं सिध्यति । व्याकरणश्च स्मृतिः राज्ञस्सतस्तस्य कर्म राज्यमित्याह । राज्यस्य कर्ता राजेति तु लौकिकव्यवहाररूप आचारः । आचाराच्च स्मृतिर्बलीयसीति प्रथमतृतीये व्यवस्थापितम् । अतो व्याकरणस्य स्मृतेर्बलीयस्त्वात् राजशब्दस्य जातिवाचित्वमेवेति शङ्कायाम्, आचारान्मन्वादिस्मृतेर्बलीयस्त्वेऽपि व्याकरणस्य न मन्वादिस्मृतितुल्यत्वम् , शब्दसाधुत्वव्यवस्थापनार्थं तस्य प्रवृत्तत्वात् । व्यवहारेषु ये प्रयुज्यन्ते शब्दाः तान् लक्ष्यतया समादाय प्रवृत्तं व्याकरणम् । अतस्स्मृतित्वेऽपि व्याकरणस्य प्रयोगमूलकत्वात् तदपेक्षया दौर्बल्यमेवेत्युत्तरं पूर्वपक्षिणः । अत्रैव दृष्टान्ताः-नकुल-नख-नक्षत्रादिशब्दाः । 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या' इति सूत्रेण नभ्राडादिशब्दानां साधुत्वमन्वाख्यातम् । न कुलमस्य, न खमस्य, न क्षरति, इति विग्रहे अकुलम् अखम्, अक्षत्रमिति रूपाणि भवेयुः । प्रयोगाश्च नकुलं नखं नक्षत्रमित्येव दृश्यन्ते । प्रयोगानिमान् साधयितुं सूत्रमिदं प्रवृत्तम् । तथैव राज्यपदसाधनाय पत्यन्तसूत्रं प्रवृत्तमिति पूर्वपक्षिण आशयः ।

पृ० २६० पं० २५ (फा) 'गुणाधिकरणन्यायेन यागान्तरविधिपरमेव'।

द्वितीयाध्यायद्वितीयपादस्य नवमाधिकरणे 'गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात्' इति सूत्रेण पूर्वत्रासम्भवन्निवेशो गुणः संज्ञावत्कर्मभेदक इत्युक्तम्। 'वाजिभ्यो वाजिनम्' इति वाक्यस्य गुणसमर्पकत्वं स्वीकृत्यामिक्षावाजिनयोरेकस्मिन्नेव यागे विकल्पतया निवेश इति प्राप्तस्य पूर्वपक्षस्य निराकरणपरमिदं सूत्रम्। 'सा वैश्वदेव्यामिक्षा' इत्युत्पत्तिवाक्ये आमिक्षाद्रव्यावरुद्धत्वात् तत्रोत्पन्नवाक्येन 'वाजिभ्यो वाजिनम्' इत्यनेन गुणस्समर्पयितुं न शक्यते। अतस्तुल्यबलत्वाभावान्न तयोर्विकल्पः, किन्तु वाजिनवाक्यं यागविधायकमेव, तद्वत् 'त्वाष्ट्रं पात्नीवतमालभेत' इति प्रकृत्याम्नातस्य 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इत्यस्य यागान्तरविधायकत्वमस्त्विति पूर्वपक्ष्याशयः।

पृ० २६३. पं० १९. (बा) 'रेवतीवारवन्तीयपूर्वपक्षन्यायेन'

'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोम साम कृत्वा पशुकामो ह्येतेन यजेत' इत्यत्र पूर्वपक्षी प्रकृतमग्निष्टुद्यागमाश्रित्य रेवत्याधारवारवन्तीयस्य फलसम्बन्धमात्रं विधीयत इति वदति। 'यजेत' इति वाक्येऽस्मिन् श्रुतस्य विधेर्व्यापारं विनैव 'कृत्वा' शब्देन वारवन्तीयस्य रेवतीसम्बन्धसिद्ध्या तत्र प्रधानविधिव्यापाराभावेन क्त्वाशब्दान्तरपदसन्दर्भेणोपस्थितस्य रेवत्याधारवारवन्तीयस्य फलसम्बन्धे यजतिना क्रियमाणे विध्यावृत्तिकृतवाक्यभेदो न भवतीति प्रतिपादयन् पूर्वपक्षी-अग्निष्टोमस्तोत्रद्वारा प्रकृतयागमश्रित्य रेवत्याधारवारवन्तीय-गुणः पशुफलाय विधीयत इति वदति। तन्न्यायेन प्रकृतेऽपि 'योऽदाभ्यं गृहीत्वा सोमाय यजते' इत्यत्र 'गृहीत्वा' इतिक्त्वाशब्दार्थसङ्क्रान्तविधिशक्तिना प्रधानविधिना ग्रहणाख्यस्सं-स्कारो विधीयते न तु यागान्तरमिति।

पृ० २६४. पं० १३. (भा) 'कात्यायनसूत्रव्याख्यावसरे कर्कभाष्ये व्यक्तमुपपादितम्'

'पुरोडाशकपालेन कणानपास्यत्यधःकृष्णाजिनम् 'रक्षसाम्' इति' समग्रं कात्यायन-श्रौतसूत्रम् ( २. ८. ७. )। उत्करस्य समीप एव कृष्णाजिनं सव्येन धारयन् कृष्णाजि-नस्याधस्ताद् उत्करे पुरोडाशकपालेन कणान् अपास्यति-निरस्यति। तत्र मन्त्रः—'रक्षसां भागोऽसि' इति। अत्र देवताबोधकचतुर्थ्यादेरभावेन कर्मणो रक्षोदेवताकत्वं नाङ्गीक्रियते, तेन तन्निमित्तकोदकोपस्पर्शो न प्राप्नोति। मन्त्रवर्णस्य देवताप्रापकत्वमिष्यते, किन्तु तदर्थं यजतिजुहोत्यादिशब्दैर्यागाद्यवगम आवश्यकः। अतः 'पुरोडाशकापालेन' इत्यत्र तादृश-यागाद्यवगमाभावेन 'राक्षसां भागोऽसि' इति मन्त्रवर्णतो देवताप्राप्तिर्नास्ति, तथैव प्रकृतेऽपि न मन्त्रवर्णतो देवताप्राप्तिरिति।

**पृ० २७४ पं० १६ (मा) 'यथाचैतत्तथैकादशस्य द्वितीयाद्ये स्फुटीभविष्यति'**

विनियोगविधिना विनियुक्तेष्वङ्गेषु कानिचनोत्पत्तिसम्बन्धीनि, कतिपयान्यधिकार-सम्बन्धीनि, कतिचिच्च प्रयोगसम्बन्धीनि भवन्ति। तत्र देशकालकर्तारः प्रयोगसम्बन्धिनः। सर्वविधेष्वङ्गेषूपस्थितेषु भाव्यकरणेतिकर्तव्यताविशिष्टभावनावगमानन्तरं कर्मणश्चिकीर्षा जायते। उत्पत्तिसम्बन्धिनामङ्गानां प्रयाजादीनामन्वयसमये न सर्वचिकीर्षा, किन्तु सर्वेषां कर्तव्यतावगममात्रं भवति, तद्दशानाञ्च करणानुग्राहकत्वेनेतिकर्तव्यता। तानि भावना गृह्णाति। भावनोत्पत्तिवाक्ये करणभावस्य भेदेनावगमाद् भेदेनाङ्गानि गृह्णातीति प्रयाजादीनां भेदेन विनियोगः। देशादीनान्तु विशिष्टभावनावगमानन्तरं तत्प्रयुयुक्षायां चिकीर्षा-परनामधेयायां सत्यामीदृशे देशे ईदृशे काले ईदृशैः कर्तृभिस्तत्प्रयोगः कर्तव्य इति प्रयोगद्वारा-न्वीयमानानां युगपत्सर्वविषयकैकप्रयोगावच्छेदकत्वेनान्वय इति विनियोगदशायामेव सहितार्थं-तया विनियोगः। तस्माद्देशकालकर्तृणां युगपत्सर्वचिकीर्षाबलात्सर्वविषयकतया कल्प्यमानेन प्रयोगविधिना युगपत्सर्वार्थतया देशकालकर्तारो विधीयन्ते। अतो न कर्मभेदप्रसक्तिः।

**पृ० २८६ पं० २६ (या) 'औदुम्बराधिकरणन्यायेन स्तुत्या'**

'औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बरः ऊर्क्पशवः ऊर्जैवास्मा ऊर्जं पशूनाप्नोति' इति सर्वस्य वाक्यस्यार्थवादत्वेऽपि विना विधिनाऽर्थवादस्य स्वरूपालाभात् विधिमनुमाय तत्स्तावकतयार्थवादस्य तदेकवाक्यत्वम्, तथात्रापि विधिरनुमीयतामिति शङ्कितुराशयः। प्रथमाध्यायस्य द्वितीयद्वितीयाधिकरणमौदुम्बराधिकरणम्।

**पृ० ३०८ पं० ४ (रा) 'आनर्थक्यतदङ्गन्यायेन'**

'आनर्थक्यात्तदङ्गेषु' ( ३.१.१८ ) इत्यधिकरणसिद्धो न्याय आनर्थक्यतदङ्गन्यायः। 'सप्तदशारत्निर्वाजपेयस्य यूपः' इत्यत्र किं सप्तदशारत्नित्वं वाजपेयसाधनोर्ध्वपात्रद्वारा वाजपेय-स्याङ्गम्? उत यूपद्वारा पश्वङ्गम्? इति सन्दिह्य सोमयागविशेषात्मकवाजपेयकर्मणि साक्षात् सप्तदशारत्नितायाः सम्बन्धासम्भवेन तत्रानर्थक्यात् तदङ्गेषु वाजपेयाङ्गभूतपशु-यागेषु यो यूपः तत्र सप्तदशारत्नित्वस्य निवेश इति सिद्धान्तितम्। तन्न्यायेन स्फयादीनां साक्षाद्यागाङ्गत्वे तत्तदुत्पत्तिशिष्टद्रव्यावरोधादानर्थक्ये प्रसक्ते यागाङ्गभूतोद्धननादिक्रिया मुखेन तेषां सर्वार्थत्वमिति पूर्वपक्ष्याशयः।

**पृ० ३०८ पं० ७ ( ला ) 'वैश्वानराधिकरणन्यायेन'**

प्रथमचतुर्थद्वादशाधिकरणसिद्धोऽयं न्यायः। 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते' इति जातेष्टिं विधायानन्तरम् 'यदष्टाकपालो भवति' इत्यादिवाक्यानि श्रुतानि। अत्राष्टाक-

पालनवकपालादिपदानां 'शते पञ्चाशन्न्यायेन' द्वादशकपालशब्देन प्राप्तानामष्टत्वादिसङ्ख्या-नामवयुत्य पृथक्कृत्यानुवादकत्वं स्वीकृतम्, तन्न्यायेन 'दश यज्ञायुधानि' इति प्राप्तानां यज्ञायुधानां 'स्फयेन वेदिमुद्धान्ति' 'कपालेषु श्रपयति' इत्यादीन्यनुवादकानीनि पूर्वपक्ष्याशयः।

**पृ० ३१०. पं० २६ (वा) 'वाजपेयाधिकरणोक्त्या विरुद्धत्रिकद्वयापत्तौ'**

प्रथमचतुर्थषष्ठाधिकरणं वाजपेयाधिकरणम्। तत्र 'वाजपेयेन स्वाराज्यकामो यजेत' इति वाक्यमुदाहृत्य वाजपेयशब्दस्य गुणसमर्पकत्वमुत कर्मनामत्वमिति सन्दिह्य गुणसमर्प-कत्वमिति पूर्वपक्षः कृतः। गुणसमर्पकत्वे विशिष्टविधिरङ्गीकर्तव्यः। तथा सति मत्वर्थ-लक्षणा। तद्भीत्या उद्भिच्छब्दवद्वाजपेयशब्दस्य नामत्वमापतेत्। यागस्याप्राप्तत्वात् फलाय गुणविधिरपि न सङ्गच्छते। अतः पूर्वपक्षिणा तत्र तन्त्रसम्बन्ध आशङ्कितः। अर्थाद्भावनायां धात्वर्थस्य युगपत् यागं यागेन इति द्वेधा सम्बन्धः। यदा यागमिति तदा वाजपेयेनेति, यदा च यागेनेति तदा स्वाराज्यमिति। अतश्च न वाक्यभेदः, नापि मत्वर्थलक्षणेति पूर्वपक्षे प्राप्ते, तत्र विरुद्धत्रिकद्वयापत्तिमुद्भाव्य पूर्वपक्षो निराकृतः। यागेनेति करणत्वपक्षे-विधेयत्वम् उपादेयत्वम् गुणत्वञ्चेति त्रिकम्, यागमिति साध्यत्वपक्षे उद्देश्यत्वम् अनुवाद्यत्वम् प्राधान्य-ञ्चेति त्रिकम्। इदं त्रिकद्वयं मिथो विरुद्धम्। विरुद्धत्रिकस्यास्य निराकरणाय कालभेदेन साध्यत्वेन साधनत्वेन चान्वयो वक्तव्यः। तथा सति वाक्यभेदः। अतो वाजपेयशब्दो नामधेय-मिति तत्र सिद्धान्तितम्। तद्वदत्र क्रयोद्देशेन पिङ्गाक्ष्येकहायन्या विधानम्, एकहायन्याश्चा-रुण्यस्य विधाने एकहायन्यां विरुद्धत्रिकद्वयापत्तिस्स्यात्। एकहायन्या विधानपक्षे विधेयत्वो-पादेयत्वगुणत्वानि, तस्या उद्देश्यत्वे उद्देश्यत्वानुवाद्यत्वप्राधान्यानीत्यापत्तिरस्यादिति।

**पृ० ३२४ पं० ३ (वा) 'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् इत्यधिकरणन्यायेन'**

तृतीयसप्तमसप्तमाधिकरणसिद्धन्यायोऽयम्। अत्र साङ्गं कर्म किं यजमानेनैव कर्तव्यम्? उत उद्देश्यत्यागो यजमानेनैव कर्तव्यः अन्यानि चाङ्गानि यजमानेन अन्यैर्वानुष्ठेयानि? अथवा उद्देश्यत्यागो यजमानेन अन्यानि च ऋत्विग्भिरेव? इति त्रेधा संशयः। तत्र प्रथमपक्षसाधकमिदं सूत्रम्—'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्तस्मात् स्वयं प्रयोगे स्यात्' इति। 'यजेत स्वर्गकामः' इत्यादिशास्त्रेण बोधितं स्वर्गादिकं फलं प्रयोक्तरि-साङ्गकर्मानुष्ठा-तरि भवेत्, तल्लक्षणत्वाच्छास्त्रफलस्य। अतः साङ्गस्य कर्मणः प्रयोगेऽनुष्ठाने स्वयं यजमानः कर्ता स्यादिति सूत्रार्थः। द्वितीयपक्षसाधकं सूत्रम्—'उत्सर्गे तु प्रधानत्वाच्छेषकारी प्रधानस्य

तस्मादन्यस्स्वयं वा स्यात्' इति । यजमानस्य देदतोद्देश्यकद्रव्योत्सर्गे कर्तृत्वं मुख्यम्, यजमाननियुक्तर्त्विक्कर्तृकाङ्गविषये च प्रयोजककर्तृत्वं गौणम्। शेषकारी अङ्गानां कर्ता तस्माद्यजमानादन्यस्स्यात् स्वयं यजमानो वा स्यात् । यदि यजमानस्समर्थस्तर्हि सहायरहितः कुर्यात्, यदि चासमर्थस्तर्हि ससहायः कुर्यादिति । सिद्धान्तसमर्थकं सूत्रम्—'अन्यो वा स्यात्परिक्रयाम्नानाद्विप्रतिषेधात्प्रत्यगात्मनि' इति । सामर्थ्ये सत्यपि द्रव्योत्सर्ग एव यजमानः कर्ता, अन्यत्र त्वङ्गजातेऽन्य एव कर्ता–परिक्रयाम्नात्–द्रव्यदानेन भृत्यस्वीकरणाम्नानात् । तच्च द्रव्यदानं स्वस्मिन्न भवितुमर्हति । न हि स्वस्मै स्वयं दातुं प्रभवति । अतश्शेषकारी अन्य एवेति सिद्धान्तः । प्रकृते 'अभिक्रामं जुहोति' इति विहितमभिक्रमणं कर्तृसंस्कारकमाहवनीयादिसमीपदेशगमनप्राप्त्याधायकं दृष्टरूपम् । तत्रेतिकर्तव्यतासमेतस्य कर्मणः कर्तव्यत्वेऽवगते तच्चिकीर्षायां जातायां किं ससहायेन यजमानेन कर्तव्यमुतासहायेनेत्यवस्थायां 'शास्त्रफलं प्रयोक्तरि' इति न्यायेन यजमानस्यैव कर्तृत्वे प्राप्ते ऋत्विजोऽपि कर्तारो विधीयन्ते, प्रकरणपरिगृहीतत्वादभिक्रमणस्येति पूर्वपक्षाशयः ।

**पृ० ३२४. पं० ७ (शा) अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरंस्तस्मादेकदेशत्वम्' इत्यधिकरणे व्यवस्थापयिष्यते'**

एकादशाध्यायस्य द्वितीयप्रथमाधिकरणमिदम् । अत्र—अधिकारवाक्येन फलविशेषे ज्ञाते 'इदं फलं कथं सम्पादनीयम्' इत्यपेक्षा, तदैवाङ्गसम्बन्धः । उत्पत्तिवाक्ये च केवलं यागेन कुर्यात्फलमिति सामान्यतः फलस्य भाव्यत्वावगमेऽपि न तत्र कथमित्यपेक्षा । अत इतिकर्तव्यताकाङ्क्षापूरणाय प्रथमं फलविशेषसम्बन्धः, तदनन्तरमङ्गसम्बन्ध इति स्वीकर्तव्यम् । अत्रैव प्रयोगविधेर्व्यापारः । फलविशेषप्राप्त्यर्थो यः कर्तृव्यापारस्स एव प्रयोग इत्युच्यते । तेन समग्राङ्गसहितप्रधानस्यैव फलसामग्रीत्वं सिध्यति । अतः प्रयोगविधिस्सर्वविषयस्तत्रैव च कर्तृसम्बन्ध इति व्यवस्थापितम् । तन्न्यायेनाभिक्रमणं कर्तृसंस्कारमुखेन दर्शपूर्णमासप्रकरणगृहीतं सत् सर्वप्रयोगाङ्गमिति पूर्वपक्षाशयः ।

**पृ. ३२५ पं० २५ ( शा ) 'प्रकरणवशेन तेषामङ्गप्रधानार्थत्वं व्यवस्थापयिष्यमाणं विरुध्येत'**

तृतीयसप्तमप्रथमाधिकरणे वेदिर्बर्हिस्तद्धर्मा अङ्गप्रधानहविषां साधारणाः उत प्रधानहविषामेवेति सन्दिह्य प्रकरणविशेषात् प्रधानहविषामेवेति पूर्वपक्षयित्वा 'सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात्' इति सूत्रेण वेदिर्बर्हिस्तद्धर्मा अङ्गप्रधानहविस्साधारणा इति सिद्धान्तितम् । यदि 'अभिक्रामं जुहोति' इति विहिताभिक्रमणस्य सन्निहितप्रयाजहोम-

विषयत्वमेवेत्युच्येत, तर्हि पूर्वोक्ताधिकरणसिद्धान्तविरोधस्स्यात् । अतः प्रकरणगृहीत-त्वं-होमाङ्गमभिक्रमणमिति पूर्वपक्ष्याशयः ।

**पृ० ३२६. पं० २३. ( सा ) 'अभिघारणे विप्रकर्षाद् अनूयाजवत्पात्रभेदस्स्यात्' इत्यधिकरणे व्यवस्थापयिष्यते'**

चतुर्थाध्याये प्रथमपादस्य षोडशमधिकरणमिदम् । दर्शपूर्णमासयोः श्रुतम् 'प्रयाजशेषेण हवींष्यमभिघारयति' इति । तदिदं हविरमिधारणं वाजपेये प्राजपत्यपशुषु चोदकेन प्राप्तम् । प्राजापत्यपशूनां पर्यग्निकरणान्तमङ्गकलापमनुष्ठाय 'ब्रह्मसाम्न्यालभते' इति विधिना ब्रह्मसामगानसमये माध्यन्दिनसवने आलम्भ उत्कृष्टः । प्रातस्सवने च यथाकालं ऋतुपशव आग्नेयादयोऽनुष्ठीयन्ते । तदैव प्राजापत्यपशूनामप्युपक्रमः, किन्तूत्कर्षविधानेन प्राजापत्यानां माध्यन्दिनसवने पर्यग्निकरणोर्ध्वाङ्गानामनुष्ठानम्, ऋतुपशूनाञ्च प्रातस्सवन एवानुष्ठानम् । तत्र ऋतुपशुषु दश प्रयाजानिष्ट्वा पर्यग्निकरणञ्चानुष्ठाय पशूनां संज्ञपनं वपोद्धरणादिकमनुष्ठीयते । तदनन्तरमुत्तमं प्रयाजं परिसमाप्य दर्शपूर्णमासतश्चोदकप्राप्तं प्रयाजशेषेण हविरभिघारणं कर्तव्यम् । ऋतुपशुवपानामभिघारणन्तु भवत्येव, किन्तु माध्यन्दिनसवनेऽनुष्ठास्यमानानां प्राजापत्यपशुवपानामभिघारणं तदैव प्राप्नोति । तदर्थं जौहवप्रयाजशेषधारणाय पात्रान्तरमुत्पाद्य तत्र प्रयाजशेषं धारयित्वा माध्यान्दिनसवनेऽनुष्ठीयमानवपानामधिधारणं किं कर्तव्यम् ? उत प्राजापत्यवपानामभिघारणं नैव कर्तव्यमिति संशये, प्रयाजशेषाभिघारणस्य प्रतिपत्तिरूपत्वात् प्रतिपत्तेश्च प्रातस्सवने ऋतुपशुवपासु सम्पादितत्वेन प्रयाजशेषस्यैवाभावान्न प्राजापत्यपशुवपानामभिघारणम्, न तदर्थं धारणम्, नापि पात्रोत्पादनमिति सिद्धान्तितम् । अनेन प्रकृत इदं सिध्यति-यद् अभिक्रमणस्य सन्दंशमध्यपतितत्वेनावान्तरप्रकरणग्राह्यत्वमिति । प्रथममुपभृत्पात्रादाज्यस्य जुह्वां समानयनम्, अनन्तरं प्रजायार्थंगुणविधिरभिधारणरूपः, तयोर्मध्येऽभिक्रमणम् । अतोऽभिक्रमणस्य प्रयाजहोमार्थत्वमेवेति ।

**पृ० ३३२. पं० २२ (हा) 'वचनात्त्वयथार्थमैन्द्री स्यात्' इति न्यायेन ( ऐन्द्रीन्यायः )**

तृतीयाध्यायद्वितीयपादस्य द्वितीयाधिकरणसिद्धोऽयं न्यायः । 'ऐन्द्रया गार्हपत्यमुपतिष्ठते' इति विधिना गार्हपत्योपस्थाने ऐन्द्रीमन्त्रो विहितः । इन्द्रदेवताप्रकाशिका ऋगैन्द्री । गार्हपत्यमित्यग्नेस्संज्ञा । गार्हपत्योपस्थाने ऐन्द्रीमन्त्रविधाने मन्त्रस्यासमवेतार्थप्रकाशकत्वमापतेत् । मन्त्रगतेन्द्रशब्दस्य गौण्या गार्हपत्यवाचित्वम्, अथवा ब्राह्मणगतगार्हपत्यशब्दस्य तथेन्द्रप्रकाशकत्वं स्वीकर्तव्यम् । तदैव मन्त्रस्य समवेतार्थप्रकाशकत्वं सिध्येत् । तत्रानेन

सूत्रेण सिद्धान्त उच्यते—ऐन्द्री ऋगेवायथार्थं स्यात् गौणी स्यात्, मुख्यार्थवृत्तिर्न भवेदित्यर्थः। तत्र हेतुः वचनादिति, गार्हपत्ये विनियोगवचनादिति तदर्थः। मन्त्रस्य लिङ्गादिन्द्रदेवताप्रकाशनसामर्थ्ये सत्यपि 'गार्हपत्यम्' इति द्वितीयाश्रुत्या गार्हपत्याङ्गत्वं मन्त्रस्योच्यते। लिङ्गाच्च श्रुतिर्बलीयसी इति मन्त्रगतेन्द्रपदस्यैव गार्हत्यबोधकत्वं गौण्या स्वीकर्तव्यम्। अनेन न्यायेन सोमदेवताप्रकाशकपुरोवाक्यामन्त्रस्याग्नीषोमयागाङ्गत्वं वदन् पूर्वपक्षी मन्त्रगतसोमपदस्य गौण्याग्नीषोमदेवताप्रकाशत्वं वर्ततामिति शङ्कते।

**पृ० ३५५ पं० १ (क्षा) 'यथा चैतत्तथा एकादशे व्यक्तं भविष्यति'**

एकादशाध्यायस्य प्रथमपादेऽष्टमाधिकरणे—दर्शपूर्णमासयोराग्नेयाद्युत्पत्तिवाक्यैष्षट्सु भावनास्वंशत्रयविशिष्टासु प्राप्तासु तत्र साध्यसाधनांशप्रतिपादनेनांशद्वयस्याकाङ्क्षायां शान्तायाम् तृतीयमंशं कथम्भावं भेदेनैव ता अपेक्षन्ते। एवमपेक्षमाणासु तासु सकृत्पठिता अङ्गविधयः षण्णामपि यागानां प्रत्येकमेवाङ्गानि समर्पयन्ति, आकाङ्क्षायाः प्रत्येकं यागस्य सत्त्वात्। किन्तु सर्वार्थत्वेनानुष्ठानं तेषां सकृदेवेति निरूपितम्। तथैव सूक्तवाकशब्दाभिधेयस्य कृत्स्नस्यानुवाकस्य 'सूक्तवाकेन प्रस्तरं प्रहरति' इति तृतीयन्तशब्देन निर्दिष्टस्यान्वयः प्रत्येकममावास्यायां पौर्णमास्यां च भवतीति कृत्स्नस्य सूक्तवाकस्योभयत्रापि प्रयोग इति पूर्वपक्ष्याशयः।

**पृ० ३८१ पं० ४ (इ) 'कांस्यभोजिन्यायेन'**

न्यायोऽयं पूर्वं विवृतः।

**पृ० ३८१ पं० २४ (कि) 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इत्यपच्छेदाधिकरणन्यायात्'**

**( अपच्छेदन्यायः )**

षष्ठाध्यायस्य पञ्चमपादे सप्तदशाधिकरणसिद्धोऽयं न्यायः। ज्योतिष्टोमे प्रातस्सवने बहिष्पवमानेन स्तोष्यमाणा अध्वर्य्वादय ऋत्विजः क्रमेणैकस्य कच्छमपरोऽन्वारभ्य पिपीलिकावत्प्रसर्पन्ति। प्रसर्पन्त इमे मृगं जिघृक्षवो व्याधा यथा छद्मना गच्छन्ति तद्वद्गच्छेयुरित्यापस्तम्बः। ऋत्विजां क्रमस्सूत्रभेदेन भिन्नः। कात्यायनमते—अध्वर्युप्रतिप्रस्थातृ प्रस्तोत्रुद्गातृप्रतिहर्तारः। सत्याषाढमते अध्वर्यु प्रस्तोतृ प्रतिहर्त्रुद्गातृब्रह्मयजमानाः। एकस्य कच्छमपरो दक्षिणहस्तेन गृह्णन् स्वीयमपि सव्येन गृह्णीयात्, अपच्छेदे प्रायश्चित्तविधानात्। अतो दार्ढ्यार्थं स्वीयमपि धृत्वैव गच्छेयुः। एवं हविर्धानात्प्रसर्पतां कच्छविच्छेदेऽपच्छेदे निमित्ते प्रायश्चित्तं विहितम्—'यदि प्रस्तोतापच्छिद्येत ब्रह्मणे वरन्दद्यात्, यदि प्रतिहर्ता सर्ववेदसं दद्यात्, यद्युद्गातापच्छिद्येतादक्षिणस्स यज्ञस्संस्थाप्योऽथ तेन

पुनर्यजेत, तत्र तद्द्यात् यत् पूर्वस्मिन् दास्यन् स्यात्' इति । एकैककर्तृकस्यापच्छेदस्य प्रायश्चित्तनिमित्तत्वे सत्यपि द्वयोर्युगपदपच्छेदे सति प्रायश्चित्तमस्ति न वेति सन्दिह्य द्वावपि पुरुषौ स्वस्वक्रियायां विभागमेकाले जनयत इति यौगपद्येऽप्येकैकस्य कर्तृत्वादस्त्येव प्रायश्चित्तमिति सिद्धान्तयित्वानन्तरमुद्गातृप्रतिहर्त्रोर्युगपदपच्छेदे सति प्रायश्चित्तद्वयं किं समुच्चीयते ? उत विकल्प्यते ? इति सन्दिह्य विकल्पस्सिद्धान्तितः, प्रायश्चित्तयोर्विप्रतिषेधात् । प्रतिहर्त्रपच्छेदे सर्वस्वदक्षिणाको यज्ञः, उद्गात्रपच्छेदे चादक्षिणाको यज्ञ इति द्वयोर्युगपदुपसंहर्तुमशक्तेर्विकल्पः । विकल्पश्चात्र न शास्त्रयोः, किन्त्वनुष्ठानस्येति श्रीवासुदेवः । तदनन्तरं निमित्तयोरुभयोर्युगपत्प्राप्तयोरस्तु नाम विकल्पः, किन्तु यदा पौर्वापर्येणोद्गातृप्रतिहर्त्रोरपच्छेदस्तत्र किं प्रायश्चित्तद्वयस्य विकल्पः ? किं वा पूर्वनिमित्तकमेव कार्यम् ? उत परनिमित्तकम् ? इति त्रेधा सन्दिह्य 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इति सूत्रेण पूर्वस्य परेण बाध इति सिद्धान्तितम् । अनेन न्यायेन प्रकृते उपक्रमगतोऽर्थवादः परेणानन्तरश्रुतेन विध्युद्देशेन बाध्यतामिति न युक्तं वक्तुम्, परस्यालब्धात्मकत्वात् । स्तुतिमपेक्षमाणो विधिः कथमर्थवादं बाधेन ! अतो नापच्छेदन्यायस्यात्र प्रसरः ।

**पृ० ३९० पं० १७ (खि) 'नष्टाश्वदग्धरथन्यायेन'**

द्वौ रथिनावरण्यं गच्छतः । तत्र प्रादाव्येन कस्यचन रथो नष्टः, अपरस्य चाश्वः । अश्ववान् रथमाकाङ्क्षति, रथी चाश्वम् । उभावपि साकाङ्क्षौ परस्परमन्वयमवाप्य स्वस्वोद्देशं गच्छतः । तन्यायेन प्रयाजादयस्साध्यरहितास्तदपेक्षन्ते । दर्शपूर्णमासौ च फलजननसामर्थ्यानुग्रहमपेक्षन्ते । उभयोः परस्परमन्वये सति अङ्गोपकृताभ्यां दर्शपूर्णमासाभ्यां स्वर्गं सम्पादयेदिति पर्यवस्यति ।

**पृ० ४०६ पं० ११ (गि) 'सृष्टिन्यायेन'**

तत्सिद्धिपेटिकायां सृष्टिन्यायस्सिद्धः । चयने 'सृष्टीरुपदधाति' इति श्रूयते । सृष्टिशब्देन सृष्टिप्रतिपादकसृजिधातुर्विवक्ष्यते । स येषु वर्तते ते सृष्टिमन्तो मन्त्राः । ते यासामिष्टकानामुपधानार्थास्ता इष्टकास्सृष्टयः । सृजिमन्मन्त्रोपाधेया इष्टका इत्यर्थः । सृजिमन्तश्च मन्त्रा 'एकया स्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत्' इत्यादयस्सप्तदशसङ्ख्यास्सन्ति । तेषु चतुर्षु मन्त्रेषु सृजिशब्दो नास्ति, शिष्टेषु त्रयोदशसु स वर्तते । सृष्टिबाहुल्येन सृष्टिशब्दः सृष्ट्यसृष्टिसमुदाये वर्तते । अयमेव छत्रिन्याय इत्यपि व्यवह्रियते । अनेन न्यायेन पत्नीसंयाजीयास्सोमादयो देवताः, पत्नीशब्देन विवक्ष्यन्ते । तत्र 'देवानां पत्नीर्यजति' इति पत्नीशब्दस्य सत्त्वात् पत्नीशब्दः पत्न्यपत्नीसमुदाये प्रयुक्त इति ।

**पृ० ४४५. पं० २७. (छि) 'अष्टमपादीयाधिकरणन्यायेन'**

तृतीयाध्यायस्याष्टमपादे द्वितीयाधिकरणसिद्धोऽयं न्यायः। ये फलिसंस्काराः वपननखनिकृन्तनदन्तधावनादयस्ते याजमानाः प्रतिपादिताः। इमे संस्काराः कर्मयोग्यत्वलक्षणातिशयविशेषजननाधायकाः। यजमान एव स्वस्मिन् कर्मयोग्यताजनककर्मानुष्ठानार्थमृत्विजः परिक्रीणाति। अत इमे याजमाना एव न त्वाध्वर्यवाः। ततश्च प्रकृते ये कर्तृसंस्कारविधयस्तेऽष्टमपादीयफलिसंस्काराधिकरणन्यायेन याजमाना एव सिध्यन्ति।

**पृ० ४९१ पं० ४. (ङि) 'हेत्वधिकरणन्यायेन'**

प्रथमद्वितीयतृतीयाधिकरणन्यायोऽयम्। तत्र 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' इत्यत्र हिशब्दस्य हेतुसमर्पकत्वं नास्ति किन्त्वस्य स्तुतिसमर्पकार्थवादत्वमेवेति निरूपितम्। तन्न्यायेन 'द्विर्ह्येतस्य' इत्यत्रापि स्तुतिसमर्पकत्वमेवेति।

**पृ० ५१३. पं० ३८ (धि) 'दशमे वक्ष्यमाणत्वात्'**

दशमाध्यायस्य प्रथमपादे प्रथमाधिकरणस्य प्रथमवर्णके विषयोऽयं प्रतिपादितः।

**पृ० ५१४. पं० १६ (जि) 'नावमिकाद्याधिकरणन्यायेन'**

नवमाद्यप्रथमाधिकरणस्य द्वितीये वर्णके ऊहविचारसिद्धयेऽङ्गानामपूर्वार्थत्वमुपपादितम्। 'व्रीहीनवहन्ति' इत्यत्र द्वितीयया व्रीहीणामुद्देश्यत्वं तावदवगम्यते। व्रीहिस्वरूपमुद्दिश्यावहनने विधीयमाने विनाप्यवहननेन व्रीहिस्वरूपस्य सिद्धेरवहननमनर्थकं भवेदिति-अपूर्वसाधनत्वं व्रीहिपदेन लक्षयित्वा तदवच्छिन्नोद्देशेनावहननं विधातव्यम्। तथा च तण्डुलप्राणाड्या यदपूर्वसाधनं तदवहन्यादिति वचनव्यक्तिः सम्पद्यते।' तण्डुलप्राणाड्येत्यनुपादाने आज्यादीनामप्यपूर्वसाधनत्वादवहननं प्राप्नुयात्। एवञ्च प्रकृतिवत्कुर्यादित्यतिदेशेऽप्यवहतैस्तण्डुलैरपूर्वं सम्पादयेदित्यर्थस्य नीवारादावपि सम्भवादूहस्य सिद्धिः। अनेन न्यायेन 'पञ्चदशसामिधेनीः' इत्यत्रापि सामिधेनीशब्देनापूर्वसाधनतापन्नसामिधेनीलक्ष्यत्वात्तद्रूपेण पाञ्चदश्यसाप्तदश्ययोस्सामिधीनीसम्बन्धः।

**पृ० ५६२. पं० १६. 'वरणस्य दृष्टार्थतया·········वाजिनवत्'**

वाजिनन्यायः पूर्वं निरूपितः।

**पृ० ५६६. पं० १९. 'यदाष्टकपालो भवतीत्यादिवत्'**

वैश्वानरन्यायः पूर्वं विवृतः।

**पृ० ५७३ पं० १३ 'यूपावटास्तरणबर्हिर्न्यायेन'**

तृतीयाष्टमस्य षोडशाधिकरणसिद्धोऽयं न्यायः। ज्योतिष्टोमेऽग्नीषोमीयपशौ 'बर्हिषा यूपावटमवस्तृणाति' इति श्रुतम्। यूपनिखननाय कृतो गर्तो यूपावटशब्दवाच्यः। बर्हिषा-तमाच्छादयतीत्यर्थः। आस्तरणार्थस्य बर्हिषो लवनादयस्संस्काराः कर्तव्या वा न वेति संशये न कर्तव्या इति सिद्धान्तः। अग्नीषोमीयः पशुः पशुप्रभवत्वसामान्याद्दर्शविकृतिः। दर्शे च बर्हिषां वेद्यास्तरणादिकं कार्यम्। प्राकृतकार्यमुखेन विकृतौ समागतानामेव धर्माणामपूर्वसाधनत्वादिनाङ्गत्वम्। प्राकृतकार्यकारित्वे एव विकृतौ धर्माणामपूर्वसाधन-तेत्यर्थः। यूपावटास्तरणन्त्वप्राकृतम्, दर्शे यूपावटस्याभावात्। एवञ्च यूपावटास्तरण-बर्हिषः प्राकृतहविरासादनादिकार्यसाधनत्वाभावात् लवनादयस्संस्कारा न भवन्ति, लौकिके-नैव बर्हिषा यूपावटास्तरणं सम्पादनीयम्। तथैवामनहोमेषु पूर्वपक्षिमतेनाप्राकृतकार्यकरत्वा-दाहवनीयस्य न प्राप्तिः, लौकिक एवाग्नौ ते होमा अनुष्ठेया इति प्रयोजनं सिध्यति ॥

इति तृतीयाध्यायान्तस्य भागस्य न्यायसञ्चारविवरणं

समाप्तम् ॥